आगया हो और हाथ पाँव सूजनरहित हों, तथा गुदा, मुख, लिंग और अण्डकोषोंपर सूजन हो, चित्तपर ग्लानि हो, संज्ञा न रहकर मृतकके सदृश हो, अतीसार और ज्वरकी पीडा हो, ऐसे पाण्डुरोगीको यशस्वी वैद्य त्याग-देवे ॥ १३–१७ ॥

## अथ पाण्डुरोगभेदकामलानिदान-पूर्वकसम्प्राप्तिः ।

**पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते॥तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ॥ १८ ॥**

**पित्तं कर्त्तृ, दग्ध्वा सन्दूष्य रोगाय कामला-रूपाय ।पाण्डुरोगिण एव अतिशयितपित्त-लसेवया कामला भवति नायं नियमः, किंतु कामला स्वतन्त्रापि भवति । यथा राजयक्ष्मा कासादुपेक्षिताद्भवति नायं नियमः, किन्तु राजयक्ष्मा स्वतन्त्रोऽपि भवति तद्वदेव॥**

जो पाण्डुरोगवाले मनुष्य अधिक पित्तकारी पदार्थोंका अधिक सेवन करतेहैं उनका पित्त कोपको प्राप्त हो रुधिर और मांसको दूषित करके कामला रोगको उत्पन्न करता-है । ऐसा मत समझना कि,पाण्डुरोगवाले ही रोगीको पित्त-कारी पदार्थोंके खानेसे कामला रोग होताहै, यह कामला रोग आपसे आप भी होजाताहै । जैसे खाँसीका उपाय न करनेसे राजयक्ष्मा रोग होजाताहै ऐसा नियम नहीं है किन्तु राजयक्ष्मा आपसे आप भी उत्पन्न होजाताहै, इसी प्रकार कामलाका भेद समझना चाहिये ॥ १८ ॥

## अथ कामलाक्षलणम् ।

**हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः ॥ पीतरक्तशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ दाहाविपाकदौर्बल्यसदनारुचिकर्षितः॥१९॥**

**हारिद्रं हरिद्रावर्णम् । पीतरक्तशकृन्मूत्रः पीते रक्ते वा शकृन्मूत्रे यस्य सः । भेकवर्णः बृहद्भेकवर्णः ॥**

कामलारोगमें रोगीके नेत्र, त्वक्, नख और मुखका रंग हलदीके सदृश पीले हों, मल, मूत्र पीला वा लाल हो बडे मेंडकके समान शरीरका वर्ण होजाय इन्द्रियें शक्ति हीन होजाय, हृदयमें दाह, भोजनका न पचना, शरीरका दुर्बल और शिथिल होजाना, अरुचि, यह लक्षण होजातेहैं ॥ १९ ॥

## अथ कामलाभेदः ।

**कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥ एका कोष्ठाश्रया । अपरा शाखाश्रया ॥**

अधिक पित्तवाला कामलारोग यह एक कोष्ठाश्रय होताहै और दूसरा शाखाश्रय होताहै ॥

## अथ कोष्ठाश्रयकामलावर्णनम् ।

**कालान्तरात्खरीभूता कृच्छ्रा स्यात्कुम्भ-कामला ॥ २० ॥**

यह कामला रोग जब बहुत पुराना होजाताहै तब रूक्ष अर्थात् खरीभूत होकर जठराग्निको रोक लेताहै जैसे घडेका मुख छोटा और पेट बडा होताहै इसी प्रकार रोगीका उदर समझना, कुम्भकी समान आकार कोष्ठके आश्रय जानना, इसीसे यह कुम्भकामला रोग कहलाता है ॥२०॥

## अथ कुम्भकामलारिष्टलक्षणम् ।

**छर्घरोचकहृल्लासज्वरक्लमनिपीडितः ॥ नश्यति श्वासकासार्तो विड्भेदी कुम्भ-कामली ॥ २१ ॥**

वमन, अरुचि, हृल्लास, ( सूखीरद्द ) ज्वर, क्लम, श्वास, खाँसी और मल फटाहुआपतला होताहै, जब कुम्भ-कामला रोगमें यह लक्षण होय तो वह रोगी शीघ्र ही यम-पुरमें वास करना चाहताहै ॥ २१ ॥

## अथ कामलाद्वयारिष्टम् ।

**कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः॥ सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति ॥ २२ ॥ दाहारुचितृषानाहतन्द्रामोहसमन्वितः॥ नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान्विपद्यते ॥ २३ ॥**

जिस कामलावाले रोगीका मल मूत्र काला पीला मिलाहुआ हरे रंगका हो और लाल नेत्र तथा लाल वर्णही मुखका हो वमन भी लाल रंगकी हो, सब शरीरपर सूजन हो, कफ रक्त युक्त हो, चित्तमें ग्लानि रहे, दाह, अरुचि, अफारा, तन्द्रा, मोह, मन्दाग्नि और संज्ञा जाती रहे, ऐसा रोगी किसी प्रकार बच नहीं सक्ता ॥ २२॥ २३ ॥

अथ पाण्डुरोगभेदो हलीमकः।

यदा तु पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः॥ बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः॥ २४ ॥ स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमाः॥ हलीमकं तदा तस्य विद्यादनिलपित्ततः॥ २५ ॥

पाण्डोः पाण्डुरोगिणः॥

जब पाण्डुरोगवालेके शरीरमे वात, पित्त बढजाताहै तब उसकी त्वचाका रग हरा, काला और पीला पडजाताहै, बल और उत्साहकी क्षीणता, तन्द्रा, मन्दाग्नि, कुछ थोडासा ज्वर, स्त्रीप्रसगमे अरुचि, अंग अगमे पीडा, श्वास तृषा, अरुचि और भ्रम होय तो हलीमक रोग समझना चाहिये, यह रोग वात पित्तसे प्रगट होता है॥ २४॥ २५॥

अथ पाण्डुरोगचिकित्सा।

सप्तरात्रं गवां मूत्रैर्भावितश्चायसो रजः॥ पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः॥ ॥ २६ ॥ गोमूत्रसिद्धं मण्डूरचूर्णं सगुडमश्नतः॥ पाण्डुरोगः क्षयं याति पंक्तिशूलश्च दारुणम्॥ २७ ॥ अयोमलं सुसन्तप्तं भूयो गोमूत्रसाधितम्॥ मधुसर्पिर्युतं लीढ्वा पाण्डुरोगी सुखी भवेत्॥ २८॥

अथ पुनर्नवादिमंडूरः।

पुनर्नवा त्रिवृद्व्योषं विडङ्गं दारु चित्रकम्॥ कुष्ठं हरिद्रा त्रिफला दन्ती चव्यं कलिंगकम्॥ २९॥ कटुका पिप्पलीमूलं मुस्तं शृंगी च कारवी॥ यवानी कट्फलश्चेति पृथक्पलमितं समम्॥ ३० ॥ मण्डूरं द्विगुणं चूर्णाद्गोमूत्रेऽष्टगुणे पचेत्॥ गुडेन वटकान्कृत्वा तक्रेणालोड्य तान्पिबेत्॥ ३१ ॥ पुनर्नवादिमण्डूरवटकोऽश्विविनिर्मितः॥ पाण्डुरोगं निहन्त्याशु कामलाश्च हलीमकम्॥ श्वासं कासश्च यक्ष्माणं ज्वरं शोथं तथोदरम्॥ ३२॥ शूलं प्लीहानमाध्मानमर्शांसि ग्रहणीक्रिमीन्॥ वातरक्तश्च कुष्ठश्च सेवनान्नाशयेद्ध्रुवम्॥ ३३ ॥

अत्र पुनर्नवादिमण्डूरम् २४ । प्रत्येकपलम् १। लोहकिट्टचूर्णपलानि ४८। गोमूत्रपलानि १९२॥

लोहसारकी भस्मको सात दिनतक गोमूत्रमें भावना देकर फिर पीछे इसको दूधके साथ खाय तो पाण्डुरोग नष्ट होताहै। अथवा गोमूत्रसे बनाहुआ मण्डूर गुडमे मिलाकर खानेसे पाण्डुरोग और महाकठिन परिणामशूलका विनाश होताहै। अथवा मण्डूरको बारबार आगमे तपा तपाकर गोमूत्रमे बुझावे, जब भलेप्रकार भस्म होजाय तब घी और सहतमे मिलाकर चाटनेसे पाण्डुरोग नष्ट होताहै॥

पुनर्नवादि मण्डूर॥ पुनर्नवा, निसोत, सोठ, मिरच, पीपल, वायविडग, देवदारु, चीता, कूट, हलदी, हरड, बहेडा, आमला, दन्ती (जमालगोटेकी जड), चव्य, इन्द्रजौ, कुटकी, पीपलामूल, मोथा, काकडासिगी, कालाजीरा, अजवायन और कायफल, ये सब औषधि एक एक पल लेकर चूर्ण करै और चूर्णसे दूना मण्डूर लेवे, फिर इनसे अठगुना गोमूत्र लेकर उसमें पचावे, फिर उसमे गुड डालकर गोली बनावे, उन गोलियोको छॉछमें घोलकर पिये, यह पुनर्नवादिमण्डूर अश्विनीकुमारने बनाया है, यह पाण्डुरोग, कामला, हलीमक, श्वास, खॉसी, राजयक्ष्मा, ज्वर, सूजन, उदरशूल, प्लीहा, अफारा, बवासीर, सग्रहणी, कृमिरोग, वातरक्त और कुष्ठका नाशक होता है॥ २६–३३॥

अथ नवायसचूर्णम्।

त्र्यूषणं त्रिफला मुस्तं विडंगं चित्रकं तथा॥ एतानि नवभागानि नवभागा हतायसः॥ एकदैकीकृतं चूर्णं नरोऽष्टादशरत्तिकम्॥ ३४॥ प्रलिह्यान्मधुसर्पिर्भ्यां पिबेत्तक्रेण वा सह॥ गोमूत्रेण पिबेद्वापि पाण्डुरोगं विनाशयेत्॥ ३५॥ शोथं हृद्रोगमुदरक्रिमिकुष्ठं भगन्दरम्॥ नाशयेदग्निमान्द्यश्च दुर्नामकमरोचकम्॥ ॥ ३६ ॥ आर्द्रकस्य रसेनापि लिह्यात्कफसमृद्धिमान्॥ ३७॥

अत्र नवायसलोहं नवरत्तिकापरिमितं भक्षणीयम् । यतः उक्तं रसप्रदीपे–

गुञ्जामेकां समारभ्य यावत्स्युर्नवरत्तिकाः ॥ तावल्लोहं समश्नीयाद्यथादोषानलं नरः ॥ ३८ ॥

एवं सति प्रथमदिने त्र्यूषणादिसहितं रत्तिकाद्वयमितं प्रतिदिनं रत्तिकाद्वयंद्वयं वर्द्धयेत् । यावत् त्र्यूषणादिसहिता दश रत्तिकाः स्युः । ततस्ताः प्रतिदिनं खादेत् । इति नवायसं चूर्णम् ॥

सोंठ, मिरच, पीपल, हरड, बहेडा, आमले, नागरमोथा, वायविडंग और चीता ये सब औषधि एक एक तोला और लोहभस्म नौ ९ तोले, सबको पीसकर एकत्र करले इसमेंसे अठारह १८ रत्ती, घी और सहतमें मिलाकर चाटै, वा छॉंछके साथ अथवा गोमूत्रके साथ पिये इसके खानेकी यह रीति है, पहिले दिन दो रत्ती खाय, दूसरे दिन चार ४ रत्ती खाय, तीसरे दिन छः रत्ती, इस प्रकार नित्य प्रति दो दो २ रत्ती अधिक करै, जिसमें चूर्णके साथ मिलाकर अठारह १८ रत्ती पूरी होजावें, रसप्रदीपमें इसका प्रमाण लिखा है, इस चूर्णके खानेसे पांडुरोग, सूजन, हृद्रोग, उदर, कृमि, कुष्ठ, भगन्दर, मंदाग्नि, बवासीर और अरुचिको दूर करताहै॥३४–३८॥

## अथ कामलाचिकित्सा ।

त्रिफलाया गुडूच्या वा दार्व्या मरिचकस्य वा ॥ क्वाथो माक्षिकसंयुक्तः शीतलः कामलापहः ॥ ३९ ॥ अञ्जने कामलार्तानां द्रोणपुष्पीरसो हितः ॥ गुडूचीपत्रकल्कं वा पिबेत्तक्रेण कामली ॥ ॥ ४० ॥ धात्रीलोहरजोव्योषनिशाक्षौद्राज्यशर्कराः ॥ लीढा निवारयन्त्याशु कामलामुद्धतामपि ॥ ४१ ॥ कुम्भाख्यकामलायां तु हितः कामलिको विधिः॥ गोमूत्रेण पिबेत्कुम्भकामलावाञ्छिलाजतुम् ॥ ४२ ॥ दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान् ॥ विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥ अपहरति कामलार्तिं नस्येन कुमारिकाजलं सद्यः ॥ ४३ ॥

त्रिफलेके, वा गिलोयके अथवा दारुहल्दीके कि वा नीमके क्वाथको शीतल करके उसमें सहत मिलाकर पिये तो कामलाका विनाश होताहै, गूमेके रसका अंजन बनाकर लगावे तो कामलारोगवालेको परम हितकारी है, गिलोयके पत्तोंको पीसकर उसका रस छॉंछमें मिलाकर पीनेसे कामला रोग दूर होताहै, आमले, लोहभस्म, त्रिकुटा (सोंठ, मिरच पीपल ) हलदी, घी और बूरा, इन सबको मिलाकर चाटनेसे महाप्रबल कामलारोगका विनाश होताहै, कुम्भकामलारोगमें भी सब विधि कामलाकी रोगकी करनी चाहिये, उत्तम शिलाजीतको गोमूत्रके साथ पिये तो कुम्भकामलारोग दूर होताहै, लोहमण्डूरको बहेडेकी लकडियोंमें फूँक कर आठ ८ बार गोमूत्रमें बुझावे, फिर इसका चूर्ण कर सहतके साथ चाटे तो शीघ्रही कुम्भकामलाको दूर करै, घीकुवारके रसका नास लेवे तो तत्कालही कामला रोग दूर होताहै ॥ ३९–४३ ॥

## अथ हलीमकचिकित्सा ।

मारितं चायसं चूर्णं मुस्ताचूर्णेन संयुतम्॥ खदिरस्य कषायेण पिबेज्जन्तुं हलीमकम्॥ ॥ ४४ ॥ सितातिलबलायष्टीत्रिफलारजनीयुगैः ॥ लोहं लिह्यात्समध्वाज्यं हलीमकनिवृत्तये ॥ ४५ ॥

लोहसारकी भस्म और मोथेका चूर्ण लेकर खैरसारके क्वाथके साथ पिये तो हलीमकरोग दूर होताहै. खांड, तिल, खरैंटी, मुलेठी, त्रिफला, हलदी और दारुहलदीके चूर्णके साथ लोहेकी भस्ममें सहत और घी मिलाकर चाटे तो हलीमकरोग नष्ट होताहै ॥ ४४ ॥ ४५ ॥

## अथामृतलतादिघृतम् ।

अमृतलतारसकल्कै प्रसाधितं तुरगविद्विषः सर्पिः ॥ क्षीरं चतुर्गुणमेतद्धितरेच्च हलीमकार्तेभ्यः ॥ ४६ ॥

मधुरैरन्नपानैस्तं वातपित्तहरैर्हरेत् ॥

कामलापाण्डुरोगोक्तां क्रियां चात्रोपयोजयेत् ॥ ४७ ॥

गिलोयका रस और उसका कल्क भैंसका घृत डालकर बनावै, फिर उसमें चौगुना दूध डालकर पकावै, उस अमृतलतादि घृतको हलीमकरोगवाला सेवन करे तो हलीमकरोग समूल नष्ट हो। इस हलीमकरोगको मधुर और वातपित्त हरनेवाले अन्न पानोंसे और पाण्डुरोग तथा कामलारोगमें कहीहुई औषधियोंसे शमनकरै ॥४६॥४७॥

## अथ पाण्डुकामलाहलीमकयोः सामान्यचिकित्सा।

फलत्रिकामृतावासातिक्ताभूनिम्बनिंवजः क्वाथः ॥ क्षौद्रयुतोऽयं हन्याद्धलीमकं पाण्डुकामलारोगम् ॥ ४८ ॥

त्रिफला, गिलोय, अडूसा (वसौटा), कुटकी, चिरायता और नीमकी छालका क्वाथ बनाकर उसमें सहत मिलाकर पिये तो हलीमक, पांडु और कामलारोग विनष्ट होताहै ॥ ४८ ॥

## अथ त्र्यूषणादिमंडूरवटकः।

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकम् ॥ दार्वीत्वङ्माक्षिको धातुर्ग्रन्थिको देवदारु च ॥ ४९ ॥ एषां द्विपलिकान्भागान्कृत्वा चूर्णं पृथक्पृथक् ॥ मण्डूरच्चूर्णं द्विगुणं शुद्धमञ्जनसन्निभम् ॥ ५० ॥ मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तत्प्रक्षिपेन्नरः ॥ उदुम्बरसमाकारान्वटकांस्तान्यथाग्नि च ॥ ५१ ॥ उपयुञ्जीत तक्रेण जीर्णे सात्म्यञ्च भोजनम् ॥ मडूरवटिका ह्येताः प्राणदाः पाण्डुरोगिणाम् ॥ ५२ ॥ कुष्ठानि जठरं शोथमूरुस्तम्भं कफामयान् ॥ अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ॥ ५३ ॥

सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, नागरमोथा, वायविडंग, चव्य, चीता, दारुहलदी, दारुचीनी, सोनामाखी, पीपलामूल और देवदारु इन सबको चार चार तोले लेकर अलग अलग पीस चूर्ण करै, इन सबसे दूने मडूरके चूर्णको अठगुने गोमूत्रमे पकाकर ऊपर कहेहुए चूर्णको उसमें डालकर गूलरकी समान गोली बनाकर मट्ठेके साथ अपनी शक्त्यनुसार भक्षण करै और जब वह पचजाय तो भोजन करै, यह मांडूरवटिका पांडुरोगवालेके लिये प्राणदायक है और कुष्ठ, उदररोग, सूजन, जघाओंका जकडना, कफरोग, बवासीर, कामला, प्रमेह और प्लीहादिक सब रोगोंको शान्त करैहै॥४९–५३

## अथाष्टादशांगलोहः।

किराततिक्तः सुरदारु दार्वी मुस्ता गुडूची कटुका पटोलम् ॥ दुरालभा पर्पटकं सनिम्बं कटुत्रिकं वह्निफलत्रिकञ्च ॥ ५४ ॥ फलं विडंगस्य समांशकानि सर्वैः समं चूर्णमथायसञ्च । सर्पिर्मधुभ्यां वटिका विधेया तक्रानुपानाद्भिषजा प्रयोज्या ॥ ५५ ॥ निहन्ति पाण्डुञ्च हलीमकं च शोथं प्रमेहं ग्रहणीरुजञ्च ॥ श्वासञ्च कासञ्च सरक्तपित्तमर्शांस्यथो वाग्ग्रहमामवातम् ॥ व्रणांश्च गुल्मान्कफविद्रधिञ्च श्वित्रञ्च कुष्ठञ्च ततः प्रयोगात् ॥ ५६ ॥

चिरायता, देवदारु, दारुहलदी, मोथा, गिलोय, कुटकी, परवल, जवासा, पित्तपापडा, नीम, त्रिकुटा (सोंठ, मिर्च, पीपल), चीता, हरड, बहेडा, आमला और वायविडंग, ये सब औषधि समभाग लेकर और सबकी बराबर लोहभस्म मिलाकर घी और सहतके साथ मोदक बनाकर मट्ठेके साथ सेवन करे तो पाण्डु, हलीमक, सूजन, प्रमेह, संग्रहणी, श्वास, खाँसी, रक्तपित्त, अर्श, जीभका लठरा जाना, आमवात, व्रण, वायगोला, कफरोग, विद्रधि, श्वेतकुष्ठ और प्रकारके कुष्ठादिक जो हैं वे सम्पूर्ण शान्त होतेहैं ॥ ५४–५६ ॥

यवगोधूमशाल्यन्नै रसैर्जांगलजैर्हितैः ॥ मुद्गाढकीमसूराद्यैरेषु भोजनमिष्यते॥५७॥ एषु पाण्डुरोगकामलाहलीमकेषु ॥

इति पाण्डुरोगकामलाहलीमकाधिकारः।

जौ, गेहू, शालिधानोंके चावलोंका भात, जंगली जीवों-के मासका रस, मूँग, अरहर और मसूर आदिक भोजन पाण्डु, कामला और हलीमक रोगमें देना उचित है॥५७॥

इति पाण्डुकामलाहलीमकरोगाधिकारः ।

---

# अथ रक्तपित्ताधिकारः ।

## तत्र रक्तपित्तनिदानपूर्वकसम्प्राप्तिः ।

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः॥
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥
पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणि-
तम् ॥ १ ॥

तीक्ष्णं मरिचादि । उष्णमग्नितापादि । क्षारो यवक्षारादिः । विदग्धं दूषितम् । स्वगुणैः स्वकारणैः । गुणैः तीक्ष्णादिभिः । गुणैरिति बहुत्वेन तीक्ष्णाम्ललवणकटूष्ण-घर्मादयो गृह्यन्ते । विदहति दूषयति ॥

धूप, व्यायाम ( दंड कसरत ), शोक, मार्गगमन और मैथुन इनका अधिकतर सेवन करनेसे तीक्ष्ण, उष्ण, क्षार तथा लवण पदार्थ इनको अत्यत प्रयोग करनेसे, खट्टे और चरपरे पदार्थोंको अधिक खानेसे दूषित हुआ पित्त अपने गुणोंसे शीघ्रही रुधिरको दूषित करताहै । तीक्ष्ण अर्थात् मरिचादि पदार्थ, उष्ण अर्थात् अग्निका सेवन आदि, क्षार अर्थात् जवाखारादि पदार्थ अपने गुणोंसे अर्थात् अपने कारण रूप तीक्ष्ण, खट्टे, खारी, तीखे, और गरम, आदि गुणोंसे जानना ॥ १ ॥

## अथ रक्तपित्तसामान्यलक्षणम् ।

ततः प्रवर्तते रक्तमूर्द्ध्वं चाधो द्विधापि वा॥२॥

अत्र रक्तमित्युपलक्षणम् । तेन संसृष्टं पित्तञ्च । अत एव रक्तञ्च पित्तञ्च रक्तपित्तमिति द्वन्द्व इति सुश्रुतः । रक्तञ्च तत्पित्तं चेति रक्त-पित्तं रागप्राप्तं पित्तरक्तमित्युच्यते रक्तपित्तं कर्मधारयश्च । रक्तपित्तं मनीषिभिरिति उभ-यत्रापि न दोषः कारणत्रयाद्रक्तस्यापि समाख्यानम् ॥

संयोगाद्दूषणात्तत्तु सामान्याद्गन्धवर्णयोः ॥

इस प्रकार पित्तसे दूषित होनेके कारण रुधिर और उसके साथ पित्त मिलकर ऊर्द्ध्व मार्गोंसे अथवा अधोमार्गोंसे वा दोनो मार्गोंसे बहने लगताहै उसको रक्तपित्त कहतेहैं ।

यहां सुश्रुत कहताहै कि, रुधिर और पित्त ये दोनों बहने लगतेहैं इस कारण यह रोग रक्तपित्त कहाजाताहै "अन्य ग्रन्थकार कहतेहैं कि, लाल रंगका पित्त होकर बहनेलगताहै इसकारण यह रोग रक्तपित्त कहाजाताहै"तीनो कारणोंसे पित्त रंजित ( लाल ) होकर रक्तपित्त कहाजाताहै, अत एव दोनो पक्षोंमें किसी प्रकारका दोष नहीं आता, रुधिरका और पित्तका संयोग होताहै, पित्तसे रुधिर दूषित होताहै और रुधिर तथा पित्तकी गंध और वर्ण समान होतेहैं, इन तीनों कारणोंसे रंजित हुआ जो पित्त उसको विद्वान् लोग रक्तपित्त कहतेहैं ॥ २ ॥

## अथ रक्तपित्तप्रवृत्तिमार्गः ।

ऊर्द्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ॥३॥

कोपको प्राप्त हुआ यह पित्त—नाक, आँख, कान और मुख इन ऊँचे मार्गोंसे बहताहै, तथा लिंग, योनि और गुदा इन नीचे मार्गोंसे बहताहै और सम्पूर्ण रोमकूपोंसे भी बहताहै ॥ ३ ॥

## अथ रक्तपित्तपूर्वरूपम् ।

सदनं शीतकामित्वं कण्ठधूमायनं वमिः॥
लोहगन्धश्च निश्वासो भवत्यस्मिन्भवि-
ष्यति ॥ ४ ॥

जब रक्तपित्त होनेको होताहै तब उससे कुछ पहिले ग्लानि, शीतकी इच्छा, गलेमें धुयेंकासा घुटना, वमनका होना, रुधिरकी समान गंधका निकलना और वारवार श्वासोंका आना ये सब लक्षण होतेहैं ॥ ४ ॥

## अथ कफजवातजरक्तपित्तरूपम् ।

सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफा-

न्वितम् ॥ श्यावारुणं सफेनं च तनु रूक्षञ्च वातिकम् ॥ ५ ॥

कफज रक्तपित्तका रुधिर–गाढा, पांडुवर्ण, स्नेहयुक्त और पिच्छिल होताहै। वातसम्बन्धी रक्तपित्त–काला, लाल, झागो युक्त पतला और रूखा वहताहै ॥ ५ ॥

## अथ पित्तजरक्तपित्तस्वरूपम्।

रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम्॥
मेचकाङ्गारधूमाभमञ्जनाभञ्च पैत्तिकम्॥६॥

मेचकम् चिक्कणं कृष्णवर्णम्। अञ्जनं स्रोतोञ्जनं तदाभम् ॥

पित्तज रक्तपित्तका रुधिर–क्काथकी सदृश काला, गोमूत्रकी तुल्य चिकने काले रगका, कोयलेकी धुँवेकी समान और अंजनकी समान प्रवर्तन होताहै ॥ ६ ॥

## अथ संसर्गविशेषेण मार्गभेदाः।

संसृष्टलिंगं संसर्गात्रिलिंगं सान्निपातिकम् ॥ ऊर्द्धगं कफसंसृष्टमधोगं मारुतानुगम् ॥ द्विमार्गं कफवाताभ्यामुभाभ्यां तत्प्रवर्तते ॥ ७ ॥

कफके संसर्गवाला रक्तपित्त–ऊर्ध्व मार्गसे वहताहै, वात सम्बन्धी रक्तपित्त–अधोमार्गसे वहताहै, कफ और वायुके संसर्गवाला रक्तपित्त–दोनो मार्गोंसे वहताहै और जो तीनों दोपोंसे ससर्गज सान्निपातिक रक्तपित्त होताहै उसमें तीनों दोपोंके लक्षण देखे जातेहैं ॥ ७ ॥

## अथ रक्तपित्तोपद्रवाः।

दौर्बल्यं श्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छा भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा॥ तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूयनिष्ठीवनञ्च द्वेषो भुक्तेऽविपाको विकृतिरपि भवेद्रक्तपित्तोपसर्गात् ॥ ८ ॥
विकृतिः मांसप्रक्षालनाभतादिः ॥

दुर्बलता, श्वास, खाँसी, ज्वर, वमन, मद, पाडुता, दाह, मूर्च्छा, भोजन करनेके पश्चात् घोर दाह, अधीर्यपन, सदैव हृदयमे असाधारण पीडा, पियास, दस्तोंका होना, मस्तकमे सताप, थूकनेमें दुर्गधता, अन्नमें अरुचि, भोजनका न पचना और मांसके धोवनकी समान रुधिरका वहना ये सब रक्तपित्तके उपद्रव हैं अर्थात् रक्तपित्तमे यह उन्नीस उपद्रव होतेहैं ॥ ८ ॥

## अथ रक्तपित्तसाध्यासाध्यता।

एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते॥ यत्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् ॥ ९ ॥ ऊर्द्धं साध्यमधो याप्यमसाध्यं युगपद्गतम् ॥ व्याधिभिः क्षीणदेहस्य वृद्धस्याऽनश्नतस्तु यत् ॥ १० ॥

जो रक्तपित्त एक दोपज होय तो साध्य समझना, जो दो दोपोंवाला होय तो याप्य जानना और जो तीनो दोषोंवाला होय, तथा मदाग्निवाले मनुष्यके उत्पन्न हुआ होय और अत्यत वेगवाला होय तो असाध्य जानना, जो रक्तपित्त ऊर्ध्व मार्गसे निकलता होय तो साध्य समझना, अधोमार्गसे वहता होय तो याप्य जानना और जो दोनों मार्गोंसे वहता होय तथा व्याधियोंसे क्षीण हुये, वृद्ध मनुष्यके और भोजनसे थके हुए मनुष्यके उत्पन्न हुआ रक्तपित्त असाध्य जानना ॥ ९ ॥ १० ॥

## अथ साध्यरक्तपित्तविवेचनम्।

एकमार्गं बलवतो नातिवेगं नवोत्थितम्॥ रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥ ११ ॥

जो रक्तपित्त एक मार्गसे वहता होय, बलवान्के उत्पन्न हुआ, अत्यत वेगरहित, तत्कालका, हेमत और शिशिर ऋतुमें उत्पन्न हुआ और उपद्रवरहित होय तो साध्य जानना ॥ ११ ॥

## अथासाध्यरक्तपित्तम्।

मांसप्रक्षालनाभं क्वथितमिव च यत्कर्दमाम्भोनिभं वा मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम्॥ यत्कृष्णं यच्च नीलं भृशमपि कुणपं यत्र चोक्ता विकारास्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १२ ॥

उक्ता विकारा दौर्बल्यादयः । सुरपति-धनुषा तुल्यं नानावर्णम् ॥

जो रक्तपित्तका रुधिर मासके धोवनकी समान अथवा काढेकी समान, वा कीचके भिलेहुए पानीकी समान, वा मेद, राध अथवा रुधिरकी समान, वा कलेजेके टुकडेके रंगका, किंवा पकी जामुनकी समान, या काला अथवा मोरके गलेकी समान नीला, अथवा मुरदेकी समान गधवाला, अथवा प्रथम कहे हुए विकारोंवाला और इन्द्रधनुषकी समान अनेक प्रकारके रंगवाला होय तो असाध्य जानना ॥ १२ ॥

येन चोपहतो रक्तं रक्तपित्तेन मानवः ॥ पश्येद्दृश्य वियच्चापि तदसाध्यमसंशयम् ॥ १३ ॥

येन रक्तपित्तेन उपहतः मनुष्यः दृश्यं घटपटादिकं रक्तं पश्यति स नश्यति वियच्चापि अदृश्यमपीत्यर्थः ॥

जो रक्तपित्तसे पीडित मनुष्य घटपटादि दृश्य पदार्थोंको और आकाशादि अदृश्य पदार्थोंको अत्यत रक्त वर्ण देखै वह रक्तपित्त रोगी निश्चय असाध्य है ॥ १३ ॥

## अथ रक्तपित्तारिष्टम् ।

लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः॥ लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥ १४ ॥

लोहितोद्गारदर्शी व्याधिमहिम्ना उद्गारमपि लोहितं पश्यतीत्यर्थः ॥

जो रक्तपित्तवाला रोगी वारवार रुधिरकी वमन करे, नेत्र लाल लाल होजॉय और उसको वारंवार डकारमें भी रुधिर आवे वह अवश्य मरजाता है ॥ १४ ॥

## अथ रक्तपित्तचिकित्सा ।

पित्तास्रं स्तम्भयेन्नादौ प्रवृत्तं बलिनो यतः॥ हृत्पाण्डुग्रहणीरोगप्लीहगुल्मज्वरादिकृत् १५

बलवान् मनुष्यके उत्पन्न हुए रक्तपित्तको प्रथम कदापि स्तम्भन औषधियोंके द्वारा नही रोकना चाहिये क्योंकि प्रथम रक्तपित्तको बंद करनेसे हृदयरोग, पाण्डुरोग, संग्रहणी, प्लीहा, गुल्म और ज्वरादि रोग उत्पन्न होते हैं ॥ १५ ॥

शालिषष्टिकनीवारकोरदूषप्रसाधिकाः ॥ श्यामाकाश्च प्रियंगुश्च भोजनं रक्तपित्तिनाम् ॥ १६ ॥

शालिधान, साठीधान्य, नीवार, कोदो, प्रसाधिका, समा और कगुनी इनका भात रक्तपित्त रोगीको भोजनके लिये देवे ॥ १६ ॥

मसूरमुद्गचणकाः समकुष्ठाढकीफलाः ॥ प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥ १७ ॥

रक्तपित्त रोगीको दालके लिये और यूषके लिये मसूर, मूँग, चने, मोठ और अरहरकी योजना करनी चाहिये ॥ १७ ॥

दाडिमामलकं विद्वानम्लार्थं चापि दापयेत् ॥ पटोलनिम्बन्यग्रोधप्लक्षवेतसपल्लवान्॥ ॥ १८ ॥ शाकार्थं शाकसात्म्यानां तण्डुलीयादयो हिताः ॥ पारावतान्कपोतांश्च लावान्रक्ताक्षवर्तकान् ॥ १९ ॥ शशान्कपिञ्जलानेणान्हरिणान्कालपुच्छकान् ॥ रक्तपित्तहरान्विद्याद्रसांस्तेषां प्रयोजयेत्॥ ईषदम्लानमम्लांश्च घृतभृष्टान्ससैन्धवान्॥ ॥ २० ॥ कफानुगे यूपशाकान्दद्याद्वातानुगे रसम् ॥ पथ्यं सतीनयूषेण ससितैर्लाजसक्तुभिः ॥ २१ ॥

रक्तपित्त रोगीको खटाईके लिये वैद्य अनार और आमले देवे । जिनको शाक अनुकूल होय तो ऐसे रक्तपित्त रोगियोंको शाकके लिये परवल नीम वडके अंकुर अथवा कोमल पत्ते, पाखर और वेतके कोमल पत्ते और चौलाई आदि हितकारक शाक होने चाहिये रक्तपित्तरोगीको मासके लिये कबूतर, परेवा, लवा, चकोर, वत्तक, खरगोस, तीतर, एण हरिण, हिरन और कालपुच्छ हरिण इनके मासका रस रक्तपित्तको नष्ट करनेके लिये देवे । कफज रक्तपित्तमें किंचित् अम्ल, अथवा अम्ल नहीं घीमें भुना हुआ और सैंधा निमक मिलाहुआ शाक और यूष देवे । वातज रक्तपित्त-

मे मटरके यूपके साथ और खीलोके सत्तूमे मिश्री मिलाकर मांसरस पथ्य देवे ॥ १८-२१ ॥

## अथ धान्यकादिहिमः।

धान्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः॥ रक्तपित्तं ज्वरं दाहं तृष्णां शोषञ्च नाशयेत् ॥ २२ ॥

धनिया, आमला, अडूसा, दाख और पित्तपापडा इन सबका हिम बनाकर पीनेसे रक्तपित्त, ज्वर, दाह, तृषा और शोष नष्ट होताहै यह धान्यकादि नामसे प्रसिद्ध है॥२२॥

ह्रीबेरमुत्पलं धान्यं चन्दनं यष्टिकाऽमृता॥ उशीरश्च त्रिवृच्चैषां क्वाथं समधुशर्करम् ॥ ॥ २३ ॥ पाययेत्तेन सद्यो हि रक्तपित्तं प्रणश्यति॥रक्तपित्तं जयत्युग्रं तृष्णां दाहं ज्वरं तथा ॥ २४ ॥ पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियंगुका ॥ जले साध्या रसे तस्मिन्पेया स्याद्रक्तपित्तिनाम्॥वासापत्रसमुद्भूतो रसः समधुशर्करः ॥ २५ ॥ क्वाथो वा हरते पीतो रक्तपित्तं सुदारुणम्॥ पिष्टानां वृषपत्राणां पुटपाकरसो हिमः ॥ ॥ २६ ॥ समधुर्हरते रक्तपित्तं कासज्वरक्षयान्॥ उत्पलं कुमुदं पद्मं कह्लारं लोहितोत्पलञ्च ॥ २७ ॥ मधुकश्चेति पित्तासृक्तृष्णाच्छर्दिहरो गणः ॥ वासायां विद्यमानायामाशायां जीवितस्य च ॥ रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ २८ ॥ आटरूषकमृद्वीकापथ्याक्वाथः सशर्करः ॥ क्षौद्राढ्यः सकलश्वासरक्तपित्तनिबर्हणः ॥ २९ ॥

सुगंधवाला, कमल, धनिया, चंदन, मुलेठी, गिलोय, खस और निसोत इनका क्वाथ बनाकर सहत और बूरा मिलाकर पीनेसे रक्तपित्त तत्काल नष्ट होजाताहै। कमल अथवा उत्पल कमलकी केसर—उग्र रक्तपित्त, तृषा, दाह और ज्वरको दूर करैहै। पिठवन और फूलप्रियगु इनका क्वाथ बनाकर उसमें पकी हुई पेया ( दूधपानी ) मिलाकर रक्तपित्त रोगीको पीनेको देवे। अडूसेके पत्तोंका स्वरस अथवा क्वाथ बनाकर उसमे सहत अथवा मिश्री मिलाकर पीनेसे दारुण रक्तपित्त भी नष्ट होजाताहै। अडूसेके पत्तोको पीसकर पुटपाक करे, फिर उनका रस निकालकर उसमे सहत मिलाकर पियै अथवा अडूसेके पत्तोंका हिम बनाकर उसमे सहत मिलाकर पियै तो रक्तपित्त, खाँसी, ज्वर और क्षयरोग नष्ट हो. उत्पल, कुमुद, कमल, लाल कमोदिनी और लाल कमल, ये पांचो तथा मुलहटी, इन सब औषधियोका समूह रक्तपित्त, तृषा और वमनको दूर करैहै। अडूसेके विद्यमान होनेपर जीवनकी आशा करनेवाले रक्त पित्त, क्षय और खांसीके रोगी क्यो व्यर्थ दुःख पातेहैं। अडूसा, दाख और हरड इनके क्वाथमे मिश्री और सहत डालकर पीनेसे सर्व प्रकारके श्वास और रक्तपित्त रोग नष्टहोतेहैं ॥ २३-२९ ॥

## अथ दूर्वाद्यघृतम्।

दूर्वा सोत्पलकिञ्जल्कमञ्जिष्ठासैलवालुका ॥ सिता शीतमुशीरश्च मुस्तं चन्दनपद्मकम् ॥ ३० ॥ विपचेत्कार्षिकैरेतैराजं प्रस्थमितं घृतम् ॥ तण्डुलानां जलं छागीक्षीरं दद्याच्चतुर्गुणम् ॥ ३१ ॥ तत्पानं वमतो रक्तं नावनं नासिकागते ॥ कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥ ३२ ॥ चक्षुः स्रवति रक्तश्चेत्पूरयेत्तेन चक्षुषी ॥ मेढ्रपायुप्रवृत्ते तु वस्तिकर्मसु योजयेत् ॥ ३३ ॥ रोमकूपप्रवृत्ते तु तदभ्यंगं प्रयोजयेत् ॥ सर्वेषु रक्तपित्तेषु तस्माच्छ्रेष्ठमिदं घृतम् ॥ ३४ ॥

दूब, कमल, कमलकी केसर, मँजीठ, एलुआ, मिश्री, शीतलचीनी, या कपूर, खस, नागरमोथा, चन्दन लाल और पद्माख प्रत्येक औषधि एक एक तोला लेकर कल्क बनावै, इस कल्कको चौगुने चावलोंके जलमें और बकरीके दूधमे ६४ चौंसठ तोले बकरीका घी विधिपूर्वक पकाना चाहिये। जो रुधिरकी वमन होती होय तो इस घृतको पीना उत्तम है। जो नाकमेंसे रुधिर निकलता होय तो इस घृतका नास देना हितकारी है। जो कानमेसे रुधिर बहता होय तो इस घृतको कानमे डालना शुभ है। जो

नेत्रोंमेंसे रुधिर गिरता होय तो इस घृतको नेत्रोंमें लगाना श्रेष्ठ है। जो लिंगमेंसे अथवा गुदामेंसे रुधिर बहता होय तो इस घृतकी पिचकारी लगानी सुखद है। जो रोमकूपोंमेंसे रुधिर निकलता होय तो इस घृतकी मालिस अत्यन्त फलदायक है। यह दूर्वाद्य घृत सर्व प्रकारके रक्तपित्तोंमें उपयोगी होनेके कारण श्रेष्ठ है ॥ ३०–३४ ॥

मृद्वीका चन्दनं लोध्रं प्रियंगुश्च विचूर्णयेत् ॥ चूर्णमेतत्पिबेत्क्षौद्रवासारससमन्वितम् ॥ ॥३५॥ नासिकामुखपायुभ्यो योनिमेढ्रादिवेगिनम् ॥ रक्तपित्तं स्रवद्धन्ति सिद्ध एष प्रयोगराट् ॥ ३६ ॥ यच्च शस्त्रक्षतेनेव रक्तं स्रवति वेगतः ॥ तदप्येतेन चूर्णेन तिष्ठत्येवावचूर्णितम् ॥ ३७ ॥

दाख, चदन, लोध, और फूलप्रियगु इन सबका चूर्ण करके सहत और अडूसेके रसके साथ सेवन करै तो ये उत्तम प्रयोग नाकमेंसे, मुखसे, गुदामेंसे, योनिमेंसे और लिंग आदिसे वेगपूर्वक गिरते रुधिरको तत्काल बदकरदेताहै, जो शस्त्रके लगनेसे घाव होकर उसमें रुधिर बहता हो और वह रुधिर बद नहीं होसके तो उस घावके ऊपर इस चूर्णको बुरकानेसे तत्काल रुधिरका बहना बन्द होजाताहै ॥ ३५–३७ ॥

इक्षूणां मध्यकाण्डानि सकन्दं नीलमुत्पलम् ॥ केशरं पुण्डरीकस्य मोचामधुकपद्मकैः ॥३८॥ वटप्ररोहशुंगाश्च द्राक्षा खर्जूरमेव च ॥ एतानि समभागानि कषायं सम्प्रकल्पयेत् ॥ ३९ ॥ उषितं मधुसंयुक्तं पाययेच्छर्करान्वितम् ॥ सप्रमेहं रक्तपित्तं क्षिप्रमेतन्नियच्छति ॥४०॥ द्राक्षया फलिनीभिर्वा प्रियालमधुकेन वा ॥ श्वदंष्ट्र्या शतावर्या रक्तजित्साधितं पयः ॥ ४१ ॥

ईखके बीचका काड (गन्नेकी गाठ) जड समेत नील कमल, कमलकी केसर, केला, मुलेठी, पद्माख, वडके अकुर, अथवा कोमल पत्ते, दाख और खजूर इन सबको समानभाग लेकर हिम बनावै, इस हिममें मिश्री और सहत मिलाकर पियै तो रक्तपित्त और प्रमेह तत्काल नष्ट हो जातेहैं।

दारख तथा फूलप्रियगुसे अथवा चिरौंजीसे तथा मुलेठीसे, अथवा गोखुरूसे किंवा सतावरसे पकाया हुआ दूध रक्तपित्तको दूर करता है ॥ ३८–४१ ॥

पक्वोदुम्बरकाश्मर्यः पथ्याखर्जूरगोस्तनाः। मधुना घ्नन्ति संलीढा रक्तपित्तं पृथक्पृथक् ॥ ४२ ॥

अत्र काश्मर्याः फलमेव ग्राह्यं फलसाहचर्यात्।

अतिनिःसृतरक्तो वा क्षौद्रयुक्तं पिबेदसृक् ॥ सकृद्वा भक्षयेदाज्यं मांसं वा पित्तसंयुतम् ॥ ४३ ॥ नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् ॥ सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपन ॥ ४४ ॥ घ्राणप्रवृत्ते जलमाशु पेयं सशर्करं नासिकया च यो वा ॥ द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करंश्चेक्षुरसं हिताय ॥ ४५ ॥ नस्ये दाडिमपुष्पस्य रसो दूर्वाभवोऽपि वा ॥ आम्रास्थिजः पलाण्डोर्वा नासिकास्राविरक्तजित् ॥ ४६ ॥

पके गूलरके फल, अथवा कुम्भेरके फल अथवा हरड या खजूर किंवा दाख इनको सहतमें मिलाकर चाटनेसे रक्तपित्त नष्ट होताहै।

जिस मनुष्यके शरीरमेंसे अत्यन्त रुधिर निकल चुका होय वह मनुष्य बकरेके रुधिरमें सहत मिलाकर पियै अथवा एक वार सहतके साथ घी खाय। अथवा पित्तसहित मासको खाय।

जो नाकमें रुधिर गिरताहो अर्थात् नकसीर छूटती होय तो आमलेको महीन पीसकर घीमें भूनकर माथेपै लेप करदेवै, जिस प्रकार बाधसे जलका वेग रुकजाताहै उसीप्रकार इस लेपसे रुधिरका गिरना बद होजाताहै। अथवा शीतलजलमें बूरा मिलाकर सरबत बनाकर नाकके द्वारा पीनेसे या नाकके द्वारा दूध पीनेसे अथवा दूधके साथ दाखका रस पीनेसे किंवा ईखके रसमें खाड मिलाकर पीनेसे नकसीर बद होजाताहै।

अनारके फूल, वा दाखका रस अथवा आमकी गुठलीका रस, किंवा प्याजके रसका नास देनेसे नाकमेंसे रुधिरका गिरना बंद होजाताहै ॥ ४२–४६ ॥

## अथ खण्डकूष्माण्डावलेहः ।

पुराणं पीनमानीय कूष्माण्डस्य फलं बृहत्॥ तद्बीजाधारबीजत्वक्छिराशून्यं समाचरेत् ॥ ४७ ॥ ततस्तस्य तुलां नीत्वा पचेज्जलतुलाद्वये ॥ तस्मिन्नीरेऽर्द्धशिष्टे तु यत्नतः शीतलीकृते ॥ तानि कूष्माण्डखण्डानि पीडयेद्दृढवाससा ॥ ४८ ॥ यत्नतस्तज्जलं नीत्वा पुनः पाकाय धारयेत् ॥ कूष्माण्डं शोषयेद्धर्मे ताम्रपात्रे ततः क्षिपेत् ॥४९॥ क्षिप्त्वा तत्र घृतं प्रस्थं कूष्माण्डं तेन भर्जयेत् ॥ मधुवर्णं तदालोक्य तज्जलं तत्र निक्षिपेत् ॥ ५० ॥ सितायाश्च तुलां तत्र क्षिप्त्वा तल्लेहवत्पचेत् ॥ सुपक्के पिप्पलीशुण्ठीजीराणां द्विपले पृथक् ॥ ५१ ॥ पृथक्पलार्द्धं धान्याकं पत्रैलामरिचत्वचम्॥ चूर्णमेषां क्षिपेत्तत्र घृतार्द्धं क्षौद्रमावपेत् ॥ एतत्पलमितं खादेदथ वाऽग्निबलं यथा ॥ ॥ ५२ ॥ खण्डकूष्माण्डलेहोऽयं रक्तपित्तश्च नाशयेत् ॥ पित्तज्वरं तृषां दाहं प्रदरं कृशतां वमिम् ॥ ५३ ॥ कासं श्वासञ्च हृद्रोगं स्वरभेदं क्षतं क्षयम् ॥ नाशयत्येव वृद्धिश्च बृंहणो बलवर्द्धनः ॥ ५४ ॥

उत्तम पुराना, बडा, और मोटा पेठा लेकर छील बनाकर उसके बीज और बीजोंके रहनेके स्थान निकालकर बगेल देवै फिर उसमेंसे सौ १०० पल गूदा लेकर ८०० अठसौ तोले जलमे पकावै, जब पकते २ जल आधा बाकी रहजाय तब उतारकर यत्नपूर्वक शीतल करै, फिर उसमेसे पेठेके टुकडोंको निकालकर उत्तम मोटे वस्त्रमें खूब खैंचकर बाँधे और दबाकर जल निचोड देवै और निचुडेहुए जलको फिर पकानेके लिये अलग रख देवै, फिर उन पेठेके टुकडोको धूपमे सुखाकर तांबेके बासनमें डालकर ६४ चौसठ तोले घी मिलाकर भूने, जब भुनते भुनते सहतकी समान होजाय तब पूर्वोक्त पेठेके निचोडे हुए जलमे डालकर और उसमें १०० सौ पल उत्तम मिश्री डालकर अवलेहकी तरह पकावै, जब अच्छे प्रकारसे पककर तैयार होजाय तब उसमे ८ आठ तोले पीपल, ८ आठ तोले सोंठ, ८ आठ तोले जीरा, २ तोले धनिया, २ दो तोले तेजपात, २ तोले इलायची, २ दो तोले काली मिरच और दो तोले दालचीनी इन सबका चूर्ण करके मिलादेवै और ३२ बत्तीस तोले सहत मिला देवे तो यह 'खण्डकूष्माण्ड' अवलेह तैयार होताहै । इसमेंसे ४ चार तोले प्रमाण खाय अथवा अपनी अग्निके बलानुसार इसमेसे सेवन करै । यह अवलेह—रक्तपित्त, पित्तज्वर, तृषा, दाह, प्रदर, कृशता, वमन, खाँसी, श्वास, हृदयरोग, स्वरभेद, क्षत, क्षय और अन्त्रवृद्धिको नष्ट करैहै । यह पुष्टिकारक और बलको वढानेवाला है ॥ ४७–५४ ॥

## अथ बृहत्कूष्माण्डावलेहः ।

पुराणं पीनमानीय कूष्माण्डस्य फलं दृढम्॥ तद्बीजाधारबीजत्वक्छिराशून्यं समाचरेत् ॥ ५५ ॥ ततोऽतिसूक्ष्मखण्डानि कृत्वा तस्य तुलां पचेत् ॥ गोदुग्धस्य तुलामध्ये मन्देऽग्नौ वा पचेच्छनैः ॥ ५६ ॥ शर्करायास्तुलां सार्द्धां गोघृतं प्रस्थमात्रकम् ॥ प्रस्थार्द्धं माक्षिकश्चापि कुडवं नारिकेलतः ॥ ५७ ॥ प्रियालफलमज्जानं द्विपलं तिखुरीपलम् ॥ क्षिपेदेकं च विपचेल्लेहवत्साधु साधयेत् ॥ ५८ ॥ भिषक्सुपक्कमालोक्य ज्वलनादवतारयेत् ॥ कोष्णे तत्र क्षिपेदेषां चूर्णं तानि वदाम्यहम् ॥ ॥ ५९ ॥ एकोऽक्षः शतपुष्पाया अथ क्षीरी यवानिका ॥ गोक्षुरः क्षुरकः पथ्या कपिकच्छुफलानि च ॥ ६० ॥ सप्तमी त्वक्च सर्वेषामक्षयुग्मं पृथक्पृथक् ॥ धान्याकं पिप्पली मुस्तमश्वगन्धा शतावरी ॥६१॥

तालमूली नागबला बालकं पत्रकं शटी ॥ जातीफलं लवङ्गञ्च सूक्ष्मैला बृहदेलिका ॥ ॥ ६२ ॥ शृंगाटकं पर्पटकं सर्वं पलमितं पृथक् ॥ चन्दनं नागरं धात्रीफलञ्चापि कशेरुकम् ॥ ६३ ॥ प्रत्येकं पञ्च कर्षाणि चत्वार्येतानि निक्षिपेत् ॥ पलद्वयमुशीरस्य मषाणस्योषणस्य च ॥ ६४ ॥ कूष्माण्डस्यावलेहोऽयं भक्षितः पलमात्रया ॥ किं वा यथावह्निबलं भुक्त्वा रोगान्विनाशयेत् ॥ ॥ ६५ ॥ रक्तपित्तं शीतपित्तमम्लपित्तमरोचकम् ॥ वह्निमान्द्यं सदाहञ्च तृष्णां प्रदरमेव च ॥ ६६ ॥ रक्तार्शोऽपि तथा छर्दिं पाण्डुरोगञ्च कामलाम् ॥ उपदंशं विसर्पञ्च जीर्णञ्च विषमं ज्वरम् ॥ ६७ ॥ लेहोऽयं परमो वृष्यो बृंहणो बलवर्द्धनः ॥ स्थापनीयः प्रयत्नेन भाजने मृन्मये नवे ॥ ६८ ॥

पुराना, कठिन, उत्तम पकाहुआ और बडा पेठा लेकर उसको छील बनाकर बीजोंको और बीजोंके रहनेके स्थानको निकालकर फेंकदेवे, फिर उसके छोटे छोटे टुकडे करके उसमेंसे ४०० चारसौ तोले लेकर ४०० चारसौ तोले उत्तम गायके दूधमे धीरे धीरे मंद मद अग्निसे पकावै, फिर उसमे उत्तम सुफेद बूरा १५० डेढसौ पल गायका घी ६४ चौंसट तोले, सहत ३२ बत्तीस तोले, नारियलकी गिरी १६ सोलह तोले, चिरोंजीकी मींग ८ आठ तोले, और तवाखीर ४ चार तोले, डालकर विधिपूर्वक अवलेहकी समान पकावै जब अच्छेप्रकारसे पककर तैयार होजाय तब उसको अग्निमेंसे उतार लेवे, जब कुछ कुछ गरम रहे तब नीचे लिखी औषधियोंको मिलादेवै । जैसे सौंफ १ एक तोला, वंश लोचन २ दो तोले, अजवायन २ दो तोले, गोखुरू २ दो तोले, तालमखाना, २ तोले, हरड २ दो तोले, कौंछके बीज २ दो तोले, दालचीनी २ तोले, धनिया ४ चार तोले, पीपल ४ तोले, नागरमोथा ४ चार तोले, असगंध ४ चार तोले, सतावर ४ चार तोले, काली मुसली ४ चार तोले, गंगेरन ४ तोले, सुगंधवाला ४ तोले, तेजपात ४ चार तोले, कचूर ४ चार तोले, जायफल ४ चार तोले, लौंग ४ चार तोले, छोटी इलायची ४ चार तोले, बडी इलायची ४ चार तोले, सिंगाडे ४ चार तोले, पित्तपापडा ४ तोले, चदन ५ पाच तोले, सोंठ ५ पाच तोले, आमले ५ पाच तोले, कसेरू ५ पाच तोले, खस ८ आठ तोले, मखाने ८ आठ तोले, और कालीमिर्च ८ आठ तोले, इन सबका चूर्ण करके मिला देवै तो यह 'बृहत्कूष्माण्डावलेह' सिद्ध होताहै । इस अवलेहको ४ चार तोले प्रमाण अथवा अपनी अग्निके बलानुसार सेवन करै तो रक्तपित्त, शीतपित्त, अम्लपित्त, अरुचि, मन्दाग्नि, दाह, तृषा, प्रदर, रुधिरकी बवासीर, वमन, पाण्डुरोग, कामला, उपदंश, विसर्प, जीर्णज्वर और विषमज्वर नष्ट होताहै । यह अवलेह मैथुनशक्तिको अत्यन्त बढानेवाला, धातुको पुष्ट करनेवाला और बलको बढानेवाला हैं। इस अवलेहको मट्टीके उत्तम नवीन बासनमें भरकर रखना चाहिये ॥ ५५–६८ ॥

## अथ खण्डकूष्माण्डकम् ।

कूष्माण्डकस्य स्वरसं पलानां शतमात्रया । रसतुल्यं गवां क्षीरं धात्रीचूर्णं पलाष्टकम् ॥ ॥ ६९ ॥ मृद्वग्निना पचेत्तावद्यावद्भवति पिण्डवत् ॥७०॥ धात्रीतुल्या सिता योज्या पलार्द्धं लेहयेदनु ॥ खण्डकूष्माण्डकं ह्येतद्भुक्तमभ्यासतो हरेत् ॥ रक्तपित्तमम्लपित्तं दाहं तृष्णाञ्च कामलाम् ॥ ७१ ॥

उत्तम पेठेका स्वरस ४०० चारसौ तोले, गायका दूध ४०० चारसौ तोले, और आमलोंका चूर्ण ३२ बत्तीस तोले सबको एकत्र मिलाकर धीरे २ मंद मद अग्निसे तबतक पकावै जबतक पिंड न बंधे, जब पिड बंधजाय तब इसमें ३२ बत्तीस तोले उत्तम बूरा मिलादेवे तो 'खण्डकूष्माण्डक' नामवाला अवलेह तैयार होताहै । इस अवलेहमेसे नित्य २ दो तोले प्रमाण खाना चाहिये । इस अवलेहको सेवन करनेसे रक्तपित्त, अम्लपित्त दाह, तृषा, और कामलारोग नष्ट होजाताहै ॥ ६९–७१ ॥

अथ खंडखाद्यलौहः।

शतावरी छिन्नरुहा वृषो मुण्डतिका बला ॥ तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥ ७२ ॥ भार्ङ्गी पुष्करमूलञ्च पृथक्पञ्च पलानि च ॥ जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥ ७३ ॥ दिव्यौषधिहतस्यापि माक्षिकेण हतस्य वा ॥ पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम् ॥ ७४ ॥ खण्डतुल्यं घृत दयं पलं षोडशकं बुधैः ॥ पचेत्ताम्रमये पात्रे गुडपाको मतो यथा ॥ ७५ ॥ प्रस्थार्धं मधुना देयं शुभाश्मजतुकस्य च ॥ शृंगी कृष्णा विडंगञ्च शुण्ठ्यजाजी पलंपलम् ॥ ७६ ॥ त्रिफला धान्यकं पत्रं कणा मरिचकेशरम् ॥ चूर्णं दत्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥ ७७ ॥ यथाकालं प्रयुञ्जीत बिडालपदमात्रकम्॥ गव्यक्षीरानुपानञ्च सेव्यो मांसरसः पयः ॥ ७८ ॥ गुरुवृष्यान्नपानानि स्निग्धमांसादिबृंहणम् ॥ रक्तपित्तं क्षयं कासं पार्श्वशूलं विशेषतः ॥ ७९ ॥ वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम् ॥ श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा ॥ ८० ॥ आनाहं मूत्रसंस्रावमम्लपित्तं निहन्ति च ॥ चक्षुष्यं बृंहणं वृष्यं मंगल्यं प्रीतिवर्द्धनम् ॥ ८१ ॥ आरोग्यं पुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम् ॥ श्रीकरं लाघवञ्चैव खण्डखाद्यं प्रकीर्तितम् ॥ ॥ ८२ ॥ छागं पारावतं मांसं तित्तिरः क्रकरः शशः ॥ कुरंगः कृष्णसारश्च मांसमेषां प्रयोजयेत् ॥ ८३ ॥ नारिकेलपयःपानं सुनिषण्णकवास्तुकम् ॥ शुष्कमूलकजीवाख्यं पटोलं बृहतीफलम्॥ ॥ ८४ ॥ वार्ताकुं पक्वमाम्रञ्च खर्जूरं स्वादु दाडिमम् ॥ ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम् ॥ वर्जनीयं विशेषेण खण्डखाद्यं समश्नता ॥ ८५ ॥ लोहान्तरवदत्रापि पुटनादिक्रियेष्यते ॥ न पुनर्माक्षिकेणैव शिलयैव हि मारणम् ॥८६॥

भार्ङ्गी [वामन्हाटी] दिव्यौषधी मनःशिला। रुक्मलौहं गजबेली इति लोके। सुनिषण्णं चतुष्पत्री शाकविशेषः। जीवन्ती जीव इति शाकविशेषः। ककारपूर्वकं कटुकः कालशाकं कूष्माण्डं कर्कटी कर्कोटक कलिंग कर्कन्धु करमर्दक करीर कतक कशेरु काञ्जिक इति वर्जनीयम्। इति खण्डखाद्यं लोहम्।

सतावर, गिलोय, अडूसा, गोरखमुंडी, खिरैटी, मुसली, खैर, त्रिफला, भारंगी और पोहकरमूल ये प्रत्येक औषधि २० बीस २० बीस तोले लेकर १०२४ एक हजार चौबीस तोले भर जलमें पकावै जब पकते २ आठवां भाग काढा शेष रहजाय तब मैनशिल अथवा सोनामाखीसे माराहुआ तक्ष्णि लोहा ४८ अरतालीस तोले, खॉड ६४ तोले, घृत ६४ चौसठ तोले, फिर सबको मिलाकर तांबेके बासनमें जिसप्रकार गुडका पाक बनताहै उसी प्रकार इसको पकावै, शीतल होनेपर ३२ तोले सहत मिलादेवै, वंशलोचन, शिलाजीत, काकडाशिगी, पीपल, वायविडंग, सोंठ, जीरा, त्रिफला, धनिया, तेजपात, कालाजीरा मिरच और नागकेशर प्रत्येकका चूर्ण चार चार तोले लेकर सबको मिलाकर खूब हाथोंसे मथकर चिकने बासनमें भरके रखदेवे, इसको खडखाद्यलोह कहतेहैं। समयानुसार इस औषधिमेंसे एक तोला प्रमाण लेकर गायके दूधके साथ सेवन करना चाहिये। इस लोहेपर मासका रस, (सुरुआ) दूध, भारी और वृष्य अन्नपान, स्निग्ध, मांसादि पुष्टिकारक पदार्थ, ये सब सेवन करने चाहिये, इस लोहको भक्षण करनेसे रक्तपित्त, क्षय, खॉसी, पार्श्वशूल, वातरक्त, प्रमेह शीतपित्त, वमन, ग्लानि, सूजन, पाण्डुरोग, कोढ, प्लीहा, उदररोग, अफारा, मूत्रका स्रवना और अम्लपित्त ये सब रोग नष्ट होतेहैं। यह खंडखाद्य लोह

नेत्रोंको हितकारी पुष्टिका करनेवाला, मैथुनशक्तिको बढानेवाला, मङ्गलरूप, प्रीतिवर्द्धक, आरोग्यदायक, पुत्र उत्पादक, परमोत्तम, कामाग्निबलवर्द्धन, लक्ष्मीजनक और शरीरमें लघुता ( हलकापन ) करनेवाला है। इस लोहे-पर बकरेका मास, कबूतरका मांस, तीतरका मांस, कर्कर ( केकडा ) का मास, खरगोसका मास, कुरग और कृष्णसारादि जीवोंका मास खाना चाहिये। इस लोहको सेवन करनेवाला मनुष्य नारियलका जल, शिरिआरी, ( चौपतिया ) का शाक, बथुआ, सूखी मूली, जीवतीका-शाक, परवल, कटेरीके फल, बैंगन, पक्के आम, खजूर और मधुर अनार इन सबको त्याग देवै। जिन पदार्थोंके नामोंमें प्रथम 'क' आवे ऐसे ककारादि नामवाले समस्त पदार्थ और अनूपदेशके जीवोंका मांस, इनको भी विशेष करके त्यागदेवै। इस लोहमें तीक्ष्ण लोहको मैनशिल और सोनामाखीसे ही केवल मारना ऐसा नहीं समझना चाहिये परन्तु अन्य लोहेकी समान इसमें भी पुटपाक आदि सम्पूर्ण क्रिया करनी चाहिये ॥ ७२–८६ ॥

## अथ शतावरीपाकः।

**शतावरीमूलकल्कं कल्कात्क्षीरं चतुर्गुणम् ॥ क्षीरतुल्यं घृतं गव्यं सितया कल्कतुल्यया ॥ ८७ ॥ घृतशेषं पचेत्तत्तु पलार्द्धं लेहयेत्सदा ॥ रक्तपित्तं ह्यम्लपित्तं क्षयं श्वासञ्च नाशयेत् ॥ ८८ ॥**

इति रक्तपित्ताधिकारः।

शतावरका कल्क ८ आठ तोले, दूध ३२ बत्तीस तोले, गायका घी ३२ तोले और मिश्री ८ आठ तोले लेवे सबको विधिपूर्वक मिलाकर यथाविधिसे घृतको पकावै। जब पकते पकते घृतमात्र बाकी रहजाय तब उतारलेवे, इसमेंसे, नित्य दो तोले प्रमाण सेवनकरे तो रक्तपित्त, अम्लपित्त, क्षय और श्वास ये नष्ट होतेहैं॥८७॥८८

इति रक्तपित्ताधिकारः सम्पूर्णः।

---

( १ ) कटुक, कडवे परवल, कालशाक, कूष्माण्ड (पेठा), ककडी, करेला, कलिंग ( तरबूज ), कर्कन्धु ( बेर ), कांदा, कतकफल, केला और कांजी इत्यादि जानने।

# अथाम्लपित्तश्लेष्मपित्ताधिकारः।

## तत्राम्लपित्तविप्रकृष्टनिदानम्।

**विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजो विदग्धम् ॥ पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः ॥ १ ॥**

**दुष्टं व्यापन्नमन्नम्। पित्तप्रकोपि इत्युक्तेऽपि अम्लविदाहि इति विशेषार्थम्। पित्तप्रकोपि पानं तक्रसुरादि। अन्नं मापादि स्वहेतूपचितं पुरा यत् वर्षास्वम्लविपाकैः जलैः औषधीभिश्च तादृशीभिरुपचितम् सञ्चितम् अम्लपित्तम्। तदम्लपित्तं वदन्ति अम्लपित्ताख्यं रोगं वदन्ति ॥**

विरुद्ध ( संयोग विरुद्ध जैसे दूध मछली ), दुष्ट ( बिगडा हुवा भोजन), खट्टा, दाहकारक और पित्तको कुपित करनेवाले अन्न पानोंको जो मनुष्य खाता पीताहै उसके अम्लपाकको प्राप्त हुआ पित्त प्रथम वर्षादि ऋतुओंमें अम्ल-पाकी जलोंसे तथा ऐसी औषधियोंसे सञ्चित हुआ पित्त कुपित होताहै उसको महात्मा वैद्य अम्लपित्तरोग कहतेहैं।

यद्यपि पित्तको कुपित करनेवाले, इतना ही कहनेसे खट्टे और दाहकारकका समावेश होताहै तथापि खट्टे और दाहकारक, यह अलग कहेहैं, इस कहनेका अभि-प्राय यह है कि पित्तका विशेष प्रकोप होताहै, छाँछ तथा मदिरा आदि पान पदार्थ और उडद आदि अन्न पित्तको कुपित करनेवाले जानने ॥ १ ॥

## अथाम्लपित्तरोगलक्षणम्।

**अविपाकः क्लमोत्क्लेशस्तिक्ताम्लोद्गारगौरवैः ॥ हृत्कण्ठदाहारुचिभिरम्लपित्तं वदेद्भिषक् ॥ अम्लपित्तं द्विधा प्रोक्तमधोगं च तथोर्द्ध्वगम् ॥ २ ॥**

अन्नादिकका नहीं पचना, ग्लानि, वमन कीसी इच्छाका होना, कडवी और खट्टी डकारोंका आना

शरीरमे भारीपन, हृदय और गलेमें दाह और अरुचि इन लक्षणोंके होनेसे अम्लपित्तरोग कहना चाहिये ।

## अम्लपित्तके दो भेद ।

ऊर्ध्वग ( ऊंची गतिवाला ) और अधोग ( नीची गतिवाला ) ऐसे अम्लपित्त रोग दो प्रकारका है ॥ २ ॥

## अथोर्द्ध्वगाम्लपित्तलक्षणम् ।

वान्तं हरित्पीतमनीलकृष्णमारक्त क्ताममतीव चाच्छम् ॥ मत्स्योदकाभं त्वतिपिच्छिलाभं श्लेष्मानुजातं सहितं रसेन ॥ ३ ॥

आरक्तम् ईषल्लोहितम् रक्ताभं वा । अतीव चाच्छं निर्मलम् । रसेन लवणकटुतिक्तरूपेण ॥

हरे, पीले, नीले, काले, किंचित् लाल, लाल, अत्यन्त निर्मल, मछलीके धोवनकी समान, अत्यंत चिकने पिच्छिल, कफसयुक्त और खारे तीखे तथा कडवे रसवाले ऐसे पित्त वमनमे गिरते होयँ तो ऊर्ध्वग अम्लपित्त जानना ॥ ३ ॥

## अथाधोगाम्लपित्तलक्षणम् ।

तृड्दाहमूर्च्छाभ्रममोहकारि प्रयात्यधो वा विविधप्रकारम्॥हृल्लासकोठानलसादहर्षस्वेदांगपीतत्वकरं कदाचित् ॥ ४ ॥

मूर्च्छा सर्वदा ज्ञानशून्यता । मोहो विपरीतं ज्ञानम् । अधो वांते वा शब्द ऊर्द्ध्वगापेक्षया । विविधप्रकारम् हरिद्रावर्णयोगात् । कदाचिद्धृल्लासादिकरं च भवति ॥

तृषा, दाह, मूर्च्छा, भ्रम और मोहको करनेवाला, उबकाई, मन्दाग्नि, रोमाचोंका होना, पसीना, अगोंमें पीलापन इत्यादि विकारोको करनेवाला जो अम्लपित्त गुदाके मार्गसे बहताहै उसको अधोग अम्लपित्त कहतेहैं ॥ ४ ॥

## अथाम्लपित्तविशेषावस्था ।

भुक्ते विदग्धेऽप्यथ वाप्यभुक्ते करोति तिक्ताम्लवमिं कदाचित् ॥ उद्गारमेवंविधमेव कण्ठहृत्कुक्षिदाहं शिरसो रुजश्च ॥ ॥ ५ ॥ करचरणदाहमौष्ण्यं महतीमरुचि ज्वरं च कफपित्तम् ॥ जनयति कण्डूमंडलपिडिकाशतनिचितरोगचयम् ॥ ६ ॥

भुक्ते विदग्धे तिक्ताम्लवमिं करोति । तथा उद्गारम् एवंविधमेव तिक्ताम्लमेव करोति । अथ वा कदाचिद्भुक्तेऽपि तिक्ताम्लां वान्तिं करोति । तथा कण्ठहृत्कुक्षिदाहं शिरोरुजश्च करोति । तथा करचरणदाहादिकं जनयति । तथा कच्छूमण्डलपिडकाव्याप्तगात्रे रोगचयं करोति । अन्नविपाकक्लमादिकं जनयति ॥

भोजन करनेपर जब अन्नका विदग्ध पाक होताहै अथवा कदाचित् विनाही भोजन करनेपर कडवी और खट्टी वमन आवैहै, तथा कडवी और खट्टी डकार आवै है, कंठमे हृदयमे और कोखमें दाह होतीहै ।शिरमे पीडा, हाथ और पावोंमें दाह, सताप होतीहै. भयकर अरुचिको उत्पन्न करैहै, कफ और पित्तजनित ज्वर होताहै, तथा खुजली मण्डलाकार चकत्ते और फुडियोंसे व्याप्त देहमे अन्नका विदग्ध पाक एव ग्लानि आदि रोगोंके समूहको उत्पन्न करैहै ॥ ५ ॥ ६ ॥

## अथाम्लपित्ते दोषससर्गः ।

सानिलं सानिलकफं सकफं तच्च लक्षयेत्॥ दोषलिंगेन मतिमान्भिषड्मोहकरं हि तत्७॥ ऊर्द्ध्वाधः प्रवृत्त्या छर्द्यतीसाराभ्यां तुल्यतया वैद्यभ्रान्तिकृत् ।

बुद्धिमान् वैद्य दोषोंके चिह्नोंसे जाने कि, यह अम्लपित्त वातसम्बन्धी है अथवा वात और कफ इन दोनोंके संसर्गवाला है, या कफसम्बन्धी है, यह अवश्य जानना चाहिये क्यों कि, यदि यह अम्लपित्त ऊर्ध्वगतिसे होय तो वमनकी शान्ति होतीहै और अधोगतिसे होय तो अतिसार प्रतीत होताहै यहां वैद्यको भ्रम उत्पन्न होताहै । इसलिये खूब विचारकर निदान करै जिसमें किसी प्रकारका सन्देह न रहै ॥ ७ ॥

## अथ दोषभेदेन लक्षणभेदः ।

कंपप्रलापमूर्च्छाश्चिमिचिमिगात्रावसादशू-

लानि ॥ तमसो दर्शनविभ्रमप्रमोहहर्पास्तथानिलेन युतेन ॥ कफनिष्ठीवनगौरवजडतारुचिशीतसादवमिलेपाः ॥ दहनबलहानिकण्डूनिद्राचिह्नं कफानुगे भवति उभयमिदमेव चिह्नं मारुतकफसंभवेऽम्लपित्ते स्यात् ॥ ८ ॥

चिमिचिमि झिनिझिनीति लोके । हर्षो रोमाञ्चः ॥

वातज अम्लपित्तमें कंप, प्रलाप ( बकवाद ), मूर्च्छा, सब शरीरमें झनझनाहट, ग्लानि, अन्धकारदर्शन, विभ्रम, मोह रोमाचोंका होना ये सब लक्षण होतेहैं । कफज अम्लपित्तमें कफका थूकना, शरीरमें भारीपन, जडता, अरुचि, शीत, ग्लानि, वमन, मुखमें और छातीमें कफ लिसासा रहै जठराग्निके बलका नाश, खुजली और निद्राका अधिक आना ये सब लक्षण होतेहैं । वात और कफ दोनों दोषोंसे जो अम्लपित्त उत्पन्न हुवा होय तो उसमें उपरोक्त दोनों दोषोंके लक्षण होतेहैं ॥ ८ ॥

## अथाम्लपित्तसाध्यासाध्यविचारः ।

रोगोऽयमम्लपित्ताख्यो यत्नात्संसाध्यते नवः ॥ चिरोत्थितो भवेद्याप्यः कृच्छ्रसाध्यः स कस्यचित् ॥ ९ ॥

कस्यचिद्धीनाहाराचारशीलस्य ॥

यह अम्लपित्त रोग जो थोडे ही दिनोंसे उत्पन्न हुआ होय तो औषधि करनेसे साध्य होताहै । बहुत दिनोंसे उत्पन्न हुआ होय तो याप्य जानना और अयोग्य आहार विहारवाले मनुष्यको तो थोडे ही दिनोंका उत्पन्न हुवा कष्टसाध्य जानना ॥ ९ ॥

## अथ कफपित्तलक्षणम् ।

तमो मूर्च्छारुचिश्छर्दिरालस्यं च शिरोरुजा ॥ प्रसेको मुखमाधुर्यं श्लेष्मपित्तस्य लक्षणम् ॥ १० ॥

अन्धकारदर्शन, मूर्च्छा, अरुचि, वमन, आलस्य, मस्तकमें पीडा, मुखसे लारका गिरना और मुखमें मधुरताका होना, ये कफपित्तके लक्षण जानने ॥ १० ॥

## अथाम्लपित्तचिकित्सा ।

अम्लपित्ते तु वमनं पटोलारिष्टवासकैः ॥ कारयेन्मदनैः क्षौद्रैः सैन्धवैश्च तथा भिपक् ॥ ११ ॥ विरेचनं त्रिवृच्चूर्णं मधुधात्रीफलद्रवैः ॥ ऊर्द्ध्वगं वमनैर्विद्वानधोगं रेचनैर्हरेत् ॥ १२ ॥

अम्लपित्तमिति शेषः ॥

यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः ॥ यथास्वं लाजसक्तून्वा सितामधुयुतान्पिबेत् ॥ १३ ॥ निस्तुषयववृषधात्रीक्वथितं सलिलं त्रिगन्धमधुयुक्तम् ॥ द्रुततरमपहरति वमिं सञ्जनितामम्लपित्तेन ॥ १४ ॥ छिन्नोद्भवानिम्बपटोलपत्रं क्षौद्रान्वितं पीतमनेकरूपम् ॥ सुदारुणं हन्ति तदम्लपित्तं यथाशनिस्तालतरुं प्रवृद्धम् ॥ १५ ॥ वासामृतापर्पटकनिम्बभूनिम्बमार्कवैः ॥ त्रिफलाकुलकैः क्काथः सक्षौद्रश्चाम्लपित्तहा ॥ १६ ॥ पाटापटोलयवचन्दनधान्यधात्रीवासावरांगदलनागकणाभयाभिः ॥ लेहः सिताज्यमधुभिः शिलपालपिण्डी हन्त्यम्लपित्तमरुचिज्वरदाहशोषान् ॥ १७ ॥ हंत्यम्लपित्तवमनारुचिदाहमोहखालित्यमेहशिशिरव्रणशुक्रदोषान् ॥ भुक्त्वा नरः सततमामलकीरसेन वृद्धोऽप्यनेन हि भवेत्तरुणो रिरंसुः ॥ १८ ॥

अम्लपित्तरोगमें प्रथम वैद्य पटोल ( कडवे परवल ), नीम, अडूसा, मैनफल, सहत और सैंधे निमकके काथसे वमन करावै तथा निसोतका चूर्ण, सहत और आमलोंका रस इनके द्वारा विरेचन करावे । ऊर्ध्वगत अम्लपित्तको वमन कराकर दूर करे और अधोगत अम्लपित्तको विरेचन ( दस्त ) कराकर दूर करे ।

जौ अथवा गेहूके बनाये हुए यूषादि पदार्थ और उनमें मिरचादिक तीक्ष्ण वस्तु न पडी होयँ ऐसे पदार्थ पीने चाहिये अथवा भक्षण करने चाहिये,

तथा खीलेके सत्तुओंमें मिश्री और सहत मिलाकर दोषोको विचारकर पियै ।

तुपरहित जौ, अडूसा और आमला इनका क्वाथ बनाकर उसमे दालचीनी, तेजपात, इलायची और सहत डालकर पियै तो अम्लपित्तसे उत्पन्न हुई वमन तत्काल नष्ट होजातीहै ।

गिलोय, नीमके पत्ते और कडवे परवलके पत्ते इनको एकत्र पीसकर सहत मिलाकर पीनेसे जिसप्रकार वज्रसे बडे बडे ताडके वृक्ष नष्ट होजाते है उसी प्रकार इससे अनेक रूपवाले महादारुण रक्तपित्त नष्ट होजाते हैं ॥

अडूसा, गिलोय, पित्तपापडा, नीमकी छाल, चिरायता, भागरा, हरड, बहेडा, आमले और कडवे परवल इनका क्वाथ बनाकर सहत मिलाकर पीनेसे अम्लपित्त नष्ट होजाताहै ॥

पाढ, पटोलपत्र, इन्द्रजौ, धनिया, आमला, अडूसा, दालचीनी, तमालपत्र, नागकेशर, पीपल, हरड, खाड, कमल और सहत इनका अवलेह बनावै, इस अवलेहको 'शिवपालपिडी' कहतेहैं । यह अवलेह अम्लपित्त, अरुचि, ज्वर, दाह और शोषको नष्ट करैहै ॥

जो मनुष्य नित्य आमलेके रसके साथ भोजन करता है तो उसके अम्लपित्त, वमन, अरुचि, दाह, मोह, खालित्य, प्रमेह, शीत, व्रण और समस्त वीर्यके विकार नष्ट होजातेहैं, इसके प्रतापसे वृद्ध मनुष्य भी स्त्रियोंके साथ गमन करनेकी इच्छा करताहै ॥ ११-१८ ॥

### अथ खण्डकूष्माण्डकावलेहः ।

**कूष्माण्डकरसो ग्राह्यः पलानां शतमात्रकम्॥रसतुल्यं गवां क्षीरं धात्रीचूर्णं पलाष्टकम्॥१९॥ धात्रीतुल्या सिता योज्या गव्यमाज्यं पलद्वयम् ॥ मन्दाग्निना पचेत्सर्वं यावद्भवति पिण्डितम् ॥२०॥ पलार्द्धं पलमेकं वा प्रत्यहं भक्षयेदिदम् ॥ खण्डकूष्माण्डकं ख्यातमम्लपित्तापहं परम् ॥ २१ ॥**

उत्तम पेठेका रस ४०० चारसौ तोले, गायका दूध ४०० चारसौ तोले, आमलेका चूर्ण ३२ बत्तीस तोले, खाड ३२ बत्तीस तोले आर गायका घी ८ आठ तोले लेवे सबको एकत्र करके तबतक पकावै जबतक पिड बँधे, यह 'खडकूष्माण्डक' इस नामसे प्रसिद्ध है । इस अवलेहमेंसे प्रतिदिन दो तोले अथवा चार तोले खाय तो अम्लपित्त अच्छे प्रकारसे नष्ट होजाताहै ॥ १९-२१ ॥

### अथ नारिकेलखंडः ।

**कुडवं नारिकेलस्य जले मृद्वग्निना पचेत् ॥ नारिकेलजलालाभे गव्ये पयसि तत्पचेत् ॥ ॥ २२ ॥ धान्यकं पिप्पली मुस्तं चातुर्जातं विचूर्णितम् ॥ प्रत्येकं टंकमात्रं तु शीते तस्मिन्विनिक्षिपेत् ॥ २३ ॥ पलमात्रस्तदर्द्धोऽपि भक्षितः प्रत्यहं नरैः॥नारिकेलकखण्डोऽयं पुंस्त्वनिद्राबलप्रदः२४॥ अम्लपित्तं रक्तपित्तं शूलश्च परिणामजम् ॥ क्षयं क्षपयति क्षिप्रं शुष्कं दावानलो यथा ॥ २५ ॥**

**पलमात्रगव्यघृतेन नारिकेलस्य भर्जनं कर्तव्यमिति सम्प्रदायः ॥**

नारियलकी गिरी १६ सोलह तोले, लेकर नारियलके जलमें अथवा नारियलका जल न मिले तो गायके दूधमें पकावै, जब पकते पकते गाढा होजाय तब उसमे धनिया, पीपल, नागरमोथा, दालचीनी, तेजपात, इलायची और नागकेशर इन प्रत्येक औषधियोंका चूर्ण २४ चौवीस २४ चौवीस रत्तीभर मिला देवे तो "नारिकेलखड" सिद्ध होताहै । प्रतिदिन इस औषधिमेसे ४ चार तोले अथवा २ दो तोलेभर नित्य खाय तो इससे पुरुपत्व, निद्रा और बलकी प्राप्ति होतीहै । अम्लपित्त, रक्तपित्त, क्षय और परिणाम शूल ये सब नष्ट होजातेहैं जिसप्रकार दावानलसे सूखे वनका नाश होताहै । इस औषधिमे प्रथम चार तोले गायके घीमें नारियलकी गिरीको भूनना चाहिये ॥ २२-२५ ॥

### अथ बृहन्नारिकेलखंडः ।

**प्रस्थन्तु नारिकेलस्य सूक्ष्मं दृषदि पेषितम् ॥ निष्कुलीकृतकूष्माण्डखण्डानामर्द्धमाढकम् ॥ २६ ॥ तद्द्वयं भर्जयेद्गव्ये**

घृते तु कुडवोन्मिते॥ततस्तत्र क्षिपेच्छुद्धं गोदुग्धश्चाढकोन्मितम् ॥ २७ ॥ तत्रैव निक्षिपेद्द्रव्यां सितां प्रस्थद्वयोन्मिताम् ॥ पचेत्सर्वाणि चैकत्र मृदुना वह्निना भिषक् ॥ २८ ॥ सुपक्के शीतले तत्र चूर्णीकृत्य विनिक्षिपेत्॥सूक्ष्मैलां धान्यकं धात्री पर्पटं जलदं जलम् ॥ २९ ॥ उशीरं चन्दनं द्राक्षां शृङ्गाटश्च कशेरुकम् ॥ त्वक्पत्रकं सकर्पूरं कर्षयुग्मं पृथक्पृथक् ॥ ॥३०॥ सर्वं संमिश्रयेद्रक्षेद्भाजने मृन्मये नवे॥पलमात्रमिदं प्रातर्भक्षयेद्वा यथानलम् ॥ ३१ ॥ एतन्निषेवितं हन्ति रोगानेतान्न संशयः॥ अम्लपित्तं ज्वरं पित्तं रक्तपित्तमरोचकम् ॥ ३२ ॥ वातरक्तं तृषां दाहं पाण्डुरोगञ्च कामलाम् ॥ क्षयं क्षपयति क्षिप्रं शूलञ्च परिणामजम् ॥ ३३ ॥ नारिकेलस्य खण्डाऽयमश्विभ्यां भाषितः पुरा॥ वर्णदो बृंहणो वृष्यः पुंस्त्वनिद्राबलप्रदः ॥ ३४ ॥

पत्थरपर बारीक पिसा हुआ नारियल ६४ चौंसट तोले छुकले और बीजोंसे रहित पेठेके टुकडे १२८ एकसौ अठाईस तोले लेवे, सबको १६ सोलह तोले गायके घीमें भूनकर पश्चात् उसमें २५६ दोसौ छप्पन तोले उत्तम गायका दूध और १२८ एक सौ अठाईस तोले उत्तम स्वच्छ खाड डाले, फिर सबको मंद मंद अग्निसे धीरे धीरे पकावे जब उत्तम विधिसे पककर तैयार होजाय तब उसको शीतल करके उसमें छोटी इलायची, धनियॉ, आमले, पित्तपापडा, नागरमोथा, सुगंधवाला, खस, चंदन, दाख, सिंघाडे, कसेरू, तज, तेजपत्र और भीमसेनी कपूर ये प्रत्येक औषधि दो दो तोले लेकर सबका चूर्ण करके मिलादेवे, तो यह 'बृहन्नारिकेल खंड' सिद्ध होताहै । इस औषधिको मट्टीके नवीन वासनमें रखना चाहिये । इस औषधिमेंसे चार तोले भर अथवा अपनी अग्निके बलानुसार प्रातःकाल खाय । इसको सेवन करनेसे—अम्लपित्त, ज्वर, पित्त, रक्तपित्त, अरोचक, वातरक्त, तृषा, दाह, पांडुरोग, कामला, क्षय और परिणामशूल इन सबका तत्काल नाश होजाताहै । पूर्वकालमें श्रीमान अश्विनीकुमारोंका कहा हुआ यह नारिकेल खंड शरीरके वर्णको सुंदर करताहै धातुको पुष्ट करताहै, कामी मनुष्योंके लिये परम हितकारी है और पुरुषत्व, निद्रा तथा बलको बढानेवाला है ॥ २६—३४ ॥

## अथ कफपित्तचिकित्सा ।

अभया पिप्पली द्राक्षा सिताधान्ययवासकम् ॥ मधुना कण्ठदाहघ्नं पित्तश्लेष्महरं परम् ॥ ३५ ॥ पटोलयवधान्याकपिप्पल्यामलकानि च ॥ एषां क्षौद्रयुतः क्वाथः पित्तश्लेष्महरः परः ॥ ३६ ॥ पित्तश्लेष्मवमीकण्डूकोठविस्फोटदाहनुत् ॥ दीपनः पाचनः क्वाथः शृङ्गवेरपटोलयोः ॥ ३७ ॥ पिप्पलीखण्डपथ्याभिस्तुल्याभिर्मोदकः कृतः ॥ पित्तश्लेष्महरो भुक्तो वह्निमान्द्यं च नाशयेत् ॥ ३८ ॥

हरड, पीपल, दाख, खॉड, धनिया और जवासा इनका चूर्ण करके सहतमें मिलाकर चाटनेसे कफपित्त और कंठका दाह दूर होताहै ॥

कडवे परवल, इन्द्रजौ, धनिया पीपल और आमला इनका क्वाथ बनाकर सहत मिलाकर पीनेसे श्लेष्मपित्त नष्ट होजाताहै ॥

अदरख और परवल इनका क्वाथ बनाकर पिये तो यह अग्निको दीपन करनेवाला, पाचन और कफ पित्त, वमन, खुजली, चकत्ते, फोडे और दाहको नष्ट करेहै ॥

पीपल, खाड और हरड इनको समान भाग लेकर लड्डू बनाकर खानेसे कफपित्त और अग्निकी मंदता दूर होतीहै ॥ ३५—३८ ॥

इति अम्लपित्तश्लेष्मपित्ताधिकारः सम्पूर्णः ।

---

# अथ क्षयरोगाधिकारः ।

## तत्र क्षयरोगविप्रकृष्टसन्निकृष्टनिदानम् ।

वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात्॥

त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥ १ ॥

वेगोत्र—"वातमूत्रपुरीषाणि निगृह्णाति यदा नरः"। इति चरकवचनात्। क्षयात्क्षीयतेऽनेनेति क्षयः। तेन अतिव्यवायानशनेर्ष्यादयो धातुक्षयहेतवः क्षयशब्देन उच्यन्ते। साहसाद्बलवता समं मल्लयुद्धादितः। विषमाशनात् "बहुस्तोकमकालं वा भुक्तं तद्विषमाशनम्"। तस्मात्। त्रिदोषः सान्निपातिकः। हेतुचतुष्टयात् अन्येऽपि हेतवो हेतुचतुष्टय एव अन्तर्भवन्ति। यक्ष्मणः पर्याया राजयक्ष्मक्षयशोषाः।

अधोवायु आदिके वेगोंको रोकनेसे क्षयरोग उत्पन्न होताहै, चरकमें भी कहा है. कि "मनुष्य लज्जा अथवा भय आदि किसी कारणसे जब वायु, मूत्र और मलादिकके वेगोंको रोकताहै तब उसके रोगोंकी उत्पत्ति होतीहै"। अत्यत मैथुन, अत्यत उपवास और अत्यंत ईर्ष्यादि जो धातुओंके क्षय होनेके कारण हैं उनसे भी क्षयरोग उत्पन्न होताहै। बलवान्के साथ मल्ल युद्धादिक अथवा द्वेपादिक साहसके कार्य करनेसे भी क्षयरोग उत्पन्न होताहै। बहुत भोजन, बहुत थोडा भोजन अथवा विना समय भोजन करनेसे भी क्षयरोग उत्पन्न होताहै। यह क्षयरोग सान्निपातिक है अर्थात् यह तीनो दोषोंसे होताहै। क्षय, रोगके और भी बहुतसे कारण हैं वह सब इन चार हेतुओंके ही अन्तर्भूत हैं ऐसा जानना। यक्ष्मा, राजयक्ष्मा, क्षय और शोप ये चारों इस रोगके नाम हैं ॥ १ ॥

## अथ यक्ष्मादिशब्दनिरुक्तिः।

वैद्यो व्याधिमता यस्माद्व्याधेर्यत्नेन यक्ष्यते॥ स यक्ष्मा प्रोच्यते लोके शब्दशास्त्रविशारदैः ॥ २ ॥

यक्ष्यते पूज्यते,

राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः॥ तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिणः॥ क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः॥ संशोषणाद्रसादीनां शोष इत्यभिधीयते ३॥

वैद्य रोगीसे अच्छे प्रकारसे यत्नपूर्वक पूजन अर्थात् पालन कियाजाता है इसकारण शब्दशास्त्रको जाननेवाले विद्वान् इसको 'यक्ष्मा' कहते हैं। प्रथम राजा चद्रमाके यह रोग उत्पन्नहुआ था इसकारण इसको विद्वान् 'राजयक्ष्मा' कहते हैं।

यह सम्पूर्ण क्रियाओंका क्षय करताहै इस कारण इसको पंडितलोग क्षय कहते है। यह रोग रसादि धातुओंको शोपण करताहै इस कारण इसको 'शोप' ऐसा कहते हैं ॥ २ ॥ ३ ॥

## अथ क्षयरोगसम्प्राप्तिः।

कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ॥ अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तराः॥ क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ ४ ॥

कफप्रधानैर्दोषैः रसवर्त्मसु रुद्धेषु अनन्तराः सर्वे धातवः क्षीयन्ते ततो मानवः शुष्यति कारणभूतस्य रसस्य क्षये कार्याणां रक्तादीनामनुक्रमेण क्षीयमाणत्वात्। मार्गावरोधे रसक्षयहेतुमाह चरकः—

रसः स्रोतःसु रुद्धेषु स्वस्थानस्थो विदह्यते ॥ स ऊर्द्ध्वं कासवेगेन बहुरूपः प्रवर्तते ॥ ५ ॥

स्वस्थानस्थः हृदयस्थः। कासं विनापि रसक्षयो भवति। मार्गावरोधकुपितवातेन रसस्य शोषणात् ॥

कफप्रधान वातादि तीनो दोप जब कुपित होते हैं, तब उनसे रसके वहनेवाली नाडियोंके मार्ग रुक जाते है, तब सम्पूर्ण धातु क्षीण होने लगती हैं और धातुओंके क्षीण होनेसे मनुष्य भी क्षीण होजाता है। समस्त धातुओंके कारण भूत रसके क्षय होनेसे कार्य रूप रुधिर आदि धातुओंका भी अनुक्रमसे क्षय होजाताहै. जब धातु क्षय होने लगती हैं तो

हृदयमें पीडाका होना, शूल, अफारा, पेटका फूलना, मुखमे विरसता और कनपट्टियोंमें तोडने सरीखी पीडाका होना ये सब श्वासके पूर्वलक्षण हैं ॥ ३ ॥

## अथ श्वाससम्प्राप्तिः।

यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः॥ विष्वग्व्रजति संरुद्धस्तदा श्वासं करोति सः॥ ४॥

विष्वक् व्रजति सर्वतो विमार्गान् याति संरुद्धः कफेन रुद्धमार्गः॥

जब वायु कफयुक्त होकर उस कफसे प्राण, अन्न और जलके बहानेवाले मार्गोंको रोकलेतीहै और अपने आप उस कफसे विचरण करनेसे चारो ओरको रुककर पश्चात् श्वासको उत्पन्न करतीहै ॥ ४ ॥

## अथ महाश्वासलक्षणम्।

ऊर्ध्वायमानवातो यः शब्दवद्दुःखितो नरः॥ उच्चैः श्वसिति सन्नद्धो मत्तर्षभ इवानिशम्॥ ५॥ प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः॥ विवृताक्ष्याननो बद्धमूत्रवचा विशीर्णवाक्॥ ६॥ दीनस्य श्वसितश्चास्य दूराद्विज्ञायते भृशम्॥ महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते॥ ७॥

ऊर्ध्वायमानवातः ऊर्ध्वं नीयमानो वातो यस्य सः। शब्दवत् सशब्दं यथा स्यात्। कीदृक् सशब्दः तद्बोधयितुमाह। मत्तर्षभ इव उच्चैः श्वसिति इति अन्वयः। सन्नद्धः आनद्धः आनाहयुक्त इति यावत्। ज्ञानं शास्त्रम्। विज्ञानं तदर्थविनिश्चयः। विशीर्णवाक् स्खलितवचनः। दीनः म्लानः। मारकश्चायं महाश्वासः॥

जिस मनुष्यको महाश्वास होताहै उसके प्राण वायु शब्द करतीहुई ऊर्ध्वगतिको प्राप्त होतीहै तब वह मनुष्य उससे महादुःखित होताहै, जिस प्रकार भागनेसे रोकाहुआ मस्त बैल (साड) श्वास लेताहै उसीप्रकार यह मनुष्य निरंतर श्वास लेताहै, उसका ज्ञान विज्ञान सब भ्रष्ट होजाताहै, नेत्र भ्रमयुक्त होजातेहैं, आखें और मुख फैलजाताहै, मूत्र और मल रुकजाताहै, जीभ तुतला-जातीहै, दीन होजाताहै और इसके श्वासका शब्द दूरसेही सुनाई देताहै, इस महाश्वाससे पीडित रोगी तत्काल मरजाताहै, यह श्वास मनुष्योंके मारनेके लियेही उत्पन्न होताहै ॥ ५–७ ॥

## अथोर्ध्वश्वासलक्षणम्।

ऊर्द्ध्वं श्वसिति योऽत्यर्थं न च प्रत्याहरत्यधः॥ श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः॥ ॥ ८॥ ऊर्द्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः॥ प्रमुह्यन्वेदनार्तश्च शुष्कास्योऽरतिपीडितः॥ ९॥ ऊर्द्ध्वं श्वासे प्रकुपिते ह्यधःश्वासो निरुद्ध्यते॥ मुह्यतस्ताम्यतश्चोर्द्ध्वं श्वासस्तस्य निहन्त्यसून्॥ १०॥

सर्वेषु श्वासेषु ऊर्द्ध्वं श्वासोऽत्र अत्यर्थमितिविशेषः। न च प्रत्याहरत्यधः न श्वासमधः करोति। श्लेष्मावृतेत्यादिश्लेष्मणा वृतं यन्मुखं स्रोतांसि च तैः क्रुद्धो यो गन्धवहस्तेन अर्दितः। विपश्यन् इतस्ततो विकृतं यथा स्यादेवं पश्यन्। अधःश्वासो निरुद्ध्यते श्वासो नाधःप्रवर्तत इत्यर्थः। मुह्यतो मोहं प्राप्नुवतस्ताम्यतो ग्लानिं प्राप्नुवतश्च ऊर्द्ध्वश्वासः असून् प्राणान्हन्ति॥

जिस मनुष्यके ऊर्ध्वश्वास उत्पन्न होताहै उस मनुष्यका बहुत ऊंचा श्वास चलताहै, उसका कभी नीचेको श्वास नहीं जाता, मुख और सम्पूर्ण शरीरके स्रोत (छिद्र) कफसे घिर जानेके कारण वायु कुपित होकर तीव्र पीडाको करतीहै, उसकी दृष्टि सदैव ऊपरको रहतीहै, आँखोंको चारों ओरको चकराकर विकृति रूपसे देखताहै, मूर्च्छित होताहै, वेदनासे पीडित होताहै, मुख सूखजाताहै और अत्यन्त वेकली होतीहै ऊर्ध्वश्वासके कुपित होनेपर नीचेका श्वास प्रवर्त नहीं होताहै और वह ऊर्ध्वश्वास मोहको प्राप्त हुए और ग्लानिको प्राप्तहुए उस मनुष्यके जीवनको नष्ट करताहै, सर्व प्रकारके श्वासोंमें यह ऊर्ध्वश्वास बहुत ऊँचेसे चलताहै, यह विशेष है ॥ ८–१० ॥

## अथ छिन्नश्वासलक्षणम् ।

यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः ॥ न वा श्वसिति दुःखार्तो मर्मच्छेदरुजार्दितः ॥ ११ ॥ आनाहस्वेदमूर्च्छार्तो दह्यमानेन वस्तिना ॥ विप्लुताक्षः परिक्षीणः श्वसन्रक्तैकलोचनः १२॥ विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः॥ छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् ॥ १३ ॥

विच्छिन्नं सविच्छेदम्, सर्वप्राणेन सर्वबलेन । मर्मच्छेदरुजार्दितः हृदयशिरश्छेदवेदनयैव पीडितः । दह्यमानेन वस्तिना उपलक्षितः । विप्लुताक्षः अश्रुपूर्णनेत्रः । विचताः उद्विग्नचित्तः । छिन्नश्वासेन विच्छिन्नः । यस्तु श्वसिति विच्छिन्नमित्यादिलक्षणयुक्तो यः स नरः छिन्नश्वासेन विच्छिन्नः पीडितो बोद्धव्यः । मारकश्चायं छिन्नश्वासः ॥

जिसके छिन्नश्वास उत्पन्न होताहै, वह दुःखित होकर रह रहकर अपने सम्पूर्ण बलसे श्वासको त्यागताहै, मर्मस्थानोंमें छेदने सरीखी पीडा होतीहै, तथा हृदय और मस्तकके छेदन सरीखी पीडा होतीहै, समयपर श्वास लेनेको असमर्थ होताहै, पेटके अफरनेसे, पसीनेसे, मूर्च्छासे और मूत्राशयकी दाहसे दुःखी होताहै, नेत्र जलसे डुबे डुबेसे रहतेहैं, शरीर अत्यन्त क्षीण होजाताहै, निरन्तर हाँफता रहताहै, चित्तमें उद्वेग होताहै, वृथा बकवाद करताहै, मुख सूख जाताहै, शरीरका रग बदल जाताहै अथवा बिगडजाताहै और एक आँख लाल हो जातीहै इन लक्षणोंवाला छिन्नश्वाससे पीडित मनुष्य तत्काल प्राणोंको त्यागदेताहै यह छिन्नश्वास मारनेके लिये ही उत्पन्न होताहै ॥ ११-१३ ॥

## अथ तमकश्वासलक्षणम् ।

प्रतिलोमो यदा वायुः स्रोतांसि प्रतिपद्यते ॥ ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥ १४ ॥ करोति पीनसं तेन कण्ठे घुर्घुरकं तथा ॥ अतीव तीव्रवेगश्च श्वासं प्राणप्रपीडकम् ॥ १५ ॥ प्रताम्यति स वेगेन अस्यते सन्निरुध्यते ॥ प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥ १६ ॥ श्लेष्मणा मुच्यमानेन भृशं भवति दुःखितः॥ तस्यव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥ १७ ॥ तथास्योद्धंसते कण्ठः कृच्छाच्छक्नोति भाषितुम् ॥ न चापि निद्रां लभते शयानः श्वासपीडितः ॥ १८ ॥ पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ॥ आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति ॥ १९ ॥ उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् ॥ विशुष्कास्यो मुहुःश्वासी मुहुश्चैवावधम्यते ॥ २० ॥ मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते॥ स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥ २१ ॥

संगृह्य व्यथया । समुदीर्य वर्द्धयित्वा । पीनसं नासास्रावम् । तेन श्लेष्मणा घुर्घुरं घुर्घुरशब्दम् । प्राणप्रपीडकं प्राणाधिष्ठानहृदयप्रपीडकम् । प्रताम्यति तमसि प्रविशतीव । वेगेन श्वासवेगेन सन्निरुध्यते निश्चेष्टो भवति इति चरकः । सन्निरुध्यते श्वास इति जयटः श्लेष्मणा मुच्यमानेन सुखं सुखमिव । उद्धंसते व्यथितो भवति । शयानः शयननिहितांगः । अवगृह्णाति पीडयति । उष्णञ्चैवाभिनन्दति इत्यनेन तमको वातकफारब्ध इति बोद्धव्यः । उच्छ्रिताक्षोऽशूनाक्षः । ललाटेन स्विद्यता उपलक्षितः । अवधम्यते गजारूढस्येव सर्वं गात्रं चाल्यते । तमकस्यैव पित्तानुबन्धजनितज्वरादियोगेन ॥

जब वायु अपने मार्गको छोडकर कुमार्गी होकर नाडियोंमे प्राप्त होतीहै तब गरदनको और शिरको जडकर कफको बढाकर उस कफसे नाकमें पीनस, कंठमें घुरघुर शब्दको और हृदयको पीडित करनेवाले तीव्र श्वासको उत्पन्न करताहै, यह श्वास जिस मनुष्यको होताहै वह मनुष्य अपनेको घोर अन्धकारमे पडाहुआ देखताहै, त्रासको प्राप्त होताहै, श्वासके वेगसे चेष्टारहित होजाताहै खाँसीके वारवार आनेसे मूर्च्छित होजाताहै, कफके निकलते समय अत्यन्त दुःख होताहै, जब कफ निकल जाताहै तो थोडी देरके लिये चैन पडजाताहै कठमें पीडा होतीहै बोलते समय कष्ट होताहै, सोते समय लेटने पर वायुके कारण पसलियोंमें अत्यन्त पीडा होतीहै, उठ बैठनेपर कुछ आराम मालूम होताहै, निरतर उष्ण पदार्थोंकी इच्छा करताहै, नेत्र ऊचे सूजेसे रहतेहैं, मस्तकमें पसीना आताहै, अत्यंत पीडा होतीहै,मुख वारवार सूखा करता है, वारवार श्वास,ले लेकर हाथी पै बैठे हुए मनुष्यकी समान हिलताहै, यह श्वास मेघोंके उदय होनेमे, वर्षासे, शीतसे, पूर्वकी पवनसे और कफको करनेवाले पदार्थोंको सेवन करनेसे वृद्धिको प्राप्त होताहै । यह तमक श्वास याप्य है,जो नवीन हो तो कदाचित् साध्य भी होताहै ।

'श्वासके वेगसे चेष्टारहित होजाताहै' ऐसा जो लक्षणोंमें कहा है सो चरकके मतानुसार कहा है किंतु जैयट जो ऐसा कहताहै कि 'उस मनुष्यका श्वास रुकजाताहै' 'तमक श्वासवाले मनुष्यके उष्ण वस्तुओंकी अभिलाषा उत्पन्न होतीहै' ऐसा जो लक्षणोंमे कहा है सो ऊपरसे जानना कारण तमक श्वास वात और कफसे उत्पन्न होता है ॥ १४-२१ ॥

## अथ प्रतमकश्वासलक्षणम् ।

**ज्वरमूर्च्छापरीतश्च विद्यात्प्रतमकं भिषक् २२**

जो तमक श्वास ज्वर और मूर्छासे अत्यंत युक्त होय तो उसको प्रतमक श्वास कहतेहैं ॥ २२ ॥

## अथ मतान्तरम् ।

**उदावर्तरजोजीर्णक्लिन्नकायनिरोधजः ॥**
**तमसा वर्द्धतेऽत्यर्थं शीतलैश्च प्रशाम्यति॥**
**मज्जतस्तमसीवास्य विद्यात्प्रतमकन्तुतम् २३**

उदावर्तो रोगविशेषः । रजो धूलिः । अत्र अजीर्णमामादि क्लिन्नं विदग्धम् । कायनिरोधः अंगयोगानां निरोधः तस्मादुत्पन्नः । अथ वा क्लिन्नकायः वृद्धनरः निरोधः वेगानान्तु सप्तदशविधः ॥

उदावर्त, रज, आम आदि अजीर्ण और योगका निरोध करनेसे, वृद्ध अवस्थाके होनेसे और मूत्रादि सतरह वेगोंके रोकनेसे उत्पन्न हुआ, तथा अंधकारसे बढनेवाला और शीतल पदार्थोंसे शात होनेवाला ऐसा जो श्वास होताहै, उसको प्रतमक कहतेहैं इसमे रोगीको ऐसा प्रतीत होताहै कि, मैं घोर अधकारमें पडाहू ॥२३॥

## अथ क्षुद्रश्वासलक्षणम् ।

**रूक्षायासोद्भवः कोष्ठे क्षुद्रवातमुदीरयन् ॥ क्षुद्रश्वासो न सोऽत्यर्थं दुःखो नांगप्रबाधकः ॥ २४ ॥ हिनस्ति न च गात्राणि न च दुःखं यथेतरे ॥ न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥ २५ ॥ नेन्द्रियाणां व्यथाञ्चापि काञ्चिदुत्पादयेद्रुजम्॥ स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः ॥ २६ ॥**

क्षुद्रः अल्पनिदानलिंगः । उदीरयन्नूर्द्ध्वं गच्छन् । दुःखः दुःखप्रदः । इतरे चत्वारः श्वासाः तथा नायम् । सर्वे महाश्वासादयोऽपि अव्यक्तलक्षणाः सन्तः साध्याः ॥

रूक्षतासे और अत्यत परिश्रम करनेसे उत्पन्न हुआ जो श्वास उसको क्षुद्र श्वास कहतेहैं, वह वायुको बढाताहै, किंतु अत्यंत दुःख नहीं देताहै तथा अन्यान्य दूसरे श्वासोंकी समान शरीरको पीडित करनेवाला और दुःखदायक भी नहीं है, अन्न पानोकी योग्य गतिको नहीं रोकताहै, इद्रियोंको व्यथित भी नहीं करताहै और वेदनाको भी नहीं करताहै, यह क्षुद्र श्वास साध्य है और दूसरे महाश्वासादि जो चार प्रकारके श्वास हैं उनके यदि लक्षण प्रकट नहीं हुए होय तो वह भी साध्य हैं ॥ २४-२६ ॥

### अथ श्वाससाध्यासाध्यता ।

क्षुद्रःसाध्यतमस्तेषां तमकः कृच्छ्र उच्यते ॥ त्रयः श्वासा न सिध्यन्ति तमको दुर्वलस्य च ॥ २७ ॥ कामं प्राणहरा रोगा वहवो न तु ते यथा ॥ यथा श्वासश्च हिका च हरतः प्राणमाशु वै ॥ २८ ॥

वहवो ज्वरादयः ॥

तथा यथा श्वासहिके हरतो जीवमाशु ते२९॥

इन पाचों श्वासोंमें क्षुद्र श्वास सुखसाध्य है, तमक श्वास कष्ट साध्य है और बाकीके तीनों श्वास असाध्य हैं। तम्क श्वास भी जो दुर्वल मनुष्यको उत्पन्न हुआ होय तो असाध्य हैं। ज्वरादिरोग प्रायः प्राणोंको हरनेवाले हैं, परन्तु श्वास और हिचकीकी समान तत्काल प्राणोंको हरनेवाला कोई भी रोग नहीं है ॥ २७–२९ ॥

### अथ श्वासचिकित्सा ।

श्वासहिकातुरं प्रायः स्निग्धैः स्वेदैरुपाचरेत् ॥ युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथितः कफः ॥ ३० ॥ श्वासो विलयमायाति मारुतश्चोपशाम्यति ॥ स्विन्नं ज्ञात्वा ततश्चैनं भोजयेच्च रसौदनम् ॥ ३१ ॥ स्वरसं शृंगवेरस्य माक्षिकेण समन्वितम्॥ पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ ३२ ॥

शृंगवेरमार्द्रकम् ॥

श्वास और हिकासे पीडित मनुष्यको विशेष करके निमक और तेल संयुक्त स्निग्ध स्वेदन क्रियाओंसे उपचार करे, इस उपचार करनेसे कफ टूट जाताहै और श्वास नष्ट होजाताहै और वात भी शात होजातीहै, स्वेदन क्रियासे जब पसीना निकल चुके तब उस रोगीको मासके रसके साथ भात देवै, तथा सहतके साथ अदरखका रस पिलावै तो श्वास, खाँसी, प्रतिश्याय, जुखाम और कफ दूर होताहै ॥ ३०–३२ ॥

प्रस्थं विभीतकानामस्थि विना साधयेदजामूत्रे ॥ अयमवलेहो लीढो मधुसहितः श्वासकासघ्नः ॥ ३३ ॥

वहेडे ६४ चौंसठ तोले लेकर उनकी गुठली निकाल डाले, फिर उनको बकरेके मूत्रमें पकावै उसमें सहत मिलाकर चाटनेसे श्वास और खाँसी दूर होजातीहै ॥ ३३॥

देवदारुबलामांसीः पिष्ट्वा वर्ति प्रकल्पयेत्॥ तां घृताक्तां पिबेद्धूमं श्वासं हन्ति सुदारुणम् ॥ ३४ ॥

देवदारु, खिरैंटी और वालछड ( जटामांसी ) इनको एकत्र पीसकर वत्ती बनावै, उस वत्तीको घीमें सानकर उसका धुआँ पान करनेसे महादारुण श्वास भी दूर होजाताहै ॥ ३४ ॥

दशमूलीशटीरास्नापिप्पलीविश्वपौष्करैः॥ शृंगीतामलकीभार्ङ्गीगुडूचीनागराग्निभिः॥ ॥ ३५ ॥ यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः ॥ श्वासहृद्ग्रहपार्श्वार्तिहिकाकासप्रशान्तये ॥ ३६ ॥

दशमूल, कचूर, रासना, पीपल, अतीस, अडकी जड, काकडासिंगी, भुई आमला, भारंगी, गिलोय, सोंठ और चीता, इनकी विधिपूर्वक बनाई हुई यवागू अथवा क्वाथको पीनेसे श्वास, हृदयकी जडता, पसलीकी पीडा, हिचकी और खाँसी दूर होजातीहै ॥ ३५ ॥ ३६ ॥

दशमूलस्य वा क्वाथः पौष्करेणावचूर्णितः ॥ श्वासकासप्रशमनः पार्श्वशूलनिवारणः ३७॥

दशमूलका क्वाथ बनाकर उसमें अंडकी जडका ( अथवा पोहकर मूलका चूर्ण ) डालकर पान करनेसे श्वास खाँसी और पसलीकी पीडा दूर होतीहै ॥ ३७ ॥

रम्भाकुन्दशिरीषाणां कुसुमं पिप्पलीयुतम् ॥ पिष्ट्वा तण्डुलतोयेन पीत्वा श्वासमपोहति ॥ ३८ ॥

केला, कुन्द और सिरस इन सबके फूलोंको पीपलके साथ पीसकर चावलोके जलके साथ पीनेसे श्वास दूर होजाताहै ॥ ३८ ॥

**शृंगीमहौषधकणाघनपौष्कराणां चूर्णं शटीमरिचयोश्च सिताविमिश्रम् ॥ क्वाथेन पीतममृतावृषपञ्चमूल्याः श्वासं त्र्यहेण विनिहन्ति हि घोररूपम् ॥ ३९ ॥ पञ्चमूली तु सामान्या पित्ते योज्या कनीयसी॥ महती मारुते देया सैव देया कफाधिके॥ ॥ ४० ॥ कूष्माण्डकशिफाचूर्णं पीतं कोष्णेन वारिणा ॥ शीघ्रं शमयति श्वासं कासञ्चापि सुदारुणम् ॥ ४१ ॥**

काकडाशिंगी, सोंठ, पीपल, नागरमोथा, पोहकरमूल, कचूर और कालीमिर्च इन सबको एकत्र पीसकर चूर्ण बनावै, फिर उस चूर्णको खांडमें मिलाकर गिलोय, अडूसा तथा पंचमूलके क्वाथमें मिलाकर पिये तो भयकर श्वास भी तीन दिनमे नष्ट होजाताहै. जहा 'पचमूली' शब्द साधारण है तहा पित्तपर लघु पचमूली और वातपर तथा कफाधिक्य वातपर बृहत्पचमूली लेना चाहिये । पेठेकी जडके चूर्णको कुछ कुछ गरम जलके साथ पीनेसे श्वास और दारुण खॉसी दूर होजाती है ॥ ३९-४१ ॥

**हरिद्रां मरिचं द्राक्षां कणां रास्नां शटीं गुडम् ॥ कटुतैलं लिहन्हन्याच्छ्वासान्प्राणहरानपि ॥ ४२ ॥**

हलदी, मिर्च, दाख, पीपल, रास्ना, कचूर और गुड इन सबको सरसोंके तेलमे मिलाकर चाटनेसे भयकर प्राणोंको हरनेवाला भी श्वास नष्ट होजाताहै ॥ ४२ ॥

## अथ भार्ङ्गीगुडः ।

**शतं संगृह्य भार्ङ्ग्यास्तु दशमूल्यास्तथा शतम् ॥ शतं हरीतकीनाञ्च पचेत्तोये चतुर्गुणे ॥ ४३ ॥ पादावशेषे तस्मिंस्तु रसे वस्त्रनिपीडिते ॥ आलोड्य च तुलां पूतां गुडस्य त्वभयास्ततः ॥ ४४ ॥ पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमेति तत् ॥ शीते च मधुनस्तत्र षट्पलानि विनिक्षिपेत् ॥४५॥ त्रिकटु त्रिसुगन्धञ्च पलमात्रं पृथक्पृथक् ॥ यवक्षारं कर्षयुग्मं संचूर्ण्य प्रक्षिपेत्ततः ॥ ॥ ४६ ॥ भक्षयेदभयामेकां लेहस्यार्द्धपलं तथा ॥ श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ॥ ४७ ॥ अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ॥ स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः ॥ नाम्ना भार्ङ्गीगुडः ख्यातो भिषग्भिः सकलैर्मतः ॥ ४८ ॥**

भारगी ४०० चारसौ तोले, दशमूलकी औषधि ४०० चारसौ तोले और हरड ४०० चारसौ तोले लेकर चौगुने जलमे पकावै जब पकते पकते चौथाई भाग जल बाकी रहजाय तब उसको उतारकर वस्त्रमे छानलेवे, फिर उसमें ४०० चारसौ तोले गुड और उसी क्वाथमे की हरड डालकर मंद मंद अग्निसे धीरे धीरे पकावै, जब पकते २ सीरेकी समान होजाय तब उसमें, शीतल होनेपर २४ चौवीस तोले सहत, मिलादेवे तथा सोंठ ४ तोले, मिर्च ४ तोले, पीपल ४ तोले, दालचीनी ४ तोले, तेजपात ४ तोले, इलायची ४ तोले और जवाखार २ तोले, इनका चूर्ण करके मिलादेवे फिर इसमेंसे प्रतिदिन १ हरड और दो तोले इस अवलेहको सेवनकरे तो इससे महादारुण श्वास, पाचप्रकारकी खॉसी, बवासीर, अरुचि, गुल्म, अतिसार और क्षयरोग नष्ट होताहै । यह 'भार्ङ्गी गुड' इस नामसे प्रसिद्ध है। भार्ङ्गीगुड अवलेह-स्वर और वर्णको उत्तम करनेवाला और जठराग्निको दीप्तन करनेवाला है॥४३-४८॥

## अथ महाकट्फलादियोगः ।

**अष्टांगचूर्णसंयुक्तं छागक्षीरं प्रयोजयेत् ॥ श्वासं कासान्वितं घोरं हन्यादेतन्न संशयः ॥ ४९ ॥**

कायफल, अडकी जड, काकडाशिंगी, अजवायन, कलौंजी, सोंठ, मिरच और पीपल इन आठ पदार्थोंको समान भाग लेकर चूर्ण करके बकरीके दूधके साथ पीनेसे घोर खॉसी युक्त भी श्वास अवश्य नष्ट होजाताहै ॥४९॥

अथ दशमूलरसः।

दशमूलरसो देयः श्वासनिर्मूलशान्तये ॥ अवश्यं मरणीयो यो जीवेद्वर्षशतं नरः ॥ ५० ॥

श्वासको जडसे नष्ट करनेके लिये दशमूलका रस सेवन करना चाहिये, जो मनुष्य श्वाससे अवश्य मरनेवाला हो वह मनुष्य भी इसके प्रसादसे सौ वर्षतक जीताहै ॥५०॥

अथ श्वासकुठाररसः।

रसो गन्धो विषश्चापि टंकणश्च मनःशिला॥ एतानि कर्षमात्राणि मरिचं चाष्टकर्षकम् ॥ ५१ ॥ कटुत्रयं कर्षयुग्मं पृथगत्र विनिक्षिपेत् ॥ रसः श्वासकुठारोऽयं सवश्वासनिवारणः ॥ ५२ ॥

इति श्वासाधिकारः।

पारा १ तोला, गधक १ तोला, वत्सनाभ १ तोला, सुहागा १ तोला, मैनशिल १ तोला और काली मिर्च ८ तोले इन सबका बारीक चूर्ण करके उसमें दो तोले सोंठका चूर्ण, दो तोले मिर्चका चूर्ण और दो तोले पीपलका चूर्ण अलग अलग मिलादेवे तो यह 'श्वासकुटार' नामवाला रस सिद्ध होताहै। इस रसमेंसे दो रत्तीभर पानमे रखकर खाय इससे सब प्रकारके श्वास नष्ट होते हैं ॥५१॥५२॥

इति श्रीभावप्रकाशे शालिग्रामवैश्यकृतवैद्यसंजीवनीभाषाटीकाया श्वासाधिकारः संपूर्ण.।

---

## अथ स्वरभेदाधिकारः।

### तत्र स्वरभेदनिदानसम्प्राप्तिपूर्वकसामान्यलक्षणम्।

अत्युच्चभाषणविषाध्ययनाभिघातसन्दूषणैः प्रकुपिताः पवनादयस्तु ॥ स्रोतःसु ते स्वरवहेषु गताःप्रतिष्ठां हन्युः स्वरं भवति चापि हि षड्विधः सः ॥ १ ॥

अध्ययनमुच्चैर्वेदादिपाठः। अभिघातः कण्ठादिदेशे लगुडादिभिः। एतैरत्युच्चभाषणादिभिश्चतुर्भिःसंदूषणैरन्यैरपि निजदुष्टहेतुभिः स्रोतःसु स्वरवहेषु चतुर्षु प्रतिष्ठां स्थितिं गताः स्वरं हन्युरिति लक्षणम्।स स्वरभेदः षड्विधः। वातपित्तकफसन्निपातमेदोभवभेदैः ॥

अत्यत ऊंचे स्वरसे बोलनेसे, विषको भक्षण करनेसे, स्वरसे वेद शास्त्रादिकके पाठ करनेसे, कंठ आदि प्रदेशमें लकडी इत्यादिकी चोटके लगनेसे और अन्यान्य अपने अपने दुष्ट कारणोंसे कोपको प्राप्त हुए वातादि दोष स्वरके वहनेवाले स्रोतों ( छिद्रो ) में स्थित होकर स्वरको नष्ट करते हैं उस रोगको स्वरभेद कहते हैं। वातज, पित्तज, कफज, त्रिदोषज, क्षयज और मेदज इस रीतिसे स्वरभेद छे प्रकारका है ॥ १ ॥

अथ वातजस्वरभेदलक्षणम्।

वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गर्दभवत्स्वरञ्च ॥

वातसे उत्पन्न हुए स्वरभेदमें टूटे फूटे धीरे धीरे गधेके स्वरकी समान वचन बोलताहै, तथा उसके नेत्र, मुख, मूत्र और विष्ठा ये काले पड जाते हैं।

अथ पित्तजस्वरभेदलक्षणम्।

पित्तेन पीतनयनाननमूत्रवर्चा ब्रूयाद्गलेन स च दाहसमन्वितेन ॥ २ ॥ गलदाहः वचनसमय एव बोद्धव्यः ॥

पित्तज स्वरभेदमें वह मनुष्य दाह युक्त गलेसे बोलताहै, तथा उसके नेत्र, मुख, मूत्र और विष्ठा वे सब पीले पड जाते हैं ॥ २ ॥

अथ कफजस्वरभेदलक्षणम्।

ब्रूयात्कफेन सततं कफरुद्धकण्ठः स्वल्पं शनैर्वदति चापि दिवा विशेषात् ॥ दिवा सूर्यरश्मिभिः कफस्य अल्पीभावात्।

कफज स्वरभेदमें निरंतर कफसे गला रुकासा रहताहै धीरे धीरे थोडा बोलताहै और दिनमें सूर्यकी किरणोंके निकलनेसे कफ कटकर कुछ अधिक बोलताहै।

अथ सन्निपातजस्वरभेदलक्षणम्।

सर्वात्मिके भवति सर्वविकारसम्पत्तं चाप्यसाध्यमृषयः स्वरभेदमाहुः ॥ ३ ॥

तीनों दोषोसे उत्पन्न हुए स्वरभेदमे तीनो दोषोंके लक्षण होतेहै, यह स्वरभेद असाध्य है ऐसा ऋषियोंने कहा है ॥ ३ ॥

अथ क्षयजस्वरभेदलक्षणम्।

धूम्येतवाक्क्षयकृते क्षयमाप्नुयाच्च स्यादेव चापि हतवाक्परिवर्जनीयः॥

वाक् धूम्येत सधूमेव निःसरति। क्षयं वाप्नुयात् वागेव॥

क्षयज स्वरभेदमे बोलते समय मुखमेंसे धुआँसा निकलताहै, अथवा बोलते समय शब्द नष्ट होजातेहैं, इस प्रकार नष्ट वाणीवाले मनुष्यको असाध्य समझकर उसकी चिकित्सा नही करे ॥

अथ मेदोजन्यस्वरभेदलक्षणम्।

अन्तर्गलं स्वरमलक्ष्यपदं चिरेण मेदोन्वयाद्वदति दिग्धगलस्तृषार्तः॥ ४॥

अन्तर्गलं गलस्य मध्य एव स्वरं वदति। दिग्धगलः मेदसा श्लेष्मणा च लिप्तगलः। तृषार्तः मेदस उष्मणा आर्तवरोधात्॥

मेदोजस्वरभेदमें मनुष्य बहुत देरसे गलेके भीतर ही जो दूसरोंके समझमें नही आवे ऐसे शब्द बोलताहै, मेदसे और कफसे उत्पन्न हुए स्वरभेदमें गला कफसे लिसासा रहताहै और तृषासे पीडित रहताहै ॥ ४ ॥

अथ स्वरभेदासाध्यलक्षणम्।

क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः॥ मेदस्विनः सर्वसमुद्भवश्च स्वरामयो नैव स सिद्धिमेति॥ ५॥

क्षीणस्य क्षयरोगिणः। कृशस्य अपुष्टस्य॥

क्षयरोगीका, वृद्धका, दुर्बल मनुष्यका स्वरभेद, अथवा बहुत दिनोंका पुराना वा, जन्मसे उत्पन्न हुआ, मेदवाले मनुष्यको उत्पन्न हुआ और तीनों दोषोंसे उत्पन्न हुआ ऐसा स्वरभेद असाध्य होताहै ॥ ५ ॥

अथ स्वरभेदचिकित्सा।

वातादिजनितश्वासकासघ्ना ये प्रकीर्तिताः॥ योगास्तानत्र युञ्जीत यथादोषं चिकित्सकः॥ ६ ॥ वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम्॥ कफे सक्षारकटुकं क्षौद्रं कवल इष्यते॥ ७॥ गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः॥ तेन निष्कृष्यते श्लेष्मा स्वरश्चाशु प्रसीदति॥ ८ ॥ आद्ये कोष्णं जलं पेयं भुक्त्वा घृतरसौदनम्॥ क्षीराम्बुपानं पित्तोत्थे पिबेत्सर्पिरतन्द्रितः॥ ९॥ पिप्पलीं पिप्पलीमूलं मरिचं विश्वभेषजम्॥ पिबेन्मूत्रेण मतिमान्कफजे स्वरसंक्षये॥ १०॥

वातादिसे उत्पन्न हुए श्वासको और खाँसीको हरनेवाले जो प्रयोग कहे हैं, उन्ही प्रयोगोंको वैद्य लोग दोषोकी पद्धतिके अनुसार इस स्वरभेदमे योजे।

जो वातसे स्वरभेद हुआ होय तो लवणके साथ तेलको, पित्तसे स्वरभेद हुआ होय तो सहतके साथ घीको, और जो कफसे स्वरभेद हुआ होय तो क्षार तथा चरपरे पदार्थोंके साथ सहतका कवल करना चाहिये। कवल करानेसे गला, तालू, जीभ और दन्तमूलोंमें रहा हुआ कफ निकलजाताहै और स्वर तत्काल साफ होजाताहै। वातजस्वरभेदमे घी और मासके रसके साथ भात खाय और मदोष्ण जल पीवै, पित्तज स्वरभेदमे आलस्यको छोडकर दूध और पानी तथा घी पीवै और कफजस्वरभेदमें पीपल, पपिलामूल, मिर्च और सोंठ इनका चूर्ण करके गोमूत्रछा सेवन करै ॥ ६-१० ॥

अथ निदिग्धिकावलेहः।

निदग्धिकातुला ग्राह्या तदर्द्धं ग्रन्थिकस्य तु॥ तदर्द्धं चित्रकस्यापि दशमूलश्च तत्समम्॥ ११ ॥ जलद्रोणद्वये क्वाथ्यं गृह्णीयादाढकं ततः॥ पूते क्षिपेत्तदर्द्धन्तु पुराणस्य गुडस्य च॥ १२ ॥ सर्वमेकत्र कृत्वा तु लेहवत्साधु साधयेत्॥ अष्टौ पलानि पिप्पल्यास्त्रिजातकपलं तथा॥ १३ ॥ मरिचस्य पलं चैकं सर्वमेकत्र

चूर्णितम् ॥ मधुनः कुडवं दत्त्वा तदश्नीयाद्यथानलम् ॥ १४ ॥ निदिग्धिकावलेह्यंयं भिषग्भिर्मुनिभिर्मतः ॥ स्वरभेदहरो मुख्यः प्रतिश्यायहरस्तथा ॥ १५ ॥ कासश्वासाग्निमान्द्यादीन्गुल्ममेहगलामयान् ॥ आनाहमूत्रकृच्छ्राणि हन्याद्ग्रन्थ्यर्बुदानि च ॥ १६ ॥

कटेरी ४०० चारसौ तोले, पीपलामूल २०० दोसौ तोले, चीता १०० सौ तोले और दशमूलकी औषधि १०० सौ तोले, इन सबको २०४८ दोहजार अडतालीस तोले जलमें पकावै, जब पकते पकते २५६ दोसौ छप्पन तोले जल बाकी रहजाय तब उस क्वाथको वस्त्रमे छानकर फिर उस क्वाथसे आधा पुराना गुड डालकर अवलेहकी तरह पकावै, जब यह सीरेकी समान हो जाय तब इसमें त्रिजातकका चूर्ण ३२ वत्तीस तोले और कालीमिर्चोंका चूर्ण ४ तोले और सहत १६ सोलह तोले मिलावै तो यह निदिग्धिकादि अवलेह तैय्यार होताहै, इस अवलेहको अपनी जठराग्निके बलानुसार सेवन प्रतिश्यायको नष्ट करनेवाला है तथा खाँसी, श्वास, अग्निकी मन्दता, गुल्म, प्रमेह, गलेके रोग, विष्ठाके अवरोधसे पेटका अफरना, मूत्रकृच्छ्र, ग्रंथि और अर्बुदको नष्ट करै है ॥ ११-१६ ॥

### अथ मृगनाभ्याद्यवलेहः ।

मृगनाभिः ससूक्ष्मैलालवङ्गकुसुमानि च ॥ त्वक्क्षीरी चेति लेहोऽयं मधुसर्पिःसमायुतः ॥ वाक्स्तम्भमुग्रं जयति स्वरभ्रंशसमन्वितम् ॥ १७ ॥

कस्तूरी, छोटी इलायची, लौंग वंशलोचन इनका चूर्ण करके सहत और घीमें मिलाकर चाटनेसे स्वरभेद और जिह्वाकी जडता दूर होतीहै ॥ १७ ॥

### अथ ब्राह्म्याद्यवलेहः ।

ब्राह्मी वचाऽभयावासा पिप्पली मधुसंयुता ॥ अस्य प्रयोगात्सप्ताहात्किन्नरैः सह गीयते ॥ १८ ॥

इति स्वरभेदाधिकारः ।

ब्राह्मी, वच, हरड, अडूसा और पीपल इनको पीसकर सहतमें मिलाकर चाटनेसे सातदिनमे किन्नरकी समान गायन करसक्ताहै ॥ १८ ॥

इति स्वरभेदाधिकारः सपूर्णः ।

## अथारोचकाधिकारः ।

### तत्र सनिदानवातारोचकलक्षणम् ।

वातादिभिः शोकभयार्तिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः ॥ अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन ॥ १ ॥

वातादि दोषोंसे, शोकसे, भयसे, पीडासे, लोभसे, क्रोधसे, मनको विगाडनेवाले भोजन, रूप और गधसे, अन्नादिकपर जो अरुचि उत्पन्न होतीहै उसको अरोचक कहतेहैं । वातज, पित्तज, कफज, शोकादि आगतुज और त्रिदोष ऐसे अरोचक रोग पाचप्रकारकाहै । वातज अरोचकके लक्षण । तहा वातज अरुचिमे दाँत खट्टे और मुख कसैला रहता है ॥ १ ॥

### अथ पित्तजारुचिलक्षणम् ।

कट्वम्लमुष्णं विरसश्च पूति पित्तेन विद्याल्लवणश्च वक्त्रम् ॥

यतो विदग्धश्लेष्मास्य लवणभावमुपैति लवणं हि वक्त्रम् ॥

पित्तकी अरुचिमें मुख चरपरा, खट्टा, विरस और दुर्गंधित रहताहै । क्योंकि दाहको प्राप्त हुआ कफ खारी होनेके कारण मुख खारी होजाताहै ।

### अथ कफजारुचिलक्षणम् ।

माधुर्यपैच्छिल्यगुरुत्वशैत्यस्निग्धत्वदौर्गन्ध्ययुतं कफेन ॥ २ ॥

तथा पैच्छिल्यं मुखस्य अभ्यन्तरे । स्निग्धत्वं बहिः ॥

कफकी अरुचिमें तथा मधुर, पिच्छिल, भारी, शीतलतायुक्त और दुर्गंधित होजाताहै ॥ २ ॥

### अथागन्तुजारुचिलक्षणम् ।

अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात् ॥ स्वाभाविकश्चास्यमथारुचिश्च त्रिदोषजे नैकरसं भवेच्च ॥३॥

क्रोधादीत्यादिशब्देन अहृद्ययोरशनरूपयोर्ग्रहणम् । स्वाभाविकश्च अविकृतरसम् । त्रिदोषजमाह—नैकरसम् अनेकरसमास्यं स्यात् ॥

शोकसे, भयसे, अत्यन्त लोभसे, क्रोधादिकसे, अप्रिय भोजन करनेसे, अप्रिय रूपको देखनेसे और अप्रिय गंधको सूंघनेसे मुख स्वाभाविक रसयुक्त होताहै । कुछ विकृति नहीं होतीहै । त्रिदोपसे उत्पन्न हुई अरुचिमें मुख अनेक रसोंवाला होताहै ॥ ३ ॥

## अथ वातजाद्यरोचकविशेषलक्षणम् ।

हृच्छूलपीडनयुतं पवनेन पित्तात्तृड्दाहचोषबहुलं सकफप्रसेकम् ॥ श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्याद्वैगुण्यमोहजडताभिरथापरश्च ॥ ४ ॥

हृच्छूलपीडनयुतं हृदि शूलेन पीडनं तेन युतम् । चोषः पार्श्वस्थिताग्निनेव सन्तापः । बहुभिः त्रिभिर्दोषैः बहुरुजम् उक्तवातादिरोगयुक्तम् । वैगुण्यं मनसो व्याकुलत्वम् । जडता शून्यता । अपरम् आगन्तुजम् । भक्तद्वेषभक्ताच्छन्दौ चरकसुश्रुताभ्याम् अरोचकत्वेनैव संगृहीतौ । वृद्धभोजस्तेषां लक्षणानि पृथगाह—

प्रक्षिप्तन्तु मुखे चान्नं यत्र नास्वादते नरः ॥ अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु ॥ ५ ॥

न आस्वादते अन्नस्य मिष्टतां न प्राप्नोति। तदन्नं मिष्टं न लगतीति यावत् ॥

चिन्तयित्वा तु मनसा दृष्ट्वा स्पृष्ट्वा तु भोजनम् ॥ द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ॥ ६ ॥ कुपितस्य भयार्तस्य तथा भक्तविरोधिनः ॥ यत्र नान्ने भवेच्छ्रद्धा,स भक्ताच्छन्द उच्यते ॥ ७॥

वातकी अरुचिमें हृदयमें शूलकी समान पीडा होतीहै पित्तकी अरुचिमें तृषा, अत्यन्त दाह और अग्नि सेवनके समान संताप होताहै, कफकी अरुचिमें मुखमेंसे कफ युक्त थूक निकलताहै, त्रिदोषकी अरुचिमें उपरोक्त सब लक्षण होतेहैं और आगन्तुज कारणोंसे उत्पन्न हुई अरुचिमें मनमें व्याकुलता, मोह ( बेहोशी ) और शून्यता होतीहै ।

## विशेषविवेचनम् ।

भक्तद्वेष और भक्ताच्छन्दको यद्यपि चरक और सुश्रुतमें अरुचिहीमें माना है तथापि वृद्ध भोजने इसके लक्षण अरुचिसे अलग लिखेहैं । वृद्ध भोज कहताहै कि मुखमें दिया हुवा अन्नका ग्रास अच्छा न लगे तो उसको 'अरोचक' कहतेहैं । मनसे भोजनका चिन्तवन करके, भोजनको देखकरके और भोजनका स्पर्श करके, जो भोजनपर द्वेष उत्पन्न होताहै उसको 'भक्तद्वेष' कहते है । क्रोधसे, भयसे, पीडासे और प्रेमके अनुरोधसे जो अन्नपर श्रद्धा नहीं रहती उसको 'भक्ताच्छन्द कहतेहैं ॥ ४–७ ॥

## अथारोचकचिकित्सा ।

भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्॥ रोचनं दीपनं वह्नेर्जिह्वाकण्ठविशोधनम् ॥ ॥ ८ ॥ शृंगवेररसं वापि मधुना सहयोजयेत् ॥ अरुचिश्वासकासघ्नं प्रतिश्यायकफापहम् ॥ ९ ॥

भोजनसे आगे सदैव लवण और अदरखका भक्षण पथ्य है, रुचिको करनेवाला, अग्निको दीपन करनेवाला और जिह्वा तथा कण्ठको शुद्ध करनेवाला है । सहतके साथ अदरखके रसको पीनेसे अरुचि,श्वास,खांसी प्रतिश्याय और कफ नष्ट होताहै ॥ ८ ॥ ९ ॥

## अथाम्लीकापानकम् ।

पक्वाम्लीका सिता शीतवारिणा वस्त्रगालिता ॥ एलालवंगकर्पूरमरिचैरवधूलिता ॥ १० ॥ पानकस्यास्य गण्डूषं धारयित्वा मुखे मुहुः ॥ अरुचिं नाशयत्येव पित्तं प्रशमयेत्तथा ॥ ११ ॥

पकीहुई इमली और खांड इनको शीतल जलमें घोलकर उसको वस्त्रमें छानलेवे, फिर उसमें इलायची, लौंग, कपूर और मिरचका चूर्ण डालदेवे, इसको अम्लीकापानक

कहतेहैं इस पानक ( पन्ना ) के मुखमें वारवार गण्डूष ( कुल्ले ) धारण करनेसे अरुचि नष्ट होतीहै और पित्त-शमन होताहै ॥ १०-११ ॥

## अथ तक्रम् ।

राजिकाजीरकौ भृष्टौ भृष्टं हिंगु सनागरम् ॥ सैन्धवं दधि गोः सर्वं वस्त्रपूतं प्रकल्पयेत् ॥ १२ ॥ तावन्मात्रं क्षिपेत्तत्र यथा स्याद्रुचिरुत्तमा ॥ तक्रमेतद्भवेत्सद्यो रोचनं वह्निवर्द्धनम् ॥ १३ ॥

भुनीहुई राई, भुनाहुआ जीरा, भुनीहुई हींग, भुनीहुई सोंट, सैंधानिमक और गायका दही इन सबको मिलाकर वस्त्रमें छान लेवै, फिर जितनीमे वह ठीक होजाय उतनी ही उसमें छॉछ मिलावे । यह तक्र-तत्काल रुचिको उत्पन्न करेहै और जठराग्निको वढावेहै ॥ १२ ॥ १३ ॥

## अथ शिखरिणी ।

सम्यगावर्तितं दुग्धं निवद्धं दधि माहिषम् ॥ एकीकृत्य पटे घृष्ट शुभ्रशर्करया समम् ॥ १४ ॥ एलालवंगकर्पूरमरिचैश्च समन्वितम् ॥ नाम्ना शिखरिणी कुर्याद्रुचि सकलवल्लभाम् ॥ १५ ॥

अच्छे प्रकारसे औटाया हुआ दूध और वस्त्रमें वॉधा हुआ पानी रहित भैंसका दही इनको एकत्र करके उसमें उत्तम सफेद चीनी मिलाकर मोटे वस्त्रमें घिसकर छान लेवें फिर उसमें इलायची, लौंग भीमसेनीकपूर और कालीमिरच, डाले तो सिखरन सिद्ध होजातीहै । सब लोगोंको प्रिय यह सिखरन रुचिको उत्पन्न करेहै ॥ १४ ॥ १५ ॥

## अथ दाडिमादिचूर्णम् ।

द्वे पले दाडिमाम्लस्य खण्डं दद्यात्पलत्रयम् ॥ त्रिसुगन्धि पलं चैकं चूर्णमेकत्र कारयेत् ॥ १६॥ तच्चूर्णं मात्रया भुक्तमरोचकहरं परम्॥दीपनं पाचनं च स्यात्पीनसज्वरकासजित् ॥ १७ ॥

खट्टे अनारके दाने ८ तोले,खाड १२ तोले,त्रिसुगन्धि ( दालचीनी, इलायची, तेजपात ), ४ तोला, इन सबका एकत्र चूर्ण करके मात्रानुसार खाय तो अरुचि नष्ट होजातीहै । यह चूर्ण-अग्निको दीपन करनेवाला, पाचन है, पीनस, ज्वर और खाँसीको दूर करेहै ॥ १६ ॥ १७ ॥

## अथ लवंगादिचूर्णम् ।

लवंगकंकोलमुशीरचन्दनं नतं सनीलोत्पलकृष्णजीरकम् ॥ जलं सकृष्णागुरुभृंगकेसरं कणा च विश्वा नलदं सहेलया ॥ ॥ १८ ॥ तुषारजातीफलवंशरोचनाः सितार्द्धभागाः सकलं विचूर्णितम् ॥ सुरोचनं तर्पणमग्निदीपनं बलप्रदं वश्यतमं त्रिदोषजित् ॥ १९ ॥ उरोविबन्धं तमकं गलग्रहं सकासहिक्कारुचियक्ष्मपीनसम्॥ ग्रहण्यतीसारमुरःक्षतं नृणां तथा प्रमेहान्निखिलान्निहन्ति ॥ २० ॥

कंकोलं सुगन्धविशेषः । नतं तगरम् । जलं वालकं भृंगं त्वक् । नलदमुशीरम् । तुषारः कर्पूरः । इति लवंगादिचूर्णम् ॥

लौंग, ककोंच, मिरच, खस, चन्दन, तगर,नीलेकमल के वीज, कालाजीरा, सुगन्धवाला, अगर, तज, नागकेशर, पीपल, सोंठ, इलायची, भीमसेनीकपूर, जायफल, वंशलोचन और सबसे आधी खाड लेवै, सबको एकत्र मिलालेवै, इसको सेवन करनेसे रुचि उत्पन्न होतीहै, तृप्ति होतीहै, अग्नि दीपन होतीहै, बलकी वृद्धि होतीहै मैथुनशक्ति बढतीहै, तीनों दोष शमन होतेहैं, तथा छातीका जकडना, तमक, श्वास, गलग्रह, खॉसी, हिचकी, अरुचि, क्षयरोग, पीनस, संग्रहणी, अतिसार, उरःक्षत और सर्व प्रकारके प्रमेह रोग नष्ट होजातेहैं॥ १८-२० ॥

## यवानीखाण्डवचूर्णम् ।

यवानी दाडिमं शुण्ठी तिन्तिडीकाम्लवेतसैः ॥ वदराम्लश्च कुर्वीत चतुःशाणमितानि च ॥ सार्द्धद्विशाणं मरिचं पिप्पली दशशाणिका ॥ २१ ॥ त्वक् सौवर्चलधान्याकजीरकं द्विद्विशाणिकम्॥ चतुःषष्टिमितैः शाणैः शर्करामत्र योजयेत् ॥ २२ ॥ चूर्णितं सर्वमेकत्र यवा-

नोखाण्डवाभिधम् ॥ चूर्णं जयेत्पाण्डुरोगं हृद्रोगं ग्रहणीज्वरम् ॥ २३ ॥ छर्दिशोषातिसारांश्च प्लीहानाहविबन्धताम् ॥ अरुचिं शूलमन्दाग्निमर्शोजिह्वागलामयान् ॥ २४ ॥

अजवायन, अनार, सोंठ, इमली, अमलवेत और सुखाया हुआ वेरका गूदा ये प्रत्येक पदार्थ एक एक तोला कालीमिरच ६० रत्ती, पीतल २४० रत्ती, दालचीनी, कालानिमक, धनिया और जीरा प्रत्येक पदार्थ ४८ रत्ती भर लेवै, खाड २४ शाण लेवै, सबका एकत्र चूर्ण करले तो यवानीखांड व चूर्ण तैयार होजाताहै। इस चूर्णको सेवन करनेसे पाण्डुरोग, छातीका दर्द, ग्रहणी, ज्वर, वमन, शोष, अतीसार, प्लीहा, अफारा, मलबंध, अरुचि, शूल, अग्निकी मंदता, बवासीर, जिह्वाके रोग और गलेके रोग नष्ट होजातेहैं ॥ २१-२४ ॥

इति अरोचकाधिकारः सम्पूर्णः ।

---

## अथ छर्द्यधिकारः ।

### तत्र विप्रकृष्टसन्निकृष्टनिदानपूर्वकसम्प्राप्तिः ।

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि ॥ अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥ १ ॥ आमाद्भयात्तथोद्वेगादजीर्णात्क्रिमिदोषतः ॥ नार्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ॥ बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लिश्यते बलात् ॥ २ ॥

आमात् असम्यक् पक्वात् रसात् । अजीर्णात् यथास्थितात् भुक्तात् । आपन्नसत्त्वायाः प्राप्तगर्भायाः । अन्यैर्बीभत्सैर्विकृतैः हेतुभिः घृणाकारिभिः । अनिष्टश्रवणस्पर्शनदर्शनभक्षणपानैः उत्क्लिश्यते ॥

दुष्टैर्दोषैः पृथक्सर्वैर्बीभत्सालोकनादिभिः। छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥ ३ ॥

अत्यंत पतले और चिकने भोजन करनेसे और अप्रिय और खारी भोजन करनेसे, विनासमय भोजन करनेसे, अत्यत भोजन करनेसे, अहित भोजन करनेसे, आमसे, भयसे, उद्वेगसे, अजीर्णसे, कृमिदोषसे, गर्भके रहनेसे, बहुत शीघ्र शीघ्र भोजन करनेसे, दूषित हुई वायु, दुष्ट हुआ पित्त और दुष्ट हुए कफसे तथा दुष्ट हुए तीनो दोषोसे, ग्लानिजनक पदार्थोंके देखनेसे, सुननेसे, स्पर्श करनेसे, अथवा भक्षण करनेसे, अथवा बलात्कार भोजन करनेसे और अत्यत भयकर कारणोसे, कुपित दोषोसे भोजन करी हुई वस्तु पीछे उछलकर पाँच प्रकारकी छर्दिको उत्पन्न करैहै, अब उनके लक्षण कहेजातेहैं ॥ १-३ ॥

(१) आम-अर्थात् अच्छे प्रकारसे नहीं पका हुआ अन्नरस। (२) अजीर्ण-अर्थात् जैसा भोजन किया होय वैसाही पेटमे रक्खा रहे पका न होय।

### अथ वमनपूर्वलक्षणम् ।

हृल्लासोद्गारसंरोधौ प्रसेको लवणास्यता॥ द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ॥ ४ ॥

उबकाईका आना, डकारका रुकना, मुखसे पानीका गिरना, मुखमें खारीपन और अन्नपानमे अत्यन्त अरुचि होतीहै। यह पूर्वलक्षण जानने ॥ ४ ॥

### अथ वमनसामान्यलक्षणम् ।

छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ॥ निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः ॥ ५ ॥

छादयन् पूरयन् अंगभञ्जनैः अङ्गभेदैः अर्दयन् अंगानि पीडयन्। वक्त्रं प्रधावितः दोषः छर्दिः इत्युच्यते ॥

जो रोग वेगोंसे मुखको भरताहुआ, अंगोको तोडता हुआ और पीडाको करताहुआ जो दोषोका मुखमें आता है उसको वमन कहतेहैं ॥ ५ ॥

### अथ वातजच्छर्दिलक्षणम् ।

हृत्पार्श्वपीडामुखशोषशीर्षनाभ्यर्तिकासस्वरभेदतोदैः ॥ उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ॥ कृच्छ्रेण चाल्पं महता च वेगेनार्तोऽनिलाच्छर्दयतीव दुःखम् ॥ ६ ॥

कषायं कषायरसम् । दुःखमिव छर्दयति ॥

वातकी छर्दिमें छाती और पसलियोंमे पीडा, मुखशोप, मस्तक और नाभिमें दर्द, खाँसी, स्वरभग, अंगोमे सुई चुभोने सरीखी पीडा, डकारका प्रबल शब्द आगोंयुक्त, टूटीसी, काली, पतली, कसैली और थोडी छर्दि (उलटी) अत्यन्त कष्टसे तथा बडे वेगसे होतीहै ॥ ६ ॥

## अथ पित्तजच्छर्दिलक्षणम् ।

मूर्च्छापिपासामुखशोषमूर्द्धताल्वक्षिसन्तापतमोभ्रमार्तः ॥ पीतं भृशोष्णं हरितञ्च तिक्तं धूम्रञ्च पित्तेन वमेत्सदाहम् ॥७॥

पित्तकी छर्दिमें मूर्च्छा, तृषा, मुखमें शोप,मस्तक,तालू और नेत्रोंमें सन्ताप, अन्धेरी आवै, भ्रम हो, तथा पीली बहुत गरम, हरी, कडवी, धुँएंयुक्त और दाहयुक्त वमन होतीहै ॥ ७ ॥

## अथ कफवमनलक्षणम् ।

तन्द्रास्यमाधुर्यकफप्रसेकसन्तोषनिद्राऽरुचिगौरवार्तः ॥ स्निग्धं घनं स्वादु कफाद्धि शुक्लं सलोमहर्षोऽल्परुजं वमेत्तु ॥ ८ ॥

कफकी वमनमें तन्द्रा, मुखमें मधुरता, कफका गिरना, तृप्तिका होना, निद्राका आना, अरुचि और भारीपन इनसे पीडित होताहै, रोमाचोंका खडा होना तथा स्निग्ध ( चिकनी ), गाढी, मीठी, सुफेद और अल्प पीडावाली वमन होतीहै ॥ ८ ॥

## अथ त्रिदोषजवमनलक्षणम् ।

शूलाविपाकारुचिदाहतृष्णाश्वासप्रमोहप्रबला प्रसक्ता ॥ छर्दिस्त्रिदोषाल्लवणाम्लनीलसान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥९॥

त्रिदोषजन्य वमनमें शूल, अन्नका अच्छे प्रकारसे परिपाक न होना, अरुचि, दाह,तृषा, श्वास और अत्यन्त मोह होताहै । तथा खारी, खट्टी, नीलेरगकी, गाढी, गरम और रुधिरवाली वमन होतीहै ॥ ९ ॥

## अथागन्तुजवमनलक्षणम् ।

अमात्म्यजा च क्रिमिजामजा च बीभत्सजा दौर्हृदजा च या हि ॥ सा पञ्चमी ताञ्च विभावयेत्त्र दोषोच्छ्रयेणैव यथोक्तनादौ ॥ १० ॥

एताः पञ्च अपि आगन्तुजत्वेन साम्यात् एकैव । अत एव सा आगन्तुजा पञ्चमी । विभावयेत् अनुबन्धयेत् ॥

अहित भोजन करनेसे कृमि तथा आमसे ग्लानिकारक पदर्थोंके देखनेसे और गर्भवती स्त्रियोके गर्भके रहनेसे उत्पन्नहुई, इस प्रकार आगन्तुज वमन पाँच प्रकारकी है । और वह आगन्तुज वमन पूर्वोक्त लक्षणोसे यथादोषानुसार जाननी चाहिये ॥ १० ॥

## अथ वमनोपद्रवाः ।

कासः श्वासो ज्वरस्तृष्णाहिक्कावैचित्त्यमेव च ॥ हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवाः ॥ ११ ॥

वैचित्त्यं विकृतचित्तत्वम् । तमकोऽत्र तमःश्वासपदेनैव तमकाख्यस्यापि श्वासस्य उक्तिः ॥

खाँसी, श्वास, ज्वर, तृषा, हिचकी, चित्तकी विकृति ( घबराहट ), छातीकी पीडा और अन्धकारसा दिखाई देना, ये सब वमनके उपद्रव हैं ॥ ११ ॥

## अथ वमनसाध्यासाध्यता ।

क्षीणस्य या छर्दिरतिप्रसक्ता सोपद्रवा शोणितपूययुक्ता ॥ सचन्द्रिकां तां प्रवदन्त्यसाध्यां साध्यां चिकित्सेन्निरुपद्रवां च ॥ १२ ॥

सचन्द्रिकां मयूरपिच्छचन्द्रिकाप्रभायुक्ताम् ।

जो वमन क्षीण मनुष्यको, आधिकतर, उपद्रवयुक्त रुधिर और राध (मवाद)सहित, तथा मोरपूँछकी समान कांतिवाली वमन होय तो असाध्य जाननी और जो वमन उपद्रवरहित होय तो साध्य है ॥ १२ ॥

## अथ वमनचिकित्सा ।

आमाशयोत्क्लेशभवा हि सर्वाश्छर्द्यो मता लंघनमेव तस्मात् ॥ विधीयते मारुतजां विना तु संशोधनं वा कफपित्तहारि ॥१३॥

सर्व प्रकारकी वमन आमाशयमे उत्क्लेद ( दोष ) के होनेसे होतीहैं इस कारण इनमें लंघन कराने चाहिये अथवा कफ और पित्तनाशक सशोधन देवे किंतु वातकी छर्दिमें यह चिकित्सा नहीं करनी चाहिये ॥ १३ ॥

**हन्यात्क्षीरोदकं पीतं छर्दिं पवनसम्भवाम् ॥ मुद्गामलकयूषो वा ससर्पिष्कः ससैंधवः ॥ १४ ॥**

**क्षीरोदकं नाशितस्य क्षीरस्य उदकम् ॥**

दही डालकर दूधको फाडकर उस दूधका पानी पीनेसे अथवा घृतसहित और सैंधेनिमकके साथ मूँगका तथा आमलोका यूष पीनेसे वातकी वमन दूर होतीहै ॥ १४ ॥

**गुडूचीत्रिफलानिम्बपटोलैः क्वथितं जलम्॥ पिबेन्मधुयुतं तेन छर्दिर्नश्यति पित्तजा ॥ १५ ॥**

गिलोय, हरड, बहेडा, आमला, नीम और पटोलपत्र इनका क्वाथ बनाकर सहत डालकर पीनेसे पित्तजन्य वमन दूर होतीहै ॥ १५ ॥

**हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ॥ अधोमार्गीकृते दोषे छर्दिः शीघ्रं निवर्तते ॥ १६ ॥**

हरडका चूर्ण बनाकर सहतमें मिलाकर चाटनेसे दोषोंको गुदाके मार्गसे जानेपर वमन शीघ्र दूर होतीहै ॥ १६ ॥

**विडंगत्रिफलाविश्वाचूर्णं मधुयुतं जयेत् ॥ विडंगप्लवशुण्ठीनां चूर्णं वा कफजां वमिम् ॥ १७ ॥**

**प्लवं कैवर्तमुस्तकं गुडतजी इति लोके ॥**

वायविडग, हरड, बहेडा, आमला और सोंठ इनका चूर्ण करके सहतमें मिलाकर चाटनेसे अथवा वायविडंग, केवटी मोथा और सोंठ इनका चूर्ण करके सहतमे मिलाकर चाटनेसे कफकी वमन दूर होजातीहै ॥ १७ ॥

**पिष्ट्वा धात्रीफलं लाजाञ्छर्कराश्च पलोन्मिताम् ॥ दत्त्वा मधुपलश्चापि कुडवं सलिलस्य च॥वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम् ॥ १८ ॥**

आमले धानकी खील और चार तोले खांड इनको पीसकर चारतोले सहत और सोलह १६ तोले जल डालकर वस्त्रमे छान लेवे, इसको पीनेसे त्रिदोपजन्य वमन दूर होजाती है ॥ १८ ॥

**गुडूच्या रचितं हन्ति हिमं मधुसमन्वितम् ॥ दुर्निवारामपि च्छर्दिं त्रिदोषजनितां बलात् ॥ १९ ॥**

गिलोयका हिम बनाकर सहत डालकर पीनेसे त्रिदोष सम्बन्धी अत्यत दुर्निवार वमन बलात्कारसे नष्ट होजाती है ॥ १९ ॥

**एलालवंगजकेसरकोलमज्जालाजाप्रियंगुघनचन्दनपिप्पलीनाम् ॥ चूर्णानि माक्षिकसितासहितानि लीढ्वा छर्दिं निहन्ति कफमारुतपित्तजाताम् ॥ २० ॥**

इलायची, लौंग, नागकेसर, बेरका गूदा, धानकी खीलें, फूलप्रियगु, मोथा, चन्दन और पीपल इनका चूर्ण बनाकर सहत तथा खाडमें मिलाकर चाटनेसे कफ वायु तथा पित्तसे उत्पन्न हुई वमन दूर होजाती है, इसको एलादि चूर्ण कहते हैं ॥ २० ॥

**अश्वत्थवकुलं शुष्कं दग्धं निर्वापितं जले ॥ तज्जलं पानमात्रेण छर्दिं जयति दुर्जयाम् ॥ २१ ॥**

सूखी हुई पीपलकी तथा मौलसिरीकी छालको जलाकर पानीमे बुझालेवे उस पानीको पीनेसे तत्काल दुर्जय वमन दूर होजाती है ॥ २१ ॥

**पथ्यात्रिकटुधान्याकजीरकाणां रजो लिहन् ॥ मधुना नाशयेच्छर्दिमरुचिश्च त्रिदोषजाम् ॥ २२ ॥**

हरड, सोंठ, मिरच, पीपल, धनिया और जीरा इनका चूर्ण बनाकर सहतमें मिलाकर चाटनेसे तीनों दोषोंसे उत्पन्न हुई वमन और अरुचि नष्ट होजाती है ॥ २२ ॥

बिल्वत्वचो गुडूच्या वा क्राथः क्षौद्रेण संयुतः ॥ छर्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां तथा ॥ २३ ॥

बेलकी छाल अथवा गिलोयका क्राथ बनाकर सहत डालकर पीनेसे त्रिदोषजन्य वमन दूर होजातीहै तथा पित्तपापडेको पीसकर पीनेसे पित्तकी वमन दूर होजातीहै ॥ २३ ॥

आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः ॥ निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ २४ ॥

आमकी गुठली और बेलगिरी इनका क्राथ बनाकर सहत तथा खाँड मिलाकर पीनेसे जिसप्रकार अग्नि आहुतिका नाश करताहै उसीप्रकार इससे वमन सहित अतिसारका नाश होताहै ॥ २४ ॥

जम्ब्वाम्रपल्लवश्रृतं लाजरजःसंयुतं शीतम् ॥ शमयति मधुना युक्तं वमिमतिसारं तृषामुग्राम् ॥ २५ ॥

जामुनके पत्ते और आमके पत्ते इनका क्राथ बनाकर उसमें धानकी खीलोंका चूर्ण और सहत डालकर पीनेसे वमन, अतिसार, और घोर तृषा शांत होतीहै ॥ २५ ॥

बीभत्सजां हृद्यतमैरिष्टैर्दौर्हृदजां फलैः ॥ लंघनैरामजां छर्दिं जयेत्सात्म्यैरसात्म्यजाम् ॥ २६ ॥

बीभत्स पदार्थोंके दर्शन आदिसे उत्पन्न हुई वमनको अत्यन्त प्रिय पदार्थोंके उपयोगसे जीते । गर्भसे उत्पन्न हुई वमनको प्रियफलोंके उपयोगसे जीते । आमसे उत्पन्न वमनको लंघनोंसे जीते और अहित पदार्थोंसे उत्पन्न हुई वमनको हितपदार्थोंसे जीते ॥ २६ ॥

कृमिहृद्रोगवद्धन्याच्छर्दिं कृमिसमुद्भवाम् ॥ तत्रतत्र यथादोषं क्रियां कुर्याच्चिकित्सकः ॥ २७ ॥

वैद्य कृमिदोषसे उत्पन्न हुई वमनको कृमिरोगोक्त और हृदयरोगोक्त चिकित्सा करनी चाहिये और उसी दोषानुसार विचारकर क्रिया करे ॥ २७ ॥

सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः ॥ समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ २८ ॥

बहुत डकारवाली वमन होय तो मूर्वा, धनियाँ, नागरमोथा, मुलैठी और रसौत इनका चूर्ण करके सहतमें मिलाकर चाटे ॥ २८ ॥

सौवर्चलमजाजी च शर्करामरिचानि च ॥ क्षौद्रेण सहितं लीढं सद्यश्छर्दिनिवारणम् ॥ २९ ॥

कालानिमक, जीरा, खाड और काली मिरच इनका चूर्ण बनाकर सहतमें मिलाकर चाटनेसे वमन तत्काल शमन होजातीहै ॥ २९ ॥

इति वमनाधिकारः संपूर्णः ।

---

# अथ तृष्णाधिकारः ।

## तत्र तृषानिदानपूर्वकसम्प्राप्तिः ।

भयश्रमाभ्यां बलसंशयाद्वाप्यूर्द्ध्वं चितं पित्तविवर्द्धनैश्च ॥ पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥ १ ॥ स्रोतःस्वपां वाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः ॥ तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा च ॥ भक्तोद्भवा सप्तमिकेति तासां निबोध लिंगान्यनुपूर्वशस्तु ॥ २ ॥

नराणां पित्तं स्वस्थान एव संचितं पित्तं सवातम् पित्तविवर्द्धनैः कट्वम्लोष्णादिभिः कुपितम्पित्तं भयश्रमाभ्यां बलसंक्षयादुपवासादेश्च वातः कुपितः तद्द्वयमूर्द्ध्वं प्राप्तम् ऊर्द्ध्ववशात्पिपासां जनयेत् । न केवलं तालुनि एव दूषिते तृषा भवति किन्तु जलवाहिस्रोतःसु अपि । अत आह स्रोतःसु इत्यादि । ननु अत्र बहुवचनं न युक्तं यतो जलवहे द्वे स्रोतसी सुश्रुतेन उक्ते । उच्यते । तयोरेव अनेकप्रतानयोगान्न दोषः अपां

वाहिषु स्रोतःसु इति जिह्वादेरपि उपलक्षणम्। यत आह चरकः-

रसवाहिनीश्च धमनीर्जिह्वाहृदयगलतालुक्लोमसंशोषान् ॥ नृणां देहेषु कुरुतस्तृष्णामतिबलां पित्तानिलौ ॥ ३ ॥

मनुष्योंके अपने स्थानमें सञ्चित हुआ पित्त अपने बढानेवाले तीखे, खट्टे तथा उष्ण आदि पदार्थोंसे कोपको प्राप्त होताहै और अपने स्थानमें सञ्चित हुई वायु भयसे, श्रमसे तथा बलका क्षय करनेवाले उपवासादिकसे कोपको प्राप्त होतीहै इस प्रकार कोपको प्राप्तहुआ पित्त और वायु यह दोनों ऊपरको आकर तालुयेको दूषित करके तृषाको उत्पन्न करतेहैं। केवल तालुयेके ही दूषित होनेसे मनुष्योंके तृषा (प्यास) उत्पन्न होतीहै किन्तु जलवाहिस्रोतोंके दूषितहोने पर भी उत्पन्न होतीहै। जलको वहानेवाले दो स्रोत (छिद्र) हैं ऐसा सुश्रुत कहताहै, फिर यहां 'जलको वहानेवाले स्रोत' ऐसा बहुवचन क्यों कहा ?

समाधान-दो स्रोतोंका बहुतसे ततुओंकरिके योग है इसकारण यहां बहुवचन आनेमें कुछ भी दोष नहीं आता।

स्रोत, यह शब्द उपलक्षण रूप है इस कारण इस शब्दसे जीभ आदिका भी ग्रहण करना चाहिये। क्योंकि चरक कहताहै कि, पित्त और पवन रसको वहानेवाली नाडी, जीभ, गला, तालू और तृषा लगनेके स्थानके सञ्शोषणसे मनुष्योंके शरीरमें प्रबल तृषा उत्पन्न होतीहै ॥

वातज, पित्तज, कफज, क्षतज, क्षयज, आमदोषज और भोजन किये हुए अन्नसे उत्पन्न होनेवाली, इस प्रकार तृषा सात प्रकारकी है। अब इनके अनुक्रमसे लक्षण कहताहू ॥ १-३ ॥

### अथ तृषासामान्यलक्षणम्।

ताल्वोष्ठकण्ठास्यविशोषदाहः सन्तापमोहभ्रमविप्रलापाः ॥ सर्वाणि रूपाणि भवन्ति तस्यामुत्पत्तिकाले तु विशेषतो हि ॥ ४ ॥

तालू, होठ, कंठ और मुख इनमें शोष तथा दाह, सताप, मोह, भ्रम और बकवाद ये सब तृषाके लक्षण हैं। तृषाकी उत्पत्तिके समयमे यह लक्षण विशेष करके उत्पन्न होतेहैं ॥ ४ ॥

### अथ वातजतृषालक्षणम्।

क्षामास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरःसु चापि ॥ स्रोतोनिरोधो विरसश्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ॥ ५ ॥

शङ्खशिरःसु शङ्खयोः शिरसि च तोदः। स्रोतोनिरोधः रसाम्बुवाहिनीधमनीनिरोधः॥

वायुकी तृषामे मुख उतरजाताहै, कनपटी और मस्तकमें पीडा होतीहै, रसको तथा जलको वहनेवाली धमनीं रुकजातीहैं, मुखका स्वाद निरस होजाताहै और यह तृषा शीतल जलसे वृद्धिको प्राप्त होतीहै ॥ ५ ॥

### अथ पित्तजतृषालक्षणम्।

मूर्च्छान्नविद्वेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः ॥ शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिधूपनश्च ॥ ६ ॥

विलापः प्रलापः। प्रततश्च शोषः अविरतः शोषः। शीताभिनन्दा शीतेच्छा। परिधूपनं कण्ठाद्धूमनिर्गम इव ॥

पित्तकी तृषामे मूर्छा, अन्नपर अरुचि, बकवाद, दाह, नेत्रोंमें लाली, निरतर शोष, शीतकी इच्छा, मुख कडवा होजाताहै और कठमेंसे धुँआ सा निकलताहै ॥ ६ ॥

### अथ कफजतृषालक्षणम्।

बाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णा बलासेन भवेन्नरस्य ॥ निद्रा गुरुत्वं मधुरास्यता च तयार्दितः शुष्यति चातिमात्रम् ॥ ७ ॥

अग्नौ जठराग्नौ कफसंवृते स्वकारणकुपितेन कफेन उपरिष्टाच्छादिते। बाष्पावरोधादग्नेरूष्मावरोधादवरुद्धानलोष्मणा अम्बुवहस्रोतःशोषणाद्बलासेन कफेन नरस्य तृट् भवेत्। तया तृष्णया अर्दितः पीडितः शुष्यति कृशो भवति ॥

जठराग्निके ऊपर भागमें अपने कारणोंसे कोपको प्राप्त हुए कफसे आच्छादित होनेके कारण जठराग्निकी उष्णता रुककर उस उष्णतासे जलको बहानेवाले स्रोतोंका शोषण होनेके कारण कफसे जो तृषा होतीहै, उस तृषासे पीडित हुए मनुष्यके शरीरमें अत्यंत कृशता होजातीहै, निद्रा बढजातीहै, भारीपन होताहै और मुख मधुर होजाताहै ७॥

## अथ क्षतजतृषालक्षणम् ।

क्षतस्य रुक्छोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु ॥ ८ ॥

क्षतस्य शस्त्रादिक्षतयुक्तस्य रुक् पीडा ॥

शस्त्रादिकसे जखमी हुए मनुष्यको पीडाके होनेसे और रुधिरके निकलनेसे जो तृषा लगतीहै उसको क्षतज कहते हैं ॥ ८ ॥

## अथ क्षतजतृषालक्षणम् ।

रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु ॥ पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः॥ रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् ॥ ९ ॥

रसक्षयलक्षणानि सुश्रुतेन उक्तानि "रस क्षये हृत्पीडा कम्पः शोषः शून्यता तृष्णा चेति" । व्यवस्येज्जानीयात् ॥

रसके क्षय होनेसे जो तृषा उत्पन्न होतीहै उसको क्षयज कहतेहैं । इस तृषासे पीडित मनुष्य रात दिन पानी पिया करताहै परन्तु कभी सतोष नहीं होता, कोई कोई वैद्य इसको सन्निपातकी तृषा भी कहतेहैं सुश्रुतमें जो रसक्षय होनेके लक्षण कहेहैं वे सब लक्षण इस तृषामें होतेहैं ऐसा वैद्य जाने ।

सुश्रुतमें कहा है कि "जब रसका क्षय होताहै तो हृदयमें पीडा, कंप, शोष, जडता और तृषा उत्पन्न होतीहै" ॥९॥

## अथामोत्पन्नतृषालक्षणम् ।

त्रिदोषलिंगामसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री ॥ १० ॥

जो तृषा त्रिदोषसे उत्पन्न होतीहै उसमें तीनो दोषोंके चिह्न होतेहैं, उसमें हृदयमें पीडा, थूकआना और ग्लानि ये विकार उत्पन्न होतेहैं ॥ १० ॥

## अथ भुक्तोद्भवतृषालक्षणम् ।

स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्वन्नमेवाशु तृषां करोति ॥ ११ ॥

लवणश्चेति चकारात्कटु च ॥

स्निग्ध, खट्टे, खारी, तीखे और भारी अन्नोंको भक्षण करनेसे जो तृषा उत्पन्न होतीहै उसमें वारवार शीघ्र शीघ्र जल पीनेकी इच्छा होतीहै ॥ ११ ॥

## अथ तृषोपद्रवाः ।

दीनस्वरः प्रताम्यन्दीनाननहृदयशुष्कगलतालुः॥ भवति खलु सोपसर्गा तृष्णा सा शोषिणी कष्टा ॥ १२ ॥

शोषिणी धातुशोषिणी ॥

स्वरका दुबला होजाना, ग्लानि, मुख और हृदयकी दीनता, गले और तालुयेका सूखना इन सब उपद्रववाली तृषा होय तो कष्टसाध्य है और धातुओंको भी शोषण करेहै ॥ १२ ॥

## अथोपद्रवयुक्ततृषाऽरिष्टम् ।

ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहानाम्॥ सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम् ॥ घोरोपद्रवयुक्ता तृष्णा मरणाय विज्ञेया ॥ १३ ॥

आदिशब्दादतीसारादीनां ग्रहणम् । अतिप्रसक्ताः नितरां घोरोपद्रवयुक्ताः अतीव मुखशोषादियुक्ताः ॥

ज्वर, प्रमेह, क्षय, खाँसी, श्वास और अतीसार इत्यादि रोगोंसे पीडित मनुष्योंको रोगसे कृशहुए मनुष्योंको और वमन करनेवाले मनुष्योंको जो अत्यन्त घोर तृषा लगतीहै, तथा मुखशोष आदि उपद्रवोंसे युक्त जो सर्व प्रकारकी तृषा उत्पन्न होतीहै वह मारनेके लिये ही उत्पन्न होतीहै ॥ १३ ॥

## अथ तृषाचिकित्सा ।

वातघ्नमन्नपानं मृदु लघु शीतञ्च वाततृष्णायाम् ॥

तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥ स्वादु तिक्तं द्रवं शीतं पित्ततृष्णापहं परम् ॥ १४ ॥

वातकी तृषामे वातनाशक, कोमल हलके और शीतल ऐसे अन्नपान उपयोग करे। वातकी तृषामें गुडके साथ दहीका सेवन श्रेष्ठ है।

मधुर, कडवे, पतले और शीतल पदार्थोंके उपयोग करनेसे पित्तकी तृषा शात होजातीहै ॥ १४ ॥

**मुस्तपर्पटकोदीच्यच्छत्राख्योशीरचन्दनैः॥ शृतं शीतं जलं दद्यात्तृड्दाहज्वरशान्तये ॥ १५ ॥**

**छत्रा धान्यकं कश्चिद्धात्रीश्च दद्यात्। चन्दनमत्र धवलं तस्य अतितृष्णाहरत्वात्। शृतमर्द्धपक्कमत्र कर्तव्यम्। इति षडङ्गपानम्॥**

नागरमोथा, पित्तपापडा, सुगन्धवाला, धनिया, खस और चन्दन इन सबको जलमे औटाकर उस जलको शीतल करके पीनेसे तृषा, दाह और ज्वर शांत होजाताहै इसमें कुछेक आमले भी डालने चाहिये। यहा चन्दन शब्दसे लालचन्दन नहीं सफेद चन्दन समझना चाहिये। कारण यह है कि, सफेद चन्दनसे तृषा विशेष करके दूर होतीहै। इसे औटाते समय जब इसमेंसे आधा जल जलजाय तब इसको अग्निपैसे उतार लेना चाहिये। इस जलको 'पडगपान' ऐसा कहतेहैं ॥ १५ ॥

**लाजोदकं मधुयुतं शीतं गुडविमर्दितम्॥ काश्मरीशर्करायुक्तं पिबेत्तृष्णार्दितो नरः१६**

धानकी खीलोको शीतल जलमें भिजो देवे, फिर उसको मलकर उसमें गुड घोलकर कुम्भेरके फल और मिश्री डालकर पियै तो उससे तृषाकी पीडा शांत होजातीहै ॥ १६ ॥

**आस्तरणमार्द्रवासः प्रावरणं चार्द्रवासः स्यात् ॥ तेन पिपासा शाम्यति दाहश्चोग्रोऽपि देहिनां नियतम् ॥ १७ ॥**

भीजेहुए वस्त्रपर सोनेसे अथवा भीजे वस्त्रको ओढकर सोनेसे तृषा और उग्र दाह नष्ट होजाताहै ॥ १७ ॥

**गोस्तनीक्षुरसक्षीरयष्टीमधुमधूत्पलैः॥ नियतं नासिकापीते तृष्णा शाम्यति दारुणा ॥ १८ ॥**

ईखका रस और दूध मिलाकर उसमें दाख, मुलहटी, सहत और कमल डालकर उसको नासिकाके द्वारा पान करनेसे दारुण तृषा शांत होजातीहै ॥ १८ ॥

**वैशद्यं जनयत्यास्ये सन्दधाति मुखे जलम्॥तृष्णादाहप्रशमनं मधुगण्डूषधारणम् ॥ १९ ॥**

मुखमें विशदता उत्पन्न होतीहै और गीलापन होताहै। तथा सहतका गण्डूष (कुल्ला) मुखमें धारण करनेसे घोर तृषा और दाह दूर होतीहै ॥ १९ ॥

**जिह्वातालुगलक्लोमशोषे मूर्ध्नि निधापयेत् ॥ केशरं मातुलुंगस्य घृतसैन्धवसंयुतम् ॥ २० ॥**

जीभ, तालु, कण्ठ और तृषा लगनेका स्थान सूखता होय तो बिजोरे नीबूके रसको घीमें तथा सैंधेनिमकमे पीसकर मस्तकपर लगावे तो तुरन्त शान्ति होय ॥ २० ॥

**दाडिमं बदरं लोध्रं कपित्थं बीजपूरकम्॥ पिष्ट्वा मूर्द्धनि लेपस्तु पिपासादाहनाशनः ॥ २१ ॥**

अनार, बेर, लोध, कैथ और बिजोरानीबू इनको एकत्र पीसकर मस्तकपर प्रलेप करनेसे तृषा और दाह शात होतीहै ॥ २१ ॥

**वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम् ॥ पाययेद्वामयेच्चाथ तेन तृष्णा प्रशाम्यति ॥ २२ ॥**

तृषातुर मनुष्यको सहत डालकर शीतल जल गले तक पिलाकर कय करादेवे तो तृषा शांत होजायगी ॥ २२ ॥

**प्रातः शर्करयोपेतः काथो धान्याकसम्भवः ॥ जयेत्तृष्णां तथा दाहं भवेत्स्रोतोविशोधनम् ॥ २३ ॥**

प्रातःकाल धनियोंका क्काथ बनाकर उसमें खाड डालकर पीनेसे तृषा और दाह दुर होजातीहै और स्रोत शुद्ध होजातेहैं ॥ २३ ॥

**आमलं कमलं कुष्ठं लाजाश्च वटरोहकम् ॥ एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे ॥**

**तृष्णां प्रवृद्धां हन्त्येषा मुखशोषश्च दारुणम् ॥ २४ ॥**

आमले, कमल, कूठ, धानकी खीलें और वडके अङ्कुर इन सबका एकत्र चूर्ण करके सहतमें गोली बनाकर मुखमें रखनेसे महा उग्र तृषा और मुखका दारुण शोष नष्ट होजाताहै ॥ २४ ॥

**क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ॥**

घावके होनेसे उत्पन्नहुई तृषाको उसकी पीडाको दूर करनेसे, रसोंको पिलानेसे और रुधिरके पिलानेसे दूर करे।

**क्षयोत्थितं क्षीरजलं निहन्यान्मांसोदकं वा मधुरोदकं वा ॥ २५ ॥**

रसके क्षय होनेसे उत्पन्नहुई तृषाको दूधसहित जल पिलाकर, मासका रस पिलाकर और मधुर पानी (शरवत वगैरह ) पिलाकर शमन करै ॥ २५ ॥

**आमोद्भवां बिल्ववचायुतानां जयेत्कषायैरथ दीपनानाम् ॥**

आमसे उत्पन्नहुई तृषाको वेलगिरी और वच तथा दीपन पदार्थोंका क्वाथ पिलाकर शमन करै ॥

**गुर्वन्नजामुल्लिखनैर्जयेच्च क्षयं विना सर्वकृताश्च तृष्णाम् ॥ २६ ॥**

**उल्लिखनैः लेखनद्रव्यैः ॥**

भारी भोजन करनेसे तृषा उत्पन्न होय तो कफको उखाडनेवाले पदार्थोंसे दूर करे। क्षयकी तृषाको छोडकर सर्व प्रकारकी तृषाको इनहीं पदार्थोंसे दूर करना चाहिये ॥ २६ ॥

**स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत् ॥ अतिरोगदुर्बलानां तृष्णां शमयेन्नृणामिहाशु पयः ॥ २७ ॥**

**पयोऽत्र दुग्धम् ॥**

स्निग्ध अन्नको भक्षण करनेसे जो तृषा उत्पन्न होय तो उसको गुडके सरबतसे शांत करे। अत्यंत रोगसे दुर्बल हुए मनुष्यकी तृषा दूधसे तत्काल शांत होजातीहै ॥ २७ ॥

**मूर्च्छाछर्दितृट्पानाहस्त्रीमद्यभृशकर्षिताः॥ पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये॥ ॥ २८ ॥ सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत्पुरः॥तस्यां जितायामन्योऽपि व्याधिः शक्यश्चिकित्सितुम् ॥ २९ ॥**

मूर्च्छा, वमन, तृषा, अफारा, स्त्रीप्रसंग और मद्यपानसे पीडित मनुष्योंको शीतल जल पिलावे ॥

रक्तपित्तमे तथा मदात्ययमे हितकारक अन्न पानोंसे एवं हितकारक औषधियोंसे तृषाको शांत करै। जब तृषा शांत होजाय तो फिर पश्चात् दूसरे रोग भी चिकित्सा करने योग्य होजातेहैं ॥ २८ ॥ २९ ॥

**तृषापूर्वमपक्षीणो न लभेत जलं यदि ॥ मरणं दीर्घरोगं वा प्राप्नुयात्त्वरितं नरः ॥ ३० ॥**

तृषासे व्याकुल हुए मनुष्यको प्रथम जो जल न मिले तो वह मनुष्य मरजाताहै अथवा कोई बडा रोग उत्पन्न होताहै ॥ ३० ॥

**तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति ॥ तस्मात्सर्वास्ववस्थासु न क्वचिद्वारि वारयेत् ॥ ३१ ॥ अन्नेनापि विना जन्तुः प्राणान्धारयते चिरम् ॥ तोयाभावात्पिपासार्तः क्षणात्प्राणैर्विमुच्यते ॥ ३२ ॥**

इति तृष्णाधिकारः।

तृषातुर मनुष्यको मोह उत्पन्न होताहै और मोहसे प्राण नष्ट होजातेहैं। इस कारण कभी किसी अवस्थामें भी जल देना वर्जित नहींहै। अन्नके न मिलनेपर तो प्राणी बहुत दिनोंतक जीसक्ताहै किंतु जलके न मिलनेपर तृषासे पीडित मनुष्य क्षणमात्रमें मर जाताहै ॥ ३१ ॥ ३२ ॥

इति तृष्णाधिकारः सम्पूर्णः।

---

# अथ मूर्च्छाधिकारः।

## तत्र मूर्च्छानिदानपूर्वकसम्प्राप्तिः।

**क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः॥ वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुनः॥ ॥ १ ॥ करणायतनेषूग्रा बाह्येष्वभ्यन्तरेषु च ॥ निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥ २ ॥**

क्षीणहुए, बहुत दोषवाले, विरुद्ध भोजनको सेवन करनेवाले, मलमूत्रादिकके वेगोंको रोकनेवाले, लकडी आदिकी जिनके चोट लगी हो और अल्प सत्त्व गुणवाले जिनके मनके स्थानोमें ज्ञानेन्द्रियोमें और कर्मेन्द्रियोमें दोष प्रवेश करतेहैं उनको मूर्च्छा उत्पन्न होतीहै ॥ १ ॥ २ ॥

बहुदोषस्य अधिकदोषस्य न तु अनेकदोषस्य। तदा मूर्च्छा त्रिदोषजैव स्यात् तथैव अस्तु को दोषः तत्र पृथक् दोषजानां मूर्च्छानां वक्ष्यमाणत्वात्। वेगाघातात् मलादेः, अभिघातात् लगुडादिना हीनसत्त्वस्य स्वल्पसत्त्वगुणस्य, अर्थात् अधिकतमोगुणस्य। यत उक्तम् "मूर्च्छा पित्ततमःप्राया" इति। करणायतनेषु करणं मनस्तस्य आयतनेषु स्वस्थानेषु बाह्येषु कर्मेन्द्रियेषु आभ्यन्तरेषु बुद्धीन्द्रियेषु ॥

'बहुत दोषवाले' इस शब्दका अर्थ 'अधिक दोषवाले' ऐसा समझना। 'अनेक दोषवाले' ऐसा नहीं समझना। कारण यह है कि, यदि ऐसा समझा जाय तो मूर्च्छा तीनों दोषोंके समुदायसे होतीहै ऐसा अर्थ होताहै।

शका—मूर्च्छा तीनों दोषोंके समुदायसे होतीहै ऐसा अर्थ होनेमें क्या अनुचित है?

समाधान—एक एक दोषसे मूर्च्छा होती है ऐसा कहा है, इस कारण यहा निदानपूर्वक सम्प्राप्तिके विषयमें तीनों दोषोंके समुदायसे मूर्च्छा होतीहै, ऐसा कहना उचित नही है।

'अल्प सतोगुणवाले मनुष्यको मूर्च्छा आतीहै' इस वाक्यका अर्थ 'अधिक तमोगुण वालेको मूर्च्छा आतीहै' ऐसा समझना। कारण यह है कि, मूर्च्छामें पित्त और तमोगुण अधिक होताहै।

## अथ मूर्च्छासामान्यलक्षणम्।

संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः। तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ ३ ॥ सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्॥ मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥ ४ ॥

तमोगुणः अज्ञानहेतुः। अभ्युपैति आगच्छति। सुखदुःखव्यपोहकृत्सुखदुःखज्ञाननाशकरम्। नष्टे सुखदुःखज्ञाने नरः काष्ठवत्पतति तां मोहो मूर्च्छेति प्राहुः इत्यन्वयः। मूर्च्छाया मूर्च्छायोऽपि पर्यायः। यत उक्तम्—

संज्ञोपघातो मूर्च्छायो मूर्च्छा स्यान्मूर्च्छनं तथा ॥ कश्मलं प्रलयो मोहः संन्यासस्तु मृतोपमः ॥ ५ ॥

संज्ञाको वहानेवाली नाडियोंको वायु आदिसे अवरुद्ध होनेपर सहसा सुखका तथा दुःखका ज्ञान नष्ट करनेवाला तमोगुण प्राप्त होताहै और इस तमोगुणसे, सुख दुःखका ज्ञान नष्ट होकर मनुष्य काष्ठकी समान गिरजाताहै यह रोग मूर्च्छा अथवा मोह कहाजाताहै और यह मूर्च्छा छः प्रकारकी है। मूर्च्छाका पर्यायशब्द 'मूर्च्छाय' भी है, कहा भी है कि "संज्ञोपघात, मूर्च्छाय, मूर्च्छा, मूर्च्छन, कश्मल, प्रलय और मोह, ये सब मूर्च्छाके नाम हैं। जिससे यह मनुष्य मृतककी समान होजाय ऐसा जो मोह वह 'संन्यास' कहाजाताहै ॥ ३–५ ॥

## अथ मूर्च्छाषड्विधत्वम्।

वातादिभिः शोणितेन मद्येन च विषेण च ॥ षट्स्वप्येतासु पित्तन्तु प्रभुत्वेनावतिष्ठते ॥ ६ ॥

यत उक्तम्—मूर्च्छा पित्ततमःप्रायेति ॥

वातज, पित्तज, कफज, रक्तज, मद्यसे उत्पन्न होनेवाली और विषसे उत्पन्न होनेवाली ऐसी मूर्च्छा छै प्रकारकी हैं। इन सब प्रकारकी मूर्च्छाओंमे भी पित्त अध्यक्षपनेसे रहताहै।

कहा भी है कि, मूर्च्छामें पित्त और तमोगुण अधिकतासे होता है ॥ ६ ॥

## अथ मूर्च्छापूर्वरूपम्।

हृत्पीडा जृम्भणं ग्लानिः संज्ञानाशो बलक्षयः ॥ सर्वासां पूर्वरूपाणि यथास्वं तां विभावयेत् ॥ ७ ॥

हृदयकी पीडा, जम्भाइओंका आना, ग्लानि, संज्ञाका नाश और बलका नाश ये सब मूर्च्छाओंके पूर्व लक्षण हैं। आगे उसके वातादि भेदोंसे अलग अलग लक्षण कहते हैं ॥ ७ ॥

## अथ वातमूर्च्छालक्षणम् ।

**नीलं वा यदि वा कृष्णमाकाशमथ वारुणम्॥ पश्यंस्तमः प्रविशति शीघ्रश्च प्रतिबुध्यते ॥ ८ ॥ वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ॥ कार्श्यं श्यावारुणा छाया मूर्च्छाये वातसम्भवे ॥ ९ ॥**

**नीलं नीलवर्णम्, कृष्णं कज्जलाभम् अरुणम् अलक्तरागम्, तमः प्रतिशति मूर्च्छति श्यावारुणा छाया गात्रस्य ॥**

वातकी मूर्च्छामें आकाशको नीला, काला अथवा लाल देखता देखता मूर्च्छित होजाताहै, फिर तत्काल चैतन्य अर्थात् होशमे होजाताहै । शरीरमे कंप, अगोंमे तोडने सरीखी पीडा, हृदयमें पीडा, शरीर कृश होजाताहै और शरीरका रंग कालेपनको लिये लाल होजाताहै ॥ ८ ॥ ९॥

## अथ पित्तजमूर्च्छालक्षणम् ।

**रक्तं हरितवर्णं वा वियत्पीतमथापि वा॥ पश्यंस्तमः प्रविशति सस्वेदः प्रतिबुध्यते ॥ ॥ १० ॥ सपिपासः ससन्तापो रक्तपित्ताकुलेक्षणः॥ सम्भिन्नवर्चाः पीताभो मूर्च्छाये पित्तसम्भवे ॥ ११ ॥**

आकाशको लाल, हरा, अथवा पीले रंगका देखता २ मूर्च्छित होजाय,पसीने युक्त होकर फिर होश हो,तृषा लगे, सताप उत्पन्न हो, नेत्र लाल तथा पित्तसे व्याकुल होजायँ, दस्त पतला होनेलगे और शरीरका रग पीला होजाय तो जानना कि,उसको पित्तसे मूर्च्छा उत्पन्न हुई है१०॥११॥

## अथ कफमूर्च्छालक्षणम् ।

**मेघसङ्काशमाकाशं तमोभिर्वा घनैर्वृतम्॥ पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ॥ १२ ॥ गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ॥ समसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥ १३ ॥**

**मेघसंकाशं शुभ्रमेघसंकाशमित्यर्थः ॥ यत आह सुश्रुतः "कफेन पश्येद्रूपाणि श्वेताभ्रप्रतिमानि तु" । घनैर्निबिडैस्तमोभिः । गुरुभिरंगैरुपलक्षितः मूर्च्छायः षड्विध उक्तः सुश्रुतेन-**

आकाशको बादलोंसे आच्छादित देखकर अथवा घोर अंधकारसे घिरा हुआ देखकर मूर्च्छित होजाय । फिर बहुत कालमे चैतन्य हो, जिसप्रकार गीले चमडेसे ढकदेते हैं उसी प्रकार उसका शरीर भारी अंगोसे युक्त जान पडता है। मुखमे पानी भर भर आवै और उबकाई आवै तो जानना कि, यह कफकी मूर्च्छा है ।

'बादल' यहां जो बादल शब्द कहा सो बादल सुफेद समझने । क्योंकि सुश्रुतने कहा है कि, कफसे सुफेद बादलोंकी समान रूपोंको देखताहै ॥ १२ ॥ १३ ॥

## अथ चरकमतेन त्रिदोषजमूर्च्छालक्षणम् ।

**सर्वाकृतिः सन्निपातादपस्मार इवागतः॥ सजन्तुं पातयत्याशुविना बीभत्सचेष्टितैः१४**

**अपस्मार इवागतस्तेन महता अभिघातेन पतति चिरेण प्रतिबुध्यते तर्हि तयोः को भेद इत्यत आह-**

**सान्निपातिकमूर्च्छायो विना बीभत्सचेष्टितैः ॥**

**कफेन वमनदन्तघट्टनाक्षिविकृत्यादिभिर्विना पातयति ॥ १५ ॥**

जो मूर्च्छा सन्निपातसे होतीहैं उसमें तीनो दोषोंके चिह्न देखनेमे आतेहैं और उसमे मृगीकी समान मनुष्य बडे जोरसे गिरजाताहै उससे गिराहुआ मनुष्य बहुत कालमे चैतन्य होताहै ।

जब मृगी और सन्निपातकी मूर्च्छाके लक्षण तो एकसेही मिलतेहैं । फिर इनमें अतरही क्या रहा ? यदि कोई ऐसी शका करे तो उसके समाधानके लिये चरक कहता है कि "मृगीमें झागोंसहित वमन" दांतोंका चबाना और नेत्रोंमें विकृति इत्यादिक भयानक चेष्टा होतीहैं और सान्निपातिक मूर्च्छामे यह चेष्टा नहीं होती ॥ १४॥१५॥

## अथ रुधिरोत्पन्नमूर्च्छानिदानम् ।

**पृथिव्यम्भस्तमोरूपं रक्तगन्धस्तदन्वयः ॥**

तस्मादृक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥ १६ ॥

तमोरूपं तमोबहुलम्। मानवाश्च ये तामसाः। न तु सात्त्विका राजसाश्च। अत्रैके वदन्ति नैव युक्तिः समीचीना तर्हि चम्पकादिगन्धेन अपि मूर्च्छा प्रसज्येत तत्रापि गन्धस्य पार्थिवत्वात्। अत आह-

द्रव्यस्वभावमित्येके दृष्ट्वा यदपि मुह्यति ॥
दर्शनादसृजस्तज्जाद्गन्धाच्चैव प्रमुह्यति॥ १७॥

पृथिवी और जल यह दोनों तमोगुणके अधिक अंशो युक्त हैं। और गंध तथा रुधिर पृथिवीके तथा जलके पदार्थ रूप हैं इस कारण सतोगुणी और रजोगुणी नहीं किन्तु जो तमोगुणी मनुष्य हैं वह रुधिरकी गंधसे मूर्च्छित होजाते हैं।

इस विषयमे बहुतसे मत हैं कोई कहते हैं कि, गंध तमोगुणके कार्यरूप पृथ्वीका भाग है इस कारण इससे मनुष्य मूर्च्छित होते हैं यह युक्ति ठीक नहीं। क्योंकि यदि ऐसा होय तो चंपक आदिकी गंध भी पृथ्वी सम्बन्धी है इसलिये उसकी गधसे भी मूर्च्छा होनी चाहिये।

इस युक्तिको छोडकर कितनेक वैद्य कहते हैं कि, "रुधिरकी गंधसे नहीं किन्तु रुधिरके देखनेसे अत्यंत मूर्च्छा होतीहै। यह रुधिरके ऐसे स्वभाव होनेसे ही होती है"।

भोज तो ऐसा कहताहै कि, रुधिरके दर्शनसे और गधसे भी मूर्च्छा होतीहै ॥ १६ ॥ १७ ॥

## अथ रुधिरमूर्च्छालक्षणम्।

स्तब्धांगयष्टिस्त्वसृजाद्गूढोच्छ्वासश्च मूर्च्छितः ॥ १८ ॥

रुधिरकी मूर्च्छा होय तो शरीर स्तब्ध (जकडासा) होजाताहै और गूढ श्वास होजाताहै ॥ १८ ॥

## अथ मद्यमूर्च्छालक्षणम्।

गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः॥
त एव तस्मात्ताभ्यान्तु मोहौ स्यातां यथेरितौ ॥ १९ ॥

ये गुणाः लघुरूक्षाशुविशदव्यवायितीक्ष्णविकाशिसूक्ष्मोष्णानिर्देश्यरसत्वादयः तैलादौ द्रव्ये व्यस्तास्तीव्राश्च सन्ति त एव गुणाः विषमद्ययोस्तु तीव्रतरत्वेन स्थिताः तत्रापि भेदः-"त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः" इति ॥

लघुता, रूक्षता, शीघ्रता, विशदता, व्यवायिपन, तीक्ष्णता, विकाशीपन, सूक्ष्मपन, उष्णपन और निरूपण करनेके लिये अशक्य रसयुक्तपन, इत्यादि जो गुण तैलादिक पदार्थोंमें अलग अलग रहते हैं और तीव्र हैं वही गुण विषमें और मद्यमे अत्यंत तीव्रतासे रहते हैं। उनमे भी इतना भेद है कि, मद्यकी अपेक्षा ये गुण विषमें अधिक बलवान् हैं, मद्यमें तथा विषमें ये गुण दोनो होनेसे मद्य और विषसे मूर्च्छा होती है ॥ १९ ॥

## अथ मद्यमूर्च्छालक्षणम्।

मद्येन प्रलपञ्छेते नष्टविभ्रान्तमानसः ॥
गात्राणि विक्षिपन्भूमौ जरां यावन्न याति तत् ॥ २० ॥

नष्टविभ्रान्तमानसः नष्टं सर्वथा स्मृतिहीनं विभ्रान्तं रज्जौ सर्पज्ञानयुक्तं मानसं यस्य सः। जरां जीर्णताम्। तन्मद्यम् ॥

मद्य (सराव) की मूर्च्छामें मन सर्वथा स्मृतिहीन होजाताहै और ऐसी भ्रान्ति होजाती है कि, जेवरी (रस्सी) आदिको सॉप समझने लगताहै जबतक पी हुई मदिरा जीर्ण नहीं होती तबतक मूर्च्छित मनुष्य अपने अंगोंको धरतीपर पटका करता है ॥ २० ॥

## अथ विषमूर्च्छालक्षणम्।

वेपथुस्वप्नतृष्णाः स्युः स्तम्भश्च विषमूर्च्छिते ॥ वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ २१ ॥

विषस्य मूलकन्दफलपत्रक्षीरादिभेदभिन्नस्य यथास्वं लक्षणमुक्तं सुश्रुते कल्पस्थाने तल्लक्षणं मद्यापेक्षया तीव्रतरं वेदितव्यं न तु संज्ञानाशेन साम्यधर्मात् ॥

विषकी मूर्च्छामें कंप, निद्रा, तृषा और अंधकार उत्पन्न होताहै, विषके जो मूल, कंद, फल, पत्र और क्षीरादिक अलग अलग भेद हैं उनके जो जो लक्षण सुश्रुतके कल्पस्थानमें कहे हैं वही वही लक्षण मद्यके लक्षणोंकी अपेक्षा अधिक तीव्र हैं ऐसा जानना । किन्तु संज्ञानाश करनेका धर्म मद्यमें और विषमें समान है कुछ लक्षण समान नहीं हैं ॥ २१ ॥

## अथ मूर्च्छाभ्रमतंद्रादिपरस्परभेदः ।

**मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद् भ्रमः ॥ तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा ॥ २२ ॥**

**रजःपित्तानिलाद् भ्रम इति न अत्र समुच्चयः । केवलपित्तज्वरे भ्रमस्य उक्तत्वाद् भ्रमश्च चक्रारूढस्येव भ्रमवस्तुज्ञानं स्वदेहस्य भ्रमत इव ज्ञानञ्च ॥**

मूर्च्छामें पित्त और तमोगुण अधिक होताहै, भ्रम, रजोगुण, पित्त और वायुसे होताहै, तंद्रा तमोगुण, वायु और कफसे होती है और निद्रा, कफ तथा तमोगुणसे होती है ।

रजोगुण पित्त और वायु इन तीनोंके समुदायसे भ्रम होताहै ऐसा नहीं समझना क्योंकि केवल पित्तज्वरमें भी भ्रम होताहै ऐसा कहा है ।

जिसप्रकार घूमते हुए चाकके ऊपर सम्पूर्ण पदार्थ घूमते हुए दिखाई देते हैं उसीप्रकार सब वस्तुओंको घूमता हुआ देखे और अपने शरीरको भी घूमता हुआ देखे, यह लक्षण जिसमें होते हैं उसको भ्रम कहते हैं ॥ २२ ॥

## अथ तंद्रालक्षणम् ।

**इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः ॥ निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥ २३ ॥**

**इन्द्रियाणामर्थः प्रयोजनं येषु अर्थाद्विषयेषु, असंवित्तिः असम्यक् ज्ञानम् इति इन्द्रियार्थाऽसम्यग्ज्ञानादि। निद्रायां प्रबुद्धस्य क्लमाभावस्तन्द्रायान्तु प्रबोधितस्याऽपि क्लम इत्यनयोर्भेदः ।**

निद्रासे घिरे हुएकी समान जिसमें विषयोंका ज्ञान नष्ट हो जाय, शरीरमें भारीपन, जम्भाई, तथा क्लम ( ग्लानि ) प्राप्त हो उसको तन्द्रा कहते हैं । जब मनुष्यको निद्रा आती है फिर जागनेपर उसको क्लम नहीं रहता और तन्द्रामें तो जागनेके पश्चात् भी क्लम रहता है । इतना ही निद्रामें और तन्द्रामें भेद है ॥ २३ ॥

## अथ क्लमलक्षणम् ।

**योऽनायासः श्रमो देहे प्रवृद्धः श्वाससङ्गतः ॥ क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ २४ ॥**

**इन्द्रियाणां बुद्धीन्द्रियाणां कर्मेन्द्रियाणाञ्च । अर्थः प्रयोजनं विषयग्रहणं तस्य प्रबाधकः प्राबल्येन बाधकः ॥**

विना ही परिश्रमकिये उत्पन्न हो, श्वासयुक्त और ज्ञानेन्द्रियोंके तथा कर्मेन्द्रियोंके विषयोंके ग्रहणको जो अत्यंत रोकनेवाला देहमें श्रम होताहै उसको क्लम कहते हैं॥२४॥

## अथ निद्रालक्षणम् ।

**यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः ॥ विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः ॥ २५ ॥**

**क्लान्ते ग्लाने श्रान्ते इति यावत् कर्मात्मानः क्लमान्विताः कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च क्लमान्विताः इन्द्रियाणि श्रान्तानि ॥**

जब मन क्लमको प्राप्त होकर थकी हुई ज्ञानेन्द्रियों और कर्मेन्द्रियोंके विषयके ग्रहणसे रुकता है तब मनुष्य सोजाता है ॥ २५ ॥

## अथ संन्याससम्प्राप्तिपूर्वकलक्षणम् ।

**वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः॥ संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥ २६ ॥ स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ॥ प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम् ॥ २७ ॥**

**आक्षिप्य विनाश्य संन्यस्यन्ति मूर्च्छयन्ति प्राणायतनं हृदयम् । संन्यस्तः मूर्च्छितः काष्ठीभूतः क्रियारहितः । अत**

एव मृतोपम इति। सद्यःफलां क्रियां सूचीव्यधनाञ्जनावपीडकपिकच्छुघर्षणवृश्चिकादिदंशनादिरूपाम् ॥

जब हृदयमें रहनेवाले अत्यंत बलवान् कुपित दोष प्राणोंके स्थानरूप हृदयमें वाणीकी, देहकी तथा मनकी चेष्टाको नष्ट करके बलहीन मनुष्यको मूर्च्छित करदेतेहैं उसको सन्यास कहतेहैं। जब वह मनुष्य काष्ठकी समान क्रियारहित मृतककी समान होजाताहै। इस मनुष्यके शरीरमें सुई चुभोना, तीक्ष्ण अंजन लगाना, तीक्ष्ण नस्य देना, कौंचकी फली घिसकर लगानी, और बिच्छू आदिसे कटवाना इत्यादि तत्काल फल करनेवाली क्रिया यदि न की जावे तो यह मनुष्य शीघ्र ही मर जाताहै २६॥२७॥

### अथ संन्यासमूर्च्छाभेदः।

दोषेषु मदमूर्च्छाया गतवेगेषु देहिनः॥ स्वयमप्युपशाम्यन्ति संन्यासो नौषधैर्विना ॥ २८ ॥

मदमूर्च्छाया मदः अप्रवृद्धः उन्मादः। मूर्च्छायो मूर्च्छा।

दोषोंके वेगबीतनेपर मूर्च्छा और नहीं बढा हुआ उन्माद अपने आपही शांत होजातेहैं किन्तु संन्यास तो विना औषधियोंके शांत होताही नहीं ॥ २८ ॥

### अथ मूर्च्छाचिकित्सा।

सेकावगाहा मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च ॥ शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ॥ २९ ॥

मणयश्चन्द्रकान्तादयः। हारा मुक्तादिहाराः शीताः प्रदेहाः सकर्पूरचन्दनानुलेपनानि। शीतानि पानानि सितामलकादिपानकानि। गन्धवन्ति कर्पूरादिसुगन्धवन्ति। सर्वासु मूर्च्छासु अनिवारितानि। अस्यायमभिप्रायः सेकादीनि अन्यासु मूर्च्छासु हितानि एव किन्तु वातश्लेष्मजासु अपि न निवारितानि तत्र अपि पित्तस्य प्राधान्यात् ॥

सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जांगलजा रसाश्च ॥ तथा यवा लोहितशालयश्च मूर्च्छासु पथ्याः ससतीनमुद्गाः ॥ ३० ॥

सतीनः कलायः ॥

शीतल जलका सींचना, शीतल जलमें अवगाहन, चन्द्रकांत आदि मणि और मोती आदिके हारोंका धारण, कपूर मिश्रित चंदनादिकका लेपन, मिश्री संयुक्त और कपूरसे सुवासित किया हुआ आमले आदिके रसका पानक, और पखेकी पवन ये सब उपचार सर्वप्रकारकी मूर्च्छामें हितकारी हैं।

मधुर औषधियोंके द्वारा पकाहुआ दूध, दाडिमका रस मिला हुआ जांगल देशके जीवोंका मासरस, जो, लालचावल, मटर और मूंग ये सब मूर्च्छामें पथ्य हैं२९॥३०॥

कोलमज्जोषणोशीरकेसरं शीतवारिणा ॥ पीतं मूर्च्छां जयेल्लीढा कृष्णां वा मधुसंयुताम् ॥ ३१ ॥

बेरकी गिरी, काली मिरच, खस और नागकेसर इनको शीतल जलके साथ पीसकर पीनेसे मूर्च्छा नष्ट होतीहै ॥ ३१ ॥

शीतेन तोयेन विषं मृणालं कृष्णाश्च पथ्यां मधुनाऽवलिह्यात् ॥ कुर्याच्च नासावदनावरोधं क्षीरं पिबेद्वाप्यथ मानुषीणाम् ॥ ३२ ॥ द्राक्षासितादाडिमलाजवन्ति कट्फारनीलोत्पलपद्मवन्ति ॥ पिबेत्कषायाणि च शीतलानि पित्तज्वरं यानि च यापयन्ति ॥ ३३ ॥ शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः ॥ अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ॥ ३४ ॥ अञ्जनं सम्यगारब्धं मधुसिन्धुशिलोषणैः॥ प्रमोहद्रोहि भवति भाषितं भिषजां वरैः ॥ ३५ ॥

शिला मनःशिला। ऊषणं मरिचम् ॥

मधूकसारसिन्धूत्थवचोषणकणाः समाः॥ श्लक्ष्णं पिष्ट्वाऽम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥ ३६ ॥

पीपलका चूर्ण बनाकर सहतमे मिलाकर चाटनेसे मूर्च्छा नष्ट होतीहै । कमलका कंद, कमलकी नाल, पीपल और हरड इनको पीसकर सहतके साथ चाटनेसे मूर्च्छा नष्ट होतीहै । नाकके तथा मुखके श्वाँसको रोकनेसे मूर्च्छा नष्ट होतीहै । स्त्रीका दूध पीनेसे मूर्च्छा नष्ट होतीहै ।

दाख, खाड, अनार, धानकी खीलें, दहीका तोड, नीले कमल और सुफेद कमल इनका शीतल कषाय ( हिम ) पिये और जो क्वाथ पित्तज्वरको नष्ट करनेवाले हैं वह भी पिये ।

सिरसके बीज पीपल, कालीमिरच, सेंधानिमक, लसुन, मैनशिल, और वच इनको गोमूत्रमें पीसकर अजन बनाकर नेत्रोंमें आँजनेसे चेतना प्राप्त होतीहै ।

सहत, सेंधानिमक, मैनशिल और काली मिर्चे इनका अंजन अच्छे प्रकारसे बनाकर नेत्रोंमें आँजनेसे मूर्च्छाकी बेहोसी दूर होजातीहै ।

महुवेका सार, सेंधानिमक, वच, मिर्चे और पीपल इनको समान भाग लेकर जलमें बारीक पीसकर नास लेनेसे संज्ञा उत्पन्न होतीहै ॥ ३२–३६ ॥

### अथ रुधिरोत्पन्नमूर्च्छादिचिकित्सा ।

रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ॥ मद्यजायां पिबेन्मद्यं निद्रां सेवेत वा सुखम् ॥ विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ३७ ॥

रुधिरकी मूर्च्छामें शीत चिकित्सा हितकारी है । मद्यकी मूर्च्छामें फिर दुवारा मद्य पिये अथवा सुख पूर्वक सोना हितकारी है । और विषकी मूर्च्छामें विषनाशक औषधियोंका प्रयोग हितकारी है ॥ ३७ ॥

### अथ संन्यासचिकित्सा ।

प्रभूतदोषस्तमसोऽतिरेकात्सम्मूर्च्छितो नैव विबुध्यते यः ॥ सन्यस्तसंज्ञः स हि दुश्चिकित्स्यो नरो भिषग्भिः परिकीर्तितोऽसौ ॥ ३८ ॥ अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च ॥ सूचीभिस्तोदनं शस्तं दाहपीडा नखान्तरे ॥ ३९ ॥ लुञ्चनं केशलोम्नाञ्च दन्तैर्दशनमेवच ॥ आत्मगुप्तावघर्षश्च हितस्तस्य प्रबोधने ॥ ४० ॥॥

अवपीडः कल्कीकृतौषधरसस्य नासापुटे दानम् । प्रधमनम् औषधचूर्णस्य द्विमुख्या नाडिकया मुखवातेन नासापुटे दानम् । तस्य संन्यस्तस्य ॥

अधिक दोषवाला मनुष्य तमोगुणकी अधिकतासे मूर्च्छित होकर पीछे जाग्रत नहीं हो उसको वैद्य सन्यास रोग युक्त कहतेहैं और उसकी चिकित्सा अत्यत कठिनहै ।

संन्यास रोगवाले मनुष्यके अजन लगावे औषधियोंका कल्क बनाकर उनका रस नाकमें निचोडे, धुँवाँ देवे, औषधिके चूर्णको दो मुखवाली नलीमें भरकर उसमें मुखसे फूक मारकर नाकमें चढावे । अगोंमें सुई चुभोवे, नखूनोंमें अग्निका दाह देवे, केश और रोमोको उखाडे, दाँतोंसे कटवावे और शरीरपर कौंछकी फलीको घिसे ॥ ३८–४० ॥

### अथ मूर्च्छोपयोगीरसः ।

कणामधुयुतं सूतं मूर्च्छायां प्राशयेद्भिषक् ॥ शीतसेकावगाहादीन्सर्वांगे पीडनं हठात् ॥ ४१ ॥ ताम्रचूर्णसमोशीरं केशरं शीतवारिणा ॥ पीतं मूर्च्छां द्रुत हन्याद्वृक्षमिन्द्राशनिर्यथा ॥ ४२ ॥
ताम्रचूर्ण मारितताम्रचूर्णम् ॥

वैद्य मूर्च्छाको दूर करनेके लिये पारेकी भस्मको पीपलके चूर्ण और सहतके साथ चटावे, शीतल सेचन और शीतलजलका अवगाहन आदि कर्मकरे । तथा बलात्कारसे सम्पूर्ण अंगोंको दबावे ।

तावेकी भस्म, खस और नागकेसर इनको समान भाग लेकर सबको एकत्र मिलाकर शीतल जलके साथ पीनेसे जिस प्रकार बिजलीसे वृक्ष नष्ट होजावेहै उसी प्रकार इससे मूर्च्छा तत्काल नष्ट होजाती है ॥ ४१ ॥ ४२ ॥

### अथ भ्रमचिकित्सा।

**पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये ॥ पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा ॥ ४३ ॥ शुण्ठीकृष्णाशताह्वानां साभयानांपलंपलम् ॥ गुडस्य षट्पलान्येषा गुटिका भ्रमनाशिनी ॥ ४४ ॥ ताम्रं दुरालभाक्वाथैः पीतन्तु घृतसंयुतम्॥ निवारयेद् भ्रमं शीघ्रं तं यथा शंभुभाषितम् ॥ ४५ ॥**

धमासेका क्वाथ बनाकर घी डालकर पीनेसे भ्रम (भौंर) दूर होजाताहै। हरडके क्वाथसे अथवा आमलोंके रससे सिद्ध किये हुए घीको पीनेसे भ्रम दूर होजाताहै।

सोंठ, पीपल, सतावर और हरड ये सब औषधि चार चार तोले और गुड चौवीस तोले इन सबको मिलाकर बेर बराबर गोली बनाकर खाय तो भ्रमरोगका विनाश होताहै।

तांबेकी भस्मको जवासेके क्वाथके साथ मिला कर पिये तो तुरन्तही भ्रमरोग शान्त होताहै, जिस प्रकार शिवजीने शिवसंहितामें कहाहै ॥ ४३-४५ ॥

### अथ तन्द्रानिद्राचिकित्सा।

**तुरंगलालालवणोत्तमेन्दुमनःशिलामागधिकामधूनि ॥ नियोज्य तान्यक्षिण विमिश्रितानि तन्द्रां सनिद्रां विनिवारयन्ति ॥ ४६ ॥**

**इन्दुः कर्पूरः ॥**

**सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च ॥ बस्तमूत्रेण सम्पिष्टं नस्यं तन्द्रानिवारणम् ॥ ४७ ॥**

**श्वेतमरिचं शिग्रुबीजम् ॥**

**शुण्ठीकणोग्रालवणोत्तमानि नस्येन तंद्राविजयोल्वणानि ॥ क्षुद्रामृतापौष्करनागराणि भार्ङ्गीशिवाभ्यां क्वथितानि पानात् ॥ ४८ ॥**

**शिवा हरीतकी ॥**

इति मूर्च्छाभ्रमनिद्रातन्द्रासंन्यासाधिकारः।

घोडेकी लारमें, सैंधानिमक, कपूर, मैनाशिल, पीपल और सहत इनको महीन पीसकर नेत्रोंमें लगावे तो निद्रासहित तन्द्रारोग निवारण होताहै।

सैंधानिमक, सहँजनेके बीज, सरसों और कूट इन सबको कूट पीसकर बकरेके मूत्रमें खरलकरके नास लेय तो उसी समय तन्द्राका नाश होताहै।

सोंठ, पीपल, वच और सैंधानिमक इनको महीन पीस कर नास लेय तो महाघोर तन्द्राका भी विनाश होताहै।

कटेहरी, गिलोय, पुहकरमूल, सोंठ, भारंगी और हरडके काढेको पीनेसे तन्द्रा और निद्रा दोनोंका निवारण होताहै ॥ ४६-४८ ॥

## अथ मदात्ययाधिकारः।

### तत्र मद्यस्वभावः।

**मद्यं स्वभावतः प्राज्ञयथैवान्नं तथा स्मृतम् ॥ अयुक्तियुक्तं रोगाय युक्तियुक्तं रसायनम् ॥ १ ॥**

मद्य स्वभावहीसे अन्नके समान है, ऐसा विद्वान् लोगोने कहा है, अर्थात् जो मद्य विना युक्तिके साथ पियाजाताहै तो अनेक रोगोंको उत्पन्न करताहै और जो युक्ति (विधि पूर्वक) के साथ पिया जाय तो महारसायन है ॥ १ ॥

**प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ॥ विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ २ ॥ विधिना मात्रया काले हितैरन्नैर्यथाबलम् ॥ प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥ ३ ॥**

अन्नही प्राणियोका प्राण है परन्तु युक्तिविना अन्न सेवन करनेसे प्राणोंका नाशकारक है, यह सब जानते हैं कि, विष प्राण हरताहै परन्तु युक्तिके साथ सेवन करनेसे महारसायन है।

जो मनुष्य आनन्दसहित विधिपूर्वक यथायोग्य समयपर मात्रानुसार प्रसन्न चित्त होकर हितकारक अन्नोंके साथ बलावल विचार मद्य पान करतेहैं उनको मद्य अमृतकी समान गुणकारी है ॥ २-३ ॥

### अथ मद्यपानविधिः।

**कृतशारीरसंस्कारः शुचिरुत्तमगन्धवान्॥**

उद्दामगन्धिभिः स्फीतैर्मृदुभिर्वसनैर्वृतः ॥ ॥ ४ ॥ विचित्रविविधस्रग्वी रक्ताभरणभूषितः ॥ सानन्दः सावधानश्च पिबेन्मद्यं शनैःशनैः ॥ ५ ॥

शरीरको अच्छेप्रकारसे स्वच्छ करके, अर्थात् मलमूत्र दतवावनादि करके पवित्र होकर, उत्तम फुलेल आदि सुगंधोंको लगाकर, उत्तम सुवासित महीन अथवा कोमल वस्त्र धारणकर, अनेक प्रकारके चित्र विचित्र मदनबाणादि सुगन्धित पुष्पोंकी मालाओंसे उरःस्थलको सुशोभित करके लाल रगके आभूषणोंको भूषितकर आनन्द युक्त होकर सावधानीके साथ धीरे धीरे ठहर ठहरकर थोडी थोडी मदिरा पीवै ॥ ४-५ ॥

## अथ मद्यपानस्थानम्।

उपवनेषु सुरभिसुरंगसुमनःसमूहमनोहरेषु ॥ मंजुगुंजन्मधुकरनिकरेषु कूजत्कलकण्ठेषु ॥ ६॥ सुरभिशिशिरमधुरसमीरेषु मन्दिरेषु ॥ सुधाशुभ्रेषु सुधूपधूपितेषु सूपधानेषु ॥ संस्तीर्णविहितशयनासनेषु॥ ॥ ७ ॥ उपविष्टोऽथ वा तिर्यक् भृशं हृष्टः सुरां पिबेत्॥ सौवर्णै राजतैः पात्रैः पिबेन्मणिमयैरपि ॥ ८ ॥ रूपयौवनमत्ताभिर्वल्लभाभिर्विशेषतः ॥ वस्त्राभरणमाल्यैश्च भूषिताभिर्यथर्तुकैः ॥ दीयमानं मृगाक्षीभिः पिबेन्मद्यं मुदान्वितः ॥ ९ ॥

जहां उत्तम वर्णवाले सुगंधित सुगंधित पुष्प मनको हरन करनेवाले खिल रहे हों, उनपै मधुर ध्वनिसे भ्रमरोंके समूह गुंजार करतेहों, जहा मधुर स्वरसे कोयल कूह कूह करतीहो और जहा शीतल मन्द सुगन्ध पवन मधुर मधुर चलती हो, ऐसे उपवन अथवा कुसुम काननके भीतर चूने कलईसे स्वच्छ पुताया हुआ, हवादार और उत्तम धूपोंसे सुवासित किये हुए बगलेमें उत्तम आसन अथवा पलँग बिछा होय और उसपै गद्दे तकिये नरम नरम लगे हुए हों, तथा उसके ऊपर स्वच्छ चादर बिछी हुई हो उस शयन करनेके आसनपै बैठकर अथवा तिरछा लेटकर अत्यन्त आनन्दके साथ मद्यको पीवै, रूप और यौवनसे उन्मत्त हुई अत्यन्त प्रिय, यथा यथा ऋतुके अनुसार वस्त्रोंसे, आभूषणोंसे और सुवासित पुष्पोंसे सुसज्जित तथा हिरनकी समान नेत्रवाली ऐसी स्त्रियें, सोनेके, चादीके, अथवा रत्नोंके या काचके प्याले गिलासोंम भर भरकर वारवार देवे तो पुरुष प्रीतिपूर्वक उस मदिराको पीवै ॥ ६-९ ॥

## अथ तन्त्रान्तरोक्तमद्यपानमात्रा।

शुद्धकायः पिबेन्मद्यं सोपदंशं पलद्वयम् ॥ मध्याह्ने द्विगुणं तच्च सुस्निग्धं भक्षयेदनु ॥ १० ॥ प्रदोषेऽष्टपलं तद्वन्मात्रा मद्यरसायने ॥ अनेन विधिना सेव्यं मद्य नित्यमतन्द्रितैः ॥ ११ ॥

शुद्धकायः उत्सृष्टमलमूत्रः । पलद्वयं पारिशेष्यात्पूर्वाह्णे बोद्धव्यम् । अतन्द्रितैः मात्रया सावधानैः । अन्ये त्वाहुः—

बुद्ध्यादयो गुणा यावदुल्लसन्ति निरत्ययाः ॥ मात्रेयं विहिता मद्यपानेऽन्या रोगजन्मने ॥ १२ ॥

काल इति यस्मिन्काले यादृशं मद्यमुचितं तस्मिंस्तादृशं पेयम् ॥

मल मूत्रादिको त्याग शुद्ध होकर पूर्वाह्ण (प्रातःकाल) में चाट ( दाल, सेव, नमकीन पदार्थ ) के साथ आठ रुपये भर मदिरा पीवै, मध्याह्नके समय सोलह रुपये भर मदिरा पीवै और उसके उपरान्त अत्यन्त स्निग्ध भोजन करै और सायकालमें ३२ रुपयेभर मद्य पीवै, मद्यकी यह मात्रा रसायन रूप है, इसकारण मनुष्योंको मात्रामें भूल नहीं करनी चाहिये, नित्य इसी विधिसे मद्यका सेवन करना चाहिये। अन्य ग्रथोंमें तो यह कहा है कि, जबतक शुद्ध बुद्धि आदिगुण अबाधित रीतिसे प्रकाशित रहैं तबतक उतनीही मद्य पीवै, इसके सिवाय अन्यमात्रा रोगियोंके लिये जाननी अधिक मात्रा सदैव रोगको उत्पन्न करतीहै ॥ १०-१२ ॥

## अथ कस्मिन्नृतौ कीदृङ् मद्यं पेयमित्याह।

ग्रीष्मे मद्यं हिमं स्वादु माध्वीकादि सुखप्रदम् ॥ शीते प्रशस्यते चोष्णं तीक्ष्णं गौडिकपैष्टिकम् ॥ १३ ॥

जिस ऋतुमें जैसी मद्य पीनी योग्य है वही पीनी चाहिये। जैस कि, ग्रीष्म ऋतुमे शीतल और मधुर माधवी नामक मदिरा सुखदायी है। और शीतकालमें उष्ण तथा तीक्ष्ण गौडिक और पौष्टिक मद्य हितकारी है॥ १३॥

## अथ हितकार्यन्नम्।

मद्यानुकूलैर्विविधैः फलैर्वर्णमनोहरैः ॥ सुगन्धैर्लवणैर्हृद्यैर्भृष्टैर्मांसैः पृथग्विधैः ॥ ॥ १४ ॥ स्निग्धैरन्नैश्च भक्ष्यैश्च सह मद्यं पिबेन्नरः ॥ १५ ॥

अन्नैः सिद्धैः ओदनपर्पटकादिभिः। भक्ष्यैः लड्डुकफेणिकादिभिः॥

अभ्यंगोत्सादनस्नानवासोधूपानुलेपनैः ॥ स्निग्धोष्णैस्तादृशैरन्नैर्वातप्रकृतिकः पिबेत् ॥ शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः ॥ १६ ॥ फलैरन्नैः सह नरः पित्तप्रकृतिकः पिबेत् ॥ श्लेष्मिको जांगलैर्मांसैर्मरिचैर्मदिरां पिबेत् ॥ १७ ॥ प्राक् पिबेच्छ्लैष्मिको मद्यं भक्तस्योपरि पैत्तिकः ॥ वातिकस्तु पिबेन्मद्यं समदोषो यथेक्षते ॥ १८ ॥ वातिकस्तु पिबेन्मद्यं प्रायो गौडिकपैष्टिकम् ॥ कफपित्तात्मको यस्तु माध्वकिं माधवं पिबेत् ॥ १९ ॥ विधिर्वसुमतामेष कथितश्चरकादिभिः ॥ यथोपपत्तिकं वापि पिबेन्मद्यं हि मात्रया ॥ २० ॥

मद्यको पीनेवाला मनुष्य मद्यके अनुकूल मनोहर फल, सुगंधित और प्रिय नमकीन पदार्थ, अलग अलग प्रकारके मांस, भात, पापड और लड्डू तथा फेनी आदि स्निग्ध भक्ष्योंके साथ मद्य पिये।

वातप्रकृतिवाला मनुष्य स्निग्ध और उष्ण अभ्यङ्ग (मालिश), अगर आदि सुगंधित वस्तुका लेपकर, स्नान, वस्त्र, धूप और अनुलेपन इत्यादि उपचार करके उसी प्रकार अन्नके साथ मद्यको पियै।

पित्तप्रकृतिवाला मनुष्य अनेक प्रकारके शीतल उपचार करके मधुर, स्निग्ध तथा शीतल फलोंके साथ और उसीप्रकार अन्नोंके साथ मद्य पियै। कफ प्रकृतिवाला मनुष्य जांगल देशके जवोंके मासके साथ और मिरचके साथ मद्य पियै।

कफप्रकृतिवाला मनुष्य भोजनसे पहिले मद्य पियै, पित्तप्रकृतिवाले पुरुषको भोजन करनेके बाद मद्य पीनी चाहिये, वातप्रकृतिवाला भोजनके मध्यमे मद्य पिये और समदोषवाला मनुष्य जैसी रुचि हो उसीप्रकार पियै। वातप्रकृतिवाले मनुष्यको विशेष करके गुडकी और जौके आटेकी मदिरा पीनी चाहिये, कफप्रकृतिवाले और पित्तप्रकृतिवालेको खांड आदि मधुर पदार्थोंकी मदिरा पीनी चाहिये। चरकादि ऋषि कहतेहैं कि, यह विधि केवल धनवानोंके लिये कही है इसलिये निर्धन मनुष्योंको जैसी मिलजाय वैसीही पीलेवे॥ १४–२०॥

## अथ मद्यगुणाः।

रसवातादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम ॥ प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥ २१ ॥ मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान् ॥ दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥ ॥ २२ ॥ लघूष्णतीक्ष्णसूक्ष्माम्लव्यवायाशुकरं तथा ॥ रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥ २३ ॥ गुरु शीतं मृदु स्निग्धं सान्द्रं स्वादु स्थिरं तथा ॥ प्रसन्नं पिच्छिलं सूक्ष्ममोजो दशगुणं स्मृतम् ॥ २४ ॥ गौरवं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः ॥ माधुर्यं मार्दवं तैक्ष्ण्यात्प्रसादश्चाशुभावनात् ॥ ॥ २५ ॥ रौक्ष्यात्स्नेहं व्यवायित्वात्स्थिरत्वं सूक्ष्मतामपि ॥ विकाशिभावात्पैच्छिल्यं वैशद्यात्सान्द्रतां तथा ॥ २६ ॥

सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान् ॥ सत्त्वं तदाश्रयं चाशु संक्षोभ्य कुरुते मदम् ॥ हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् ॥ २७ ॥ विकाराश्च यथासत्त्वं चित्रा राजसतामसाः॥जायन्ते मोहनिद्रान्ता इत्येतन्मदलक्षणम् ॥ २८॥ हर्षमोजो बलं पुष्टिमारोग्यं पौरुषं तथा॥ युक्त्या पीतं करोत्याशु मद्यं मदसुखप्रदम् ॥ २९॥ रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम्॥प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम् ॥ ३० ॥ स्वापनं नष्टनिद्राणां मूकानां वाग्विशोधनम् ॥ नाशनं चातिनिद्राणां विबन्धानां विबन्धनुत् ॥ ॥३१॥ वधवन्धपरिक्लेश दुःखानां चाप्यबोधकम् ॥ अपि प्रवयसां मद्यमुत्सर्गामोदकारकम् ॥ ३२ ॥ बहुदुःखक्षतस्यास्य शोकैरुपहतस्य च ॥ विश्रामो जीवलोकस्य मद्यं युक्त्या निषेवितम् ॥ ३३ ॥

मदस्त्रिलक्षणो भवति । एको मदोऽधिकसत्त्वगुणस्य पुंसो भवति । द्वितीयोऽधिकरजोगुणस्य । तृतीयोऽधिकतमोगुणस्य ॥

प्रधानाधममध्यानां रुक्माणां व्यक्तिदायकः ॥ यथाग्निरेवं सत्त्वानां मद्यं प्रकृतिदर्शकम् ॥ ३४ ॥

रस और वातादि मार्गोंका, चित्त, बुद्धि, अहंकार और शरीरमें प्रधान ओजका स्थान हृदय है, यह मद्य उस हृदयमें प्रवेश होकर अपने दश गुणोंसे ओजके दश गुणोंको क्षोभित करके चित्तमें विकार उत्पन्न करतीहै, मद्य-लघु, उष्ण, तीक्ष्ण, सूक्ष्म, अम्ल, व्यवायी (प्रथम सब शरीरमें व्याप्त होकर पश्चात् पचनेवाली ),आशुकर ( शीघ्र शरीरमें फैलनेवाली ),रूक्ष, विकाशि और विशद ( शरीरकी आर्द्रताको दूर करनेवाली ), इन दश गुणों वाली है। ओज-गुरु, शीतल, मृदु,स्निग्ध, सान्द्र, मधुर, स्थिर, प्रसन्न, पिच्छिल और सूक्ष्म इन दश गुणो करके युक्त है। तहां मद्य लघु होनेसे ओजके गुरु गुणको, उष्ण होनेसे ओजकी शीतलताको, अम्ल होनेसे ओजके मधुर गुणको, तीक्ष्ण होनेसे ओजके मृदुगुणको, आशुकारी होनेसे ओजकी प्रसन्नताको, रूक्ष होनेसे ओजकी स्निग्धताको, व्यवायि होनेसे ओजकी स्थिरताको, विकाशी होनेसे ओजके सूक्ष्म गुणको, विशद होनेसे ओजकी पिच्छिलताको और सूक्ष्म होनेसे ओजके सान्द्र गुणको नष्ट करैहै, इसप्रकार मद्य अपने दश गुणोंसे ओजके दश गुणोंको क्षोभित करतीहै, इसीप्रकार मद्य अपने गुणोंसे ओजके गुणोंको, चित्तको और चित्तके रहनेके स्थानको तत्काल क्षोभित करके मद ( मस्तपने) को उत्पन्न करैहै, मद्यके गुण हृदयमें प्राप्त होकर हर्ष, तृषा, रतिसुख और प्रकृतिके अनुसार मोहसे निद्रापर्यंत रजोगुणके तथा तमोगुणके विचित्र विकार उत्पन्न होतेहैं, ये मद्यका स्वरूप अर्थात् लक्षण हैं। जो लोक मद्यसे मदके सुखको चाहते हैं वही मद्यको युक्तिपूर्वक पिये, क्योंकि मद्य युक्तिपूर्वक पीनेसे तत्काल हर्ष, ओज, बल, पुष्टि, आरोग्यता और पुरुषत्वको उत्पन्न करैहै। युक्तिसे सेवन कीहुई मदिरा रुचि उत्पन्न करैहै, अग्निको दीपन करैहै, हृदयको प्रिय, स्वर और वर्णको शुद्ध करनेवाली, तृप्तिकारक, धातुओंको पुष्ट करनेवाली, बलको बढानेवाली, भय, शोक और श्रमको हरनेवाली जिन मनुष्योंको निद्रा न आती हो उनके निद्रा लानेवाली, गूंगे मनुष्योंकी वाणीको शुद्ध करनेवाली, अत्यंत निद्राको नष्ट करनेवाली, मलबंधवाले रोगियोंके मलबंधको तोडने वाली, वध, बंधन क्लेशादि दुःखोंके बोधनको हरनेवाली युक्तिपूर्वक पी हुई मदिरा वृद्ध मनुष्योंको भी स्वाभाविक रीतिसे परमानन्द उत्पन्न करनेवाली है, अनेक प्रकारके दुःखोंसे पीडित, घावयुक्त और विविध प्रकारके क्लेशोंसे फँसे हुए शोकसे, व्याकुल प्राणियोंको मद्य जगत्में विश्राम रूप है। मद तीन प्रकारका होताहै, तहां एक तो अधिक सतोगुणवाले पुरुषोंको होताहै, दूसरे प्रकारका मद अधिक रजोगुणवाले मनुष्योंको होताहै, और तीसरे प्रकारका मद अधिक तमोगुणवाले प्राणियोंको होताहै, जैसे कि, चरकमें लिखा है जिसप्रकार सुवर्णकी उत्तमता, मध्यमता और अधमता अग्नि तपानेसे प्रकट करदेती है उसीप्रकार मद्य, मनुष्योंकी

उत्तम अधम और मध्यम प्रकृतिको प्रकट करनेवाली है ॥ २१–३४ ॥

अथ सात्त्विकमदलक्षणम् ।

**बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्द्धनश्च ॥ सम्पाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि ॥ ३५ ॥**

प्रीतिः परेण मैत्री । सुखः सुखयतीति सुखः सुखकर इत्यर्थः । पानादित्यादि पानादेषु अनुषङ्गवर्द्धनः अतिरम्यः मनोविकारित्वेऽपि न दुःखकरः । प्रथमगुणविकारित्वात् प्रथमः । एवं द्वितीयं तृतीयं च ॥

पहिले प्रकारका मद जो कि, सत्त्वगुणनामक पहिले गुणका विकार रूप है यह मद—बुद्धि, स्मरणशक्ति और प्रीतिको उत्पन्न करैहै, सुखको करैहै, अन्नमे, पानमे, तथा निद्रामे रुचिको बढानेवालाहै, गीत, वादित्र और पढनेमें स्वरको शुद्ध करनेवाला है और मनको विकृत करनेपर भी दुःखदायक नही. होता, यह मद पहिले गुणका विकार रूप होनेसे पहिले गिनाजाताहै । इसीप्रकार जो दूसरा ( रजो गुणका ) विकार रूप है वह दूसरा और जो तीसरे गुणका ( तमोगुण ) विकार रूप है वह तीसरा मद जानना ॥ ३५ ॥

अथ राजसमदलक्षणम् ।

**अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः ॥ आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥३६॥**

अव्यक्तेत्यत्र ईषदर्थे नञ् । विचेष्टः विरुद्धचेष्टः । उन्मत्तस्य लीलाकृतिभ्यां सहितः ।

राजस मदसे मत्त हुआ पुरुष विरुद्ध चेष्टा करताहै, उन्मत्तकी समान लीला करताहै, उन्मत्तकी आकृति समान आकृति करलेताहै, वारवार आलस्यसे और वारंवार निद्रासे मूर्च्छित होजाताहै और उस मनुष्यकी बुद्धि, स्मृति और वचन यथार्थ स्पष्ट नही रहतेहैं ॥ ३६ ॥

अथ तामसमदलक्षणम् ।

**गच्छेदगम्यां न गुरूंश्च मन्येत्खादेदभक्ष्याणि च नष्टसंज्ञः ॥ ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः ३७॥**

मन्येदिति परस्मैपदमार्षत्वात् ।अस्वतन्त्रः मदपरवशः ॥

तीसरे ( तमोगुण ) प्रकारके मदसे मत्त हुआ मनुष्य मदके परवश होजाताहै, अगम्या स्त्रियोमे गमन करने लगताहै, माता पिता आदि गुरुजनोको कुछ नहीं समझता, अभक्ष्य पदार्थोंको भक्षण करने लगताहै, सज्ञा जाती रहती है अर्थात् ज्ञान रहित होजाताहै और हृदयमें स्थित छिपी हुई गुप्त बातोको कहने लगताहै ॥ ३७ ॥

**यद्यपि मदस्त्रिविधोऽस्ति तथापि सुश्रुतेनाऽतितामसनामा चतुर्थोऽन्यो मतस्तल्लक्षणमाह ।**

**चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः॥ कार्याकार्यविभागज्ञो मृतादपि परो मृतः ॥ ३८ ॥**

मूढो मोहयुक्तः ॥

**को मदं तादृशं गच्छेदुन्मादमिव चापरम्॥ बहुदोषमिवामूढः कान्तारं स्ववशः कृती ३९**

अमूढः विचारबहुलः ।

चौथे प्रकारके मदमे मनुष्य मोह ( बेहोश ) युक्त होजाताहै, टूटी लकडीकी समान क्रिया रहित मृतकसे भी अधिक मृतक होजाताहै, और उस मनुष्यको कार्य अकार्यकी कुछ भी सुधि बुधि नहीं रहती, इस चौथे प्रकारके उन्मादकी समान मदको कौन विचारशील, स्वतंत्र और विचक्षण पुरुष प्राप्त होताहै अर्थात् कोई भी प्राप्त नहीं होता, जिसप्रकार विचारशील, स्वतंत्र और विचक्षण पुरुष निर्जनवनमें नही गमन करते उसी प्रकार इस चौथे मदको कोई पुरुष सेवन नहीं करते ॥ ३८ ॥ ३९ ॥

अथ केषां मदाधिक्यं केषां च मदाल्पत्वं भवतीत्याह ।

नातिमाद्यन्ति बलिनः कृताहारा महाशनाः॥ स्निग्धाः सत्त्ववयोयुक्ता मद्यनित्यास्तदन्वयाः ॥ ४० ॥ मेदःकफाधिका मंदवातपित्ता दृढाग्नयः ॥ विपर्ययेऽतिमाद्यंति विष्टब्धाः कुपिताश्च ये ॥ मद्येन चाम्लरूक्षेण साजीर्णे बहुनापि च ॥ ४१ ॥

बलवान्, जो आहार कर चुका हो, बहुत भोजन करनेवाला हो, स्निग्ध, वीर्ययुक्त, युवाअवस्थावाला, नित्य मद्य पीनेवाला, जिसके कुलमें परम्परासे मद्य पीतेहैं, जिसके शरीरमें मेद और कफ अधिक है, वात और पित्तकी मन्दता है और दृढ अग्निवाले पुरुषोंको मद अत्यन्त नही चढताहै और जो इससे विपरीत गुणोंवाले हैं, तथा मलबद्धवाले और क्रोधी मनुष्योंका मद अधिक चढता है खट्टा और रूक्ष मद पीनेसे अजीर्णमें मद पीनेसे और अधिक मद पिया जाय तो भी अत्यत मद चढताहै ॥ ४० ॥ ४१ ॥

अथ मदात्ययनिदानम् ।

विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपनाः ॥ त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः ॥ ४२ ॥ तस्मादविधिपीतेन तथा मात्राधिकेन च ॥ युक्तेन चाहितैरन्नैरकाले सेवितेन च ॥ मद्येन खलु जायन्ते मदात्ययमुखा गदाः ॥ ४३ ॥

तीनों दोषोंको कुपित करनेवाले जो गुण विषमें देखनेमें आतेहैं वही गुण मद्यमें भी देखनेमे आतेहैं, परन्तु विषके गुण मद्यके गुणोंसे बलवान् हैं, मद्यमें विषके गुणोंसे हीन शक्तिवाले गुण हैं, इसलिये विधि रहित पिया हुआ, अधिक पिया हुआ, अहितकारक अन्नोंके साथ पिया हुआ और अयोग्य समय सेवन किया हुआ मद्य मदात्यय आदि रोगोंको उत्पन्न करताहै ॥ ४२ ॥ ॥ ४३ ॥

अथ विधिमन्तरासेवितमद्यमन्यविकारोत्पादकमित्याह ।

निर्भुक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम् ॥ उत्पादयेत्कष्टतमान्विकारानुत्पादयेच्चापि शरीरभेदम् ॥ ४४ ॥ एकान्ततो नैरन्तर्येण । विकारान् मदात्ययादीन् । शरीरस्य भेदं नाशम् ॥

विना अन्नके पिया हुआ मद्य अथवा जो मनुष्य निरतर वारवार मद्य पिये तो मद्य महादुःखदायक मदात्यय आदि विकारोंको उत्पन्न करैहै और शरीरका भी नाश करैहै ॥ ४४ ॥

अथ मदात्ययादिविकारान्यहेतुः ।

क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ॥ व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥ ४५ ॥ अत्यम्लरूक्षावततोदरेण साजीर्णभुक्तेन तथाऽबलेन ॥ उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् ॥ ४६ ॥

क्रोधको प्राप्त हुआ, भयभीत, तृषासे व्याकुल, शोकसे संतापित, क्षुधासे पीडित, दड, कसरतके करनेसे और बोझके ढोनेसे तथा अधिक मार्गके चलनेसे थका हुआ, मलमूत्रादिके वेगोंको रोकनेसे पीडित, अत्यन्त खट्टे और रूखे पदार्थोंके खानेसे जिसका उदर भर रहा हो, अजीर्णमें भोजन करनेवाला, निर्बल और उष्णतासे संतापित ऐसे मनुष्योंका सेवन किया हुआ मद्य अनेक प्रकारके विकारोंको उत्पन्न करैहै ॥ ४५ ॥ ४६ ॥

अथ मद्योत्पन्नविकाराः ।

पानात्ययं परमदं पानाजीर्णमथापि च ॥ पानविभ्रममत्युग्रं तेषां वक्ष्यामि लक्षणम् ॥ ४७ ॥

मद्यसे मदात्यय, परमद, पानाजीर्ण और अत्यन्त उग्र पानविभ्रम यह विकार उत्पन्न होतेहैं, अब इनके लक्षण कहतेहैं ॥ ४७ ॥

अथ मदात्ययसामान्यलक्षणम् ।

शरीरदुःखं बलवत्प्रमोहो हृदयव्यथा ॥ अरुचिः सततं तृष्णा ज्वरः शीतोष्णलक्षणः ॥ ४८ ॥ शिरःपार्श्वास्थिसन्धीनां वेदना विक्षते यथा ॥ जायतेऽतिबला जृम्भा स्फुरणं वेपनं श्रमः ॥ ४९ ॥ उरोविबन्धः कासश्च हिक्का श्वासः प्रजागरः ॥ शरीरकम्पः कर्णाक्षिमुखरोगास्त्रिकग्रहः ॥ ५० ॥ छर्दिविड्भेद उत्क्लेशो वातपित्तकफात्मकः ॥ भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम् ॥ ॥ ५१ ॥ तृणभस्मलतापर्णपांशुभिश्चावपूरणम् ॥ प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते ॥ ५२ ॥ व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च ॥ मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत् ॥ ५३ ॥

जिसके मदात्यय हुआ हो उस मनुष्यके शरीरमे अत्यंत दुःख होताहै, बलवान् मोह, हृदयमें व्यथा (पीडा), अरुचि, निरतर तृषाका लगना, शीतल और उष्ण ज्वरका होना, शिर, पसली और हड्डीकी संधियोंमे पके फोडेकी समान वेदना, जम्भाइयोंका अधिक आना, अंगोंका स्फुरण होना, अर्थात् फडकना, कम्प, श्रम, छातीका जकडना, खाँसी, हिचकी, श्वास और जागरण हो, कान, नेत्र और मुखमे रोग हो, त्रिक स्थानमे पीडा, वमन, विरेचन, वात, पित्त और कफका उत्क्लेद होना, भ्रम और प्रलाप होना तथा बुरे रूपोंका देखना, भ्रमयुक्त चित्तवाला यह मनुष्य अपने शरीरपर तृण, भस्म, बेल, और पत्ते उड उडकर गिरते देखै, चहूँओरसे पक्षी उडे चले आतेहैं ऐसा प्रतीत हो, व्याकुल और अमंगल (अशुभ) रूप स्वप्न देखै, यह सब लक्षण जिसके होयँ उसको मदात्यययुक्त जानना ॥ ४८–५३ ॥

अथ वातजमदात्ययनिदानम् ।

स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्षितः ॥ ५४ ॥ रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया ॥ रूक्षं परिणतं मद्यं निशि निद्रां निहत्य च ॥ करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम् ॥ ५५ ॥ तन्मद्यम् ॥

मैथुन, शोक, भय, भार, पंथा और श्रम आदि कर्मोंके करनेसे जो मनुष्य कृश होगयेहैं, तथा रूक्ष अल्प और बहुत थोडे भोजन करनेवाले ऐसे मनुष्य जो रूक्ष मद्यको अत्यन्त पीतेहैं तो उनके वह मद्य पेटमे परिणामको प्राप्त होकर रात्रिकी निद्राको नष्ट करके तत्काल वायुसम्बन्धी मदात्ययको उत्पन्न करैहै ॥ ५४ ॥ ५५ ॥

अथ वातजमदात्ययलक्षणम् ।

हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः ॥ विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥ ५६ ॥

हिचकी, श्वास, शिरका कांपना, पसलियोंमें पीडा, जागरण और प्रलाप (बकवाद) सब लक्षण वातके मदात्ययमें होतेहैं ॥ ५६ ॥

अथ पित्तजमदात्ययनिदानम् ।

तीक्ष्णोष्णमद्यमम्लं च योऽतिमात्रं निषेवते ॥ अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽज्ञानवान्नरः ॥ तस्योपजायते तीव्रः पित्तप्रायो मदात्ययः ॥ ५७ ॥

खट्टे, गरम और तीक्ष्ण पदार्थोंको भोजन करनेवाला क्रोधी और अज्ञानी मनुष्य तीक्ष्ण, उष्ण और अम्ल मद्यको अत्यन्त सेवन करताहै उसके तीव्र पित्तका मदात्यय उत्पन्न होताहै ॥ ५७ ॥

अथ पित्तजमदात्ययलक्षणम् ।

तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः ॥ विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ ५८ ॥

तृषा, दाह, ज्वर, पसीना, मोह, अतीसार, विभ्रम और शरीरके रंगका हरा होना ये सब लक्षण पित्तके मदात्ययमें होतेहैं ॥ ५८ ॥

अथ कफजमदात्ययनिदानम् ।

मधुरस्निग्धगुर्वाशी यः पिबत्यतिमात्रया ॥ अव्यायामदिवास्वप्नशय्यासनसुखे रतः ॥ मदात्ययं कफप्रायं स नरो लभते ध्रुवम् ॥ ५९ ॥

कसरत अर्थात् परिश्रम नहीं करनेवाला, दिनमें सोनेवाला, नित्य शय्यापर बैठा रहनेवाला अथवा गद्दे तकिये लगाकर लेटे रहनेवाला तथा मधुर, स्निग्ध और भारी भोजन करनेवाला मनुष्य जो अत्यन्त मद्य पीता है उस मनुष्यके अत्यन्त कफका मदात्यय उत्पन्न होताहै ॥५९॥

## अथ कफजमदात्ययलक्षणम् ।

छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः ॥ विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ ६० ॥

वमन, अरुचि, उबकाई, तन्द्रा, शरीर भीजे वस्त्रसे ढकासा मालूम होवे और भारीपन रहै और शीत लगै ये सब लक्षण कफके मदात्ययमे होतेहैं ॥ ६० ॥

## अथ सान्निपातिकमदात्ययनिदानलक्षणे ।

त्रिदोषो हेतुभिः सर्वैः सर्वैर्लिङ्गैर्मदात्ययः।

उपरोक्त सपूर्ण कारणोंसे उत्पन्न हुआ और सम्पूर्ण लक्षणोंवाला जो मदात्यय होताहै उसको त्रिदोषज कहतेहैं।

## अथ परमदलक्षणम् ।

श्लेष्मक्षयोऽङ्गगुरुता विरसास्यता च विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च ॥ लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः ॥ ६१ ॥

कफका क्षय, अंगोंमे भारीपन, मुखमे विरसता, मल और मूत्रका अवरोध, तन्द्रा अरुचि, तृषा, मस्तकमें दर्द और सन्धियोंमे अर्थात् जोडोंमें तोडने सरीखी पीडा, ये, सब पर मदके लक्षण जानने,ऐसा विद्वान् वैद्य कहतेहैं ६१

## अथ पानाजीर्णलक्षणम् ।

आध्मानमुग्रमथ वोद्गिरणं विदाहः पानेत्वजीर्णमुपगच्छति लक्षणानि ॥ ज्ञेयानि तत्र भिषजा सुविनिश्चितानि पित्तप्रकोपजनितानि च कारणानि ॥ ६२ ॥

उद्गिरणं वान्तिरुद्गारो वा । पीयत इति पानं मद्यम् ॥

मद्यके अजीर्णमें उग्र अफारा होताहै अथवा वमन होतीहै, अथवा डकार अधिक आतीहैं, दाह होताहै और पित्तके प्रकोपसे जो लक्षण होतेहैं वह सब लक्षण देखनेमें आतेहैं, इसको वैद्य पानाजीर्ण कहतेहैं ॥६२॥

## अथ पानविभ्रमलक्षणम्

हृद्गात्रतोदकफसंस्रवकण्ठधूममूर्च्छावमीमदशिरोरुजनप्रदेहाः ॥ द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेषु धीराः ॥ ६३ ॥

कण्ठधूमः कण्ठाद्धूमनिर्गम इव । प्रदेहः कफेन लिप्तास्यता । द्वेषः सुरान्नविकृतेषु च तेषु सुराविकारेषु अन्नविकारेषु च द्वेषः । अखिलेषु मद्यविकारेषु ॥

हृदयमें तथा गात्रों ( देह ) मे सुई चुभानेकी सी व्यथा होय, कफका स्राव, कण्ठमेसे धुँआँसा निकलता प्रतीत हो, मूर्च्छा आवै,वमन मद और शिरमें पीडा होती हो, मुख कफसे लिपासा हो, सर्व प्रकारकी मदिरापर और सब प्रकारके अन्नके ऊपर द्वेष उत्पन्न होय तो जानना कि, मद्यके विकारोंमें 'पानविभ्रम' विकार उत्पन्न हुआ है ऐसा प्राचीन धन्वन्तरि वैद्य कहतेहैं ॥ ६३ ॥

## अथ मदात्ययाद्यसाध्यलक्षणम् ।

हीनोत्तरौष्ठमतिशीतममन्ददाहं तैलप्रभास्यमतिपानहतं त्यजेच्च ॥ जिह्वौष्ठदन्तमसितन्त्वथ वापि नीलं पीते च यस्य नयने रुधिरप्रभे च ॥ ६४ ॥ हिक्काज्वरो वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं त्यजेत्तम् ॥ ६५ ॥

अत्यन्त मद्यपान करनेसे जिस मनुष्यका ऊपरका होंठ ऊपरको सुकड गया हो, शीत अत्यन्त हो, मुख तेलकी समान वर्णवाला हो जाय, ऐसे मनुष्यकी वैद्य चिकित्सा नहीं करे । मद्यपानसे मूर्च्छितहुए मनुष्यके जो जीभ, होंठ, तथा दात काले अथवा नीले, नेत्र पीले अथवा लाल रंगके

होगये हो और हिचकी, ज्वर, वमन, कप पसलियोंमे शूल, खाँसी तथा भ्रम होय तो उस मनुष्यकी वैद्य चिकित्सा नहीं करे ॥ ६४ ॥ ६५ ॥

## अथ मदात्ययादिविकार-चिकित्सा ।

मद्योत्थानाञ्च रोगाणां मद्यमेव हि भेषजम् ॥ यथा दहनदग्धानां दहनं स्वेदनं हितम् ॥ ६६ ॥ मिथ्यातिहीनमद्येन यो व्याधिरुपजायते ॥ समेनैव निपीतेन मद्येन स हि शाम्यति ॥ ६७ ॥ बीजपूरकवृक्षाम्लकोलदाडिमसंयुतम् ॥ यवानीहपुषाजाजीशृङ्गवेरावचूर्णितम् ॥ ॥ ६८ ॥ सस्नेहैः सक्तुभिर्युक्तमुपदंशैश्चिरोत्थितम् ॥ दद्यात्सलवणं मद्यं वातपैत्तिकशान्तये ॥ ६९ ॥ मद्यं सौवर्चलव्योषयुक्तं किञ्चिज्जलान्वितम् ॥ जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ ॥ ७० ॥ चव्यं सौवर्चलं हिंगु पूरकं विश्वदीप्यकम् ॥ चूर्णं मद्येन पातव्यं पानात्ययरुजापहम् ॥ ७१ ॥ लावतित्तिरदक्षाणां रसैश्च शिखिनामपि ॥ पक्षिणां मृगमत्स्यानामानूपानां तथौदनैः ॥ ७२ ॥ स्निग्धोष्णलवणाम्लैश्च वेशवारैर्मुखप्रियैः ॥ स्निग्धैर्गोधूमकैरन्नैर्वातप्रायं मदात्ययम् ॥ ७३ ॥ नारीणां यौवनोष्माणां निर्दयैरुपगूहनैः ॥ श्रोण्यूरुकुचभारैश्च संरोधोष्णसुखप्रदैः॥ ७४ ॥ शयनाच्छादनैरुष्णैश्चान्तर्गेहैः सुखप्रदैः ॥ मारुतैः प्रबलैः शीघ्रं प्रशाम्यति मदात्ययः ॥ ७५ ॥ पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः ॥ सितामाक्षिकसंयुक्तं मद्यमर्द्धोदकं पिबेत् ॥ ७६ ॥ मद्यं खर्जूरमृद्वीकापरूषकरसैर्युतम् ॥ सदाडिमरसं शीतं सक्तुभिश्चावचूर्णितम् ॥ ७७ ॥ सशर्करं वा माध्वीकं संयुक्तमथ वा परम् ॥ दद्याद्बहूदकं काले पातुं पित्तमदात्यये ॥ ७८ ॥ शशान्कपिञ्जलानेणाल्लँावानसितपुच्छकान् ॥ मधुराम्लान्प्रयुञ्जीत भोजने शालिषष्टिकान् ॥ ७९ ॥ पटोलयवमिश्रं वा छागलं कल्पयेद्रसम् ॥ सतीनमुद्गमिश्रं वा दाडिमामलकान्वितम् ॥ ८० ॥ द्राक्षामलकखर्जूरपरूषकरसेन च ॥कल्पयेत्तर्पणान्यूषान्रसांश्च विविधात्मिकान् ॥ ॥ ८१ ॥ शीतानि चान्नपानानि शीतशय्यासनानि च ॥ शीतवातजलस्पर्शाः शीतान्युपवनानि च ॥ ८२ ॥ क्षौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च ॥ चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः ॥ ८३ ॥ रूक्षतर्पणसंयुक्तं यवानीव्योषसंयुतम् ॥ यवगोधूमकश्चान्नं रूक्षयूषेण भोजयेत् ॥ ८४ ॥ कुलत्थकानां शुष्काणां मूलकानां रसेन वा ॥ प्रभूतकटुसंयुक्तं यवान्नं वा प्रदापयेत् ॥ ॥ ८५ ॥ छागमांसरसं रूक्षमम्लं वा जांगलं रसम् ॥ व्योषयूषमनागम्लं पिबेत्कफमदात्यये ॥ ८६ ॥ स्थाल्यामथ कपाले वा भृष्टं कृत्वा तु नीरसम् ॥ कृट्वम्ललवणं मांसं खादेत्कफमदात्यये ॥ ॥ ८७ ॥ वामकद्रव्ययुक्तेन मद्येनोल्लेखनं मतम् ॥ मदात्यये कफोद्भूते लंघनञ्च यथाबलम् ॥ ८८ ॥ यदिदं कर्म्म निर्दिष्टं वातपित्तकफान्प्रति ॥ सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सकैः ॥ ८९ ॥

जिस प्रकार अग्निसे जलेहुएको दाहन और स्वेदन हितकारी है उसी प्रकार मद्यसे उत्पन्न हुए रोगोको मद्य ही औषधि है । मद्यके मिथ्या योगसे वा अत्यन्त योगसे और हीन योगसे जो रोग उत्पन्न होय वे रोग समयोगवाले मद्य पीनेसे ही शात होतेहैं ।

वातसे तथा पित्तसे उत्पन्न हुए मदात्यय रोगको शमन करनेके लिये पुरानी मद्यमें नमक डालकर तथा बिजौरा नींबू, अमलवेत, बेर, अनार, अजवायन, हाऊबेर, जीरा और सोंठ इनका चूर्ण डालकर स्नेह युक्त सत्तुओंके साथ और मसालेके साथ रोगीको पीनेको देवे।

प्रथम पिया हुआ मद्य जीर्ण होनेपर काला नमक, सोंठ, मिरच और पीपल इनके साथ तथा जलके साथ मद्य देवे तो वातज मदात्यय नष्ट होजाता है।

चव्य, काला नमक, भूनी हींग, बिजौरा, सोंठ और अजवायन इनका चूर्ण करके मद्यके साथ पीनेसे मदात्यय रोग दूर होजाताहै।

लवा, तीतर, मुरगा, मोर, जलप्रायदेशमें रहनेवाले मृग और मछली इनके मांसके रससे संयुक्त भात, स्निग्ध, उष्ण, खारी, खट्टे और मुखको प्रिय लगे ऐसे अचार मसालेके साथ और स्निग्धतायुक्त गेंहूंके भोजनोंसे वातका मदात्यय शांत होताहै।

जिन युवतियोंके शरीरमें जौवनकी छटा छिटक रही हो उनके निर्दय आलिंगनसे, नितंब, जंघा और कुच इनके भारसे तथा प्यारसे और दबानेसे, जो गरमीका सुख होताहै उससे, गरम शयन शय्या, गद्दी आदिके सुखसे, गरम आच्छादनोंसे और सुखदायक मन्दिरोंके भीतरके भवनोंमें रहनेसे वातकी प्रबलतावाला मदात्यय शांत होताहै।

पित्तके मदात्ययमें सम्पूर्ण शीतल क्रिया प्रयोग करनी चाहिये। मद्यमें आधा पानी डालकर मिश्री और सहत मिलाकर पीनेसे पित्तज मदात्यय नष्ट होजाता है।

खजूर, दाख, फालसे, अनार इनके रसके साथ, मिश्री तथा सत्तू डालकर शीतल गुणवाली मार्द्वीक मद्य अथवा इनसे संयुक्त की हुई दूसरे प्रकारकी मद्य उसमें बहुतसा पानी मिलाकर समयपर पिये तो पित्तका मदात्यय नष्ट होजाताहै।

पित्तके मदात्ययमें खरगोश, तीतर, एणमृग, लवा, तथा कालपुच्छ मृग इनका मांस देना चाहिये, मीठे तथा खट्टे पदार्थ, शालिचावल और साठीके चावल देने चाहिये, परवलके यूषसे अथवा मटर सहित मृगके यूषके साथ अथवा अनारके और आमलेके रसके साथ बकरेके मांसका रस उपयोगी है। पित्तके मदात्ययमें तृप्तिकारक यूषोंकी, अलग अलग प्रकारके रसोंकी, शीतल अन्न पानोंकी, शीतल शय्याकी, शीतल आसनोंकी शीतल पवनकी, शीतल जलके स्पर्शकी, शीतल उपवनोंकी और चन्द्रमाकी किरणोंकी योजना करनी चाहिये।

कफसम्बन्धी मदात्ययमें रूक्ष, तर्पण (तृप्ति करनेवाले पदार्थ) तथा अजवायन, सोंठ, मिरच और पीपल इनके साथ जौ तथा गेहूंका भोजन रूक्ष यूषोंके साथ भक्षण करना चाहिये, अथवा कुलथीके और सूखी मूलीके रसके साथ अथवा तीखे पदार्थोंके साथ जौका भोजन करना चाहिये।

कफके मदात्ययमे रूक्ष द्रव्योंके साथ बकरेके मांसका रस, अथवा अम्ल किये हुए जांगलदेशके जीवोंका मांस रस, अथवा कुछ खटाई डालकर सोंठ, मिरच, तथा पीपलका यूष पिलावे।

मांसको हॉडीमें अथवा खीवटेमें सूखा भूनकर उसमें तीखे खट्टे और खारी पदार्थ मिलाकर खाय तो कफका मदात्यय दूर होजाताहै।

कफके मदात्ययमें वमनकारक औषधियोंसे संयुक्त मद्य पिलाकर कफको निकालना चाहिये तथा शक्त्यनुसार लंघन कराने चाहिये।

सान्निपातिक मदात्ययमे वातज, पित्तज और कफज मदात्ययकी जो अलग चिकित्सा कही हैं वे सब चिकित्सा वैद्य इसमें करे॥ ६६-८९॥

## अथ प्रसंगप्राप्तकोद्रवादिमदचिकित्सा।

**सगुडः कूष्माण्डरसः शमयति मदमाशु कोद्रवजम्॥ धत्तूरजञ्च दुग्धं सशर्करं चाशु पानेन॥ ९०॥ सच्छर्दिमूर्च्छातीसारं मदं पूगफलोद्भवम्॥ सद्यः प्रशमयेत्पीतमातृप्तेर्वारि शीतलम्॥ ९१॥ वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणादपि च॥ शाम्यति पूगफलोद्भवमदः सशूलः शर्कराकवलात्॥ ९२॥ तत्क्षणान्मृदितं चूर्णं समाघ्रातं प्रणाशयेत्॥ ताम्बूलोत्थं मदं पुंसामेकमेव स्वभावतः॥ ९३॥ जातीफलमदं शीघ्रं हन्ति पथ्या निषेविता॥ शीततोयाव-**

गाहश्च शर्करा दधियोजिता ॥ विभीतमदशान्त्यर्थमेतदेव मतं पुनः ॥ ९४ ॥ मद्यं पीत्वा यदि ना तत्क्षणमवलेढि शर्करां सघृताम् ॥ जातु न मदयति मद्यं मनागपि प्रथितवीर्यमपि ॥ ९५ ॥

इति मदात्ययपरमदपानाजीर्णपानविभ्रमाधिकारः ।

कोदोंको खानेसे जो मद होय तो पेठेके रसमें गुड मिलाकर सेवन करे, इससे कोदोंका मद तत्काल शमन होजाताहै । धतूरेका मद ( आमला ) मिश्री मिलाकर दूधको पीनेसे नष्ट होजाताहै ।

सुपारीके खानेसे उत्पन्न हुए वमन, मूर्छा और अतिसार सहित मदको तृप्तिपूर्वक कण्ठपर्यंत पिया हुआ शीतल जल तत्काल दूर करदेताहै । सुपारीका मद अन्ने उपलोको सूंघनेसे, जलको पीनेसे और नमक खानेसे भी दूर होजाताहै । सुपारीका मद शूलसहित होय तो खाँडयुक्त कवल धारण करे इससे तत्काल शांत होजाताहै ।

पानका मद तत्काल चूनेको हाथोंसे मलकर सूँघनेसे शांत होजाताहै । जायफलका मद हरडके खानेसे, शीतल जलमें प्रवेश करनेसे, अथवा खांडके साथ दही खानेसे शांत होजाता है । बहेडेका मद भी दहीमें बूरा मिलाकर खानेसे शांत होजाताहै ।

मनुष्य यदि मद्य पीकर तत्काल घीमें मिलाकर बूरा खाय तो प्रबल पराक्रमवाला भी मद किंचित् भी नशा नहीं करता ॥ ९०–९५ ॥

इति मदात्यय–परमद–पानाजीर्ण–पान-
विभ्रमाधिकारः सम्पूर्णः ।

---

# अथ दाहाधिकारः ।

## तत्र प्रथमं पित्तदाहः ।

पित्तज्वरसमः पित्तदाहः स्यात्तस्य संक्रमः ॥ १ ॥

दाह उष्मात्मको व्याधिः पित्तज्वरसमानः पित्तज्वरलक्षणयुक्तः पित्तज्वरे तु आमाशयदुष्टात् दाहो ज्वराधिक इति भेदः । तस्य दाहस्य पित्तज्वरोक्तः क्रमः चिकित्सा ॥

दाहरोग सात प्रकारका है, तहां सबसे पहिले पित्तके दाहको कहतेहैं, दाह गरमीरूप व्याधि है, इसमें पित्तज्वरके लक्षण होतेहैं इस कारण जो पित्तज्वरकी चिकित्सा कही है वही चिकित्सा दाहकी करनीचाहिये, पित्तज्वरमें आमाशयके दुष्ट होनेसे दाह और ज्वर यह दोनो होतेहैं और यह व्याधि तो केवल दाहरूप है, इस कारण पित्तज्वर और दाहमें भेद है ॥ १ ॥

## अथ रुधिरदाहः ।

कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ॥ सन्धूप्यते चोष्यते च ताम्राभस्ताम्रलोचनः ॥ लोहगन्धांगवदनो वह्निनेवावकीर्यते ॥ २ ॥

उद्रिक्तम् अतिरिक्तं सत् दहति दाहाख्यं व्याधिं करोति । सन्धूप्यते अग्निना दह्यत इव । उष्यते समीपस्थेनैव वह्निना ताप्यते चूष्यत इति पाठान्तरे आचूषणेनेव पीडामनुभवति इत्यर्थः । वह्निनेव अवकीर्यते शरीरोपरि वह्निः प्रक्षिप्यत इव ॥

सम्पूर्ण शरीरमें रहनेवाला रुधिर सो अत्यंत वृद्धिको प्राप्त और कुपित होकर दाह नामवाली व्याधिको उत्पन्न करताहै, इसमें रोगीको सब संसार अग्निसे जलते हुएकी समान प्रतीत होताहै, अथवा समीपमें रक्खी हुई अग्निसे सब शरीर तपता हुआ मालूम होताहै, शरीरमें चूसने सरीखी पीडा होतीहै, शरीरपर अग्नि डालनेकी समान वेदना होतीहै, इस मनुष्यका शरीर, नेत्र, लालवर्ण होजातेहैं शरीरमेंसे तथा मुखमेंसे तत्ते लोहेपर जल डालनेके समान गंध आनेलगताहै ॥ २ ॥

## अथ रक्तपूर्णकोष्ठजदाहः ।

असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः ॥ ३ ॥

असृजा शस्त्रादिक्षतात् निस्सृतरक्तेन ॥

शस्त्र आदिके लगनेसे घाव जो होजाताहै, उस घावमेंसे निकलेहुए रुधिरसे जिस मनुष्यका कोठा भर जाताहै उसके जो महादुस्तर दाह उत्पन्न होताहै वह तीसरे प्रकारका दाह गिनाजाताहै ॥ ३ ॥

## अथ मद्यदाहः ।

त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभिमूर्च्छितः ॥ दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ ४ ॥

स पानोष्मा मद्यपानजनित ऊष्मा पित्तरक्ताभिमूर्च्छितः पित्तरक्ताभ्यां वर्द्धितः ॥

मद्यपानके करनेसे त्वचा ( चमडी ) मे प्राप्तहुई और पित्त तथा रुधिरसे वढीहुई भयकर दाहको उत्पन्न करती-है, इसमे पित्तकी समान चिकित्सा करनी चाहिये ॥४॥

## अथ तृष्णानिरोधजदाहः ।

तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम् ॥ ५ ॥ स बाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ॥ संशुष्कगलताल्वोष्ठो जिह्वां निष्कास्य वेपते ॥ ६ ॥

अब्धातौ रसे क्षीणे क्षयं प्राप्ते । तेजः समुद्धतं वृद्धम्, मन्दचेतसः अल्पबुद्धेः यतस्तेन तृषानिरोधः कृतः ॥

जो मनुष्य अपनी मूर्खतासे तृषा ( प्यास ) को रोकता है उसके तृषाके अवरोधसे शरीरकी जलमय धातु क्षीण होकर वृद्धिको प्राप्त हुआ तेज शरीरके बाहर तथा भीतर दाहको उत्पन्न करताहै और उसमें गला, तालू और होठ सूखजातेहैं और वह जीभ निकालकर हॉपताहै ॥५॥६॥

## अथ धातुक्षयजदाहः ।

धातुक्षयोत्थो यो दाहस्तेन मूर्च्छातृषान्वितः ॥ क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः ॥ ७ ॥

सीदेत् म्रियेत ॥

धातुके क्षयसे जो दाह होतीहै उससे पीडित मनुष्य मूर्च्छासे तथा तृषासे युक्त होताहै, क्रिया रहित होजाताहै, स्वर बैठजाताहै और वह मनुष्य अतमे मरजाताहै ॥ ७ ॥

## अथ मर्माभिघातजदाहः ।

मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः ॥

मर्माणि शिरोहृदयवस्त्यादीनि ॥

मस्तक, हृदय और मूत्राशय आदि मर्मोके अभिघात ( चोट ) से जो दाह होताहै वह असाध्य है । यह सातवां दाह है ।

## अथ दाहासाध्यता ।

सर्व एव च वर्ज्याः स्युः शीतगात्रस्य देहिनः ॥ ८ ॥

जिसके शरीरमे भीतर तो दाह हो और ऊपरसे शरीर शीतल हो ऐसा सब प्रकारका दाह वर्जित है ॥ ८ ॥

## अथ दाहचिकित्सा ।

शतधौतघृताभ्यक्तं लेपं वा यवसक्तुभिः ॥ कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ॥ ९ ॥

छादयेत्तस्य सर्वांगमारनालार्द्रवाससा ॥ लामज्जकेन युक्तेन चन्दनेनानुलेपयेत् ॥ चन्दनाम्बुकणास्यन्दितालवृन्तोपवीजनैः ॥ १० ॥ सुप्याद्दाहार्दितोऽम्भोजकदलीदलसंस्तरे ॥ परिषेकावगाहेषु व्यजनानाञ्च सेवने ॥ ११ ॥ शस्यते शिशिरं तोयं दाहतृष्णोपशान्तये ॥ फलिनी लोध्रसेव्याम्बु हेमपत्रं कुटन्नटम् । कालेयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ १२ ॥

फलिनी प्रियंगुः । सेव्यम् उशीरम् । अम्बु वालकं हेमपत्रं नागकेशरपत्रम्, कुटन्नटं वितुन्नकं गुडतजी इति लोके कश्चिच्चम्पावती इति नाम । कालीयकं कलम्बक इति लोके ॥

ह्रीबेरपद्मकोशीरचन्दनाम्बुजवारिणा ॥ सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः॥ ॥ १३ ॥ वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ॥ नार्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥ १४ ॥ पाययेत्कमलस्याम्भः शर्कराम्भः पयोऽपि च ॥ क्षीरमिक्षुरसञ्चापि कारयेत्पित्तजिद्विधिम् ॥ १५ ॥

बुद्धिमान् वैद्य दाहवाले मनुष्यके शरीरमें घीको

सौवार धोकर मालिसकरे, अथवा जौके सत्तू और बेर तथा आमले सहित धान्याम्ल नामक कॉजीका लेपकरे दाहसे पीडित मनुष्यके शरीरको कॉजीमे भीजे हुए वस्त्रसे ढके शरीरपर लामज्जक संयुक्त चदनका प्रलेप करे।

दाहसे व्याकुल मनुष्यको कमलके पत्र और केलेके पत्तोकी शय्यापर सुलावे। चंदन मिले हुए जलके कण जिनमेसे गिरते हो ऐसे पंखोंसे पवन करे।

दाह और तृषाको शात करनेके लिये जलका सीचना वा छिडकना, जलमें घुसकर स्नान करना और शीतल जलका ही उपयोग करना चाहिये।

फूलप्रियंगू, लोध, सुगधवाला, खस नागकेसरके पत्ते केवटी मोथा और पीला चंदन इनका रस निकालकर प्रलेप करना दाहमें हितकारी है।

सुगंधवाला, पद्माख, खस, चदन और कमल इनसे सुवासित किया हुआ जल चौबच्चेमें भरदेवे उसमें दाहसे पीडित मनुष्यको बैठावे।

जिनमें सुन्दर सुन्दर रग रगके मनोहर कमल खिलरहे हैं ऐसी बावडी, जिनमे फुहारे छूटरहे हैं ऐसे भवन और सर्व अंगोंमे जिनके चंदन लगरहा है ऐसी स्त्री दाहसम्बन्धी दुःखको दूर करै है।

दाहवाले मनुष्यको कमलका जल पिलावे, खाडका सरबत पिलावे, मिश्री मिलाकर दूध पिलावे, केवल दूध ही पिलावे और ईखका रस पिलावे इत्यादि पित्तको शमन करनेवाले उपचार करने चाहिये॥ ९–१५॥

### अथ चंदनादिक्काथः।

**पटीरपर्पटोशीरनीरनीरदनीरजैः॥ मृणालमिसिधान्याकपद्मकामलकैः कृतः १६॥ अर्द्धशिष्टः सिताशीतः पीतः क्षौद्रसमन्वितः॥ क्काथो व्यपोहयेद्दाहं नृणाञ्च परमोल्वणम्॥ १७॥**

**पटीरं चन्दनम्॥**

सफेद चदन, पित्तपापडा, सुगधवाला, खस, नागरमोथा, कमलगट्टा, कमलकी नाल, सौंफ, धनियॉ, पद्माख और आमले इनका अर्द्धावशेष क्काथ बनावे, उसमें मिश्री और शीतल होनेपर सहत डालकर पीनेसे मनुष्योंका अत्यत उग्रदाह शात होजाता है॥ १६॥ १७॥

### अथ कांजिकतैलम्।

**तिलतैलं भवेत्प्रस्थं तत्षोडशगुणे शनैः॥ काञ्जिके विपचेत्तत्स्याद्दाहज्वरहरं परम् १८**

इति दाहाधिकारः।

सोलह १६ भाग कॉजीमे धीरे धीरे पकाया हुआ तिलका चौसठ ६४ तोले तेल दाह और ज्वरके संतापको दूर करताहै॥ १८॥

इति दाहाधिकारः सपूर्णः।

---

## अथोन्मादाधिकारः।

### तत्रोन्मादनिरुक्तिः।

**मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः॥ मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः॥ १॥**

**अयमर्थः। यस्माद्धेतोरुद्धताःप्रवृद्धाःदोषा उन्मार्गमाश्रिताः मदयन्ति चित्तं विक्षिपन्ति अस्मिन्सोऽयमुन्माद इति कीर्तितः स उन्मादः मानसो व्याधिः मनोवैकृत्यकरणात्॥**

इस रोगमे वृद्धिको प्राप्त हुए दोष (वात पित्त कफ) अपने मार्गोको छोडकर अन्यमार्गोंमे आश्रित होकर चित्तको विक्षिप्त करते हैं इसलिये इसको उन्माद कहते हैं यह मनको विकृत करदेताहै अत एव यह मानसिक रोग है॥ १॥

### अथावस्थाभेदेनोन्मादनामान्तरम्।

**स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्ति च२॥ स उन्मादः तरुणो नवीनः॥**

यह उन्माद बढा न हो नवीन होय तो मद कहाजाता है॥ २॥

### अथोन्मादविप्रकृष्टनिदानम्।

**विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्॥ उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमा च चेष्टा॥ ३॥**

**दुष्ट धत्तूरबीजादिसहितम् अशुचि रजस्वलास्पर्शादि। प्रधर्षणमभिभवः। विषमा चेष्टा बलवद्विग्रहादिः॥**

अथ रसाज्ञानलक्षणम् ।

भुञ्जानस्य नरस्यान्नं मधुरप्रभृतीन्रसान् ॥ रसज्ञा यन्न जानाति रसाज्ञानं तदुच्यते ॥ ५४ ॥

भोजन करते समय जिस मनुष्यकी जिह्वा मधुर आदि रसोंको न जाने उसको 'रसाज्ञान' कहतेहैं ॥ ५४ ॥

अथ रसाज्ञानचिकित्सा ।

घर्षेज्जिह्वां जडां सिन्धुत्र्यूषणैः साम्लवेतसैः ॥ अम्लवेतसकाभावे चुक्रं दातव्यमीरितम् ॥ ५५ ॥

सैंधानिमक, सोंठ, मिरच, पीपल और अमलवेत इनको एकत्र पीसकर जिह्वाको घिसे । जो अमलवेत नहीं मिले तो उसके बदले चूका ले लेवे ॥ ५५ ॥

अथ किराततिक्तादिकल्कः ।

किराततिक्तका कट्वी कुटजस्य फलं वचा ॥ ब्राह्मी फलश्च पालाशं सर्जिका कृष्णजीरकम् ॥ ५६ ॥ पिप्पली पिप्पलीमूलं चित्रं नागरमूषणम्॥ एषां कल्कैर्मुहुर्घर्षेज्जिह्विकामार्द्रिकारसैः ॥ ५७ ॥ तेन सम्यग्विजानाति रसना सकलान्रसान् ॥ कल्कः किराततिक्तादिर्जिह्वायाः शून्यतां हरेत् ॥ ५८ ॥

चिरायता, कुटकी, इन्द्रजौ, वच, ब्राह्मी, ढाकके बीज, सज्जीखार, कालाजीरा, पीपल, पीपलामूल, चीता, सोंठ और मिरच इन सबको अदरखके रसमें पीसकर जीभपर वारंवार घिसे तो जीमको रसका ज्ञान अच्छे प्रकार हो जाताहै, यह 'किराततिक्तादि' कल्क जीमकी जडताको दूर करैहै ॥ ५६–५८ ॥

अथ बाधिर्यकर्णनादौ ।

बाधिर्यकर्णनादयोर्लक्षणं चिकित्सा च तदधिकारे वक्ष्यामः ॥

बधिरता और कर्णनाद इनके लक्षण तथा चिकित्सा कर्णरोगाधिकारमें कहेंगे ॥

अथ त्वक्शून्यतालक्षणम् ।

स्पृश्यमाना त्वचा या तु शीतोष्णं मृदु कर्कशम् ॥ न जानाति बुधैस्त्वक् च शून्येति परिकीर्त्तिता ॥ ५९ ॥

जो स्पर्श करते समय त्वचामें शीतल, गरम, कोमल, कठिन इनकी खबर न पडे उसको पंडित त्वक्शून्य कहतेहैं ॥ ५९ ॥

अथ त्वक्शून्यचिकित्सा ।

सुप्तवाते त्वसृङ्मोक्षं कारयेद्बहुशो भिषक् ॥ दद्याच्च लवणागारधूमैस्तैलसमन्वितैः ॥ ६० ॥

त्वक्शून्यता हुई होय तो वैद्य वारंवार रोगीके शरीरमेंसे रुधिर निकलवावे, फस्त खुलवावे तथा अगारोंके ऊपर तेल और सैंधानिमक, डालकर धुंआँ देवै ॥ ६० ॥

अथार्दितसम्प्राप्तिपूर्वकलक्षणम् ।

उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ॥ हसतो जृम्भतो भाराद्विषमाच्छयनासनात् ॥ ६१ ॥ शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ॥ अर्दयत्यनिलो वक्त्रमर्दितं जनयेत्ततः ॥ ६२ ॥ वक्री भवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्तते ॥ शिरश्चलति वाक्संगो नेत्रादीनाञ्च वैकृतम् ॥ ६३ ॥ ग्रीवाचिबुकदन्तानां तस्मिन्पार्श्वे च वेदना ॥ तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ॥ ६४ ॥

व्याहरतः वदतः । कठिनानि पूगफलादीनि । विषमाच्छयनासनात् । ग्रीवादिवैपरीत्येन शयनादासनाच्च । अर्दयति पीडयति ततस्तदनन्तरम् अर्दितं जनयेत् । अर्दिते जाते किं स्यात्तदाह वक्री भवति इत्यादि । अपवर्तते वक्रा भवति । चलति कम्पते । वाक्संगः वाङ्निरोधः । नेत्रादीनामिति आदिशब्देन भ्रूगण्डनासिकादीनां ग्रहणम् । वैकृत्यं वेदनास्फुरणवक्रत्वादि । ग्रीवेत्यादि यस्मिन् पार्श्वे अर्दितं तस्मिन् पार्श्वे ग्रीवादीनां वेदना ॥

ऊंचे स्वरसे बोलनेसे, सुपारी आदि कठिन पदार्थोंके खानेसे, अत्यन्त हँसनेसे, अत्यन्त जम्भाई लेनेसे, अधिकतर भारको उठानेसे, नाडको टेढी तिरछी रखकर विषम रीतिसे सोनेसे और विषम रीतिसे बैठनेसे मस्तक, नाक, होंठ, ठोडी, ललाट और नेत्रोंकी संधि इनमें रहनेवाला वायु मुखको पीडित करताहै इससे अर्दित रोग उत्पन्न होताहै जब यह अर्दित रोग उत्पन्न होताहै तब इसमें आधा मुख टेढा होजाताहै, नाड टेढी होजातीहै, मस्तक कांपनेलगताहै, बोलनेमें असमर्थ होजाताहै, नेत्र, भौंह, गाल और नाक इनमें वेदना स्फुरण तथा टेढापन होताहै और जिस ओर यह अर्दित रोग होताहै उसी ओरकी गरदन, ठोढी और दांतोंमे वेदना होतीहै, रोगके ज्ञाता वैद्य इस रोगको 'अर्दित लकवा' कहतेहैं॥ ६१-६४॥

**वातात्पित्तात्कफाच्च स्यात्त्रिविधं तत्समासतः॥ लालास्रावो व्यथा कम्पः स्फुरणं हनुवाग्ग्रहः॥६५॥ ओष्ठयोः श्वयथुः शूलं चार्दिते वातजे भवेत्॥ पीतमास्यं ज्वरस्तृष्णा पित्तजे मोहधूपने॥ गण्डे शिरसि मन्यायां शोथस्तम्भः कफात्मके॥ ६६॥**

वातज, पित्तज और कफज इस प्रकार संक्षिप्त रीतिसे अर्दित रोग तीन प्रकारका है।

वातके अर्दित रोगमें रोगीके मुखमे लार गिराकरतीहै, पीडा होतीहै, शिराओंमें स्फुरण होताहै, कंप होताहै, ठोडी जकड जातीहै, कम बोला जाताहै, होठमें सूजन और शूल होताहै।

पित्तके अर्दित रोगमे मुख पीला होजाताहै, ज्वर आजाताहै, तृषा अधिक लगतीहै, मोह और उष्णता होतीहै।

कफके अर्दित रोगमे गले, माथे और मन्यानाडीमे सूजन और स्तम्भ होताहै॥ ६५-६६॥

## अथार्दितासाध्यलक्षणम्।

**क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः॥ न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च॥ ६७॥**

**अनिमिषाक्षस्य निमेषासमर्थचक्षुषः। प्रसक्तं प्रकर्षेण लग्नम् अव्यक्तञ्च भाषितुं शीलं यस्य तस्य अर्दितं न सिध्यति। त्रिवर्षम् अतीतवर्षत्रयम्, अथ वा त्रयाणां चक्षुर्नासामुखानां वर्षः स्रावो यत्र तत्। वेपनस्य कम्पनशीलस्य तस्य गाढमतिशयेन न सिध्यति इति अन्वयः॥**

जो मनुष्य अस्फुर तथा परस्पर मिलेहुए अक्षरोंको बोलता होय और जिसके नेत्र पलक मारनेमें असमर्थ होयँ उस मनुष्यका अर्दित रोग आरोग्य नही होता।

जिस मनुष्यके अर्दित रोगको उत्पन्न हुए तीन वर्ष बीत गये हों अथवा नेत्र, नाक तथा मुख स्रवता होय और शरीर कांपता होय उस मनुष्यका अर्दित रोग आराम नही होता॥ ६७॥

## अथार्दितरोगचिकित्सा।

**स्नेहपानानि नस्यञ्च भोज्यान्यनिलहारि च॥ उपनाहाश्च शस्यन्ते नावनं वस्तयोऽर्दिते॥ ६८॥**

**वस्तिरत्र शिरोवस्तिरेव॥**

**दशमूलकषायेण मातुलुंगरसेन वा॥ बलया पञ्चमूल्या वा क्षीरं वातात्मके हितम्॥ ६९॥ पिष्टं मांसवृतं जग्ध्वा नवनीतेन सोऽर्दिती॥क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत्॥ ७०॥ अर्दिते पित्तजे शीतान्स्नेहांश्चैव विनिर्दिशेत्॥ घृतवस्तिप्रसेकञ्च क्षीरमेकं तथैव च॥ ॥ ७१॥ जिह्मीभूताननो मूको दाहवान्योऽर्दिती भवेत्॥ कुर्यात्प्रतिक्रियां तस्य वातपित्तविनाशिनीम्॥ ७२॥ श्लेष्मभागे क्षयं नीते बृंहणैः समुपाचरेत्॥ अर्दिते शोथसंयुक्ते वमनं च प्रशस्यते॥ ७३॥ रसोनकल्कं तिलतैलमिश्रं खादेन्नरो योऽर्दितरोगयुक्तः॥ तस्यार्दितं नाशमुपैति शीघ्रं वृन्दं घनानामिव वायुवेगात्॥ ७४॥**

अर्दित रोगीको घृतादि स्नेहपान करावै, वातनाशक नाद्य देवै, वातनाशक भोजन खिलावे, उपनाह स्वेद और शिरोवस्ति करावै ।

वातज अर्दित रोगमें दशमूलके क्वाथसे, अथवा बिजो-रेके रससे अथवा खिरेंटीके क्वाथसे अथवा पचमूलके क्वाथसे पकाये हुए दूधको पिये ।

अर्दितरोगी मासको घीमें पीसकर नैनी घीके साथ खाय और ऊपरसे दूध और मांसरसके साथ भोजन करे तथा दशमूलका रस पिये ।

पित्तज अर्दित रोगमें शीतल स्नेहोंका उपयोग करे, शिरमे घीकी पिचकारी लगावे, घृत अथवा दूधका सेवन करे और विशेष करके दूधका उपयोग करे ।

जिस अर्दित रोगीका मुख टेढा होगया होय दाह होता होय और अपने आप गूगा होगया होय उसको वातपित्तनाशक चिकित्सा करनीचाहिये ।

कफके अर्दित रोगवाले मनुष्यका कफ क्षय करके पुष्टिकारक पदार्थोंसे उपचार करे । जो अर्दित रोग सूजन युक्त होय तो उसमें वमन कराना उत्तम है ।

जो अर्दित रोगवाला मनुष्य तिलके तेलमें मिलाकर लसुनके कल्कको सेवन करताहै उसका अर्दित रोग तत्काल नष्ट होजाताहै, जिस प्रकार वायुके वेगसे बादलोंका समूह तत्काल विनाश होजाताहै ॥ ६८–७४ ॥

## अथ मन्यास्तम्भनिदानलक्षणे ।

**दिवास्वप्नासनस्थानविकृतोर्द्ध्वनिरीक्षणैः ॥ मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणावृतः ॥ ७५ ॥**

आसनस्थानविकृतोर्द्ध्वनिरीक्षणैः, आसनेन स्थानेन वा अतिशयेन विकृतं ग्रीवादि विकृतं यथा स्यादेवम् उपरिभागे यन्निरीक्षणं तेन स एव कुपितो वातः श्लेष्मणा आवृतः मन्यास्तम्भं करोति । ग्रीवायाः पश्चाद्भागे चतुर्दशशिरा मन्यासंज्ञाः । तथा च अमरसिंहः " पश्चाद्ग्रीवाशिरा मन्याः" इति । तासां स्तम्भं करोति च ॥

दिनमें सोनेसे, अथवा विपरीत आसनपर बैठनेसे, अथवा विपरीत रीतिसे ऊपर गरदनको करके देखनेसे कोपको प्राप्त हुई वायु कफके साथ मिलकर नाडके पिछले भागमे रहनेवाली मन्या नामक शिराओंको स्तब्ध कर देतीहै, इसको मन्यास्तम्भ रोग कहतेहैं ॥ ७५ ॥

## अथ मन्यास्तम्भचिकित्सा ।

**दशमूलीकृतं क्वाथं पञ्चमूल्यापि कल्पितम् ॥ रूक्षं स्वेदं तथा नस्यं मन्यास्तम्भे प्रयोजयेत् ॥ ७६ ॥ तैलेनाज्येन वा ग्रीवामभ्यज्यार्कदलैरथ ॥ एरण्डपत्रैर्वाच्छाद्य स्वेदयेद्बहुशो भिषक् ॥ ७७ ॥ कुक्कुटाण्डद्रवैरुष्णैः सैन्धवाज्यसमन्वितैः ॥ ग्रीवां संमर्दयेत्तेन मन्यास्तम्भः प्रशाम्यति ॥ ७८ ॥**

दशमूलके क्वाथका अथवा पचमूलके क्वाथका, रूक्ष स्वेदन और नस्य इनका उपयोग मन्यास्तम्भको नष्ट करदेताहै ।

तेल अथवा घीका गर्दनपर मालिस करके आकके पत्तोंसे अथवा अण्डके पत्तोंसे गरदनको बाधे और बारबार सेक करै तो मन्यास्तम्भ नष्ट होजाताहै ।

मुरगेके अण्डेके रसको गरम करके उसमें सैंधानमक और घी डालकर गर्दनको मलनेसे मन्यास्तम्भ दूर होजाताहै ॥ ७६–७८ ॥

## अथ बाहुशोषलक्षणम् ।

**अंसदेशे स्थितो वायुः शोषयेदंसबन्धनम् ॥ अंसबन्धनशोषात्स्याद्बाहुशोषः सवेदनः ॥ ७९ ॥**

कन्धे अथवा खवेमे रहनेवाली वायु खवोंके बधनको सुखा देतीहै, उस खवोंके बधनके सूखनेसे अत्यन्त वेदनावाला बाहुशोष रोग उत्पन्न होताहै ॥ ७९ ॥

## अथ बाहुशोषचिकित्सा ।

**बाहुशोषे पिबेद्भुक्त्वा सर्पिः कल्याणकं महत् ॥ बलामूलशृतं तोयं सैन्धवेन समन्वितम् ॥ बाहुशोषकरे वाते मन्यास्तम्भे च शस्यते ॥ ८० ॥**

बाहुशोष उत्पन्न हुआ होय तो भोजन करनेके पश्चात् महाकल्याण नामक घी पिये ।

खिरेंटीकी जडका क्वाथ बनाकर उसमें सैंधानिमक

मिलाकर पिये तो बाहुशोष और मन्यास्तम्भको नष्ट करैहै ॥ ८० ॥

## अथापबाहुकलक्षणम्।

शिराः संकोच्य बाहुस्थः स कुर्यादपबाहुकम् ॥ ८१ ॥

स वायुः बाहुस्थः। शिराः बाहुस्थशिराः ॥

बाहुमे रहनेवाली वायु बाहुमें रहनेवालीशिराओंको सकुचित करके अपबाहुक रोगको उत्पन्न करैहै ॥८१॥

## अथापबाहुकचिकित्सा।

परमौषधमपबाहुकमन्यास्तम्भोर्द्धजत्रुगतरोगे ॥ शीतलजलेन नस्यं तदुपशमे जिङ्गिनी च पुरः ॥ ८२ ॥ मूलं बलायास्त्वथ पारिभद्रजं तथात्मगुप्तास्वरसं पिबेद्वा ॥ युञ्जीत यो माषरसेन नस्यं भवेदसौ वज्रसमानबाहुः ॥ ८३ ॥

बलाया मूलं कल्कीकृतं पिबेत् तथा पारिभद्रमूलञ्च। पारिभद्रोऽत्र फरहद इति लोके वातहरत्वात् ॥

अपवाहुक रोगमे, मन्यास्तम्भ रोगमें और कंठसे ऊपरके रोगोंमें शीतल जलको नस्य देवे, नस्यके शान्त होनेके पश्चात् जिंगिनी और गूगलका उपयोग करे, यह उत्तम औषधि है।

खिरैटीकी जड और फरहदकी जडको पीसकर पीनेसे अथवा कौछके स्वरसको पीनेसे और उडदोंके रसका नास लेनेसे बाहु वज्रकी समान होजातीहै ॥ ८२ ॥ ८३ ॥

## अथ माषतैलम्।

माषातसीयवकुरण्टककण्टकारीगोकण्टटुण्टुकजटाकपिकच्छुतोयैः ॥ कार्पासकास्थिशणबीजकुलत्थकोलक्काथेन बस्तपिशितस्यरसेन वापि ॥८४॥ शुण्ठ्या समागधिकया शतपुष्पया च सैरण्डमूलकपुनर्नवया सरण्या ॥ रास्नाबलामृतलताकटुकाविपक्कं माषाख्यमेतदपबाहुहरं हि तैलम् ८५॥

उडद, अलसी, जौ, कटसरैया, कटेरी, गोखरू, अरुलुकी जड, जटामॉसी, कौंछ, सुगधबाला, कपास, सनकेबीज, कुलथी और बेर इनके क्काथसे, बकरेके मांसके रससे, सोंठ, पीपल, सोया (सौंफ), अंडकी जड, पुनर्नवा, प्रसारणी, रास्ना, खिरैटी, गिलोय और कुटकी इनके कल्कसे पकाया हुआ तेल अपबाहुकको नष्ट करैहै। इसको 'माषतैल' कहतेहैं ॥ ८४ ॥ ८५ ॥

## अथ विश्वाचीलक्षणम्।

तलं प्रत्यंगुलीनां या कण्डरा बाहुपृष्ठतः॥ बाह्वोः कर्मक्षयकरी विश्वाची सा निगद्यते ॥ ८६ ॥

कण्डरा महास्नायुः। तलं हस्तस्य उपरिभागः तलशब्दोऽत्र उपरिवाचकः यथा भूमितलमिति। तेन अयमर्थः, बाहुपृष्ठतः बाह्वोः पृष्ठं बाहुपृष्ठमारभ्य तलं प्रतिहस्ततलं यावल्लक्षीकृत्य अंगुलीनां या कण्डरा तां सन्दूष्य बाह्वोः प्रसारणाकुञ्चनादिकर्मक्षयकरी भवति सा इह वातव्याधिषु विश्वाची इत्युच्यते। बाह्वोरिति द्वित्वं सम्भवपरम् एकस्मिन्नपि बाहौ विश्वाची भवति ॥

बाहुकी पृष्ठसे लेकर हाथके ऊपरभाग तक अगुलियों तक रहनेवाली कंडराका नाम मोटीनसे हैं उनको दूषित करके दोनो बाहुको फैलाने, सकोडने आदि कामोको नष्ट करनेवाला जो रोग उत्पन्न होताहै उसको 'विश्वाची' कहते हैं। यह रोग एक बाहुमें भी होजाताहै ॥ ८६ ॥

## अथ विश्वाचीचिकित्सा।

दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम् ॥ सायं भुक्त्वा पिबेन्नस्यं विश्वाच्यामपबाहुके ॥ ८७ ॥

जो विश्वाची अथवा अपबाहुकरोग उत्पन्न हुआ होय तो सन्ध्याके समय दशमूल, खिरैटी और उडद इनके क्काथमें तैल और घी मिलाकर सायकालको भोजनकरनेबाद पीवे और फिर नास लेवे ॥ ८७ ॥

## अथ माषादितैलम्।

माषसिन्धुबलारास्नादशमूलकहिंगुभिः ॥

वचाशिवजटाख्याभिः सिद्धं तैलं सनागरम्॥ ८८ ॥ ऊर्द्ध्वं भक्ताशनाद्धन्याद्वाहुशोपापबाहुकौ॥विश्वाचीमुद्धतां चापि पक्षाघातं तथार्दितम् ॥ ८९ ॥

भोजन करनेके पश्चात् उडद, सैंधानिमक, खिरैटी, रायसन, दशमूल, हींग, वच और वेलगिरी इनके द्वारा पकाया हुआ तेल सोंठके साथ उपयोग किया जाय तो वाहुशोप, अपबाहुक, अत्यन्त वृद्धिको प्राप्त हुई विश्वाची, पक्षाघात और अर्दित ( लकवा ) इन सबका नाश होताहै ॥ ८८ ॥ ८९ ॥

## अथोर्द्ध्ववातलक्षणम् ।

अधःप्रतिहतो वायुः श्लेष्मणा मारुतेन च॥ करोत्युद्गारबाहुल्यमूर्द्ध्ववातः स उच्यते९०॥

वायुः समानवायुः। मारुतेन अपानवायुना स्वहेतुदुष्टेन । अधःप्रतिहतः अधोनिरुद्धः ॥

अपने कारणोंसे दुष्ट हुई समान वायु और कफ वायु नीचेसे रुककर वारवार डकार आनेके रोगको करतीहैं उसको ऊर्ध्ववात कहतेहैं ॥ ९० ॥

## अथोर्द्ध्ववातचिकित्सा ।

भागा दश विश्वायास्तत्तुल्यावृद्धदारकस्यापि ॥ त्रय एव च पथ्यायाश्चतुरंशं हिंगु संभृष्टम् ॥९१॥ एकः सैन्धवभागस्तत्तुल्यं चित्रकं चात्र॥संवृद्धमूर्द्ध्ववातं हन्त्येतच्चूर्णितं भुक्तम् ॥ ९२ ॥

अत्र वृद्धदारकालाभे त्रिवृन्मूलं ग्राह्यम् ॥

सोंठ दशभाग, विधारा दशभाग, जो विधारा कहीं नहीं मिले तो निसोत दशभाग, हरड तीन भाग, भुनी हींग चार भाग, सैंधानिमक एकभाग और चीता एक भाग लेवे, इन सबका एकत्र चूर्ण करके सेवन करे तो इससे उग्र ऊर्ध्ववात नष्ट होजाताहै ॥ ९१ ॥ ९२ ॥

## अथाध्मानलक्षणम् ।

साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥ आध्मानमिति जानीयाद्घोरं वातनिरोधजम् ॥ ९३ ॥

आटोपो गुडगुडाशब्दः भृशमाध्मातं वातपूर्णभस्त्रावत् । वातनिरोधजम् अधोवातनिरोधजम् ॥

जिस रोगमें नीचेकी वायुके रुकनेसे उदरमें अधिक पीडायुक्त गुडगुडाहट और पेट मसककी समान फूल जाय इस भयकर रोगको आध्मान कहतेहैं ॥ ९३ ॥

## अथाध्मानचिकित्सा ।

आध्माने लंघनं पूर्वं दीपनं पाचनं ततः ॥ फलवर्त्तिक्रियां कुर्याद्वस्तिकर्म च शोधनम् ॥ ९४ ॥

आध्मान रोगमे प्रथम लघन करावे और फिर अग्निदीपन करनेवाली और पाचन औषधि देवे,फलवर्ती क्रिया, पिचकारी लगावे और सशोधन भी करावै ॥ ९४ ॥

## अथ नारायणचूर्णम् ।

कर्षमात्रा भवेत्कृष्णा त्रिवृता स्यात्पलोन्मिता ॥ खण्डादपि पलं ग्राह्यं चूर्णमेकत्र कारयेत् ॥ मधुनाऽक्षमितं लिह्याच्चूर्णमाध्माननाशनम् ॥ ९५ ॥

पीपल १ तोला, निसोत ४ तोले और खाड ४ तोले इनका एकत्र चूर्ण करके उस चूर्णको सहतके साथ एक तोलाभर चाटे तो आध्मान तत्काल नष्ट होजाताहै ॥९५॥

## अथ दारुषट्कलेपः ।

दारुहैमवतीकुष्ठशताह्वाहिंगुसैन्धवैः॥लिंपेदुष्णैरम्लपिष्टैः शूलाध्मानयुतोदरम् ॥९६॥

हैमवती वचा ॥

देवदारु, वच,कूठ, सोया, हींग और सैंधानिमक,इनको तक्रमे अथवा नींबूके रसमें पीसकर गरम करके लेप करनेसे पेटका शूल और आध्मान नष्ट होजाताहै ॥ ९६ ॥

## अथ महानाराचरसः ।

अभयारग्वधो धात्री दन्ती तिक्ता स्नुही त्रिवृत् ॥ मुस्ता प्रत्येकमेतानि ग्राह्याणि पलमात्रया ॥ ९७ ॥ तानि संकुट्य

सर्वाणि जलाढकयुगे पचेत् ॥ तत्र तोयेऽष्टमं भागं कषायमवशेषयेत् ॥ ९८ ॥ निस्त्वग्जैपालबीजानि नवानि पलमात्रया॥ तनुवस्त्रधृतान्येव तस्मिन्क्वाथे शनैः पचेत्॥ ॥ ९९ ॥ ज्वालयेदनलं मंदं यावत्क्वाथो घनो भवेत् ॥ ततः खल्वे क्षिपेद्भागानष्टौ जैपालबीजतः ॥ १०० ॥ भागांस्त्रीन्नागराद्द्वौ च मरिचाद्द्वौ च पारदात् ॥ गन्धकाद्द्वौ च तानीह यावद्यामं विमर्दयेत् ॥ ॥ १०१ ॥ रसो नाराचनामाऽयं भक्षितो रत्तिकामितः ॥ जलेन शीतलेनैव रोगानेतान्विनाशयेत् ॥ १०२ ॥ आध्मानं शूलमानाहं प्रत्याध्मानं तथैव च ॥ उदावर्तं तथा गुल्ममुदराणि हरत्यसौ॥१०३॥ वेगे शांते तु भुञ्जीत शर्करासहितं दधि ॥ ततस्तत्सैंधवेनापि ततो दध्योदनं मनाक् ॥ १०४ ॥

अमलतास, आमला, जमालगोटा, कुटकी, थूहर और निसोत तथा नागरमोथा प्रत्येक चार २ तोला लेकर सबको एकत्र कूटकर पांचसौ तोले जलमे पकावै, जब पकते पकते आठवा भाग जल शेष रह जाय तब उसमें छुकले रहित नये जमालगोटेके बीज बारीक कपडेकी पोटलीमे बाधकर धीरे २ पकावै, अग्निकी मन्द २ आच देनेसे जब यह क्काथ गाढा हो जाय तब इसको खरलमे डालकर उसमें आठभाग जमालगोटेके बीज तीन भाग सोंठ, दो भाग कालीमिर्चै, दो भाग पारा और दो भाग गन्धक डालकर एक प्रहरतक खरल करे तो 'महानाराच' नामक रस तैयार होजाताहै, इस रसको शीतल जलके साथ खाय तो इससे आध्मान, शूल, आनाह, प्रत्याध्मान, उदावर्त, गुल्म और उदरके सम्पूर्ण रोग नष्ट होजातेहैं । रोगके वेग शान्त होनेपर रोगीको मिश्रीके साथ दही खिलावे और सैंधेनिमकके साथ कुछेक दही भात खिलावे ॥ ९७–१०४ ॥

## अथ प्रत्याध्मानलक्षणम् ।

विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् ॥ प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम् ॥ १०५ ॥

विमुक्तपार्श्वहृदयं पार्श्वहृदये विहाय जातम्, तदेव आध्मानं कफव्याकुलितानिलं कफेन अवरुद्धवातम् ॥

पसली और हृदयको छोडकर आमाशयमें उत्पन्न हुआ और जिसमें कफके कोपसे वायु रुकगई होय ऐसा जो आध्मान है उसको प्रत्याध्मान कहतेहैं ॥ १०५ ॥

## अथ प्रत्याध्मानचिकित्सा ।

प्रत्याध्माने समुत्पन्ने कुर्याद्वमनलंघने ॥ दीपनादीनि युञ्जीत पूर्ववद्बस्तिकर्म च ॥ १०६ ॥

प्रत्याध्मान उत्पन्न हुआ होय तो प्रथम वमन तथा लंघन करावै, दीपन तथा पाचन औषधियोंका उपयोग करे और आध्मानकी समान वस्तिकर्म करावे ॥१०६॥

## अथ वाताष्ठीलालक्षम् ।

नाभेरधस्तात्सञ्जातः सञ्चारी यदि वाऽचलः ॥ अष्ठीलावद्घनो ग्रन्थिरूर्द्ध्वमायत उन्नतः॥वाताष्ठीलां विजानीयाद्बहिर्मार्गनिरोधिनीम् ॥ १०७ ॥

अष्ठीला वर्तुलः पाषाणखण्डः । आयतः दीर्घः । वाताष्ठीलेति स्वरूपपरं न तु विशेषपरं व्यावर्तकाभावात् । बहिर्मार्गनिरोधिनी शिश्नभगगुदनिरोधिनी । तेन मूत्रमरुन्मलावरोधः सूचितः ॥

नाभीके नीचे गोल पथरीकी समान कठोर, भारी, ऊँची, ऊपरके भागमें लम्बी और स्थिर अथवा चंचल जो गाठ उत्पन्न होतीहै उसको वाताष्ठीला कहतेहैं । यह गाठ लिंग, योनि तथा गुदाको रोक देतीहै कि, जिससे विष्ठा, मूत्र और वायुका अवरोध होजाताहै ।

पित्तकी और कफकी अष्ठीला नहीं होतीहैं इसकारण यहा 'वाताष्ठीला' येही नाम समझना, परन्तु वातज अष्ठीला ऐसा भेद नही समझना ॥ १०७ ॥

अथ प्रत्यष्ठीलालक्षणम् ।

एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ॥ प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ १०८ ॥

एतामेव अष्ठीलामेव जठरे तिर्यगुत्थितामिति भेदः ॥

वेदनायुक्त और वायु, विष्ठा तथा मूत्रको रोकनेवाली जो अष्ठीला ( गाठ ) पेटमे होतीहै उसको प्रत्यष्ठीला कहतेहैं ॥ १०८ ॥

अथ वाताष्ठीलाप्रत्यष्ठीलाचिकित्सा ।

अष्ठीलायाः क्रिया कार्या गुल्मस्यान्तरविद्रधेः ॥ चूर्णं हिङ्ग्वादिकं चात्र पिबेदुष्णेन वारिणा ॥ १०९ ॥

गुल्मकी और अन्तरविद्रधिकी जो चिकित्सा कही है वही चिकित्सा अष्ठीलाकी भी करनीचाहिये और इस रोगमें नीचे कहा हुआ हिंग्वादि चूर्णको भी गरम जलके साथ पीनाचाहिये ॥ १०९ ॥

अथ हिंग्वादिचूर्णम् ।

हिङ्गुग्रन्थिकधान्यजीरकवचाचव्याग्निपाठाः शटी वृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम् ॥ पथ्यापौष्करवेतसाम्लहपुषा योज्यं तदेभिः कृतं चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरद्रवैः ॥ ११० ॥

भूनी हींग, पीपलामूल, धनिया, जीरा, वच, चव्य, चीता, पाठ, कचूर, बिषाविल, तीनों प्रकारके निमक, सोंठ, मिरच, पीपल, जवाखार, सज्जी, अनार, हरड, पोहकरमूल अमलबेत और हाऊबेर इन सबका एकत्र चूर्ण करके अदरखके रसकी तथा बिजौरे नीबूके रसकी भावना देवे तो हिंग्वादि चूर्ण सिद्ध होताहै ॥ ११० ॥

अथ तूनीलक्षणम् ।

अधो या वेदना याति वर्चोमूत्राशयोत्थिता ॥ भिन्दतीव गुदोपस्थं सा तूनी नामतो मता ॥ १११ ॥

उपस्थं शिश्नं भगश्च ॥

विष्ठाके स्थानसे तथा मूत्राशयसे उत्पन्न हुई गुदा, लिंग तथा योनिमें भेदने सरीखी पीडा करतीहुई जो वेदना नीचे को जातीहै उसको 'तूनी' कहतेहैं ॥ १११ ॥

अथ प्रतितूनीलक्षणम् ।

गुदोपस्थोत्थिता सैव प्रतिलोमं विधाविता ॥ वेगैः पक्वाशयं याति प्रतितूनीति सोच्यते ॥ ११२ ॥

अधस्तादुत्थिता ऊर्द्ध्वगामिनी वेगैर्वेदनावेगैर्मुहुर्मुहुः स्वभावोपशमोपलक्षितैः सा तु नामतः प्रतितूनी । सैव वेदना वेगैः उत्पत्तिप्रशमलक्षितैः ॥

जो वेदना गुदामेंसे तथा उपस्थमेंसे उठकर उलटी दौडकर वारवार शान्त होकर वेगपूर्वक पक्वाशयमें जाती होय उसको 'प्रतितूनी' कहतेहैं ॥ ११२ ॥

अथ तूनीप्रतितूनीचिकित्सा ।

तून्याश्च प्रतितून्याश्च प्रशस्ताः स्नेहवस्तयः ॥ पिबेद्वा स्नेहलवणं पिप्पल्यादिमथाम्बुना ॥ उष्णेन रामठं क्षारं प्रगाढमथ वा घृतम् ॥ ११३ ॥

तूनी अथवा प्रतितूनी हुई होय तो स्नेहकी पिचकारी लगावे, अथवा तेलमें सैंधानिमक डालकर पिये अथवा पिप्पल्यादि गणका क्वाथ पिये, अथवा हींग तथा जवाखारको गरमजलसे पिये, अथवा अच्छे प्रकारसे घी पीये ॥ ११३ ॥

अथ त्रिकशूललक्षणम् ।

स्फिगस्थ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं मतम् ॥ तत्र वातेन या पीडा त्रिकशूलं तदुच्यते ॥ ११४ ॥

कूलेकी दो अस्थियोंकी और पीठके बासकी दो अस्थियोंकी जो संधि है उनको त्रिक कहतेहैं । इस त्रिकस्थानमें वायुसे जो पीडा उत्पन्न होतीहै उसको त्रिकशूल कहतेहैं ॥ ११४ ॥

अथ त्रिकशूलचिकित्सा ।

कारयेद्वालुकास्वेदं त्रिकशूले प्रयत्नतः ॥

यद्वाऽधस्तात्करीषाग्निं धारयेत्सततं नरः ॥ ११५ ॥

त्रिकशूलमें उस मनुष्यको यत्नपूर्वक बालुकास्वेद देवै, अथवा उसकी खाटके नीचे वनके उपलोंकी अग्नि रखकर सेंक देवै ॥ ११५ ॥

## अथ त्रयोदशांगगुग्गुलुः।

आभाऽश्वगन्धा हपुषा गुडूची शतावरी गोक्षुरकश्च रास्ना ॥ श्यामा शताह्वा च शटी यवानी सनागरा चेति समं विचूर्ण्य ॥ ११६ ॥ सर्वैः समं गुग्गुलुमत्र दद्यात्क्षिपेदिहाज्यश्च तदर्द्धभागम ॥ तद्भक्षयेदर्द्धपिचुप्रमाणं प्रभातकाले पयसाऽथ यूषैः ॥११७॥ मद्येन वा कोष्णजलेन चाथ क्षीरेण वा मांसरसेन वापि ॥ त्रिकग्रहे जानुहनुग्रहे च वाते भुजस्थे चरणस्थिते च ॥ ११८ ॥ सन्धिस्थिते चास्थिगते च तस्मिन्मज्जास्थिते स्नायुगते च कोष्ठे ॥ रोगान्हरेद्वातकफानुविद्धान्वातेरितान्हृद्ग्रहयोनिदोषान् ॥ ११९ ॥ भग्नास्थिविद्धेषु च खञ्जतायां सगृध्रसीके खलु पक्षघाते ॥ महौषधं गुग्गुलुमेतमाहुस्त्रयोदशाङ्गं भिषजः पुराणाः ॥ १२० ॥

आभा बब्बूलः। तथा च "आभा बब्बूलपर्यायः कथितः कोविदैरिह" इति ॥

बबूर, असगध, हाऊबेर, गिलोय, सतावर, गोखरू, रासना, निसोत, सोया, कचूर, अजवायन और सोंठ इन सबको समान भाग लेकर चूर्ण करे और सब चूर्णकी बराबर गूगल लेवै और गूगलसे आधा घी लेवै, सबको एकत्र मिलाकर खूब कूटे तो त्रयोदशांग गूगल बनजाताहै। इस गूगलको प्रातःकाल दूधके साथ, वा यूषके साथ, अथवा मद्यके साथ, वा कुछेक गरम जलके साथ, वा केवल ताजे पानीके साथ अथवा मासके रसके साथ आधे तोले प्रमाण खाय तो इससे त्रिकशूल, जानुस्तम्भ, हनुग्रह, भुजागतवायु, पादगतवायु, सन्धिगतवायु, अस्थिगतवायु, मज्जागतवायु, स्नायुगतवायु, कोष्ठगतवायु, वातकफके समस्त रोग, वायुके रोग, छातीका स्तम्भ, योनिदोष, भग्नास्थिसे उत्पन्न हुए रोग, विद्धहोनेसे उत्पन्न हुए रोग, खंजता, गृध्रसी और पक्षाघात ये सम्पूर्ण रोग दूर होजातेहैं। प्राचीन वैद्य इस त्रयोदशांग गूगलको वायु सम्बन्धी रोगोंपर उत्तम औषधि कहतेहैं ११६-१२०

## अथ मुहुर्मूत्रमूत्रनिग्रहनिदानपूर्वकलक्षणम्।

मारुतेऽविगुणे वस्तौ मूत्रं सम्यक्प्रवर्तते ॥ विकारा विविधाश्चापि तस्मिन्दुष्टे भवन्ति हि ॥ १२१ ॥

अविगुणे अनुलोमे। विकाराः विविधाः मुहुर्मूत्रमूत्रनिग्रहादयः ॥

वायु जब दुष्ट नहीं होतीहै तब मूत्राशयमें अच्छे प्रकारसे मूत्रको प्रवर्तन करातीहै और जब वायु दुष्ट होजातीहै तब मुहुर्मूत्रण तथा मूत्रनिग्रह आदि अनेक प्रकारके विकारोंको उत्पन्न करतीहै। वारवार मूते उसको 'मुहुर्मूत्रण' कहतेहैं और जिसमे मूत्रका अवरोध (रुकावट) होताहै उसको मूत्रनिग्रह कहतेहैं, मुहुर्मूत्रण आदि विकार 'वस्तिवात' इस नामसे भी कहेजातेहैं ॥ १२१ ॥

## अथ मुहुर्मूत्रणमूत्रनिग्रहचिकित्सा।

बलामूर्वात्वचश्चूर्णं ससितं कर्षसम्मितम् ॥ पिबेत्कुडवदुग्धेन मुहुर्मूत्रणशान्तये ॥ १२२ ॥ पथ्याविभीतधात्रीणां चूर्णं चूर्णं मृतायसः ॥ मधुना सह संलीढं मुहुर्मूत्रणशान्तिकृत् ॥ १२३ ॥ यवक्षारस्य चूर्णन्तु संयोज्य सितया सह॥ भक्षयेन्नियतं तस्य प्रशमेन्मूत्रनिग्रहः ॥ १२४ ॥ कूष्माण्डस्य तु बीजानि बीजानि त्रपुसस्य च ॥ वस्तौ सन्धारयेत्तेन प्रशाम्येन्मूत्रनिग्रहः ॥ १२५ ॥ आमलक्याश्च कल्केन वस्तिभागं प्रलेपयेत् ॥ तेन प्रशाम्यति क्षिप्रं नियमान्मूत्रनिग्रहः ॥ १२६ ॥ मेहनस्याथ योनेर्वा

मुखस्याभ्यन्तरे शनैः ॥ घनसारयुतां वर्तिं धारयेन्मूत्रनिग्रहे ॥ १२७ ॥

खिरेंटी, चुरनहार ( चिन्हार ) और दालचीनी इनका चूर्ण करके मिश्री मिलाकर सोलह तोलेभर दूधके साथ, इस चूर्णको एक तोले प्रमाण खाय तो मुहुर्मूत्रणकी शांति होतीहै ।

हरड, बहेडा और आमला इनका चूर्ण तथा मारेहुए लोहेका चूर्ण सहतमें मिलाकर चाटे तो मुहुर्मूत्रकी शांति होतीहै ।

जवाखारके चूर्णको खाडके साथ मिलाकर सेवन करे तो मूत्रनिग्रह अवश्य नष्ट होजाताहै ।

पेठेके बीज और खीरेके बीजोंको पेडूके ऊपर पीसके रखनेसे मूत्रनिग्रह दूर होजाताहै ।

आमलेका कल्क बनाकर पेडूके ऊपर रखनेसे मूत्रनिग्रह तत्काल नष्ट होजाताहै । लिंगके अथवा योनिके मुखमें धीरे धीरे कपूरकी बत्ती चढावे तो मूत्रका अवरोध दूर होजाताहै ॥ १२२-१२७ ॥

## अथ गृध्रसीलक्षणम् ।

स्फिक्पूर्वा कटिपृष्ठोरुजानुजंघापदं क्रमात् ॥ गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ १२८ ॥ वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः ॥ वातजायां भवेत्तोदो देहस्यातीव वक्रता ॥ १२९ ॥ जानुजंघोरुसन्धीनां स्फुरणं स्तम्भता भृशम् ॥ वातश्लेष्मोद्भवायान्तु गौरवं वह्निमार्दवम् ॥ तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥ १३० ॥

गृध्रसी वातजा केवला स्फिगादिपदपर्यंतम स्तम्भरुक्तोदैर्गृह्णाति । क्रमाद् वृद्धिक्रमात् । तेन यथायथा वर्द्धते तथातथा स्फिगादीनि आक्रामति नात्र ग्रहणे निर्देशक्रमनियमः ॥ तथा मुहुः स्पन्दते स्फिगादिषु शिराकम्पं करोतीत्यर्थः ॥

कूलेकी संधि, कमर, पीठ, ऊरु, जानु, जंघा और पांव इनमें स्तब्धता, वेदना तथा सुई चुभोने सरीखी पीडा और कूलेकी संधिआदि शिरा वारम्वार कांपें, यह गृध्रसी रोग कहाजाताहै, अब यह रोग जितना जितना अधिक बढताजाताहै उतना उतना ही कूले आदिकी संधियोंको विशेष दबाताहै ।

वातज और कफज इसप्रकार गृध्रसी दो प्रकारकी है तहां वातकी गृध्रसी रोगमें सुई चुभोने सरीखी पीडा होतीहै, देह अत्यत बांका होजाताहै घुटने, जंघा और सांथलकी सन्धियोंकी शिरा कॉपतीहैं और बहुत स्तम्भ होताहै और जो वात तथा कफ दोनोसे उत्पन्नहुई गृध्रसी होय तो शरीरमें भारीपन, अग्निकी मंदता, तन्द्रा, मुखसे पानीका गिरना और अन्नपर अरुचि होतीहै ॥ १२८-१३० ॥

## अथ गृध्रसीचिकित्सा ।

गृध्रस्यार्तं नरं सम्यग्रेकेण वमनेन वा ॥ ज्ञात्वा निरामं दीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ १३१ ॥ नादौ वस्तिविधिं कुर्याद्यावदूर्द्ध्वं न शुध्यति ॥ स्नेहो निरर्थकः स स्याद्भस्मन्येव हुतं यथा ॥ ॥ १३२ ॥ तैलमेरण्डजं प्रातर्गोमूत्रेण पिबेन्नरः ॥ मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ १३३ ॥ तैलं घृतं चार्द्रकमातुलुंगरसं सचक्रं सगुडं पिबेद्वा ॥ कट्यूरुपृष्ठत्रिकशूलगुल्मगृध्रस्युदावर्तहरः प्रयोगः ॥ १३४ ॥ निष्कुष्यैरण्डबीजानि पिष्ट्वा क्षीरे विपाचयेत् ॥ तत्पानन्तु कटीशूले गृध्रस्यां परमौषधम् ॥ १३५ ॥ एरण्डमूलं बिल्वश्च बृहती कण्टकारिका॥ कषायो रुचकोपेतः पीतो वंक्षणवस्तिजम् ॥ १३६ ॥ गृध्रसीजं हरेच्छूलं चिरकालानुबन्धि च ॥ गोमूत्रैरण्डतैलाभ्यां कृष्णाचूर्णं पिबेन्नरः ॥ दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ १३७ ॥ सिंहास्यदन्तीकृतमालकानां पिबेत्कषायं रुवुतैलमिश्रम्॥ यो गृध्रसीनष्टगतिः प्रसुप्तः स शीघ्रगः स्याद्धि किमत्र चित्रम् ॥ ॥ १३८ ॥ बृहन्निम्बतरोः सारो वारिणा

परिपेषितः ॥ स पीतो नाशयेत्क्षिप्रमसाध्यामपि गृध्रसीम् ॥ १३९ ॥ शेफालिकादलैः क्वाथो मृद्वग्निपरिपाचितः ॥ दुर्वारं गृध्रसीरोगं पीतमात्रः प्रणाशयेत् ॥ १४० ॥

शेफालिका निर्गुण्डी ॥

गृध्रसीवातसे पीडित मनुष्यको अच्छेप्रकार विरेचन और वमन देकर आमरहित और दीप्ताग्निको जानकर स्नेहकी पिचकारी लगावै, जबतक वमनरूप ऊर्ध्व शोधन नहीं होता तबतक राखमें हवनकी समान स्नेहकी पिचकारी व्यर्थ होतीहै ।

प्रातःकाल गोमूत्रके साथ अण्डीका तेल एक महीने तक पिये तो गृध्रसीवात और ऊरुग्रह नष्ट होजाताहै ।

तेल, घी अदरखका रस और विजोरेका रस इन सबको एकत्र मिलाकर उसमें चूकेका रस अथवा गुड डालकर पियै तो कटिशूल, ऊरुशूल, पृष्ठशूल, त्रिकशूल, गुल्म, गृध्रसी और उदावर्त ये सब रोग नष्ट होजातेहैं ।

अण्डके वीजोंको छीलकर उनके छिलके अलग करके गिरीको दूधमें पीसकर पीनेसे कटिशूल और गृध्रसी वात नष्ट होतीहै, यह परमौषधि है ।

अण्डकी जड, वेलगिरी, बडी कटेरी और छोटी कटेरी इनके क्वाथमें कालानिमक डालकर पीनेसे वंक्षणशूल, वस्तिशूल और गृध्रसीसम्बन्धी शूल बहुत दिनोंका पुराना भी नष्ट होजाताहै ।

गोमूत्रके और अण्डके तेलके साथ पीपलका चूर्ण पिये तो बहुत दिनोंकी पुरानी और कफ तथा वात दोनोंसे उत्पन्न हुई गृध्रसी नष्ट होतीहै ।

गृध्रसीसे मनुष्यकी चलनशक्ति नष्ट होगई होय और जो जड होगया होय वह मनुष्य अडूसा, जमालगोटा और चिरायता इनका क्वाथ बनाकर उसमें अण्डीका तेल मिलाकर पिये तो अत्यन्त शीघ्र गमन करनेकी शक्ति उत्पन्न होतीहै ।

बकायनके भीतरकी छालको पानीमें पीसकर पीनेसे असाध्य गृध्रसी भी नष्ट होजातीहै ।

निर्गुण्डीके पत्तोका क्वाथ मन्द मन्द अग्निसे पचाकर पीनेसे असाध्य गृध्रसी भी नष्ट होजातीहै ॥ १२१–१४० ॥



## अथ रास्नागुग्गुलुः ।

रास्नायास्तु पलं चैकं पञ्च कर्षाणि गुग्गुलोः ॥ सर्पिषा वटिकां कृत्वा भक्षयेद्गृध्रसीहरीम् ॥ १४१ ॥

चार तोलेभर रास्ना और पांच तोलेभर गूगल इनको एकत्र मिलाकर घीके योगसे गोली बनाकर सेवन करनेसे गृध्रसी नष्ट होजातीहै ॥ १४१ ॥

## अथ रास्नासप्तकक्वाथः ।

रास्नामृतारग्वधदेवदारुत्रिकण्टकैरण्डपुनर्नवानाम् ॥ क्वाथं पिबेन्नागरचूर्णमिश्रं जंघोरुपृष्ठत्रिकपार्श्वशूली ॥ १४२ ॥

रासना, गिलोय, अमलतास, देवदारु, गोखुरू, अण्ड और पुनर्नवा ( सांट ) इनका क्वाथ बनाकर उसमें सोठका चूर्ण डालकर पीनेसे जघागत वायु, ऊरुगत वात, पृष्ठगत वात, त्रिकशूल और पार्श्वशूल नष्ट होजाताहै ॥ १४२ ॥

## अथ पथ्यादिगुग्गुलुः ।

पथ्याविभीतामलकीफलानां शतं क्रमेण द्विगुणाभिवृद्धम् ॥ प्रस्थेन उक्तश्च पलंकषाणां द्रोणे जले संस्थितमेकरात्रम् ॥ ॥ १४३ ॥ अर्द्धावशिष्टं क्वथितं कषायं भाण्डे पचेत्तत्पुनरेव लौहे ॥ अमूनि वह्नेरवतार्य दद्याद्द्रव्याणि सञ्चूर्ण्य पलार्द्धकानि ॥ १४४ ॥ विडङ्गदन्तीत्रिफलागुडूचीकृष्णात्रिवृन्नागरकोषणानि ॥ यथेष्टचेष्टस्य नरस्य शीघ्रं हिमाम्बुपानानि च भोजनानि ॥ १४५ ॥ निषेव्यमाणो विनिहन्ति रोगान्सगृध्रसीं नूतनखञ्जताश्च प्लीहानमुग्रं जठराग्निगुल्मं पाण्डुत्वकण्डूवमिवातरक्तम् ॥ १४६ ॥ पथ्यादिको गुग्गुलुरेष नाम्ना ख्यातः क्षितावप्रमितप्रभावः ॥ बलेन नागेन समं मनुष्यं जवेन कुर्यात्तुरगेण तुल्यम् ॥ १४७ ॥ आयुःप्रकर्षं विदधाति चक्षुर्बलं तथा पुष्टिकरो विषघ्नः ॥ क्षतस्य सन्धा-

नकरो विशेषाद्रोगेषु शस्तः सकलेषु तज्ज्ञैः ॥ १४८ ॥

हरड १००, बहेडे २००, आमले ४०० और गूगल ६४ तोले, इन सबको १०२४ एक हजार चौबीस तोले जलमें एक रात्रिभर भिगो रक्खे फिर इसका अर्द्धावशेष क्काथ बनाकर और छानकर लोहेके बासनमें पकावे, जब अच्छा गाढा होजाय तब अग्नि-परसे उतारकर इसमें वायविडंग, जमालगोटा, हरड, बहेडा, आमला, गिलोय, निशोत, पीपल, सोंठ और कालीमिर्च इनका दो दो तोले चूर्ण डालै यह पथ्यादि गुग्गुलु सिद्ध होताहै । इस गूगलको सेवन करनेवाला मनुष्य यथेष्ट विहार करे । और इसपर शीतल जल पिये तथा शीतलही पदार्थोंका भोजन करे । गूगलको सेवन करनेसे गृध्रसी, नवीन खञ्जता, अत्यन्त उग्र प्लीहा, गुल्म, पांडुरोग, मन्दाग्नि, कण्डू, वमन, वातरक्त और विशेष करके गृध्रसी वात, नष्ट होतीहै । यह पथ्यादि नामवाला गूगल पृथिवीमें अत्यन्त प्रभाववाला है। इसको सेवन करनेवाला मनुष्य बलमें हाँथी समान, वेगमें घोडेकी समान होजाताहै । तथा आयुकी वृद्धि करता है, नेत्रोंकी ज्योति बढाताहै, शरीरकी पुष्टि करताहै, विषको दूर करताहै, घावको भरताहै और विशेष करके सम्पूर्ण रोगोंमें हितकारी है ऐसा वैद्योंका मत है ॥ १४२–१४८ ॥

## अथ खंजपंगुलक्षणम् ।

वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥ खंजस्तदाभवेज्जन्तुः पंगुः सक्थ्नोर्द्वयोर्वधात् ॥ १४९ ॥

सक्थ्नः कट्यादिगुल्फस्य कण्डरां महास्नायुम् आक्षिपेद्गमनादौ कम्पयेत् । वधाद्गमनादिक्रियाघातात् ॥

कटिमें रहनेवाली वायु कुपित होकर कमरसे लेकर पाँवके गुल्फोंतककी जो मोटी नसें हैं उनको जब खींचती है अर्थात् चलते समय कँपातीहै तब वह मनुष्य खञ्ज अर्थात् लंगडा होजाताहै ।

कमरसे पांवकी गांठोतक दोनों साँथलोंकी चलनेकी क्रिया नष्ट होजातीहै उसको पंगु (लूला) कहतेहैं ॥१४९॥

## अथ खञ्जपंगुचिकित्सा ।

उपाचरेदभिनवं खंजं पंगुमथापि च ॥ विरेकास्थापनस्वेदगुग्गुलुस्नेहवस्तिभिः ॥ १५० ॥

खञ्जता अथवा पंगुता रोग जो थोडे दिनोंका उत्पन्न हुआ होय तो विरेचनसे, निरूह वस्तिसे, स्वेदनसे, गूगलको सेवन कराकर तथा स्नेह वस्तिओंसे चिकित्सा करे ॥ १५० ॥

## अथ कलायखंजलक्षणम् ।

कम्पते गमनारम्भे खंजन्निव च लक्ष्यते ॥ कलायखंजं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ १५१ ॥

गमनारम्भे कम्पते एतस्य खंजादयमेव भेदः । कलायखञ्ज इति शास्त्रे रूढा संज्ञा न तु यौगिकी ॥

चलते समय लँगडेकी समान चले या काँपे और जिसके सब सन्धिबन्धन शिथिल होजायँ उस मनुष्यको कलायखञ्ज हुआ जानना । इसमें चलते समय कम्प होय और लङ्गडाता चले इस लिये खञ्जता और कलायखञ्जतामें अन्तर है । ( कलायखञ्ज ) यह नाम वैद्यकशास्त्रमें अर्थके अनुसार नहीं होनेसे यौगिक नहीं किन्तु रूढ है ऐसा जानना ॥ १५१ ॥

## अथ कलायखञ्जचिकित्सा ।

क्रमः कलायखञ्जस्य खञ्जपङ्गोरिव स्मृतः ॥ विशेषात्स्नेहनं कर्म कार्यमत्र विचक्षणैः ॥ १५२ ॥

कलायखञ्जताकी चिकित्सा खञ्जता और पंगुताकी समान करनी चाहिये और इसमें विशेष करके स्नेहक्रिया करे ॥ १५२ ॥

## अथ क्रोष्टुकशीर्षलक्षणम् ।

वातशोणितजः शोथो जानुमध्ये महारुजः ॥ ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ॥ १५३ ॥

क्रोष्टुः श्रृगालः ।

वायुसे तथा रुधिरसे घुटनोंके मध्यमें गीदडके मस्तककी समान बहुत बडी और मोटी अत्यन्त

पीडावाली सूजन होती है उसको क्रोष्टुकशीर्ष कहते हैं ॥ १५३ ॥

अथ क्रोष्टुकशीर्षचिकित्सा।

गुग्गुलुं क्रोष्टुशीर्षे तु गुडूचीत्रिफलाम्भसा॥
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम् १५४

गुग्गुलुं शुद्धं कर्षमितं गुडूचीत्रिफलाम्भसा गुडूचीपथ्याविभीतामलकैः समुदितैः चतुष्कर्षमितैः प्रस्थमितेन जलेन पक्का क्काथेन उष्णेन पलद्वयमितेन गुग्गुलुं पिबेत्। एरण्डतैलं कर्षमितं क्षीरेण गव्येन पलपरिमितेन पिबेत्। वृद्धदारकचूर्णं वा दुग्धेन गव्येन पलचतुष्टयमितेन पिबेत् ॥

रसैस्तित्तिरमांसस्य पीतैर्गुग्गुलसंयुतैः ॥
वातरक्तक्रियाभिश्च जयेज्जम्बूकमस्तकम् ॥ १५५ ॥

गिलोय, हरड, बहेडा और आमला यह प्रत्येक औषधि चार चार तोले लेकर ६४ चौसठ तोले जलमें पकाकर क्काथ बनावे। जब आठ तोले जल शेष रहै तब इस गरमागरम क्काथके साथ शुद्ध किये गूगलको एक तोलाभर खाय तो क्रोष्टुकशीर्ष रोग नष्ट होजाता है। दूधके साथ अंडीका तेल अथवा विधारेको पीनेसे क्रोष्टुकशीर्षरोग नष्ट होजाताहै। जो अंडीका तेल पीना होय तो तेल एक तोला और गायका दूध चार तोले लेना चाहिये। विधारेका चूर्ण पीना होय तो गायके सोलह तोले दूधके साथ पिये।

गूगलके साथ तीतरके मासका रस पिये, तथा वातरक्तकी चिकित्साके समान क्रोष्टुशीर्षकी चिकित्सा करे ॥ १५४ ॥ १५५ ॥

अथ खल्लीलक्षणम्।

खल्ली तु पादजंघोरुकरमूलावमोटिनी १५६
अवमोटिनी परिवर्तनशीला ॥

जिससे पाव, जघा, साथल और हाथकी जड ये सब ठिठरा जायँ उसको खल्लीवात कहतेहैं ॥ १५६ ॥

अथ खल्लीचिकित्सा।

कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः ॥
सुखोष्णो मर्दने योज्यः खल्लीशूलनिवारणः ॥ १५७ ॥

कूठ और सैंधेनिमकका कल्क बनाकर तेल और चूका मिलाकर कुछेक गरम करके मर्दन करनेसे खल्लीवात नष्ट होजातीहै ॥ १५७ ॥

अथ वातकण्टकलक्षणम्।

रुक्पादे विषमे न्यस्ते श्रमाद्वा जायते यदा ॥ वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ १५८ ॥

पांव विषमरीतिसे पडे अथवा परिश्रमसे वातके कारण जो घुटनोंमे पीडा होतीहै उसको वातकण्टक कहते हैं ॥ १५८ ॥

अथ वातकण्टकचिकित्सा।

रक्तावसेचनं कुर्यादभीक्ष्णं वातकण्टके ॥
पिबेदेरण्डतैलं वा दहेत्सूचीभिरेव च १५९॥
अभीक्ष्णं पुनः पुनः ॥

वातकटक हुआ होय तो वारंवार रुधिर निकलवावे, अथवा अंडीका तेल पिये अथवा सुइयोंसे दागदेवे१५९॥

अथ पाददाहलक्षणम्।

पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः॥
विशेषतश्चङ्क्रमणे पाददाहं तमादिशेत् १६०

पित्त तथा रुधिरसयुक्त वायु पावोंमें दाह करतीहै और चलते समय विशेष करके दाह (जलन) होताहै इसको पाददाह कहतेहैं ॥ १६० ॥

अथ पाददाहचिकित्सा।

वातरक्तक्रमं कुर्यात्पाददाहे विशेषतः ॥
मसूरविदलैः पिष्टैः शृतशीतेन वारिणा ॥ चरणौ लेपयेत्सम्यक्पाददाहप्रशान्तये ॥ १६१ ॥

विशेष करके पाददाहरोगमें वातरक्तकी चिकित्सा करे

औंटायेहुए जलको शीतल करके उत्तम मसूरको पीसकर पावपर लेपकरे, इससे पाददाह नष्ट होजाताहै ॥ १६१ ॥

नवनीतेन संलिप्तौ वह्निना परितापितौ ॥ मुच्येते चरणौ क्षिप्रं परितापात्सुदारुणात् ॥ १६२ ॥

पांवपर नैंनी घीका लेप करके अग्निमें सेके तो दारुण पाददाह भी नष्ट होजाताहै ॥ १६२ ॥

## अथ पादहर्षलक्षणम् ।

हृष्येते चरणौ यस्य भवतश्च प्रसुप्तकौ ॥ पादहर्षः स विज्ञेयः कफवातप्रकोपजः १६३

हृष्येते रोमाञ्चितौ भवतः । प्रसुप्तकौ सिनिसिनीयुक्तौ ॥

कफके तथा वायुके कुपित होनेसे दोनों पांव रोमांच युक्त होकर झनझन करने लगते हैं, उसको पादहर्ष कहतेहैं ॥ १६३ ॥

## अथ पादहर्षचिकित्सा ।

पादहर्षे तु कर्तव्यः कफवातहरो विधिः ॥ १६४ ॥

पादहर्ष रोगमें कफ तथा वायुको हरणकरनेवाली चिकित्सा करनी चाहिये ॥ १६४ ॥

## अथ दण्डकाक्षेपादिचतुर्विधाक्षेपकाणां संप्राप्तिपूर्वकसामान्यलक्षणम् ।

यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ॥ तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चलः ॥ मुहुराक्षेपणाद्वायुराक्षेपक इति स्मृतः ॥ १६५ ॥

मुहुर्मुहुर्देहमाक्षिपति गजारूढस्य इव पुरुषस्य गात्रं दोलयति। किंविशिष्टो मारुतः मुहुश्चलः वारंवारं सञ्चरणशीलः अयं वायुराक्षेपक इति स्मृतः । देहस्य यत् मुहुराक्षेपणं चालनं ततः ॥

जब क्षेपकको प्राप्त हुई वायु सर्व धमनियोंमें प्राप्त होतीहै तब वारंवार संचरण करनेवाली उस वायुसे मनुष्य हलता है जिस प्रकार हाथीपर बैठेहुए मनुष्यका शरीर हलताहै, इस कारण शरीरको वारवार हलानेवाली होनेसे इसको आक्षेपक कहतेहैं ॥ १६५ ॥

पित्तश्लेष्मान्वितो वायुर्वायुरेव च केवलः॥ कुर्यादाक्षेपकं चान्यं चतुर्थमभिघातजम् ॥ १६६ ॥

पित्तान्वितः श्लेष्मान्वितश्च केवलश्च वायुः आक्षेपकत्रितयं कुर्यात् । अन्यं चतुर्थमभिघातजम् । अन्यो दण्डात् अभिघातजो वायुः चतुर्थमाक्षेपकं कुर्यादित्यर्थः ॥

पित्तसंयुक्त वायुसे उत्पन्न हुआ, कफ सयुक्त वायुसे उत्पन्न हुआ, केवल वायुसे उत्पन्न हुआ और अभिघातसे उत्पन्न हुआ इस प्रकार आक्षेपक रोग चार प्रकारका है॥ १६६ ॥

## अथ केवलवातोत्पन्नाक्षेपकलक्षणम् ।

पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः ॥ दण्डवत्स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः ॥ १६७ ॥

अयं वातजाक्षेपको दण्डाख्यः सोऽनुपक्रमः । स्वस्वभावादेव असाध्यः । अत्र च मुहुर्मुहुराक्षेपणं बोद्धव्यम् ॥

वायुसे हाथ, पांव, मस्तक, पीठ और श्रोणी ये जकड जायँ, जिसमें सम्पूर्ण शरीर लकडीकी समान जडक जाय उसको दडापतानक कहतेहैं । केवल वायुसे उत्पन्न हुआ और जिसमें शरीर हाथीपर बैठेकी समान हालाकरे ऐसा यह दडकाक्षेप स्वभावसेही असाध्य है ॥ १६७ ॥

## अथ कफयुक्तवातोत्पन्नदंडापतानकलक्षणम् ।

कफावृतो यदा वायुर्धमनीष्वेव तिष्ठति ॥ स दण्डवत्स्तम्भयति कृच्छ्रो दण्डापतानकः ॥ १६८ ॥

दण्डापतानकः, स आक्षेपको दण्डापतानकाख्यः । कृच्छ्रः कष्टसाध्यः । अत्र च मुहुर्मुहुराक्षेपणं बोद्धव्यम् । आगन्तुजाक्षेपकस्य लक्षणं सामान्यमेव बोद्धव्यम् ॥

जब कफसे व्याप्त वायु धमनिओंमे रहती है तब धमनी लकडीकी समान स्तब्ध होजाती हैं और शरीर हाथीपै बैठेहुएकी समान वारवार हिलाकरताहै इसको दंडापतानकाक्षेप रोग कहते हैं, यह दंडापतानकाक्षेप कष्टसाध्य है॥

अभिघातकृताक्षेपक जो आगन्तुजाक्षेपक कहाजाताहै उसके लक्षण अलग नहीं कहे हैं अत एव आक्षेपकके जो सामान्य लक्षण कहेहैं वे उसके भी जानने चाहिये पित्तसयुक्त वायुसे उत्पन्न हुए आक्षेपकके लक्षण भी अलग नही देखनेमें आते इसकारण उसके लक्षण भी सामान्य लक्षणोसे न्यूनाधिक रहित जानने ॥ १६८ ॥

## अथ चतुष्प्रकाराक्षेपकचिकित्सा ।

## तत्र महाबलातैलम् ।

बलामूलकषायस्य दशमूलीशृतस्य च ॥ यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ॥ ॥ १६९ ॥ अष्टावष्टौ स्मृता भागास्तैलादेकस्तदेकतः ॥ पचेदवाप्य मधुरं गणं सैन्धवसंयुतम् ॥ १७० ॥ तथाऽगुरुं सर्जरसं सरलं देवदारु च ॥ मञ्जिष्ठां पद्मकं कुष्ठमेलां कालाख्य सारिवाम् ॥ ॥ १७१ ॥ मांसीं शैलेयकं पत्रं तगरं सारिवां वचाम् ॥ शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥ १७२ ॥ तत्साधुसिद्धं सौवर्णे राजते मृन्मयेऽपि वा ॥ प्रक्षिप्य कलशे सम्यक्स्वनुगुप्तं निधापयेत् ॥ १७३ ॥ एतन्महाबलातैलं प्रयुक्तमविलम्बितम् ॥ सर्वानाक्षेपकादींस्तु वातव्याधीन्व्यपोहति ॥ १७४ ॥ हिक्कां श्वासमधीमन्थं गुल्मं कासं सुदुस्तरम् ॥ षण्मासादुपयुक्तं तदन्त्रवृद्धिंश्च नाशयेत् १७५॥ यथाबलमलं मात्रां सूतिकायै च दापयेत्॥ या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥ १७६ ॥ क्षीणवाते मर्महते ह्यभिघातहते तथा ॥ भग्ने श्रमाभिपन्ने च सर्वथैतत्प्रयुज्यते ॥ १७७ ॥ एतद्धि राज्ञा कर्तव्यं कर्तव्यं राजपूजितैः ॥ सुखिभिः सुकुमारैश्च धनिभिर्मानवैः सदा ॥ १७८ ॥

एकतः एकत्र । अवाप्य प्रक्षिप्य ॥

खिरैटीका क्वाथ आठभाग, दशमूलका क्वाथ आठ भाग, जौ, कालीमिर्च और कुलथीका क्वाथ आठभाग, दूध आठ भाग और तेल एक भाग, इन सबको एक बासनमें डालकर और उसमें जीवनीय गणकी औषधि सैंधानिमक, अगर, राल, धूपसरल, देवदारु, मजीठ, पद्माख, कूठ, इलायची, कालीसारिवा, वालछड ( जटामासी ), छारछवीला, तेजपत्र, तगर, गौरीसारिवा, वच, सतावर, असगन्ध, सोया और पुनर्नवा इन सब पदार्थोंको डालकर यथाविधिसे तेलको पकावै तौ महाबला नामक तैल तैयार होताहै । इस तेलके सिद्ध होनेके पश्चात् सोने, चादी, अथवा मट्टीके कलशेमें भरकर उत्तमरीतिसे रखदेवे । इस तेलका प्रयोग करनेसे सर्व प्रकारकी वातव्याधि नष्ट होती हैं विशेष करके, आक्षेपकादि रोग नष्ट होते हैं तथा हिचकी, श्वास, अधिमन्थ, गुल्म और भयंकर खाँसी भी दूर होजाती है और छः महीनेके प्रयोग करनेसे अन्त्रवृद्धिका भी नाश होजाताहै बल और मलके अनुसार प्रसूता स्त्रीको इस तेलकी मात्रा देवे ॥

जिन स्त्रियोंको गर्भ रहनेकी इच्छा है तथा जो पुरुष वीर्यक्षीण होगये हैं उनके लिये भी यह तेल महाहितकारी है । क्षीणवातपर, मर्महत अभिघातपर, अन्यान्य अभिघातोपर, टूटे हुएपर और परिश्रमके दुःखपर अच्छे प्रकारसे इस तेलका प्रयोग करना चाहिये । राजा, राजमान्य, सुखी लोग, सुकुमार लोग और धनवान् मनुष्योंको यह तेल सदैव रखना चाहिये ॥ १६९–१७८ ॥

## अथान्तरायामलक्षणम्।

अंगुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥ स्नायुप्रतानमनिलस्तदाक्षिपति वेगवान् ॥ १७९ ॥ विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन्॥ अभ्यन्तरे धनुरिव यदा नमति मानवः॥ तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली ॥ १८० ॥

यदा स बली मारुतोऽभ्यन्तरायामं कुरुते॥ तदंगुल्यादिसंश्रितोऽनिलाः। स्नायुरत्र उपलक्षणम्। तेन शिराकण्ठयोरपि ग्रहणम्। आक्षिपति कम्पयति। तदा स मानवः विष्टब्धाक्षः स्तब्धनेत्रः भग्नपार्श्वः भग्ने इव पार्श्वे यस्य सः॥

जब बलवान् वायु अंतरायामको करती है तब अंगुली, गुल्फ, पेट, हृदय, वक्षःस्थल और गला इनमें रहनेवाली पवन वेगवान् होकर स्नायुके समूहको, शिराओंको और कण्ठको भी कँपाती है और उस समय उस मनुष्यकी आँखें पथराजाती हैं, ठोडी जकडजाती है, पसली टूटीकी समान होती है, कफकी वमन करताहै और वह छातीसे कमानकी समान नव जाताहै ॥ १७९ ॥ १८० ॥

## अथ बाह्यायामलक्षणम्।

महाहेतुर्बली वायुः सशिराः स्नायुकण्डराः॥ मन्यापृष्ठाश्रिता बाह्याः संशोष्यानामयेद्बहिः॥ १८१ ॥ यत्र तं बहिरायामं प्रवदन्ति भिषग्वराः॥ तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ॥ १८२ ॥

वक्षःकट्यूरुभञ्जनम् तत्रापि यो वक्षःकट्यूरून्भञ्जति संमर्दयति तमसाध्यं प्राहुः ॥

बडे बडे कारणोंसे प्रबल हुई वायु नाडीमें तथा पीठमें रहनेवाली पीठकी शिराओंको, स्नायुओंको तथा कंडराओंको सुखा देती है उससे मनुष्य पीठकी ओर कमानकी समान नव जाताहै इस रोगको उत्तम वैद्य बाह्यायाम कहते हैं, यह रोग असाध्य है। और इसमें भी जो छाती, कमर, तथा जाँघलोंमें मर्दनकी समान पीडा होती होय तो अत्यत असाध्य है ॥ १८१ ॥ १८२ ॥

## अथ चिकित्सा।

बाह्यायामेऽन्तरायामे विधेयार्दितवत्क्रिया ॥ १८३ ॥

जो अंतरायाम और बाह्यायाम उत्पन्न हुआ होय तो अर्दितकी समान चिकित्सा करे ॥ १८३ ॥

## अथ धनुस्तम्भलक्षणम्।

धनुस्तुल्यो नमेद्यस्तु स धनुस्तम्भसंज्ञितः ॥ विवर्णबद्धवदनः स्रस्तांगो नष्टचेतनः ॥ प्रस्विद्येच्च धनुस्तम्भो दशरात्रं न जीवति ॥ १८४ ॥

अन्तरायामेऽङ्गुल्यादिषु आक्षेपः स्तब्धाक्षत्वादिकश्च भवति। धनुस्तम्भे तु धनुर्वन्नमनमात्रमिति एतयोर्भेदः। विवर्णबद्धवदनः बन्धोऽत्र चिबुकस्य ज्ञेयः॥

वायुके कोप होनेसे मनुष्य कमानकी समान नव जाता है उसको धनुर्वात कहते हैं, शिथिल अगोंवाला, भयानकता युक्त, पसीने सहित और जिसका मुख फैलगया हो तथा विपरीत रंगवाला होगया होय तो ऐसा धनुर्वातका रोगी दश रात्रिके भीतर मर जाताहै।

अंतरायाममें तो अंगुली आदियोंमें आक्षेप होताहै तथा आखे पथरा जाती हैं और धनुर्वातमें तो केवल कमानकी समान नवजाताहै इस कारण अतरायाम और धनुर्वातमें भेद है ॥ १८४ ॥

## अथ कुब्जकलक्षणम्।

हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् ॥ क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत् ॥ १८५ ॥

यदेत्युक्त्वा यदि वेति विकल्पार्थस्तेन न पुनरुक्तिदोषः। ननु अन्तरायामः क्रोडनतो भवति। बहिरायामः पृष्ठतो भवति ताभ्यामस्य को भेदः, उच्यते—अन्तरायामबहिरायामयोः प्रकृतस्यैव अन्तःशरीरस्य बहिःशरीरस्य च नमनम् अत्र तु हृदयं पृष्ठं वा शरीराद्बहिर्भवतीति भेदः॥

कोपको प्राप्त हुई वायु छातीको अथवा पीठको अनुक्रमसे ऊँचे और वेदनायुक्त कर देवे इस रोगको कुब्जक कहतेहैं।

शंका—अंतरायाममे छातीसे नवताहै और बाह्यायाममें पीठसे नवताहै फिर इस कुब्जकमें कौनसा भेद रहा।

समाधान—अतरायाममें और बाह्यायाममे शरीर जैसा तैसा ही रहकर छातीसे अथवा पीठसे नवताहै परतु कुब्जकमे तो छाती तथा पीठ शरीरके भागसे बाहर निकलजाती है यह भेद है॥ १८५॥

## अथ धनुर्वातकुब्जकचिकित्सा।

**बाह्यायामेऽन्तरायामे धनुःस्तम्भे च कुब्जके॥ योज्यं प्रसारणीतैलं तेन तेषां शमो भवेत्॥ १८६॥ वातव्याधिषु सामान्या याः क्रियाः कथिताः पुरा॥ कर्तव्या एव ताः सर्वास्तैलमेतद्विशेषतः १८७॥**

धनुर्वात, कुब्जक, अंतरायाम और बाह्यायाम उत्पन्न हुआ होय तो प्रसारिणीतैल (जो कि हनुग्रहकी चिकित्सामें कह चुके हैं) का उपयोग करनेसे ये रोग शांत होजाते हैं। प्रथम वातव्याधियोंमें जो सामान्य चिकित्सा कही है वह सब चिकित्सा इसमें अवश्य करनी चाहिये और विशेष करके प्रसारिणीतैलका उपयोग करना चाहिये॥ १८६॥ १८७॥

## अथापतंत्रकलक्षणम्।

**क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते॥ पीडयन्हृदयं गत्वा शिरःशंखौ च पीडयन्॥ १८८॥ धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तथा॥ स कृच्छ्रादुच्छ्वसेदुच्चैः स्तब्धाक्षोऽथ निमीलकः॥ कपोत इव कूजेच्च निःसञ्ज्ञः सोऽपतन्त्रकः॥ १८९॥**

**स्थानात्पक्वाशयात्। ऊर्ध्वं शिर उद्दिश्य। आक्षिपेच्चालयेत्। अथ निमीलकः। अथ वा निमीलिताक्षः। यत्रैतानि भवन्ति सोऽपतन्त्रकः॥**

अपने कारणोंसे कोपको प्राप्त हुई वायु पक्काशयमेंसे ऊपर जाकर हृदयको पीडित करैहै, मस्तक तथा कनपटिओको भी पीडित करैहै, गात्रको कमानकी समान नवादेतीहै और कँपातीहै और चित्तको मोहयुक्त करतीहै जिससे कि यह मनुष्य अत्यत कठिनतासे ऊंचाश्वास लेताहै, आंखोंको खोलदेताहै अथवा मीचलेताहै, कबूतरकी समान कूँजताहै, बेसुधि होजाताहै यह सब लक्षण जिसमें होंयँ उसको अपतत्रक रोग कहतेहैं॥ १८८॥ १८९॥

## अथापतंत्रकचिकित्सा।

**अथापतन्त्रकेणार्तमातुरं नापतर्पयेत्॥ निरूहवस्तिं वमनं सेवयेन्न कदाचन॥ ॥ १९०॥ श्वसनाः कफवाताभ्यां रुद्धास्तस्य विमोक्षयेत्॥ तीक्ष्णैः प्रधमनैः संज्ञां तासु मुक्तासु विन्दति॥ १९१॥ श्वसनाः प्रश्वासोच्छ्वासवहा धमनीः॥**

अपतत्रसे पीडित मनुष्यके तृप्ति विरुद्ध क्रिया नही करै और कभी भी निरूहवस्ति तथा वमनका सेवन नहीं करावे, परंतु कफसे तथा वायुसे रुकी हुई उन श्वासको चलानेवाली नाडियोंको तीक्ष्ण प्रधमन (तीक्ष्ण चूर्णका नस्य) देकर खोलदेवे, क्योंकि नाडियोंके खुलजानेसे रोगीको संज्ञा प्राप्त होतीहै॥ १९०॥ १९१॥

## अथ मरिचादिनस्यम्।

**मरिचं शिग्रुवीजानि विडङ्गञ्च फणिज्जकम्॥ एतानि सूक्ष्मचूर्णानि दद्याच्छीर्षविरेचने॥ १९२॥**

**फणिज्जको मरुवकः॥**

शिरोविरेचन अर्थात् शिरको खाली करनेके लिये कालीमिर्च, सैंजिनेके बीज, वायविडंग और मरुआ इनका बारीक चूर्ण करके नासदेवे॥ १९२॥

## अथ हरीतक्यादियोगः।

**हरीतकी वचा रास्ना सैन्धवं साम्लवेतसम्॥ घृतमार्द्रकसंयुक्तमपतन्त्रकनाशनम्॥ अम्लवेतसकाभावे चुक्रं दातव्यमीरितम्॥ १९३॥**

हरड, वच, रासना, सैंधानमक, अमलवेत, (अम-

त्वेत न मिलसके तो चूका ) घी और अदरखका रस इनका प्रयोग करनेसे अपतत्र रोग नष्ट होजाताहै॥१९३॥

## अथापतानकलक्षणम् ।

**दृष्टिं संस्तभ्य संज्ञाश्च हत्वा कण्ठेन कूजति ॥ हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ॥ वायुना दारुणं प्राहुरेके तमपतानकम् ॥ १९४ ॥ गर्भजातनिमित्तश्च शोणितातिस्रवाच्च यः ॥ अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ १९५ ॥**

**दृष्टिं रूपग्रहणशक्तिं संस्तभ्य नाशयित्वा ॥**

वायु कुपित होकर मनुष्यके देखनेकी शक्ति तथा सज्ञा ( होश) को नष्ट करदेवे, गलेमें कूँजे और मोहसे घिरे हुए हृदयको जब वायु त्यागदेवे तब फिर होश होवे, इस महादारुण रोगको कितनेक वैद्य अपतानक कहतेहैं ।

गर्भकी उत्पत्तिसे उत्पन्न हुआ रुधिरके बहुत निकलनेमें उत्पन्न हुआ और अभिघातसे उत्पन्नहुआ अपतानक नहीं आरोग्य होताहै ॥ १९४ ॥ १९५ ॥

## अथापतानकचिकित्सा ।

**अथापतानकेनार्तमस्रुताक्षमवेपनम् ॥ अखट्वापातिनं चैव त्वरया समुपाचरेत् ॥ १९६ ॥ अपतानकिने शस्तं दशमूलीशृतं जलम् ॥ पिप्पलीचूर्णसंयुक्तं जीर्णे मांसरसौदनम् ॥ १९७ ॥ तैलेन मर्दनं चैव तथा तीक्ष्णं विरेचनम् ॥ स्रोतोविशोधनं पश्चात् सर्पिःपानं हितं स्मृतम् ॥ १९८ ॥ हन्त्यभुक्तवता पीतमम्लं दध्यपतानकम् ॥ मरिचेन समायुक्तं स्नेहवस्तिरथापि वा ॥ १९९ ॥**

अपतानकरोगसे पीडित मनुष्यके नेत्रोंमेंसे पानी बहताहो, कम्प नहीं होताहो और खाटमें न पडगया होय तो इससे पहिले ही तत्काल चिकित्सा करनीचाहिये ।

अपतानक रोगीको दशमूलके क्वाथमें पीपलका चूर्ण डालकर पिलावे, क्वाथ पचजाय तब मांसरस युक्त भात खिलावे, तैलसे मर्दन करे, तीक्ष्ण विरेचन ( जुलाब ) देवे और पश्चात् घी पिलावे कि जिससे स्रोत साफ होजायँ ।

भोजनसे पहिले मरिचके चूर्णके साथ खट्टे दहीको पिये तो अपतानकरोग नष्ट होजाताहै । स्नेहकी पिचकारी लगानेसे भी अपतानकरोग नष्ट होजाताहै ॥ १९६–१९९ ॥

## अथ पक्षाघातलक्षणम् ।

**गृहीत्वार्द्धं तनोर्वायुः शिराः स्नायूर्विशोष्य च ॥ पक्षमन्यतमं हन्ति सन्धिबन्धान्विमोक्षयन् ॥ २०० ॥ कृत्स्नोर्द्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥ एकांगवातं तं केचिदन्ये पक्षवधं विदुः ॥ २०१ ॥**

**अर्द्धम् अर्द्धनारीश्वरवत्पक्षं बाहुपार्श्वोरुजङ्घादिभागम् । अन्यतमं वामं दक्षिणं वा विमोक्षयन् शिथिलीकुर्वन् । अकमण्यः कर्मासमर्थः । विचेतनः ईषत्स्पर्शादिज्ञानयुक्तः ॥**

वायु शरीरके आधे भागको पकडकर शिराओंको तथा स्नायुओंको सुखा डालतीहै, सन्धियोंके बन्धनोंको शिथिल करके दहिने अथवा बायें किसी एक ओरके अंगको मारदेतीहै कि जिससे मनुष्यका आधा शरीर कुछ काम नहीं करसक्ता और स्पर्शज्ञान आदि भी अल्प रहजाताहै । इस रोगको कितनेक वैद्य पक्षाघात कहतेहैं, कितनेक वैद्य एकांगवात कहतेहैं, और कितनेक वैद्य पक्षवध कहतेहैं । जिस प्रकार अर्द्धनारीश्वरका आधाशरीर स्त्रीमय है और आधा शरीर पुरुषमय है उसी प्रकार इस रोगवाले मनुष्यका आधा शरीर मारा जाता है और वह आधा शरीर किसी कार्य करनेके योग्य नहीं रहता है ॥ २०० ॥ २०१ ॥

## अथान्यदोषयुक्तवायुलक्षणम् ।

**दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसन्विते ॥ शैत्यशोथगुरुत्वानि तस्मिन्नेव कफावृते ॥ २०२ ॥**

दाहो बाह्यः, सन्तापः आभ्यन्तरः। एतल्लक्षणमन्यत्रापि वातव्याधौ बोद्धव्यं निर्दिष्टत्वात ॥

वायु जो पित्तसंयुक्त होय तो अन्तर्दाह, बाहर संताप तथा मूर्च्छा होतीहै और कफसंयुक्त होय तो शीतलता, सूजन तथा भारीपन होताहै, यही लक्षण अन्यान्यवातव्याधियोंमे भी जानने, क्यो कि यह लक्षण सामान्य रीतिसे वायु शब्दका ग्रहण करतेहैं ॥ २०२ ॥

## अथ पक्षाघातसाध्यासाध्यता।

शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ॥ साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम् ॥ २०३ ॥

शुद्धः केवलः। अन्येन पित्तेन कफेन वा। क्षयहेतुकं क्षयो धातुक्षयस्तत्कुपितवातनिमित्तकम् ॥

पक्षाघात जो केवल वायुसे उत्पन्न हुआ होय तो अत्यन्त कष्टसाध्य है, पित्तसे और कफसे सयुक्त वायुस उत्पन्न हुआ होय तो साध्यहै और धातुओंके क्षयसे कुपित हुई वायुसे उत्पन्न हुआ होय तो असाध्य है ॥ २०३ ॥

## उपरमसाध्यलक्षणम्।

गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये ॥ पक्षाघातं परिहरेद्वेदनारहितो यदि॥२०४॥

वेदनारहितो यदि इति भिन्नमसाध्यलक्षणम्॥

गर्भवती स्त्री, प्रसूतास्त्री, बालक, वृद्ध, क्षीण और जिसके रुधिरका क्षय होगया होय ऐसे मनुष्योके उत्पन्न हुआ पक्षाघात आराम नहीं होता, अत एव इसकी चिकित्सा नही करनी चाहिये।

पक्षाघात जो वेदनासे रहित होय तो असाध्य है इसलिये इसकी चिकित्सा नही करनी चाहिये ॥ २०४ ॥

## अथ पक्षाघातचिकित्सा।

### तत्र माषादिक्काथः।

माषात्मगुप्तावातारिवाट्यालकजटाश्रृतम् ॥ हिंगुसैन्धवसंयुक्तं पक्षाघातं विनाशयेत् ॥ माषिके हिंगुसिन्धूत्थे जरणाद्यास्तु शाणिकाः ॥ २०५ ॥

उडद, कौंछ, एरण्ड और खिरैटीकी जड इनका क्काथ बनाकर उसमें हींग और सैंधानिमक डालकर पीनेसे पक्षाघात नष्ट होताहै ( हीग और सैंधानिमक पाच पांच रत्ती लेना चाहिये और जीरा आदि पदार्थ चौवीस रत्ती लेना ऐसी मर्यादा है ) ॥ २०५ ॥

## अथ ग्रंथिकादितैलम्।

ग्रन्थिकाग्निकणाशुण्ठीरास्नासैन्धवकल्कितम् ॥ माषक्काथश्रृतं तैलं पक्षाघातं व्यपोहति ॥ २०६ ॥

पीपलामूल, चीता,पीपल, सोठ, रास्ना और सैंधानिमक इनका कल्क डालकर उडदके क्काथमें पकाया हुआ तेल पक्षाघातको दूर करैहै ॥ २०६ ॥

## अथ माषादितैलम्।

माषात्मगुप्तातिविषारुबूकरास्नाशताह्वालवणैः सुपिष्टैः ॥ चतुर्गुणे माषबलाकषाये तैले श्रृतं हन्ति हि पक्षघातम् ॥ २०७ ॥

उडद, कौंछ, अतीस, अरण्ड, रासन, सोया और सैंधानिमक इनका उत्तम विधिसे कल्क बनाकर तेलसे चौगुने उडदके तथा खिरैटीके क्काथमें पकाया हुवा तेल पक्षाघातको नष्ट करदेताहै ॥ २०७ ॥

## अथ सर्वाङ्गवातलक्षणम्।

सर्वाङ्गपवने क्रुद्धे गात्रस्फुरणभञ्जने ॥ वेदनाभिः परीताश्च स्फुटन्तीवास्य सन्धयः ॥ २०८ ॥

सन्धयो वेदनाभिः परीता युता स्फुटन्तीव॥

संपूर्ण अंगोंमें वायुका कोप होनेसे गात्रकी गिरा कापने लगतीहैं, अंग टूटने लगतेहैं, और वेदनाके मारे सन्धि फटीसी जातीहैं इसको सर्वांगवात कहतेहैं ॥ २०८ ॥

## अथ सर्वाङ्गवातचिकित्सा।

सर्वाङ्गगतमेकांगगतश्चापि समीरणम् ॥ तैलावगाहनं हन्ति तोयवेगमिवाचलः ॥ २०९ ॥

जिस प्रकार जलके वेगसे पर्वत नष्ट होजातेहैं उसीप्रकार तेलका अवगाहन सर्वांगवात तथा पक्षाघातको नष्ट करेहै ॥ २०९ ॥

## अथ स्थाननामलक्ष्यलक्षण-वातव्याधिविवर्णनम् ।

स्थाननामानुरूपैश्च लिंगैः शेषान्विनिर्दिशेत् ॥ सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ २१० ॥ प्रथमं ह्रस्वकेशत्वं ततो वाचालतापि च ॥ आटोपः पार्श्वशूलश्च पुरीषस्यातिगाढता ॥ २११ ॥ तथा मलाप्रवृत्तिश्च कम्पः स्तम्भश्च रूक्षता ॥ कार्श्यं कार्ष्ण्यञ्च शैत्यञ्च लोमहृषा व्यथा तथा ॥ २१२ ॥ तोदो भेदः शिरास्फूर्तिरंगमर्दोऽङ्गशुष्कता ॥ संकोचश्चांगविभ्रंशो मोहश्चश्चलचित्तता ॥२१३॥ निद्रानाशः स्वेदनाशो बलहानिश्च भीरुता ॥ शुक्रक्षयो रजोनाशो गर्भनाशः परिश्रमः ॥ २१४ ॥

आटोपो गुडगुडाशब्दः । तोदः सूचीव्यधनेनेव पीडा । भेदो विदारणेनेव व्यथा अंगविभ्रंशः अंगस्य स्थानत्यागेन स्खलनम् । निद्रानाशो निद्राल्पत्वमपि । गर्भनाशः आमगर्भपातः । गर्भशय्यायां वाताधिष्ठानाद्गर्भग्रहणमिति जेज्जटः । परिश्रमः आयासं विना श्रमः ॥

शेष ( बाकी ) वातरोग ( जो कि यहा नहीं कहे हैं ) उनको उनके स्थान और नामके अनुसार लक्षणोंसे जानलेने चाहियें और इन सबमें पित्तादिकका संसर्ग कल्पना करके जानलेना । जैसे कि केशोंकी अल्पताको 'ह्रस्वकेशत्व' कहतेहैं । बहुत बोलना वाचालता कहीजातीहै । पेटमें जो गुड्गुड्शब्द होताहै वह आटोप कहाजाता है । पसलियोंमें जो शूल होताहै वह 'पार्श्वशूल' कहाजाताहै। विष्ठाकी जो अत्यन्तकठिनता है वह 'मलगाढता' कहीजातीहै । दस्तका जो नहीं उतरना है वह 'मलाप्रवृत्ति' कहीजातीहै । अंगका जो कांपना है वह 'कम्प' कहाजाताहै । अगका जो जकडजानाहै वह 'स्तम्भ' कहाजाताहै । शरीरका जो रुखापन है वह 'रूक्षता' कहीजातीहै । शरीरकी जो दुर्बलता है वह 'कार्श्य' कहीजातीहै । शरीरका जो कालापन है वह कार्ष्ण्य' कहाजाताहै । शरीरकी जो शीतलता है वह 'शैत्य' कहाजाताहै । रोमाचोंका जो खडा होनाहै वह 'रोमहर्षण' कहाजाताहै । अंगमें जो पीडा होतीहै वह 'व्यथा' कहीजातीहै । अगमे जो सुई छेदने सरीखी पीडा होतीहै वह 'तोद' कहाजाताहै । मानों शरीरको कोई चीरेडालताहै ऐसी जो पीडा होतीहै वह 'भेद' कहाजाताहै । शिराओंका जो फडकना वह 'शिरास्फूर्ति' कहीजातीहै । अंगोंका जो टूटना है वह 'अंगमर्द' कहाजाताहै । अगोंका जो सूखनाहै वह 'अगशुष्कता' कहीजातीहै अगोंका जो सकुचना है वह 'अगसंकोच' कहाजाताहै । अगोंका जो अपने स्थानसे स्खलन होनाहै वह 'अंगविभ्रंश' कहाजाताहै । चित्तका जो मूढ होजाना है वह 'मोह' कहाजाताहै । चित्तका जो चञ्चलपन है वह 'चलचित्तता' कहीजातीहै । निद्राका बिलकुल नहीं आना अथवा कम आना वह 'निद्रानाश' कहाजाताहै । पसीनेका जो न आनाहै वह 'स्वेदनाश' कहाजाताहै । बलका जो नाश होनाहै वह 'बलहानि' कहीजातीहै । डरपोकपन जो है वह 'भीरुता' कहीजातीहै । वीर्यका नष्ट होना जो है वह 'शुक्रक्षय' कहाजाताहै । स्त्रीके रजका नाश होताहै तो 'रजोनाश' कहाजाताहै । अपक्व गर्भका गिरजाना अथवा जेज्जटके मतानुसार गर्भाशयमे वायुके स्थित होनेसे गर्भका नहीं रहना जो है वह 'गर्भनाश' कहाजाताहै । विना परिश्रम कियेहुए थकजाना जो है वह 'परिश्रम' कहाजाताहै । वह्निवैषम्य, अर्थात् अग्निकी विषमताके लक्षण जठराग्निके विकारोंमें अग्निमाद्यमें कह आये हैं सो देखलेना ॥ २१०–२१४ ॥

## अथोक्तवातव्याधिचिकित्सा ।

सामान्यवातरोगाणां या चिकित्सा प्रवक्ष्यते ॥ एषां सैव विधातव्या तयैते यान्ति संक्षयम् ॥ २१५ ॥

वातव्याधियोंमें जो सामान्य औषधि कही है वही औषधि ह्रस्वकेशत्व आदि रोगोंमें प्रयोग करनी चाहिये, इस प्रकार करनेसे उन रोगोका नाश होताहै ॥२१५॥

## अथान्यप्रकारेण वातव्याधिनिरूपणम् ।

**एवंविधानि रूपाणि करोति कुपितोऽनिलः ॥ हेतुस्थानविशेषेण भवेद्रोगविशेषकृत् ॥ २१६ ॥**

एवंविधानि रूपाणि शिरोग्रहादीनि अशीतिः । हेत्वित्यादिहेतुविशेषः पित्तश्लेष्माद्यावृतत्वादिः । यथा श्लेष्मावृतो वायुः मन्यास्तम्भं करोति । स्थानविशेषः कोष्ठादिः । यथा "तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः" इत्यादि ॥

कोपको प्राप्त हुई इस प्रकार यह वायु शिरोग्रह आदि अस्सी रूपोंको उत्पन्न करतीहै । हेतुओंके भेदसे तथा स्थानोंके भेदसे भी वातव्याधियोंका विशेष विवेचन समझना योग्य है ॥ २१६ ॥

## अथोदानादिवायोः पित्तकफसंबन्धेन लक्षणम् ।

**उदाने पित्तसंयुक्ते दाहो मूर्च्छा भ्रमः क्लमः ॥ अस्वेदहर्षौ मन्दाग्निः शीतता च कफावृते ॥ २१७ ॥ प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥ दौर्बल्यं सदनं तन्द्रा वैरस्यञ्च कफावृते ॥ २१८ ॥**

प्राणो हृदयाश्रयो वायुः ॥

**स्वेदो दाहस्तृषा मूर्च्छा समाने पित्तसंयुते ॥ कफेन सक्ते विण्मूत्रे गात्रहर्षश्च जायते ॥ २१९ ॥**

कफेन संयुक्ते समाने विण्मूत्रे सक्ते अवरुद्धे भवतः । गात्रहर्षो रोमाञ्चः ॥

**अपाने पित्तसंयुक्ते दाहौष्ण्यं रक्तमूत्रता ॥ अधःकाये गुरुत्वञ्च शीतता च कफावृते ॥ २२० ॥**

अत्र गुदाश्रयः अपानः ॥

**व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ स्तम्भोऽथ दण्डकश्चापि शूलशोथौ कफावृते ॥ २२१ ॥**

दण्डकः आक्षेपकभेदः ॥

कठमे रहनेवाली उदान वायु जो पित्तसे सयुक्त होय तो दाह, मूर्छा, भ्रम तथा ग्लानि होतीहै । जो कफसे संयुक्त होतीहै तो पसीनेका अभाव, रोमांचोंका हो आना, अग्निकी मन्दता और शरीरकी शीतलता होतीहै । हृदयमें रहनेवाली जो प्राणवायु पित्तसे सयुक्त होय तो वमन तथा दाह होताहै । और कफसे संयुक्त होय तो दुर्बलता, ग्लानि, तंद्रा तथा विरसता होतीहै । जठराग्निके नीचे रहनेवाली जो समान वायु पित्तसे संयुक्त होय तो पसीना दाह तृषा तथा मूर्छा होतीहै और कफसे सयुक्त होय तो विष्ठा तथा मूत्रका अवरोध और रोमाचोंका खडा होना ये लक्षण होतेहैं ॥

गुदामें रहनेवाली अपान वायु पित्तसे सयुक्त होय तो दाह, उष्णता और लालमूत्र होजाताहै । और जो कफसे सयुक्त होय तो शरीरके नीचेके भागमे भारीपन तथा शीतपन होताहै ॥

सम्पूर्ण शरीरमें रहनेवाली व्यानवायु जो पित्तसे संयुक्त होय तो दाह, अगोंका फेंकना, तथा ग्लानि होतीहै और जो कफसे संयुक्त होय तो जडता, दंडकाक्षेप, शूल तथा सूजन ये लक्षण होतेहैं ॥ २१७–२२१ ॥

## अथ पित्तकफावृतवायुचिकित्सा ।

**वाते सपित्ते कुर्वीत वातपित्तहरीं क्रियाम् ॥ सकफे तत्र कुर्वीत वातश्लेष्महरीं क्रियाम् ॥ २२२ ॥**

वायु पित्तसे सयुक्त होय तो वात तथा पित्त दोनोंको हरनेवाली चिकित्सा करनी चाहिये और जो कफसे सयुक्त होय तो वायु तथा कफ इन दोनोंको हरनेवाली चिकित्सा करनी चाहिये ॥ २२२ ॥

## अथ त्वगादिस्थानस्थितरसादिधातुगतवायुलक्षणम् ।

**त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा**

च तुद्यते ॥ आतन्यते सरागा च सर्वरुक्त्वग्गतेऽनिले ॥ २२३ ॥

सर्वरुक्सप्तत्वग्व्यथा त्वग्गते त्वक्छब्देन अत्र रस उच्यते । त्वगाधार्यत्वात्तेन रसगत इत्यर्थः ॥

रुजस्तीव्राः ससन्तापो वैवर्ण्यं कृशताऽरुचिः ॥ गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥ २२४ ॥

अरूंषि व्रणानि । भुक्तस्य भुक्तेत्यत्र अध्यवसितादित्वात् कर्तरि क्तः तेन भुक्तवतः स्तम्भः सन्तर्पणेन रक्तवृद्धेः ॥

गुर्वङ्गं तुद्यते स्तब्धं दण्डमुष्टिहतं यथा ॥ सरुक्स्तिमितमत्यर्थं वाते मांससमाश्रिते ॥ २२५ ॥

दण्डमुष्टिताडितमिव तुद्यते स्तिमितं निश्चलमित्यर्थः । मांसमेदसोर्गतवातयोरेकलिङ्गत्वम् अदूरान्तरेण प्रत्यासत्तेः आश्रयप्रभावात् ॥

तथा मेदःश्रितः कुर्याद्ग्रन्थीन्मन्दरुजो व्रणान् ॥ २२६ ॥

तथा मेदःश्रितः मांसगतवत् । दूरेण प्रत्यासत्तेरस्थिरूपाया भेदाच्च कुर्यात् ग्रन्थीनित्यादिर्विशेषः ॥

भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः॥ अस्वप्नं सतता रुक् च वाते दुष्टेऽस्थिसंस्थिते ॥ वाते मज्जगते पीडा न कदाचित्प्रशाम्यति ॥ २२७ ॥

मज्जगते अस्थिगतवत् । यथा मेदोगतो मांसगतवत्स्यात्।पीडात्र कदापि न शाम्यत्ययं विशेषः ॥

क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ॥ विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥ २२८ ॥

शुक्रं बध्नाति स्खलयत्येव न । गर्भं क्षिप्रं मुञ्चति । आममेव पातयति । बध्नाति मूढं करोति । वातदुष्टशुक्रारब्धत्वात् । विकृतिं शुक्रस्य वर्णान्तरत्वादिरूपां गर्भस्य विकृताङ्गत्वादिरूपां जनयति ॥

जब वायु रसमें स्थित होजातीहै तब शरीरकी चमडी रूखी, फटीहुई, जड, पतली, काली, सुई चुभोने सरिखी पीडायुक्त, खिचीसी और ललाई लिये होतीहै और सातों त्वचाओंमे व्यथा होती है। रुधिरगत वायु होय तो तीव्रपीडा होतीहै, सताप होताहै, शरीरका रग बिगड जाताहै, दुर्बलता होजातीहै, अरुचि होजातीहै, गात्रमें व्रण होतेहैं और भोजन करनेके पश्चात् तृप्तिसे रुधिरकी वृद्धि होकर स्तब्धता होतीहै ॥

वायु मासगत होय तो अग भारी होजाताहै, लकडी अथवा मुट्ठीके मारनेकी समान पीडा होतीहै, स्तब्धता होतीहै, व्यथायुक्त होताहै और अत्यन्त निश्चल होजाताहै।

वायु भेदगत होय तो मासगत वायुकी समान सम्पूर्ण लक्षण होतेहैं, तथा अल्पपीडावाली ग्रंथि और फोडे होतेहैं, इतनी मेदगत वायुमें विशेषता है कि, दुष्ट वायु अस्थियोंमें स्थित होय तो अस्थियोंकी सधिओंमें तोडने सरिखी पीडा होतीहै। संधियोंमें शूल चलताहै, मास तथा बलका क्षय होताहै, निद्रा नहीं आती और प्रबल पीडा होतीहै। मज्जागत वायुमें अस्थिगत वायुके समान लक्षण होतेहैं, परन्तु इतना विशेष होताहै कि मज्जागत वायुसे उत्पन्न हुई पीडा कभीभी शांत नहीं होतीहै ॥

कोपको प्राप्त हुई वायु वीर्यमें प्राप्त होय तो वीर्य स्खलित नहीं होने देती, अपक्व गर्भकोही गिरादेतीहै तथा मूढ करदेतीहै, वीर्यके रंगको बदलदेतीहै, अथवा वीर्यको बिगाड देतीहै और गर्भमें अंगविकृति आदि करतीहै, वातदूषितवीर्यसे उत्पन्न होनेके कारण गर्भ कच्चाही गिर जाताहै अथवा मूढ होजाय है यह सम्भव है ॥ २२३–२२८ ॥

## अथ रसादिधातुगतवायुचिकित्सा।

वायौ त्वगाश्रिते स्नेहाभ्यंगं स्वेदश्च कारयेत् ॥ रक्तस्थे शीतलाँल्लेपान्विरकं रक्तमोक्षणम् ॥ २२९ ॥ मांसमेदोगते वाते सविरेकं निरूहणम् ॥ अस्थिमज्जगते स्नेहं बहिरन्तश्च योजयेत् ॥ २३० ॥

वायु रसमे स्थित होय तो स्नेहका अभ्यंग तथा स्वेदन क्रिया करे। वायु रुधिरमे प्राप्त होय तो शीतल लेप करे, विरेचन देवे तथा फस्त आदि खुलवाकर रुधिर निकलवावे।

वायु मांस अथवा मेदमें स्थित होय तो विरेचन देवे और निरूहवस्ति (क्वाथकी पिचकारी) करे।

वायु अस्थियोंमें अथवा मज्जामें स्थित होय तो बाहर तथा भीतर स्नेहकी योजना करे ॥ २२९ ॥ २३० ॥

**केतकिनागबलातिबलानां यद्बहुलेन रसेन विपक्कम् ॥ तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति ॥२३१॥ हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ॥२३२॥**

केवडा और गगेरन (गुलसकरी) तथा कंघी इनके बहुतसे स्वरससे और बहुतसे तुषोदकसे पकाये हुए तेलको केतक्यादितैल कहतेहैं। इस तेलका उपयोग करनेसे अस्थिगत वायु नष्ट होजातीहै ॥२३१॥ वायु वीर्यमें प्राप्त होय तो स्त्रीआदिसे हर्ष उपजावे और वीर्यको बढानेवाले अन्नपान देवे क्योंकि इस प्रकार करनेसे बल तथा वीर्यकी वृद्धि होतीहै ॥२३१॥ २३२ ॥

## अथ स्थानविशेषेण वातव्याधिविशेषस्तत्र कोष्ठगतवायुलक्षणम्।

**वाते कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ॥ ब्रध्नहृद्रोगगुल्मार्शःपार्श्वशूलश्च जायते २३३**

जब दुष्ट वायु कोठेमे स्थित होतीहै तो मूत्र तथा विष्ठाका अवरोध होताहै और गुल्म (वायगोला), हृदयरोग, ब्रध्न, बवासीर और पसलियोंमें शूल ये सब लक्षण होतेहैं ॥ २३३ ॥

## अथ कोष्ठलक्षणम्।

**स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ॥ हृदुन्दुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥ २३४ ॥**

**उन्दुकः पीठ इति लोके। एतेन कोष्ठशब्देन सर्व एवाशयाः कथ्यन्ते। तथापि विशेषार्थमामाशयादिगतवातलक्षणान्यपि पृथग्वक्ष्यंते ॥**

कच्चे भोजन रहनेका स्थान, अग्निके रहनेका स्थान, पक्क भोजनके रहनेका स्थान, मूत्रका स्थान, रुधिरका स्थान, हृदय, पीठ और फेफडा इन सबको मिलकर कोठा कहाजाताहै। यद्यपि 'कोठा' यह शब्द सब आशयोको कहाजाताहै तोभी विशेष जाननेके लिये आमाशयादिमे रहनेवाली वायुके लक्षण पृथक् ही कहे हैं ॥ २३४ ॥

## अथ कोष्ठवात चिकित्सा।

**पाचनीयै रसैर्युक्तैरन्यैर्वा पाचयेन्मलान् ॥ विशेषतः पिबेत्क्षीरं नरः कोष्ठगतेऽनिले ॥ २३५ ॥**

दुष्ट वायु कोठेमे स्थित होय तो मनुष्य पाचन करनेवाले रसोंकी योजना करे, अथवा अन्यान्य उपायोंसे मलको पकावे और विशेष करके दूध पिये ॥ २३५ ॥

## अथामाशयगतवायुलक्षणम्।

**हृत्पार्श्वोदरनाभीरुक्तृष्णोद्गारविसूचिकाः ॥ कासः कण्ठस्य शोषश्च श्वासश्चामाश्रयेऽनिले ॥ २३६ ॥**

चरक कहताहै कि " जब वायु आमाशयमें रहती है तब हृदय, पसली, पेट और नाभि इनमें पीडा होती है, तृषा लगती है, डकार आती हैं, विसूचिका (हैजा) खाँसी कंठमे शोष और श्वास होताहै " ॥ २३६ ॥

## अथामाशयलक्षणम्।

**नाभेस्तनान्तरं जन्तोराहुरामाशयं बुधाः २३७**

चरक कहताहै " कि प्राणियोंके शरीरमें नाभि और स्तनके बीचका जो भाग है उसको आमाशय कहतेहैं " ॥ २३७ ॥

## अथामाशयगतवायुचिकित्सा।

**आमाशयस्थे त्वनिले प्रशस्तं प्राग्लंघनं दीपनपाचनश्च ॥ प्रच्छर्दनं तीक्ष्णविरेचनं वा मुद्गा यवाः शालियुताः पुराणाः ॥**

॥ २३८ ॥ भूतीकपथ्याशटिपुष्कराणि विल्वामृतादारुकनागराणि ॥ उग्राविषामागधिकाविडानि क्राथास्त्रयः सामसमीरणघ्नाः ॥ २३९ ॥

भूतीकः रोहिषः सुगन्धस्तृणविशेषः तदलाभे उशीरं ग्राह्यम् ।। पुष्करं पुष्करमूलम् । दारुकं देवदारु । उग्रा वचा । विषा अतिविषा ॥

वायु आमाशयमें स्थित होय तो प्रथम लंघन कराने चाहिये और दीपन तथा पाचन औषधि देनी उत्तम है अथवा वमन और तीक्ष्णविरेचन देना उत्तम है । इस रोगवाले मनुष्यको पुरानी मूग, जौ और चावल पथ्य (हित) हैं।

रोहिप, सुगन्धितृण, हरड, कचूर और पोहकरमूल, इनका क्वाथ बनाकर पीनेसे आमाशयगतवायु नष्ट होजातीहै, जो रोहिप तृण न मिलसके तो उसके अभावमें खस डालनी चाहिये ।

बेलगिरी, गिलोय, देवदारु और सोंठ इनका क्वाथ बनाकर पीनेसे आमाशयगतवायु नष्ट होजातीहै ।

वच, अतीस, पीपल और विरियासंचरनिमक इनका क्वाथ बनाकर पीनेसे आमाशयगतवायु नष्ट होजाती है ॥ २३८ ॥ २३९ ॥

## अथ षड्धरणयोगः ।

चित्रकेन्द्रयवौ पाठा कटुकातिविषाऽभया ॥ आमाशयोत्थवातघ्नं चूर्णं पेयं सुखाम्बुना ॥ योगेऽस्मिन्भिषजा ग्राह्याः षण्णां षड्धरणा पृथक् ॥ दिनेषु षट्सु दातव्यास्तेन षड्धरणः स्मृतः ॥ २४० ॥

अत्र षण्णां समुदितानां षड्धरणमितानां चूर्णीकृतानाम एकस्मिन्नहनि एकटंको ज्ञेयः ॥

चीता, इन्द्रजौ, पाट, कुटकी, अतीस और हरड ये प्रत्येक औषधि चौबीस चौबीस रत्तीभर लेकर उनका चूर्ण करके कपडेमें छानलेवे । फिर उसमेंसे नित्य २४ रत्ती चूर्ण लेकर कुछेक गरम जलके साथ पिये तो आमाशयगत वायु नष्ट होजातीहै । इस चूर्णको इसी प्रकार छै दिनतक पिये तो छै दिनमें आराम होजाताहै इस लिये यह षड्धरण योग कहाजाताहै ॥ २४० ॥

## अथान्यषड्धरणयोगः ।

आमाशयगते वाते छर्दिश्चापि यथाक्रमम् ॥ देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥ २४१ ॥

अयमर्थः । प्रथमदिवसे वमनं कारयितव्यं ततो द्वितीयं दिनमारभ्य षड्दिनपर्यंतं पाठक्रमेणैकैकस्य चूर्णं टंकमितं देयमित्यर्थः ॥

पहिले दिन वमन कराकर दूसरेदिन चीतेका चौवीस रत्ती चूर्ण गरमजलसे पिये, तीसरेदिन इन्द्रजौका चौवीस रत्तीचूर्ण गरमजलसे पिये, चौथेदिन पाढेका चौवीस रत्ती चूर्ण गरमजलके साथ पिये, पांचवें दिन कुटकीका चूर्ण चौवीसरत्ती गरमजलके साथ पिये, छठेदिन अतीसका चूर्ण चौवीसरत्ती गरमजलके साथ पिये और सातवेंदिन हरडका चूर्ण, चौवीसरत्ती गरमजलके साथ पिये । इसप्रकार करनेसे भी अमाशयगतवायु नष्ट होजाती है ॥ २४१ ॥

## अथ पक्वाशयगतवायुलक्षणम् ।

पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च ॥ कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥ २४२ ॥

आटोपो वातस्य क्षुब्धत्वम् । न तु गुडगुडाशब्दस्तस्य अन्त्रकूजनोक्तत्वात् ॥

जब वायु पक्वाशयमें स्थित होतीहै तो पेटमें आतें गुडगुड कराकरतीहैं, शूलकी पीडा होतीहै, वायु कुपित होती है, मूत्र और विष्ठा थोडी थोडी उतरतीहै, अफारा आजाताहै और त्रिकस्थानमें पीडा होतीहै ॥ २४२ ॥

## अथ पक्वाशयगतवायुचिकित्सा ।

वह्नेः संवर्द्धनं कार्यं कर्मोदावर्तकं तथा ॥ देयः स्नेहविरेकश्च पक्वाशयगतेऽनिले २४३॥

वायु पक्वाशयमे स्थित होय तो जठराग्निको वढानेका उपाय करना चाहिये, उदावर्तकी जो चिकित्सा कहीहै वह सब करनी चाहिये और स्नेहयुक्त विरेचन कराना अत्यन्त सुखकारी है ॥ २४३ ॥

## अथोदरगतवायुचिकित्सा।

**वाते जठरगे दद्यात्क्षारचूर्णादिदीपनम् ॥**

वायु पेटमें स्थित होय तो क्षार तथा चूर्ण आदि दीपन औषधि देनी चाहिये ॥

## अथ कुक्षिगतवायुचिकित्सा।

**शुण्ठीकुटजबीजाग्निचूर्णं कोष्णाम्बु कुक्षिगे ॥ २४४ ॥**

वायु कोखमे स्थित होय तो सोठ, इन्द्रजौ और चीता इनका चूर्ण करके कुछेक गरमजलके साथ पिये ॥ २४४ ॥

## अथ गुदगतवायुलक्षणम्।

**ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः ॥ जङ्घोरुत्रिकपार्श्वांसपृष्ठरोगो गुदेऽनिले ॥ २४५ ॥**

**रोगोऽत्र रुजा पीडेति यावत् ॥**

जब वायु गुदामे स्थित होतीहै तो विष्ठा, मूत्र और अधोवायुका अवरोध होताहै, शूल चलताहै, पेट अफरताहै, पथरी और शर्करा रोग होताहै, तथा पिंडलीं, साँथल, कमर, पसली, कंधे और पीठ इनमें पीडा होतीहै ॥ २४५ ॥

## अथ गुदगतवायुचिकित्सा।

**वाते गुदगते दुष्टे कर्मोदावर्तकं हितम् ॥ २४६ ॥**

दुष्ट वायु जो गुदामें स्थित होय तो उदावर्तमे जो चिकित्सा कही है वह सब करनी चाहिये ॥ २४६ ॥

## अथ हृदयगतवायुचिकित्सा।

**हृदयानिलनाशाय गुडूचीं मरिचान्विताम्॥पिबेत्प्रातः प्रयत्नेन सुखं तप्ताम्भसा सह ॥२४७ ॥ पिबेदुष्णाम्भसा पिष्टमाश्वगन्धं विभीतकम्॥गुडयुक्तं प्रयत्नेन हृदयानिलनाशनम् ॥ २४८ ॥ देवदारुसमायुक्तं नागरं परिपेषितम् ॥ हृद्वातवेदनायुक्तः पीत्वा सुखमवाप्नुयात् ॥ २४९ ॥**

प्रातःकाल यत्नपूर्वक कुछेक गरमजलके साथ मिरच तथा गिलोयको पिये तौ हृदयमें रहनेवाली दुष्ट वायु नष्ट होतीहै ॥

असगंध और बहेडा इनको एकत्र पीसकर गुडमें मिलाकर गरमजलके साथ पिये तो हृदयमें रहनेवाली दुष्ट वायु नष्ट होतीहै।

देवदारु और सोठ इनको एकत्र पीसकर गरम जलके साथ पीनेसे हृदयगत वायुसे पीडित मनुष्य सुखी होताहै ॥ २४७–२४९ ॥

## अथ कर्णेन्द्रियादिगतवायुलक्षणम्।

**श्रोत्रादिष्विन्द्रियवधं कुर्यात्क्रुद्धः समारणः ॥ २५० ॥**

कोपको प्राप्त हुई वायु जब इन्द्रियोमें रहतीहै तब इन्द्रियोकी शक्तिका नाश करतीहै ॥ २५० ॥

## अथ कर्णेन्द्रियादिस्थितवायुचिकित्सा।

**श्रोत्रादिष्वनिले दुष्टे कार्यो वातहरः क्रमः॥ स्नेहाभ्यंगावगाहाश्च मर्दनालेपनानि च२५१**

दुष्ट हुई वायु जब कान आदि इन्द्रियोंमे स्थित होय तो वायुकी चिकित्सा करे, स्नेहपदार्थोंकी मालिस करे, स्नेहकी कोठीमे अवगाहन करावै, स्नेहको शरीरपर लगावे और स्नेहका लेप करे ॥ २५१ ॥

## अथ शिरागतवायुलक्षणम्।

**कुर्याच्छिरागतः शूलं शिराकुञ्चनपूरणम्॥ स बाह्याभ्यन्तरायामं खल्लीं कुब्जत्वमेव च ॥ २५२ ॥**

**कुब्जः संकोचः बाह्यायामं पृष्ठेन नतम्। अभ्यन्तरायामं क्रोडेन नतम्। शूलं शिरायामेव पूरणं स्थूलत्वम् ॥**

शिराओंमे रहनेवाली वायु शिराओंमे शूलकी पीडा, शिराओंका संकोच, शिराओंकी स्थूलता, अतरायामको, बाह्यायामको, खल्लीको और कुब्जताको करतीहै ॥२५२॥

## अथ शिरागतवायुचिकित्सा।

**स्नेहाभ्यंगोपनाहश्च मर्दनालेपनानि च ॥**

वाते शिरागते कुर्यात्तथा चासृग्विमोक्षणम् ॥ २५३ ॥

वायु शिराओंमें स्थित होय तो स्नेहका अभ्यंग करे, स्नेहसहित बफारा, स्नेहकी मालिश करे, स्नेहका लेपन और रुधिर निकलवावे ॥ २५३॥

## अथ स्नायुगतवायुलक्षणम् ।

शूलमाक्षेपकः कम्पः स्तम्भः स्नाय्वनिलाद्भवेत् ॥ २५४ ॥ स्वेदोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ॥ क्रुद्धे स्नायुगते वाते कारयेत्कुशलो भिषक् ॥ २५५ ॥

स्नायुगतवातसे शूल आक्षेपक और स्तम्भ होताहै कोपको प्राप्त हुई वायु जब स्नायुमें प्राप्त होय तो पसीने निकलवावे, दाग देवे, दृढ ( सख्त ) बंधन बाँधे और स्नेह चुपडे, यह उपाय बुद्धिमानोको करना चाहिये२५४॥२५५॥

## अथ सन्धिगतवायुलक्षणम् ।

हन्ति सन्धिगतः सन्धीञ्छूलशोथौ करोति च ॥ २५६ ॥

हन्ति विश्लेषयति ॥

संधि (जोड)में रहनेवाली वायु संधियोंको छोड देतीहै और शूल तथा सूजनको उत्पन्न करतीहै ॥ २५६ ॥

## अथ संधिगतवायुचिकित्सा ।

कुर्यात्सन्धिगते वाते दाहस्नेहोपनाहनम्॥
इन्द्रवारुणिकामूलं मागधीगुडसंयुतम् ॥
भक्षयेत्कर्षमात्रं तत्सन्धिवातं व्यपोहति ॥ २५७ ॥

जब वायु संधियोंमें प्राप्त होय तो दाग देना और पसीना निकलवाना चाहिये, इन्द्रायनकी जड और पीपल इनको गुडमें मिलाकर एक तोले प्रमाण भक्षण करे तो संधियोंमें रहनेवाली वायु नष्ट होतीहै ॥ २५७ ॥

## अथ वातरोगकष्टसाध्यत्वम् ।

हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः ॥
कालेन महता यत्नात्सिध्यन्ति ह्यथ वा न वा ॥ २५८ ॥

शतेषु एकः कश्चिन्मुच्यते इत्यर्थः । परं कः सिध्यति ? यस्तरुणो भवति तथा बलवानुपद्रवरहितश्च ॥

हनुग्रह, अर्दित, आक्षेप, पक्षाघात और अपतानक ये व्याधि यत्न करनेसे बहुतदिनोंमें आराम होजातीहैं अथवा नहीं भी आराम होतीहैं, इन रोगीमनुष्योंमे सैकडोंमे कोई एक दो मनुष्य जो युवा, बलवान् और उपद्रवरहित होय तो उसके आराम होजाताहै नहीं तो नहीं आराम होता सब यमलोकको चलेजातेहैं ॥ २५८ ॥

## अथ वातव्याध्युपद्रवाः ।

विसर्पदाहरुग्भंगमूर्च्छारुच्यग्निमार्दवैः ॥
क्षीणमांसबलं वाता घ्नन्ति पक्षवधादयः ॥ २५९ ॥

वाता वातविकाराः कार्यकारणयोरभेदोपचारात् । वातादिति पाठे वातात्पक्षवधादय इति योज्यम् ॥

वातके प्रकोपसे होनेवाली व्याधियोंसे जिनका मास तथा बल क्षीण होजाताहै वह मनुष्य विसर्प, दाह, व्यथा, भंग, मूर्च्छा, अरुचि और मंदाग्निकी पीडासे मरजातेहैं॥२५९॥

## अथ वातव्याध्यसाध्यलक्षणम् ।

शूनं सुप्तत्वचं म्लानं कम्पाध्माननिपीडितम् ॥ रुजार्तिमन्तश्च नरं वातव्याधिर्विनाशयेत् ॥ २६० ॥

जिसका शरीर सुन्न होगयाहै, त्वचा जड होगई हो, ग्लानियुक्त, कप और अफारेसे पीडित और पीडासे व्याकुल ऐसे मनुष्योंको वातव्याधि अंतमें मारदेतीहै ॥ २६० ॥

## अथ प्रकृतिस्थितवातपञ्चककार्य्यम् ।

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः ॥ वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥ २६१ ॥

जिस मनुष्यके वायु अप्रतिहतगतिवाली, अपने स्थानमे रहनेवाली और सम प्रकृतिवाली होय वह मनुष्य रोगरहित होकर सौ वर्षसे भी अधिक जीताहै ॥ २६१ ॥

## अथ चक्रदत्तप्रोक्तमहामाषादितैलम्।

माषस्यार्द्धाढकं देयं तुलार्द्धं दशमूलतः॥ पलानि च्छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत्॥ २६२॥ चतुर्भागावशेषं तं कषायमवतारयेत्॥ प्रस्थे द्वे तिलतैलस्य पयो दद्याच्चतुर्गुणम्॥ २६३॥ जीवनीयानि मञ्जिष्ठा चव्यं चित्रककट्फलम्॥ सव्योषं पिप्पलीमूलं रास्नामलकगोक्षुरम्॥ २६४॥ आत्मगुप्ता तथैरण्डः शताह्वा लवणत्रयम्॥ देवदार्वमृताकुष्ठमश्वगन्धा वचा शटी॥ २६५॥ एतैरक्षमितैः कल्कैः पाचयेन्मृदुनाग्निना॥ पक्षाघातार्दिते पुंसि हनुस्तम्भार्दिते तथा॥ २६६॥ कर्णशूले शिरःशूले तिमिरे च त्रिदोषजे॥ पाणिपादशिरोग्रीवाश्रवणे मन्द एव च॥ २६७॥ कलायखञ्जे पङ्गौ च गृध्रस्यामपबाहुके॥ पाने वस्तौ तथाभ्यङ्गे नस्ये कर्णादिपूरणे॥ २६८॥ तैलमेतत्प्रशंसन्ति सर्ववातविकारनुत्॥ महामाषादिनामेदं भाषितं मुनिभिः पुरा॥ २६९॥

उडद १२८ तोले, दशमूल २०० तोले और बकरेका मास १२० तोले, इन सबको एक हजार चौवीस १०२४ तोले जलमे पकावे, जब पकते पकते चौथाई भाग जल बाकी रहजाय तब उसको उतारकर उसमें १२८ तोले तिलका तेल और तेलसे चौगुना ५०४ तोले दूध डाले और जीवनीय गण, मजीठ, चव्य, चीता, कायफल, सोंठ, मिरच, पीपल, पीपलामूल, रायसन, आमले, गोखुरू, कौंछके बीज, अड, सोया, तीनों प्रकारके निमक, देवदारू, गिलोय, कूठ, असगध, वच और कचूर इन प्रत्येक औषधियोंका एक एक तोले कल्क डालकर उसको मद मंद अग्निसे पकावे तो यह महामाषादि तेल सिद्ध होताहै। यह तेल पक्षाघात, हनुग्रह, कानकी पीडा, मस्तककी पीडा, त्रिदोषजन्य तिमिर, हाथकी जडता, पॉवकी जडता, शिर, गरदन और कानोंकी मदता, कलायखंज पंगुता, गृध्रसी और अपबाहुक रोग इन सब रोगोंमे यह तेल हितकारी है। पान, नस्य, पिचकारी और कान आदिके भरनेमें इस तेलका उपयोग करना वायुसम्बन्धी सम्पूर्ण रोगोको नष्ट करेहै। यह महामाषादि तेल पूर्वकालमे मुनियोंने कहा है॥ ॥ २६२–२६९॥

## अथ द्वितीयमहामाषादितैलम्।

माषा यवातसी क्षुद्रा मर्कटी च कुरण्टकः॥ गोकण्टष्टुण्टुकश्चैषां प्रत्येकं पलसप्तकम्॥ चतुर्गुणाम्बुना पक्त्वा पादशेषं शृतं नयेत्॥ २७०॥ कार्पासकास्थि बदरं शणबीजं कुलत्थकम्॥ पृथक्चतुर्दशपलं चतुर्गुणजले पचेत्॥ २७१॥ कषायं तत्र गृह्णीयाच्चतुर्थांशावशेषितम्॥ प्रस्थश्च छागमांसस्य चतुःषष्टिपले जले॥ २७२॥ प्रक्षिप्य पाचयेद्धीमान्पादशेषं रसं नयेत्॥ तैलप्रस्थे ततः क्वाथान्सर्वांस्तान्क्रमशः पचेत्॥ २७३॥ कल्कद्रव्यैः पचेदेभिरमृताकुष्ठसैन्धवैः॥ रास्नापुनर्नवैरण्डैः पिप्पल्या शतपुष्पया॥ २७४॥ बलाप्रसारिणीभ्याश्च मांस्या कटुकया तथा॥ पृथक्कर्षमितैरेतैः साधयेन्मृदुनाग्निना॥ २७५॥ हन्यात्तैलमिदं शीघ्रं वातव्याधीनशेषतः॥ आक्षेपकं पक्षघातमूरुस्तम्भापबाहुकौ॥ हस्तकम्पं शिरःकम्पं विश्वाचीमर्दितं तथा॥ २७६॥

उडद, जौ, अलसी, कटेरी, कौंछ, कटसरैया, गोखरू और अरलु, यह प्रत्येक औषधि सातसात पल लेकर चौगुने जलमें पकावे जब पकते पकते चौथाई भाग जल बाकी रहजाय तब उस क्वाथको उतारलेवे, फिर उसमें कपासके बीज, (बिनोले) बेर, सनके बीज और कुलथी ये प्रत्येक औषधि चौदह १४ चौदह १४ पल लेकर चौगुने जलमें पकावे जब चौथाई भाग जल बाकी रहजाय

तब उसको उतार लेवे, फिर चौंसट तोले भर बकरेका मांस लेकर चौंसठ पल जलमें पकावे जब चौथाई भाग जल रहजाय तब उतारलेवे, फिर ६४ तोले तेलमें इन काथोंको अनुक्रमसे पकावे, फिर गिलोय, कूठ, सैंधानिमक, रायसन, पुनर्नवा, एरंड, पीपल, सोया ( सौंफ ), खिरैटी, प्रसारणी, बालछड और कुटकी प्रत्येक पदार्थ एक एक तोला लेकर अलग अलग कल्क बनाकर तेलमें डालकर मंद मंद अग्निसे पकावे तो माषादि तैल सिद्ध होजाताहै । यह तेल आक्षेपक, पक्षाघात, ऊरुस्तम्भ, अपबाहुक, हस्तकंप, शिरकंप, विश्वाची, अर्दित ( लकवा ) और सम्पूर्ण वातव्याधियोंको तत्काल नष्ट कर देता है ॥ २७०–२७६ ॥

## अथ मध्यमनारायणतैलम् ।

अश्वगन्धा बला बिल्वं पाटला बृहतीद्वयम् ॥ श्वदंष्ट्रातिबला निम्बः श्योनाकश्च पुनर्नवा ॥२७७॥ प्रसारिणी चाग्निमन्थः कुर्याद्दशपलं पृथक् ॥ चतुर्द्रोणे जले पक्त्वा पादशेषं शृतं नयेत् ॥ २७८ ॥ तैलाढकेन संयोज्य शतावर्या रसाढकम्॥ प्रक्षिपेत्तत्र गोक्षीरं ततस्तैलाच्चतुर्गुणम् ॥ २७९ ॥ पृथक्पलमितैः कल्कैर्द्रव्यैरेभिः पचेद्भिषक् ॥ वचाचन्दनकुष्ठैलामांसीशैलेयसैन्धवैः ॥ २८० ॥ अश्वगन्धाबलारास्नाशतपुष्पेन्द्रदारुभिः ॥ पर्णीचतुष्टयेनैव तगरेण प्रसाधयेत् ॥ २८१ ॥ तत्तैलं भोजनेऽभ्यंगे पाने बस्तौ च योजयेत् ॥ पक्षाघातं हनुस्तम्भं मन्यास्तम्भं गलग्रहम ॥ २८२ ॥ कुब्जत्वं बधिरत्वञ्च गतिभंगं कटीग्रहम् ॥ गात्रशोषेन्द्रियध्वंसं शुक्रनाशं ज्वरक्षयान् ॥२८३॥ अन्त्रवृद्धिं कुरण्डञ्च दन्तरोगं शिरोग्रहम् ॥ पार्श्वशूलञ्च पंगुत्वं बुद्धिनाशञ्च गृध्रसीम् २८४ अन्यांश्च विविधान्वातान्हरेत्सर्वांगसंश्रयान ॥ अस्याः प्रभावाद्वन्ध्यापि नारी पुत्रं प्रसूयते ॥ २८५ ॥ यथा नारायणो देवो दुष्टदैत्यविनाशनः ॥ तथेदं वातरोगाणां नाशनं तैलमुत्तमम् ॥ २८६ ॥

असगंध, खिरैटी, बेलगिरी, पाढल, कटेरी, बडी कटेरी, गोखुरू, कंघी, नीम, अरलू, पुनर्नवा, प्रसारणी और अरनी ये प्रत्येक औषधि दशदश पल लेकर चार द्रोण जलमें पकावे जब पकते पकते चौथाई भाग जल बाकी रहजाय तब उस क्वाथको छान लेवे, फिर इस क्वाथमे तेल १ आढक, सतावरका रस १ आढक और गायका दूध ४ आढक डाले तथा वच, लाल चंदन, कूठ, इलायची, बालछड, पत्थरका फूल ( छारछबीला ), सैंधानिमक, असगंध, खिरैटी, रायसन, सोया, देवदारु, शालिपर्णी, पृश्निपर्णी, मुद्गपर्णी, माषपर्णी और तगर इन प्रत्येक औषधिका कल्क चार चार तोले डालकर वैद्य इस तेलको उत्तमरीतिसे तैयारकरे इस प्रकार करनेसे मध्यम नारायण तेल सिद्ध होताहै ।

इस तेलको भोजनमें, अभ्यंगमें, पिचकारीमें और पीनेमें उपयोग करे तो इससे पक्षाघात, हनुस्तम्भ, मन्यास्तम्भ, गलग्रह, कुब्जता, बधिरता, गतिभंग, कमरकी पीडा, गात्रशोष, इन्द्रियध्वंस, वीर्यका क्षय, ज्वर, क्षय, अन्त्रवृद्धि, कुरंड, दंतरोग, मस्तककी वेदना, पार्श्वशूल, पंगुता, बुद्धिका नाश, गृध्रसी और अन्यान्य भी समस्त शरीरमें रहनेवाले वातरोग नष्ट होजातेहैं । इसके प्रतापसे वन्ध्या स्त्रियें भी पुत्रको उत्पन्न करतीहैं । जिस प्रकार नारायणदेव दुष्ट दैत्योंका नाश करतेहैं उसी प्रकार यह उत्तम नारायण तेल वायुसम्बन्धी समस्त रोगोंको दूर करैहै ॥ २७७–२८६ ॥

## अथ महानारायणतैलम् ।

तिलतैलं समादाय चतुराढकसम्मितम्॥ पञ्चपल्लवकल्केन शोधयेद्दोषशान्तये ॥ ॥ २८७ ॥ तत्राजं दुग्धमथ वा गव्यं तैलसमं पचेत् शतावरीरसञ्चापि तैलतुल्यं पचेद्भिषक् ॥ २८८ ॥ दशमूली बला रास्ना शिग्रूत्पलपुनर्नवाः ॥ शेफालिका नागबला बला चैव प्रसारिणी ॥ २८९ ॥ अश्वगन्धा सहचरो

दर्भमूलं करञ्जकः ॥ खदिरं चन्दनं लोध्रं वचाशनपलाशकम् ॥ बकुलैरण्डवरुणशालयुग्मकदम्भराः ॥ २९० ॥ शिरीषः शिखरी वासा हिंस्रा जम्बूर्बिभीतकम् ॥ काञ्चनारः कपित्थश्च पारिभद्रः प्रियालकम्॥पाषाणभेदः शम्पाको दुग्धिका दाडिमीफलम् ॥ २९१ ॥ उदुम्बरः सप्तला च कन्यका मालती त्वचम् ॥ मागधीफलमूलश्च यवकोलकुलत्थकम्॥२९२॥ आत्मगुप्तार्ककार्पासबीजं वृक्षादनी स्नुही॥ केतकीमूलधत्तूरलाङ्गलीगर्दभाण्डकम् ॥ ॥ २९३ ॥ चित्रकश्च महानिम्बं पञ्चवल्कलमेव च ॥ मुण्डी ठेकारि मुसली हंसपादीविशल्यकम् ॥ २९४ ॥ एषां दशपलान्भागान्वारिण्यष्टगुणे पचेत् ॥ पाददेशं परिस्राव्य तत्र तैलं पुनः पचेत्॥ ॥ २९५ ॥ छागो मेषश्च हरिण एणश्च बहुश्रृंगकः ॥ शशः शल्यः शिवा गोधा सिंहो व्याघ्रश्च भल्लुकः ॥ २९६ ॥ वन्यो वराहः खड्गी च महिषो घोटकस्तथा ॥ कपिर्बभ्रुर्बिडालश्च मूषकश्चोरुदर्दुरः ॥ ॥ २९७ ॥ वर्तीकस्तित्तिरिर्लावः खञ्जरीटश्चकोरकः ॥ उलूको नीलकण्ठश्च वनकुक्कुट एव च ॥ २९८ ॥ गृध्रश्च गरुडो हंसश्चक्रः कारण्डवोऽपि च ॥ कपोतः सारसः क्रौञ्चो वन्यः पारावतस्तथा ॥ रोहितो मद्गुरश्चापि शिलीन्ध्रः श्रृंगकस्तथा ॥ २९९ ॥ इल्लीसो गर्गरो वर्मिः क्रथकाकः पिकोऽपि च ॥ महामत्स्यः कच्छपश्च शिशुमारश्च सांकुचिः ॥३००॥ मकरो घंटिकाकारस्तदलाभे तु गोधिका ॥ यथालाभममी षाश्च क्वाथं तैलसमं पचेत् ॥ ३०१ ॥ रास्नाश्वगन्धामिसिदारुकुष्ठपर्णीचतुष्काऽगुरुकेसराणि॥ सिन्धूत्थमांसी रजनीद्वयश्च शैलेयकं चन्दनपुष्करश्च ॥ ३०२ ॥ एला सयष्टी तगराब्दपत्रं भृङ्गोऽष्टवर्गस्तु वचा पलांसी ॥ स्थौणेयवृश्चीवकचोरकाख्यं मूर्वात्वचं कट्फलपद्मकश्च ॥ ३०३ ॥ मृणालजातीफलकेतकाख्यं सनागपुष्पं सरलं मुरा च ॥ जीवन्तिकोशीरवरास्तथैव दुरालभा वानरिका नखश्च॥३०४॥ कैवर्तमुस्तार्जुनतिक्तकश्च वातामखर्जूरकतुम्बराश्च ॥ सधातकीग्रन्थिकपर्पटाश्च पटोलहेमाजजयन्तिकाश्च ॥ ३०५ ॥ त्रायन्तिकालम्बुषशक्रबीजं रसाञ्जनाभा त्रिवृतारुणा च॥द्राक्षाकणाद्रोणपुनर्नवाश्च कौन्ती क्रिमिघ्नो हयमारकश्च ॥ ३०६ ॥ नीलोत्पलं पद्मककारवीभ्यां रम्भानलो गोक्षुरकः क्षुरश्च॥ कंकोलकालेयकुसुम्भपुष्पन्तुरुष्ककाश्मीरकसिक्थकश्च ॥ लवंगकर्पूररसालकाण्डकस्तूरिकाबालकमम्बरश्च ॥ ३०७ ॥

दारु देवदारु । पर्णीचतुष्कं शालिपर्णी पृष्ठिपर्णी मुद्गपर्णी माषपर्णी । केशरः पुन्नागस्तस्य पुष्पं ग्राह्यम् । तदलाभे नागकेशरं ग्राह्यम् । शैलेयकम् छरीला इति लोके । चन्दनमत्र श्वेतम् । पुष्करं पुष्करमूलम् । तगरस्याप्यलाभे तु कुष्ठं दद्याद्भिषग्वरः । भृंगस्त्वक् । अष्टवर्गालाभे शतावरी विदार्यश्वगन्धा वाराही द्विगुणा दद्यात् । वाराही गेठि इति लोके । पलांसी कर्चूरभेदः गन्धपलाशीति काश्मीरे प्रसिद्धा तदलाभे कर्चूर एव देयः ॥ स्थौणेयं गठिवनभेदः ईषत्सुगन्धि थनेर इति लोके । वृश्चीवः श्वेतमूला पुनर्नवा । चोरकः ग्रन्थिपर्णस्यैव भेदः भंडिउर इति नैपालदेशे प्रसिद्धः ।

केतकस्य मूलं पुष्पञ्च दद्यात् । कैवर्तमुस्ता केवटीमोथा गुडतजी इति च लोके । तिक्तकः किराततिक्तकः वातामं वादाम इति लोके। हेमाह्वं धत्तूरस्य फलं मूलं पत्रञ्च। जयन्तिका जेत्रित्वक् । त्रायन्तिका अत्र लभ्यत एव न । अलम्बुषा लज्जालूभेदः । आभा बब्बूलः तस्य त्वक। अरुणा मञ्जिष्ठा। द्रोणः द्रोगु मारुक् पञ्चांगः । पुनर्नवा रक्तपुष्पा । हयमारकः करवीरस्तस्य मूलम् । पद्मकं नीलोत्पलादन्योत्पलम् । पद्मकाष्ठम् उक्तमेव । कारवी मगरैला इति । रम्भायाः कन्दम् । क्षुरस्य फलानि रसालकाण्डम् । आण्डी सुगन्धद्रव्यम् ॥

कल्कानमीषां विपचेत्सुवैद्यः पृथक्पृथक् कर्षयुगोन्मितानाम् ॥ शुभे च नक्षत्रमुहूर्तलग्ने सन्तोष्य विप्रांश्च भिषग्वरांश्च ॥ ३०८ ॥ सम्पूज्य नारायणनामधेयं देवं त्रिनेत्रं जगतामधीशम् ॥ पात्रेषु हेम्नः खलु राजते वा ताम्रेऽथ वा लोहमयेऽपि रक्षेत् ॥ ३०९ ॥ अभ्यञ्जनेऽञ्जने नस्ये निरूहे चावगाहने ॥ पाने चैतद्यथाव्याधि प्रयुञ्जीत चिकित्सकः ॥ ३१० ॥ बहुनाऽत्र किमुक्तेन तैलमेतत्प्रयोजितम् ॥ अवश्यं वातजान्व्याधीनशीतिमपि नाशयेत् ॥ ३११ ॥ एतस्याभ्यासतो जन्तोर्जरा जातु न जायते ॥ पतन्ति वलयो नैव पलितश्च न जायते ॥ ॥ ३१२ ॥ नेत्रं तेजस्वि नितरां गरुडस्येव जायते ॥ नोच्चैः श्रुतिर्न बाधिर्यं कर्णनादो न जायते ॥ पाणिकम्पः शिरःकम्पः प्रलापश्च न जायते ॥ ३१३ ॥ बुद्धिभ्रंशो न जायेत तस्मात्कर्मसु पाटवम् ॥ यथा जलेन सिक्तस्य शाखिनः पल्लवादयः ॥ ३१४ ॥ वर्द्धन्ते धातवस्तद्वद्देहिनोऽनेन नित्यशः ॥ आमं गर्भं त्यजेज्जातु सूतिका रुग्युता च या ॥ ॥ ३१५ ॥ या च दुःप्रसवक्षीणा ताभ्य एतद्धितं परम् ॥ वन्ध्या च लभते पुत्रं गर्भपातो न जायते ॥ ३१६ ॥ योनिरोगाः प्रणश्यन्ति प्रदरश्च प्रशाम्यति ॥ अस्मात्तैलवरादन्यत्कुत्रचिन्नास्ति भेषजम् ॥ ३१७ ॥ बल्यं वृष्यं बृंहणञ्च रसायनमिदं महत् ॥ पुरा देवासुरे युद्धे दैत्यैरभिहतान्सुरान् ॥ ३१८ ॥ भिन्नान्भग्नास्थिकान्विद्धान्पिच्चितान्व्यथयाऽर्दितान् ॥ दृष्ट्वा हिताय देवानां नराणां चाऽब्रवीदिदम् ॥ तैलं नारायणो देवो महानारायणाभिधम् ॥ ३१९ ॥

चार आढक तिलका तेल लेकर दोषकी शांतिके लिये उसको पचपल्लवके काथसे शुद्ध करे फिर उस तेलमें चार आढक बकरीका अथवा गायका दूध और चार आढक सतावरका रस पकावे, फिर दशमूल, खिरैटी, रायसन, सैंजिना, नीलकमल, पुनर्नवा, निर्गुण्डी, कघो, गगेरन, प्रसारण, असगन्ध, कटसरैया, डाभकी जड, करंजुआ, खैर, लालचन्दन, लोध, वच, विजयसार, ढांक, मौलसिरी, अड, वरना, दो प्रकारका साल, कुटकी, सिरस, चिरचिटा, अडूसा, बालछड, जामुनकी छाल, बहेडा, कचनार, कैथ, नीम, चिरौंजी, पापाणभेद, अमलतास, दुद्धी, अनार, गूलर, सातला, घीक्वार, मालती, (चमेली) तज, पीपल, नरसलकी जड, जौ, वेर, कुलथी, कौंछ, आककी जड, कपास, गिलोय, थूहर, चीता, केवडेकी जड, धतूरा, कलिहारी, वेलिया, पीपलकी छाल, बकायन, पचवल्कल, गोरखमुडी, टेकारी, मुसली, लालज्जालू और इन्द्रायन ये प्रत्येक पदार्थ दशदश पल लेकर अटगुने जलमें पकावे जब पकते पकते चौथाई जल शेष रह जाय तब उतारकर छानलेवे, फिर इस काथमें इस तेलको पकावे, फिर बकरा, मेढा, हिरन, एणहिरण, सांवर, खरगोश, सेई, छपकली, गोय, सिंह, वाघ, रीछ, जंगलीसुअर, गेंडा, भैंसा, घोडा, बन्दर, नौला, बिलाव, चूहा, मेडक, वत्तक, तीतर, लवा, खजन (ममोला) चकोर, उल्लू, नीलकंठ, वनमुरगा, गीध, गरुड, हंस, चकवा, कार-

डव, कबूतर, सारस, कुडा, जगली कबूतर, रोहू मछली, मद्गुर मछली, शिलीन्ध्र, शृंगक, इल्लीस, गर्गरीमछली, वर्मि, छथ मछली, कौआ, कोयल, महामत्स्य, कछुवा, शिशुमार, संकुच, मगर, घडियाल, अगर घडियाल न मिलसके तो उसके अभावमे गोय लेनी चाहिये । इनमें जितने जीवोके मांस मिलसके उतनेही लेने चाहिये । इनके चार आढक रसमे तेलको पकावे फिर रास्ना, असगन्ध, सोया, देवदारु, पृश्निपर्णी, शालिपर्णी, मुद्गपर्णी, माषपर्णी, कूठ, अगर, पुन्नाग, अगर पुन्नाग न मिलसके तो उसके अभावमें नागकेसर लेनी चाहिये, सैंधानिमक, बालछड, हलदी, दारुहलदी, भूरीछरीला, चन्दन, पोहकरमूल, इलायची, मुलैठी, तगर, जो तगर न मिलसके तो कूठ लेना चाहिये, नागरमोथा, तेजपात, तज, मेदा आदि अष्टवर्ग जो अष्टवर्ग न मिलसके तो उसके बदलेमें दोनो सतावर, विदारीकन्द, असगन्ध, तथा वाराहीकन्द, वच, गन्धपलाशी ( काश्मीर देशमें प्रसिद्ध है ) अगर गन्धपलाशी न मिले तो कचूर लेना चाहिये । थुनेर, सफेद फूलका पुनर्नवा, नेपाल देशमे होनेवाला भटेउर, मूर्वाकी छाल, तज, कायफल, पद्माख, कमलकी नाल, जायफल, केवडेकी जड और फूल, नागकेसर, धूपसरल, कपूरकचरी, गिलोय, सुगन्धवाला, हरड, बहेडा, आमला, धमासा, कौंछ, नख, सुगधद्रव्य, केवटीमोथा, अर्जुन, चिरायता, बादाम, खजूर ( छोहारे ), धनिया, तुम्बुरु, धायके फूल, पीपलामूल, पित्तपापडा, परवल, धतूरेकी छाल, अरणी, त्रायमाण, अलम्बुषा ( एक प्रकारकी लज्जावन्ती ), इन्द्रजौ, रसोत, बबूरकी छाल, निसोत, मजीठ, दाख, पीपल, गूँमा, लालफूलकी पुनर्नवा, निर्गुण्डीके बीज अथवा मेहदीके बीज, वायविडग, कनेरकी जड, नीले कमल, कमल, कालाजीरी ( कलौंजी ), केलेका कंद, चीता, गोखुरू, तालमखाना, कंकोल, पीलाचंदन, कसूमके फूल, शिलारस, केसर, मोम, लौंग, कपूर, सालके काड, जवादि कस्तूरी, सुगधबाला और अम्बर इन प्रत्येक औषधिका अलग अलग दो दो तोले कल्क बनाकर उस कल्कसे इस तैलको पकावे तो यह महानारायण नामक तैल सिद्ध होताहै । शुभ नक्षत्रमें शुभ, मुहूर्तमे तथा शुभलग्नमें वैद्य ब्राह्मणोका और उत्तम प्राचीन वैद्योका पूजन करके जगत्के स्वामी और तीनों गुणोंको चलानेवाले नारायण देव और त्रिनेत्र शूलपाणि शिवजीका पूजन करके सोनेके, रूपेके, ताबेके अथवा लोहेके बासनमें इस तेलको भरकर रखदेवै । वैद्य व्याधिके, अनुसार अभ्यगमें, अजनमे, नस्यमें, निरूहवस्तिमें, अवगाहनमें और पानमें इसको प्रयोग करे । विशेष कहनेसे क्या प्रयोजन परंतु इतना अवश्य कहेगे कि इस तेलका विधिपूर्वक व्यवहार किया जाय तो यह अस्सी प्रकारके वातरोगोको अवश्य नष्ट करदेताहै । इस तेलका अभ्यास करनेसे शरीरमें वली नहीं पडती, बिना समयही बाल सफेद नहीं होजाते, नेत्र गरुडकी समान अत्यत तेजयुक्त होतेहैं, ऊचेसे सुन्ना, बहरापन और कानमे अनेक प्रकारके शब्द होना यह कभी नहीं होता, हाथ नहीं कांपते, मस्तक नहीं कॉपता, प्रलाप नहीं होता, बुद्धि भ्रष्ट नहीं होती और सब काम करनेमें समर्थ होताहै । जिस प्रकार जलसे सीचेहुए वृक्षके पल्लवआदि वृद्धिको प्राप्त होतेहै उसीप्रकार इस तेलके सींचनेसे प्राणियोकी धातु वृद्धिको प्राप्त होतीहैं । जिस स्त्रीके कच्चा गर्भ गिर जाताहै, सूतिका रोगवाली और जो स्त्रियें प्रसवकी वेदनासे क्षीण होगई हैं उनके लिये यह तेल अत्यंत हितकारी है, इस तेलका उपयोग करनेसे वंध्यास्त्रियोके भी पुत्रकी प्राप्ति होतीहै । गर्भपात नही होता, योनिके समस्तरोग नष्ट होतेहैं और प्रदररोग शात होताहै इस परमोत्तम तैलसे अधिक बलवर्द्धक, मैथुनशक्तिको बढानेवाली और धातुओंको पुष्ट करनेवाली अन्य औषधि नही है । यह तैल श्रेष्ठ रसायन है, पूर्वकालमे दैत्योके तथा देवताओके युद्धमे दैत्योंके प्रहारसे जो देवताओके शरीरमें चोट लगीथी, हड्डी टूट गईथीं, शरीर बेधा गया था, हाड पिंजर चूर्ण होगयेथे और पीडासे व्याकुल थे तब श्रीनारायण देवने मनुष्योंके हितके लिये यह नारायण तैल निर्माण किया था ॥ २८७-३१९ ॥

इति महानारायणतैलम् ।

---

## अथ महायोगराजगुग्गुलुः ।

**नागरं पिप्पलीमूलं चव्यमूषणचित्रकम् ॥ भृष्टं हिंग्वजमोदा च सर्षपो जीरकद्वयम् ॥ ३२० ॥ रेणुकेन्द्रयवौ पाठा विडंगं गजपिप्पली ॥ कटुकाऽतिविषा भार्ङ्गी वचा मर्वा च पत्रकम् ॥ ३२१ ॥ देवदारु कणा कुष्टं रास्ना मुस्ता च सैन्ध-**

वम् ॥ एला त्रिकण्टकं पथ्या धान्यकञ्च विभीतकम् ॥ धात्री च त्वगुशीरञ्च यवक्षारोऽखिलान्यपि ॥ ३२२ ॥ एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ यावन्त्येतानि चूर्णानि तावानेवात्र गुग्गुलुः ॥ ३२३ ॥ संमर्द्य सर्पिषा पश्चात्सर्वं संमिश्रयेच्च तत् ॥ एकं पिण्डञ्च तत्कृत्वा धारयेद्घृतभाजने॥ गुटिकाष्टंकमात्रास्तु खादेत्तास्तु यथोचिताः ॥ ३२४ ॥

अत्र दोषकालाद्यपेक्षया ॥

सोंठ, पीपलामूल, चव्य, कालीमिरच, चीता, भुनीहुई हींग, अजमोद, सरसों, जीरा, कालाजीरा, रेणुका, इन्द्रजौ, पाढ, वायविडंग, गजपीपल, कुटकी, अतीस, भारगी, वच, मूर्वा, तेजपात, देवदारु, पीपल, कूठ, रायसन, नागरमोथा, सेंधानिमक, इलायची, गोखुरू, हरड, धनिया, बहेडा, आमला, तज, खस और जवाखार इन सब पदार्थोंको समान भाग लेकर बारीक चूर्ण बनावे, फिर इस सब चूर्णकी बराबर गूगल लेवैं, सबको एकत्र मिलाकर खूब घीमें मर्दन करके एक पिंड बनावे उस पिंडको घीके बासनमें रखदेवें, फिर उसकी चौबीस चौबीस रत्तीकी गोलिया बनावे । दोष और कालानुसार विचारकर इन गोलियोंको सेवन करे ॥ ३२०–३२४ ॥

आदौ शाणोन्मितं खादेत्सार्द्धशाणं ततः परम् ॥ तदग्रे कर्षमर्द्धन्तु पूर्णं कर्षं ततः परम् ॥३२५॥ गुग्गुलुर्योगराजोऽयं महामुख्यो रसायनम् ॥ मैथुनाहारपानानां नियमो नात्र विद्यते ॥ ३२६ ॥ अर्शांसि ग्रहणीरोगं प्लीहगुल्मोदरानपि ॥ आनाहं मन्दमग्निञ्च श्वासं कासमरोचकम् ॥ ॥ ३२७ ॥ प्रमेहं नाभिशूलञ्च क्रिमिक्षयमुरोग्रहम् ॥ सर्वान्वातामयान्हन्यादामवातमपस्मृतिम् ॥३२८॥ वातरक्तं तथा कुष्ठं तथा दुष्टव्रणानपि ॥ शुक्रदोषं रजोदोषमुदावर्तं भगन्दरम् ॥ ३२९ ॥

इन गोलियोंको सेवन करनेकी यह विधि है कि प्रथम कुछेक दिनोतक तो एक एक गोली खाय, फिर डेढ डेढ गोली खाय, फिर छैः छैः मासे खाय, फिर एक एक तोला भर खाय, यह योगराज गूगल अत्यंत मुख्य है और रसायन है । इसके सेवन करनेमें मैथुन और अन्नपानका कुछ नियम नहीं है । इस गूगलको सेवन करनेसे बवासीर, सग्रहणी, प्लीहा, गुल्म, उदरके समस्तरोग, पेटका अफारा, अग्निकी मंदता, श्वास, खाँसी, अरुचि, प्रमेह, नाभिशूल, कृमि, क्षय, छातीका जकडना, सर्व प्रकारके वातरोग, आमवात, अपस्मार, कोढ, दुष्टव्रण, वीर्यविकार, रजोदोष, उदावर्त और भगन्दर इन सब रोगोंका नाश होताहै ॥ ३२५–३२९ ॥

रास्नादिकाथसंयुक्तः सर्ववातामयान्हरेत्॥ काकोल्यादिश्रृतात्पित्तं कफमारग्वधादिना ॥ ३३० ॥ दार्वीश्रृतेन मेहांश्च गोमूत्रेण च पाण्डुताम् ॥ मधुना मेदसो वृद्धिं कुष्ठं निम्बश्रृतेन च ॥ ३३१ ॥ छिन्नाकाथेन वातास्रं शोथं मूलकजाच्छृतात् ॥ पाटलाकाथसहितो विषं मूषकसम्भवम् ॥ ३३२ ॥ त्रिफलाकाथसंयुक्तो दारुणां नेत्रवेदनाम् ॥ पुनर्नवादिकाथेन हन्ति सर्वोदराण्यपि ॥ ३३३ ॥

इस गूगलको रास्नादि काथके साथ पीनेसे सर्व प्रकारकी वातव्याधि शमन होतीहै । इसको काकोल्यादि काथके साथ पीनेसे पित्त शमन होताहै । आरग्वधादि काथके साथ पीनेसे कफ दूर होताहै । दारुहलदीके काथके साथ पीनेसे प्रमेह नष्ट होताहै । गोमूत्रके साथ पान करनेसे पाडुरोग नष्ट होताहै । सहतके साथ खानेसे मेदकी वृद्धि नष्ट होतीहै । नीमके काथके साथ पीनेसे कोढ नष्ट होताहै । गिलोयके काथके साथ पीनेसे वातरक्त नष्ट होताहै । मूलीके काथके साथ पीनेसे सूजन दूर होतीहै । पाढलके काथके साथ पीनेसे चूहेका विष दूर होताहै । त्रिफलेके काथके साथ पीनेसे नेत्रकी दारुण पीडा शमन होतीहै ।

और पुनर्नवादिक्काथके साथ पीनेसे सर्व प्रकारके उदर रोग नष्ट होते हैं ॥ ३३० ॥ ३३३ ॥

**रास्ना पुनर्नवा शुण्ठी गुडूच्येरण्डजं शृतम् ॥ सप्तधातुगते वाते सामे सर्वांगगेऽपि चेत् ॥ ३३४ ॥**

रास्ना, पुनर्नवा, सोंठ, गिलोय और एरंड इनका क्काथ रास्नादिक्काथ कहा जाताहै । सप्तधातुगत वायु आमसंयुक्तवायु और सर्वशरीरस्थवातके विकारोंमे यह क्काथ उपयोगी है ॥ ३३४ ॥

## अथ रसोनकल्कः ।

**युक्तः कल्को रसोनस्य तिलतैलेन सिन्धुना ॥ वातरोगान्हरेत्सर्वाञ्ज्वरांश्च विषमानपि ॥ ३३५ ॥**

लसुनका कल्क बनाकर उसमे तिलका तेल और सैंधानिमक मिलाकर भक्षण करै तो समस्त वायु सम्बन्धी रोग और विषमज्वर नष्ट होजाते है ॥ ३३५ ॥

## अथ द्वितीयरसोनकल्कः ।

**क्षीरेण तैलेन घृतेन वाऽपि मांसेन सार्द्धं लशुनानि खादेत् ॥ शाल्योदनेनापि च षष्टिकेन पलार्द्धवृद्ध्या दिवसानि सप्त ॥ ॥ ३३६ ॥ वातोत्थरोगान्विषमज्वरांश्च शूलान्सगुल्मान्दहनस्य मान्द्यम् ॥ प्लीहानमुग्रं भुजपार्श्वशूलं शिरोव्यथां कृन्तति शुक्रदोषान् ॥ ३३७ ॥**

दूध, तेल, घी, मांस, भात अथवा साठीके चावलोंका भात इनके साथ सात दिन तक क्रमसे प्रत्येक दिन दो दो तोले बढाकर लसुनका कल्क भक्षण करे तो वातसम्बन्धी रोग, विषमज्वर, शूल, गुल्म, अग्निकी मंदता, प्लीहाकी पीडा, हाथ और पसलियोकी पीडा, मस्तककी व्यथा और वीर्यके समस्त दोष दूर होते हैं ॥ ३३६ ॥ ३३७ ॥

## अथ लशुनसेवनस्य तृतीयविधिः ।

**अन्नप्रकारैः पललप्रकारैर्गोधूमकैर्वा यवसक्तुभिर्वा ॥ दुग्धेन तैलेन घृतेन वापि युक्तानि शाते लशुनानि खादेत् ॥ ३३८ ॥ संवर्तकैर्लावकपिञ्जलैर्वा मृग्याः पलैर्वाप्यथकौक्कुटैर्वा ॥ वाराहवार्त्तीरकहारिणैर्वा सुसंस्कृतैरग्निबलं समीक्ष्य ॥ ३३९ ॥**

अन्नके पदार्थोंके साथ, मांसके बनेहुए पदार्थोंके साथ, गेहूंके बनेहुए पदार्थोंके साथ, जौके सत्तूके साथ, दूधके साथ, तेलके साथ, घीके साथ, संवर्तकके मासके साथ, लवाके मासके साथ, तीतरके मांसके साथ, हिरनीके मासके साथ, मुरगेके मासके साथ, सुअरके मासके साथ, बटेरके मासके साथ अथवा हिरनके मांसके साथ शीतकालमें अग्निका बलाबल विचारकर लसुनको सेवन करना चाहिये । जो अन्न मांस आदि पदार्थोंके साथ लसुन खाना होय तो उन पदार्थ आदिसे अच्छे प्रकारसे सस्कृत ( सशोधन ) करना चाहिये ॥ ३३८ ॥ ३३९ ॥

## अथ रसोनाष्टकम् ।

**रसोनपक्वकन्दस्य गुलिका निस्तुषीकृताः॥ पाटयित्वा च मध्यस्थं दूरीकुर्यात्तदंकुरम्॥ ॥ ३४० ॥ निश्युग्रगन्धनाशाय दध्ना सन्नीय रक्षयेत् ॥ ततः प्रक्षाल्य संशोष्य शिलायां परिपेषयेत् ॥ ३४१ ॥ कल्कस्य पञ्चमे भागे चूर्णमेषां विनिःक्षिपेत् ॥ सौवर्चलं यवानीश्च भर्जितं हिंगु सैन्धवम्॥ ॥ ३४२ ॥ कटुत्रिकं जीरकश्च समभागानि चूर्णयेत् ॥ तिलतैलञ्च कल्कस्य तुर्यांशं तत्र मिश्रयेत् ॥३४३॥ खादेत्कर्षमितं प्रातः किं वा दोषाद्यपेक्षया ॥ अनुपानं प्रकुर्वीत वातारिशृतमन्वहम् ॥ ३४४ ॥ सर्वांगैकांगजं वातमर्दितञ्चापतन्त्रकम् ॥ अपस्मारं तथोन्मादमूरुस्तम्भञ्च गृध्रसीम् ॥ ३४५ ॥ उरःपृष्ठकटीपार्श्वकुक्षिपीडां कृमीन्हरेत् ॥ मद्यं मांसं तथाऽम्लञ्च रसं सेवेत नित्यशः ॥ ३४६ ॥ आयासमातपं रोषमतिनीरं गुडं स्त्रियम् ॥ रसोनमश्नन्पुरुषस्त्यजेदेतन्निरन्तरम् ॥ ३४७ ॥ वर्जयेत्तदतीसारी प्रमेही पाण्डुरोगवान् ॥ अरोचकी गर्भिणी च मूर्च्छार्शोरोगसंयुतः॥**

॥ ३४८ ॥ रक्तपित्ती च शोषी च यक्ष्मी छर्द्यर्दितो नरः ॥ पित्ते तु पथ्यमुक्कुर्यात्प्रयोगान्ते विरेचनम् ॥ ३४९ ॥ अन्यथा तस्य जायन्ते कुष्ठपाण्ड्वामयादयः ॥ स्त्रीस्तन्ये त्वरितं दद्याद्बालानामप्यनिच्छताम् ॥ तथा च लभते सिद्धिं महावीर्याद्रसोनतः ॥ ३५० ॥

लसुनकी पकीहुई गाठको छीलकर साफ करले फिर उसको चीरकर उसके बीचके अकुरोंको निकाल डाले, पश्चात् उसकी उग्रगधको दूर करनेके लिये उन कलियोंको रात्रिमें दहीके बीचमें गाड देवे, फिर प्रातःकाल धोकर सुखावे और शिलपर पीसकर कल्क बनावे उसमें कालानिमक, अजवायन, भुनी हींग, सैंधानिमक, सोंठ, मिरच, पीपल और जीरा इन सबको समान भाग लेकर चूर्ण करे लसुनके कल्कसे पांचवा भाग इस चूर्णको मिलावे और कल्कसे चौथाई भाग तिलका तेल मिलावे, फिर इसमेंसे प्रातःकाल एक तोलाभर खाय अथवा दोषोंका विचार करके योग्य मात्रानुसार खाय और नित्य एरंडका काथ पिये । यह रसोनाष्टक सर्वांगवात, एकागवात, अर्दित, अपतत्रक, अपस्मार, उन्माद, ऊरुस्तम्भ, गृध्रसी, छातीकी पीडा, पीठकी पीडा, कमरकी पीडा, पसलियोंका शूल, तथा कोखकी पीडा और कृमिओंको नष्ट करे है । रसोनाष्टकको सेवन करनेवाला नित्य मद्यको, मासको तथा खट्टे रसको सेवन करे और परिश्रम, धूप, क्रोध, अत्यत जल तथा मैथुन इनका त्याग करदेवे । अतिसार, प्रमेह, पाडुरोग, अरुचि, मूर्च्छा, बवासीर, रक्तपित्त, शोष, भयकर क्षयरोग और वमन इनसे पीडित तथा गर्भवती स्त्रियें लसुनका भक्षण त्यागदेवें । पित्तकी पीडा होय तो पथ्यसे भोजन करे इस रसोनाष्टकको सेवन करनेके पश्चात् विरेचन लेवे, जो विरेचन न लेवे तो कोढ तथा पाण्डुरोगादि उत्पन्न होते हैं रसोनाष्टककी नहीं इच्छा करनेवाले बालकोंको भी उनकी माताके दूधमें तत्काल इस रसोनाष्टकको मिलाकर देवे इस प्रकार करनेसे लसुनके गुणोंकी बाहुल्यतासे बालकोंके समस्त वातविकार शमन होते है ॥ ३४०–३५० ॥

## अथ वातारिरसः ।

रसो गन्धो वरा वह्निर्गुग्गुलुः क्रमवर्द्धितः ॥ तत्रैकभागः सूतः स्याद्गन्धको द्विगुणः स्मृतः ॥ ३५१ ॥ त्रिभागा त्रिफला योज्या चतुर्भागस्तु चित्रकः ॥ गुग्गुलुः पञ्चभागः स्याद्रुबुतैलेन मर्दितः ॥ ३५२ ॥ क्षिप्त्वा तत्रोदितं चूर्णं तेन तैलेन मर्दयेत् ॥ गुटिकां कर्षमात्रान्तु भक्षयेत्प्रातरेव हि ॥ ॥ ३५३ ॥ नागरैरण्डमूलानां कषायं प्रपिबेदनु ॥ अभ्यज्यैरण्डतैलेन स्वेदयेत्पृष्ठदेशकम् ॥ ३५४ ॥ विरेकपरिणामे तु स्निग्धमुष्णञ्च भोजयेत् ॥ वातारिसंज्ञको ह्येष रसो नियतसेवितः ॥ मासेन मरुतो रोगान्हरेत्सुरतवर्जिनः ॥ ३५५ ॥

इति वातारिरसः ।

पारा १ भाग, गधक २ भाग, त्रिफला ३ भाग, चीता ४ भाग और अडके तेलमें मर्दन किया हुआ गूगल ५ भाग, इन सबको एकत्र मिलाकर अडीके तेलमें मर्दन करे, इसमेंसे प्रतिदिन एक एक तोलेकी गोली बनाकर भक्षण करे और गोली खानेके पश्चात् सोंठ और अडकी जडके क्वाथका नुपान करे फिर अडीके तेलको पीठपर मलकर, सेकदेवे । कदाचित् रेचन लगे तो स्निग्ध और गरम अन्न भोजन करे यह वातारिनामक रस नियमपूर्वक सेवन किया जाय और मैथुनका त्याग करदेवे तो एक महीनेमें वातसम्बन्धी सम्पूर्ण रोग नष्ट होजाते हैं ॥ ॥ ३५१–३५५ ॥

इति वातव्याध्यधिकारः सम्पूर्णः ।

---

# अथ ऊरुस्तम्भाधिकारः ।

## तत्रोरुस्तम्भस्य विप्रकृष्टसन्निकृष्टनिदान सम्प्राप्तिपूर्वकलक्षणानि ।

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ॥ जीर्णाजीर्णे तथाऽऽयाससंक्षोभस्वप्नजागरैः ॥ १ ॥ सश्लेष्ममेदःपवनः साममत्यर्थसञ्चितम् ॥ अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥ २ ॥ सक्थ्यस्थीनि प्रपूर्यान्तः

श्लेष्मणा स्तिमितेन सः ॥ तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ३ ॥ परकीयाविव गुरू स्यातामतिभृशव्यथौ॥ ध्यानांगमर्दस्तैमित्यं तन्द्राच्छर्द्यरुचिज्वरैः ॥ ४ ॥ संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ॥ तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५ ॥

जीर्णाजीर्णे किञ्चित् जीर्णे किंचित् अजीर्णे। शीतादिभिः निषेवितैः भुक्तैः। संक्षोभेण संचलनेन। दिवास्वप्नेन रात्रौ जागरणेन। अभिभूय दूषयित्वा। इतरं दोषं कफं पित्तञ्च। स्तिमितेन आर्द्रेण वृतेनेति यावन्नतु घनेन। स पवनः तदा ऊरू स्तभ्नाति। तेन स्तम्भेन अचेतनौ शून्यौ। परकीयाविव अक्रियावित्यर्थः। ध्यानम् मूढता। पादसम्बन्धिनीभिः सदनकृच्छ्रोद्धरणसुप्तिभिश्च संयुक्तौ। अयं सुश्रुतेन महावातव्याधिषु पठितः॥

कुछेक जीर्ण और कुछेक अजीर्ण होय ऐसी अवस्थामें शीतल, गरम, पतले, सूखे, भारी और चिकने ऐसे भोजन करनेसे, परिश्रम करनेसे, शरीरको सञ्चलन करनेसे, दिनमें सोनेसे और रात्रिमे जागनेसे कफ तथा मदसहित वायु आमसयुक्त तथा अत्यन्त सञ्चित हुए कफको तथा पित्तको दूषित करके साथलोंमें प्राप्त होतीहै। और साथलोंमें प्राप्त होकर लिपटे हुए कफसे साथलकी हड्डियोंमें मिलकर स्तब्ध करदेतीहै कि जिससे साथल अकड जातीहैं, सुन्न होजातीहैं, अत्यन्त भारी और जैसे कि दूसरोंकी होय ऐसी जानपडतीहैं इस रोगमें मूढता, अगोंका टूटना, तन्द्रा, वमन, अरुचि, ज्वर, पावकी ग्लानि, पावोंकी मन्दता और जडता यह सब लक्षण होतेहैं यह रोग ऊरुस्तम्भ कहाजाताहै कितने एक वैद्य इसको आढ्यवात कहतेहैं, सुश्रुतने इसको महाव्याधिओंमें कहाहै ॥ १–५ ॥

## अथोरुस्तम्भपूर्वरूपम्।

प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः ॥ रोमहर्षोऽरुचिश्छर्दिर्जंघोर्वोः सदनं तथा ॥ ६ ॥

जब ऊरुस्तम्भ होनेको होताहै तो निद्रा, अत्यन्तध्यान, क्रियारहितपना, ज्वर, रोमांचोका हो आना, अरुचि, वमन और पिण्डलिओंमे तथा सांथलोंमे पीडा उत्पन्न होतीहै ॥ ६ ॥

## अथोरुस्तम्भरूपम्।

वातशंकिभिरज्ञानात्तत्र स्यात्स्नेहनात्पुनः॥ पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा॥ जंघोरुग्लानिरत्यर्थं शश्वद्दा दाहवेदने ॥ ७ ॥ पादश्च व्यथत न्यस्तं शीतस्पर्शं न वेत्ति च ॥ संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः ॥ अन्यनेयौ हि सम्भग्नावूरूपादौ च मन्यते ॥ ८ ॥

अज्ञानादनिश्चयात्। स्तम्भसुप्तिकर्मरहितपाददर्शनेन वातशंकिभिः वातव्याधिशंकिभिः। तत्र ऊरुस्तम्भे स्नेहनात् स्नेहदानात्। स्नेहादिना स्नेहन्या चिकित्सया पादसदनादयः ऊरुभग्नोपमत्वात् ते विकाराः स्युः। जंघोर्वोर्गमनादौ अशक्तिः। अदाहवेदना ईषद्दाहेन सह वेदना। अन्यनेयौ अन्यचाल्यौ भवतः॥

पावोंका सोना, पावोंकी जडता और क्रियाओंसे राहित होना इत्यादि लक्षणोंके मिलनेसे प्रायः मनुष्योको वातरोगका भ्रम होताहै। उस भ्रमसे वह वातरोगोकी समान तैलादिकका मलना आदि स्नेहनचिकित्सा करताहै तो उसके दूनी पीडा होजातीहै, पावोंमें पीडा, जडता और सुन्नता होय, पैरोका उठाते धरते समय अत्यन्त वेदना होय, पैरोंकी पिण्डली और साथलोंमे अत्यन्त ग्लानि, चलनेमे असमर्थ, कुछ २ दाहयुक्त पीडा, यह सब अधिकतासे होतीहै। जब यह रोग होताहै तो पैरोको उठाते चलाते समय विशेष पीडा होतीहै, शीतल पदार्थोका स्पर्श मालूम नही होता और बैठनेमे, दबानेमे, चलानेमें एवं हलानेमें असमर्थ होताहै और वह मनुष्य अपनी साथ-

लोंको तथा पावोंको टूटासा जानताहै और उसके पाव दूसरोंके उठानेसे उठतेहैं ॥ ७ ॥ ८ ॥

अथोरुस्तम्भारिष्टम् ।

यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ॥ ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥ ९ ॥

अन्यथा दाहाद्युपद्रवरहितं तमपि नवम् उत्पन्नमात्रं साधयेत् ॥

जो ऊरुस्तम्भमें दाह, व्यथा, सुई चुभोनेसरीखी पीडा हो और रोगी कापने लगे तो उस मनुष्यको वह ऊरुस्तम्भ मारदेताहै और जो दाहादिक उपद्रव नहीं होंयँ तथा ऊरुस्तम्भ तत्कालका उत्पन्न हुआ होय तो साध्य है ॥ ९ ॥

अथोरुस्तम्भचिकित्सा ।

स्नेहासृक्स्रावववमनं वस्तिकर्म विरेचनम् ॥ वर्जयेदामवाते तु यतस्तैस्तस्य कोपनम् ॥ १० ॥ तस्मादत्र सदा कार्यं स्वेदलंघनरूक्षणम् ॥ आममेदःकफाधिक्यान्मारुतं परिरक्षता ॥ ११ ॥ यत्स्यात्कफप्रशमनं न तु मारुतकोपनम् ॥ तत्सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम् ॥ सर्वो रूक्षः क्रमः कार्यस्तत्रादौ कफनाशनः ॥ ॥ १२ ॥ पश्चाद्वातविनाशाय विधातव्याः खिलाः क्रियाः ॥ भोज्याः पुराणाः श्यामाककोद्रवोद्दालशालयः ॥ १३ ॥ जांगलैरघृतैर्मांसैः शाकैश्चाऽलवणैर्हितैः ॥ शाकैरलवणैर्दध्याज्जलैस्तैलाज्यसाधितैः ॥ ॥ १४ ॥ सुनिषण्णकनिंबार्कवृन्तारग्वधपल्लवैः ॥ वायसीवास्तुकाद्यैश्च साधितैः शाकमूलकैः ॥ १५ ॥ शाकैरलवणैर्युक्तं जीर्णे शाल्योदनं भिषक् ॥ रूक्षणाद्वातकोपश्चेन्निद्रानाशार्तिपूर्वकः ॥ १६ ॥ स्नेहस्वेदक्रमस्तत्र कार्यो वातामयापहः ॥ प्रतारयेत्प्रतिस्रोतो नदीं शीतजलां शिवाम् ॥ १७ ॥ सरश्च विमलं शीतं स्थिरतोयं पुनःपुनः ॥ यथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ॥ १८ ॥

ऊरुस्तम्भमें स्नेहन, रुधिरका निकलवाना ( फस वगैरह ) वमनक्रिया, वस्तिकर्म ( पिचकारी ) और विरेचन ( जुलाब ) इनको त्यागदेवे क्योंकि इन स्नेहनादिक कर्मोंसे ऊरुस्तम्भका उलटा प्रकोप होताहै इसकारण ऊरुस्तम्भमे सदैव स्वेदन, लंघन तथा रूक्षक्रिया करनी चाहिये । इस रोगमें वायुका बचाव करके आम, मेद और कफ अधिक होनेसे जो जो औषधि कफको शमन करनेवाली और वायुको कुपित नहीं करनेवाली है उनको सदैव इसमें सेवन करे । इस ऊरुस्तम्भरोगमें सकल रूक्ष क्रिया करनी चाहिये । उसमे भी प्रथम कफको नष्ट करनेवाली क्रिया प्रयोग करनी चाहिये और फिर वातनाशक क्रिया प्रयोग करे । घृतरहित जगल प्रदेशके प्राणियोंके मासके साथ और लवणरहित हितकारक शाकोंके साथ, पुराना सामा, पुराने कोदो, पुराने वनकोदो और पुराने चावल इनका भोजन करे, गिरआरी नीमके पत्ते, आककी शाखा, अमलतासके पत्ते, मकोय, वथुआ और मूली इत्यादि बनायेहुए जलमे, तेलमें और घीसे पकायेहुए निमकरहित शाक खाने चाहिये । खायाहुआ भोजन जीर्ण होनेके पश्चात् वैद्य उसको निमकरहित शाकोंके साथ लाल शालिचावलोंका भात भक्षण करावे । जो रूक्ष क्रिया करनेसे निद्राका नाश तथा पीडासहित वायुका प्रकोप होय तो वायुकी वेदनाको हरनेवाली स्नेहन तथा स्वेदन क्रिया करे । रोगीको शीतल जलवाली सुन्दर नदीमे उसके प्रवाहके साथ चलावे अर्थात् तैरावे और निर्मल तथा शीतल और स्थिर जलवाले तालावमे वारंवार तैरावे ॥ १०–१८ ॥

शरीरबलमग्निश्च कार्यैषा रक्षता क्रिया ॥ सक्षारमूत्रस्वेदांश्च रूक्षाण्युत्सादनानि च ॥ १९ ॥ कुर्याद्दाहे च मूत्राद्यैः करञ्जफलसर्षपैः ॥ मूलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक् ॥ २० ॥ पिचुमर्दस्य वा मूलैरथ वा देवदारुणः ॥ क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक् ॥ ॥ २१ ॥ गाढमुत्सादनं कुर्यादूरुस्तम्भे

सवेदने । दन्तीद्रवन्तीसुरसासर्षपैश्चापि बुद्धिमान् ॥ २२ ॥ तर्कारी सुरसाशिग्रु-वचावत्सकनिम्बकैः । पत्रमूलफलैस्तोयं शृतमुष्णश्च सेवनम् ॥ २३ ॥

शरीरके बलका और अग्निका बचाव करके जिस प्रकार कफ सूखकर ऊरुस्तम्भ शांत होय उसीप्रकार चिकित्सा करनी चाहिये । क्षार तथा मूत्र सयुक्त पदार्थोंसे स्वेदन करे । और रूक्ष पदार्थोंसे साथलोंको मले । दाह होय तो मूत्रादिकसे अथवा करजवेके फलोंसे, सयुक्त सरसोंसे अथवा असगन्धके चूर्णसे, अथवा आककी जडके चूर्णसे, अथवा नीमकी जडके चूर्णसे, अथवा देवदारुके चूर्णसे साथलोको खूब मले । वेदनायुक्त ऊरुस्तम्भमें उपरोक्त पदार्थोंको सहत, सरसों और बॉबीकी मट्टी इनसे साथलोको खूब दृढ रीतिसे मर्दन करे । ऊरुस्त-म्भकी पीडामें बुद्धिमान् वैद्य दन्ती (जमालगोटेकी जड), छोटी दन्ती, काली तुलसी और सरसों इनसे भी साथलोंको खूब मर्दन करे । अरणी, काली तुलसी, सैंजिना, वच, कुडा और नीम इनके पत्तोका, जडका तथा फलोंका क्राथ बनाकर उस क्राथको गरम २ सेवन करे ॥ १९–२३ ॥

भल्लातकाऽमृताशुण्ठीदारुपथ्यापुनर्नवाः॥ पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिब-हर्णाः ॥ २४ ॥

भिलावे, गिलोय, सोंट, देवदारु, हरड, पुनर्नवा और दशमूल इनको सेवन करनेसे ऊरुस्तम्भरोग नष्ट होताहै ॥ २४ ॥

पिप्पली पिप्पलीमूलं भल्लातकफलानि च ॥ कल्कं मधुयुतं पीत्वा ऊरुस्तम्भा-द्विमुच्यते ॥ २५ ॥

पपिल, पीपलामूल और भिलावे इनका कल्क बनाकर सहत मिलाकर सेवन करनेसे ऊरुस्तम्भ रोग नष्ट होता-है ॥ २५ ॥

रास्नाश्यामाकपथ्यामरिचमिसिशिवावे-ल्लशठ्यश्वगन्धा यासच्छिन्नाजमोदा-सुमुषमतिविषात्र्यूद्ददारौ बृहत्यौ ॥ २६ ॥ शुण्ठी तिक्ता यवानी सहचरचविकैरण्ड-दार्व्याजकर्ण्यं ऊरुस्तम्भामवातं कफपव-नरुजं दण्डकांश्चाशु हन्यात् ॥२७॥

रायसन, समा, हरड, काली मिरच, सोया, हलदी, वायविडग, कचूर, असगध, जवासा, गिलोय, अजमोद वनतुलसी, अतीस, विधारा, कटेरी, कटाई, सोठ, कुटकी, अजवायन, कटसरैया, चव्य, अरड, दारुह-लदी और राल इनका क्राथ ऊरुस्तम्भ, आमवात कफके रोग, वातके रोग और दडकाक्षेपको तत्काल नष्ट करदेताहै । इसको रास्नादि क्राथ कहते हैं ॥ २६ ॥ २७ ॥

ग्रन्थिकारुष्ककृष्णानां क्वाथं क्षौद्रान्वितं पिबेत् ॥ लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ॥ २८ ॥

पीपलामूल, भिलावे और पीपल इनका क्राथ बनाकर सहत मिलाकर पीनेसे ऊरुस्तम्भ नष्ट होताहै ।

त्रिफलेका तथा कुटकीका चूर्ण बनाकर सहतमे मिला-कर चाटनेसे ऊरुस्तम्भ नष्ट होताहै ॥ २८ ॥

सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः॥ पिप्पलीवर्द्धमानं वा माक्षिकेण गुडेन वा ॥ २९ ॥

षड्धरण चूर्ण जो कि वातव्याधिमें कहाहै उसको सुखोष्ण जलके साथ पीनेसे ऊरुस्तम्भ रोग नष्ट होताहै ।

सहतके साथ अथवा गुडके साथ वर्द्धमानपीपलका सेवन करे तो ऊरुस्तम्भ रोग नष्ट होताहै ॥ २९ ॥

ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव च ॥ शिलाजतु गुग्गुलं वा पिप्पलीमथ नागरम् ॥ ३० ॥ ऊरुस्तम्भे पिबेन्मूत्रैर्द-शमूलीरसेन वा ॥

ऊरुस्तम्भ रोगमें कडवे सूरणका आसव भी सेवन करना लिखाहैं । मूत्रके साथ अथवा दशमूलके रसके साथ शिलाजीत, गूगल, पीपल और सोंठको पीनेसे ऊरुस्त-म्भकी पीडा दूर होजातीहै ॥ ३० ॥

त्रिफला पिप्पली मुस्तं चव्यं कटुकरो-हिणी ॥ ३१ ॥ लिह्याद्वा मधुना चूर्ण-मूरुस्तम्भार्दितो नरः ॥ घृतं सौरेश्वरं

दद्यादूरुस्तम्भे कफोत्तरे ॥ ३२ ॥ दद्याच्छुण्ठीघृतं वापि वैश्वानरमथापि वा ॥ सैन्धवाद्यं हितं तैलममृताख्योऽपि गुग्गुलुः ॥ ३३ ॥

त्रिफला, पीपल, नागरमोथा, चव्य और कुटकी इन सबका चूर्ण बनाकर सहतमें मिलाकर चाटनेसे ऊरुस्तम्भकी पीडा शात होतीहै । ऊरुस्तम्भमें कफकी अधिकता होय तो सौरेश्वरघृत, अथवा वैश्वानर चूर्ण, अथवा शुंठीघृत व सैंधवाद्यतैल, अथवा अमृतागुग्गुल देना हितकारी है ॥ ३१-३३ ॥

## अथ कुष्ठाद्यतैलम् ।

कुष्ठश्रीवेष्टकोदीच्यसरलं दारु केशरम् ॥ अजगन्धाश्वगन्धे च तैलं तैः सार्षपं पचेत् ॥ सक्षौद्रं मात्रया तस्मादूरुस्तम्भार्दितः पिबेत् ॥ ३४ ॥

कूठ, सरलनिर्यास ( लोबान), सुगधवाला, सरल धूप, देवदारु, नागकेसर, वनतुलसी और असगध इनके कल्कसे पकाया हुआ सरसोंका तेल सहतके साथ यथामात्रानुसार पियाजाय तो ऊरुस्तम्भ नष्ट होजाताहै ॥ ३४ ॥

## अथाष्टकट्वरतैलम् ।

पलाभ्यां पिप्पलीमूलान्नागरादष्ट कट्वरम्॥ तैलप्रस्थं समं दध्ना गृध्रस्यूरुग्रहापहम् ॥ ३५ ॥ सस्नेहदधि सघृतं तक्रं कट्वरमुच्यते ॥ अष्टकट्वरतैलं च तैलं सार्षपमिष्यते ॥ पिप्पलीमूलशुण्ठ्याश्च प्रत्येकं द्विपलं कृतम् ॥ ३६ ॥

पीपलामूल ८ तोले, सोंठ ८ तोले, मलाई युक्त दहीसे बनाई हुई खट्टी छाछ ६४ तोले और दही ६४ तोले, सरसोंका तेल ६४ तोले इन सबको एकत्र मिलाकर विधिपूर्वक तेलको सिद्धकरे । इसको अष्टकटर तैल कहते हैं । इस तेलका उपयोग करनेसे ऊरुस्तम्भ रोग दूर होजाताहै ॥ ३५ ॥ ३६ ॥

## अथ द्विपञ्चमूलाद्यतैलम् ।

द्विपञ्चमूली त्रिफला चित्रकं देवदारु च॥ एकाष्ठीला त्वपामार्गं श्रेयसी वायसी शुभा ॥ ३७ ॥ बला भार्ङ्गी पृथक्पर्णी सुवहा मदयन्तिका ॥ विशालोशीरका-श्मर्यासितस्रो देयास्तथाग्निकः ॥ ३८ ॥ चिरबिल्वो ह्यशोकश्च कलश्यंशुमती तथा॥ पयस्यापीलुपर्ण्यश्च गुडूची च शतावरी ॥ ३९ ॥ एषां पञ्च पलान्भागाञ्जलद्रोणेषु सप्तसु ॥ अष्टभागावशेषेण पचेत्तैलाढकं शतम् ॥ ४० ॥ कुष्ठश्च शतपुष्पा च त्र्यूषण चित्रकं वरा ॥ देवदार्वगुरु श्रेष्ठं विडङ्गं मुस्तमेव च ॥ ४१ ॥ अश्वगन्धा स्थिरा पाठा मूली श्यामाकमेव च॥ पिप्पल्यः शृङ्गवेरश्च दन्ती हिङ्ग्वम्लवेतसम् ॥ ४२ ॥ अनेन गर्भेण भिषक्कषायेण च साधयेत्॥ सिद्धशीतश्च पूतश्च क्षौद्रेण सह संसृजेत् ॥ ४३ ॥ तदस्य नस्यपानार्थं तदेवाभ्यञ्जने भवेत्॥ ऊरुस्तम्भश्चिरोद्भूतस्तैलेनानेन शाम्यति॥ आमवातं शीतवातं क्षुद्रवातश्च नाशयेत् ॥ ४४ ॥

दशमूल, त्रिफला, चीता, देवदारु, बडी मौलसरी, चिरचिटा, गजपीपल, कौआठोडी, मकोय, खिरैटी, भारगी, पृश्निपर्णी, निर्गुण्डी, मल्लिका ( मोतिया), इन्द्रायन, खस, कुम्भेर, लालचीता, करज, अशोकके पत्र, शालपर्णी, क्षीरकाकोलीकी प्रतिनिधि, मूर्वा, गिलोय और सतावर यह प्रत्येक औषधि वीस २० वीस २० तोले सात द्रोण जलमे पकावे, जब पकते पकते आठवॉ भाग जल शेष रहजाय तब उस क्वाथमें एक आढक परिमाण तेल पकावे, फिर इस तेलको कूट, सोया, सोंठ, दुगुनी मिरच, पीपल, चीता, त्रिफला, देवदारु, उत्तम अगर, वायविडग, नागरमोथा, असगध, पृष्टिपर्णी, पाढ, मूली, समा, अदरख, दन्ती, हींग और अमलवेत इनके क्वाथसे तथा कल्कसे पकावे जब पककर स्वय शीतल होजाय तब कपडेमें छान लेवे फिर उसमें सहत मिलाकर व्यवहार करे । इस तेलसे नस्य, पान और अभ्यग ( मालिश ) करे तो बहुत दिनोका ऊरुस्तम्भ नष्ट होजाताहै । यह तेल आमवात, क्षुद्रवात और शीतवातको भी दूर करेहै ॥ ३७-४४ ॥

तोले इन सबको दो हजार अडतालीस तोले भर जलमें पकावे, जब पकते पकते जल चौथाई भाग रहजाय तब उतारलेवे, फिर इसमे जमालगोटे, निसोत, सोंठ, मिरच, पीपल, भुँईआमले, वायविडंग, नागरमोथा, हरड, बहेडा, आमला, गिलोय, सूरण, वच, आलुक, मानकन्द, गन्धक और पारा ये प्रत्येक पदार्थ दो २ तोले लेकर चूर्ण बनाकर उसमें डालकर दूसरी बार पकावे। पक जानेके बाद एक हजार धत्तूरेके फलोका चूर्ण करके मिलादेवे तो यह 'सिंहनाद गूगल' तय्यार होताहै। यह गूगल बारह रत्ती प्रमाण खाय और गरम जल आदिका अनुपान करे। यह गूगल मनुष्योंकी बवासीर, विषमज्वरकी पीडा, प्रमेह, कोढ, भगन्दर और मेद, वायु, तथा कफसे उत्पन्नहुए रोगोको दूर करेहै। इस गूगलको सेवन करनेसे दाह, अतीसार, अथवा अन्यान्य कोई विकार होय तो तक्रके साथ भात खाय। उबटन, शीतल जलसे स्नान और शयन करना हितकारी है। यह सिंहनादगूगल बहुत दस्त लाताहै इस कारण बुद्धिमान् वैद्य रोगीके शरीरका बल विचारकर बारह रत्ती प्रमाण देवे अथवा इससे भी कम देवे। इस गूगलमे धत्तूरेके फलोका चूर्ण डालना कहा है सो उनको ऐसेही नहीं डालना चाहिये किंतु प्रथम उसके फलोको अनुक्रमसे पानीसे, आरनालसे तथा गायके दूधसे पकावे, प्रथम शुद्ध करके फिर इनका चूर्ण करके डाले। पानी आदिमे पकानेसे धत्तूरेके फल शुद्ध होजातेहैं ॥ २२१-२२८ ॥

## अथ तृतीयसिंहनादगुग्गुलुः ।

पिच्चितो गुग्गुलोर्मानी कटुतैले पलाष्टके॥ प्रत्येकं त्रिफलाप्रस्थं सार्द्धद्रोणे जले पचेत् ॥ २२९ ॥ पादशेषं सुपूतञ्च पुनरग्नावधिश्रयेत् ॥ त्रिकटुत्रिफलामुस्ताविडंगामलकानि च ॥ २३० ॥ गुडूच्यग्नित्रिवृद्दन्तीवचासूरणमानकम् ॥ कस्तूरीरससूतांशं प्रत्येकं शुक्तिसम्मितम् ॥ २३१ ॥ सहस्रं कानकफलं सिद्धे संचूर्ण्य निक्षिपेत् ॥ ततो माषद्वयं जग्ध्वा पिबेत्तप्तजलादिकम् ॥ २३२ ॥ अग्निश्च कुरुते शीघ्रं वडवानलसन्निभम् ॥ धातुवृद्धिं वयोवृद्धिं बलं सुविपुलं तथा ॥ २३३ ॥ आमवातं शिरोवातं ग्रन्थिवातं भगन्दरम् ॥ जानुजंघाश्रितं वातं सकटीग्रहवेदनम् ॥ २३४ ॥ अश्मरीमूत्रकृच्छ्रे च भग्ने च तिमिरोदरे ॥ अम्लपित्तं तथा कुष्ठं प्रमेहं गुदनिर्गमम् ॥ २३५ ॥ कासं पञ्चविधं श्वासं क्षयञ्च विषमज्वरम् ॥ प्लीहानं श्लीपदं गुल्मान्पाण्डुरोगं सकामलम् ॥ २३६ ॥ शोथान्त्रवृद्धिशूलानि गुदजानि विनाशयेत् ॥ मेदःकफामसञ्जातरोगवारणदर्पहा ॥२३७॥ सिंहनाद इति ख्यातो योगोऽयममृतोपमः ॥ भिषग्भिर्वर्जिते रोगे भाषितो दण्डपाणिना ॥ २३८ ॥

बत्तीस ३२ तोले सरसोंके तेलमें खूब कूटाहुआ बत्तीस ३२ तोले गूगल लेवे, हरड ६४ तोले, बहेडे ६४ तोले और आमले ६४ तोले इन सबको डेढ द्रोणजलमें पकावे जब पकते २ जल चौथाईभाग शेष रहजाय तब उतारकर कपडेमें छानलेवे, फिर दूसरीवार आगपर पकावे उसमे सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, नागरमोथा, वायविडंग, आमले, गिलोय, चीता, निसोत, जमालगोटेके बीज, वच, जमींकंद, मानकद, कस्तूरी, रसौत और पारा ये प्रत्येक पदार्थ दो दो तोले लेकर पीसकर डालदेवे विधिपूर्वक पकावे, जब पकजाय तब जल, आरनाल, कॉजी और गायके दूधसे शुद्ध किये हुए धतूरेके एक हजार फल उनका चूर्ण बनाकर डाल देवे तो यह 'सिंहनाद गूगल' सिद्ध होताहै। इस गूगलको बारहरत्ती प्रमाण खाय और गरमजल आदिका अनुपान करे। यह गूगल तत्काल जठराग्निको वडवानलकी समान दीपन करताहै, धातुओंको बढाताहै, जीवनकी वृद्धि करताहै, विपुल बलको उत्पन्न करताहै। तथा आमवात, शिरोवात, ग्रन्थिवात, भगन्दर, जानु और जघागतवात, कमरकी पीडा, पथरी, मूत्रकृच्छ्र, भग्न, तिमिर, उदररोग, अम्लपित्त, कोढ, प्रमेह, गुदाका निकलना (काच), खॉसी, पाच प्रकारका श्वास, विषमज्वर, प्लीहा, श्लीपद, गुल्म, पाडुरोग, कामला, सूजन, अन्त्रवृद्धि, शूल और बवासीर इन सब रोगोंको नष्ट करताहै। मेद, कफ और आम इन रोगरूपी हाथियोंके गर्वको हरनेवाला यह 'सिंहनाद

गूगल इस नामसे प्रसिद्ध योग अमृतकी समान है । वैद्य करके वर्जित रोगोंको दूर करनेके लिये यह श्रीमहादेवजीने कहा है ॥ २२९–२३८ ॥

## अथ योगसारामृतः ।

शतावरी नागवला वृद्धदारकमुच्चटा ॥ पुनर्नवाऽमृता कृष्णा वाजिगन्धा त्रिकण्टकम् ॥ २३९ ॥ पृथग्दशपलान्येषां श्लक्ष्णचूर्णानि कारयेत् ॥ तदर्द्धशर्करायुक्तं चूर्णं संमर्दयेद् बुधः ॥२४०॥ स्थापयेत्सुदृढे भाण्डे मध्वर्द्धाढकसंयुतम् ॥ घृतप्रस्थेन वाऽऽलोडय त्रिसुगन्धपलेन च२४१ तं खादेदिष्टभक्ष्यान्नो यथावह्निबलं नरः॥ वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम् ॥ २४२ ॥ वातपित्तककोत्थांश्च रोगानन्यांश्च तत्कृतान् ॥ हत्वा करोति पुरुषं हत्वा सर्वामयान्द्रुतम् ॥ २४३ ॥ वलीपलितनिर्मुक्तं मेधास्मृतिविभूषितम्॥ करोति पुरुषं धन्यं पञ्चवर्षशतायुषम् ॥ योगसारामृतो नाम लक्ष्मीकीर्तिविवर्द्धनः ॥ २४४ ॥

सतावर, गगेरन ( गुलशकरी), विधारा, उटंगनबीज, पुनर्नवा, गिलोय, पीपल, असगन्ध और गोखुरू ये प्रत्येक पदार्थ ४० चालीस ४० चालीस तोले लेकर उनका बारीक चूर्ण बनाकर उसमें आधाभाग खांड मिलावे, सबको खूब मर्दनकरे फिर उसमें १२८ तोले सहत और ६४ तोले घी तथा तज, तेजपत्र और इलायचीका चूर्ण प्रत्येक चार चार तोले मिलाकर अत्यन्त दृढ वासनमें भरकर रखदेवे तो यह 'योगसारामृत' सिद्ध होताहै। मनुष्योंको यह 'योगसारामृत'अपनी जठराग्निके बलानुसार खाना चाहिये और यथेष्ट अन्नपान भोजनकरे । लक्ष्मी तथा कीर्तिको बढानेवाला यह योगसारामृत–वातरक्त, कोढ, कृशता, पित्त तथा रुधिरसे उत्पन्न होनेवाले रोग और वात, पित्त तथा कफसे उत्पन्न हुये अन्यान्य रोगोंको भी दूर करके वलि और पलित रोग नष्ट करेहै, मेधा और स्मरणशक्तिसे शोभायमान करताहै । भाग्यको बढाता है और उसकी पांचसो वर्षकी आयु करताहै २३९–२४४

## अथ वातरक्ते त्याज्यानि ।

व्यायामं मैथुनं कोपमुष्णाम्ललवणं रसम् ॥ दिवास्वप्नमभिष्यन्दि गुरु चान्यद्विवर्जयेत् ॥ २४५ ॥

इति वातरक्तनिदानचिकित्साधिकारः ।

व्यायाम ( दंड, कसरत ), मैथुन, क्रोध, उष्ण, खट्टा और खारी रसवाले पदार्थ, दिनमें सोना और जो जो पदार्थ अभिष्यन्दि तथा भारी हैं उन सबको यह वातरक्त-रोगी त्याग देवे ॥ २४५ ॥

इति श्रीभावप्रकाशे शालिग्रामवैश्यकृतवैद्यसंजीविनी-
भाषाटीकायां मध्यखण्डे द्वितीयो
भागः सम्पूर्णः ।



॥ श्रीवेंकटेशाय नमः ॥





# अथ भावप्रकाशः ।

## मध्यमखण्ड–तृतीयो भागः ३.

### भाषाटीकासमेतः

अथ शूलाधिकारः ।

अथ शूलनिदानम् ।

दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ॥ सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥

वायुसे, पित्तसे, कफसे, तीनों दोषोंसे, आमसे, वातपित्तसे, वात तथा कफसे और पित्तकफसे, इसप्रकार शूल आठ प्रकारका है, इन सम्पूर्ण शूलोंमें वातका शूल अधिक प्रबल है ॥ १ ॥

अथ वातोत्पन्नशूलस्य निदान-संप्राप्ति-लक्षणानि ।

व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् ॥ कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ २ ॥ कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकैः ॥ विट्छुक्रमूत्रानिलसन्निरोधाच्छोकोपवासादतिहास्यभाषात्॥वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पृष्ठपार्श्वत्रिकवस्तिदेशे ॥ जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ॥ ३ ॥ मुहुर्मुहुश्चोपशमप्रकोपौ विण्मूत्रसंस्तम्भनतोदभेदैः ॥ संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति ॥ ४ ॥

व्यायामो मल्लयुद्धादिः । यानं तुरगरथादि । मैथुनं स्त्रीसेवा । प्रजागरं रात्रौ । एषामतियोगाच्छीतलजलप्रभूतपानात् । कलायः त्रिपुटः । आढकी तुवरी । कोरदूषः कोद्रवः । अत्यर्थरूक्षम्, अतिरूक्षद्रव्यसेवा । अध्यशनं भुक्तस्य उपरि भोजनम्।अभिघातो लोष्टादिभिः । कषायतिक्तरससेवा कषायः विरूढजान्नम् विरूढमंकुरितमन्नम् । कला-

यच्चणकादि तज्जमन्नं भक्ष्यम् । वल्लूरकं शुष्कमांसम् । तस्य शूलस्य देशमाह-हृदादिषु । तत्र-हृच्छूलस्य पृथगपि लक्षणं पठन्ति ॥

व्यायाम ( कसरत ), यान ( रथ, घोडे आदिकी सवारी ), मैथुन, रात्रिमें जागरन इनको अत्यत करनेसे, शीतलजलके अधिकपीनेसे, मटर, मूँग, अडहर तथा कोदोंके अत्यन्त भक्षणसे, रूक्ष पदार्थोंके अत्यत सेवन करनेसे अध्यशन ( भोजनपर भोजन करने ) से अभिघात ( लाठी ईंट आदिकी चोट लगनेसे, ) कसेले कडवे रसके सेवनसे, जिसमें अंकुर निकल आये हो ऐसा अन्न तथा विरुद्ध पदार्थ दूध मछली आदि खानेसे, सूखा हुआ मास तथा सखेहुए शाक भिण्डिवालके भक्षणसे, विष्ठा, वीर्य, मूत्र, अधोवायु, इनके वेगको रोकनेसे, अत्यन्त शोक तथा अत्यताधिक उपवास करनेसे, बहुत हँसनेसे और अत्यत बोलनेसे वृद्धिको प्राप्त हुई वायु हृदय, पीठ, पसली, त्रिकस्थान और मूत्राशयमे शूलको उत्पन्न करैहै पश्चात् खाया हुआ अन्न पच जानेपर प्रदोष ( संध्याकाल ) मे, वर्षासमयमें, शीतकाल समयमे, वायुका कोप होनेपर शूल अधिक कुपित होताहै । यह शूल वारवार कुपित होताहै और वारवार शान्त होताहै । इस शूलसे विष्ठा तथा मूत्र रुक जाताहै. और पीडा अधिक होतीहै । और अगोंमें भेद होताहै यह वातशूलके लक्षण हैं सेक आदि स्वेदन करनेसे, अभ्यंग ( तेलकी मालिश ) से, मर्दन ( मलने आदि ) से और स्निग्ध तथा गरम भोजन करनेसे यह शूल शात होताहै ॥ २–४ ॥

अन्य ग्रन्थोंमे हृदयके शूलके, पसलीके और वस्तिशूलके अलग लक्षण भी कहे हैं सो कहते है ।

अथ हृदयशूललक्षणम् ।

कफपित्तावरुद्धस्तु मारुतो रसवर्द्धितः ॥ ॥ ५ ॥ हृत्स्थः प्रकुरुते शूलमुच्छ्वासस्यावरोधकम् ॥ स हृच्छूल इति ख्यातो रसमारुतकोपजः ॥ ६ ॥

कफ पित्तसे रुकी हुई और रससे बढी हुई हृद[illegible] वायु श्वास [illegible] शूलको उत्पन्न [illegible] रस और [illegible] उत्पन्न हुआ यह शूल हृच्छ[illegible] कहलाताहै ॥ ५ ॥ ६ ॥

अथ पार्श्वशूललक्षणम् ।

कफं निगृह्य पवनः सूचीभिरिव निस्तुदन् ॥ पार्श्वस्थः पार्श्वयोः शूलं कुर्यादाध्मानसंयुतम् ॥ ७ ॥ तेनोच्छ्वसिति वक्रेण नरोऽन्नञ्च न कांक्षति ॥ निद्राञ्च नाप्नुयादेव पार्श्वशूलः प्रकीर्तितः ॥ ८ ॥

कफ वायुको लेकर सुईके चुभोनेकी सदृश पसलियोमें पीडा उत्पन्न करतीहै और साथमे पेटपर अफारा भी करैहै । यह शूल हुआ होय तो मनुष्य मुखसेही ऊँचे श्वास लेताहै, अन्नकी इच्छा नहीं होती और निद्रा भी नहीं आती यह इन लक्षणोवाला शूल पार्श्वशूल कहाजाता है ॥ ७ ॥ ८ ॥

अथ वस्तिशूललक्षणम् ।

संरोधात्कुपितो वायुर्वस्तिं संश्रित्य तिष्ठति ॥ वस्तेरध्वनि नाडीषु ततः शूलोऽस्य जायते ॥ विण्मूत्रवातसंरोधी वस्तिशूलः स उच्यते ॥ ९ ॥

प्रकृतमनुसरति । जीर्णे भुक्ते । प्रदोषे रात्र्यागमे रात्रिभवशीतेन वातप्रकोपात् । घनागमे वर्षासु मेघोदये च ॥

वेगोके रोकनेसे कुपित हुई वायु मूत्राशयमे भरी रहती है, इससे मूत्राशयके मार्गकी नाडियोंमें शूल होताहै और इससे मल, विष्ठा, मूत्र तथा वायु भी रुकजाती है, यह वस्तिशूल कहलाता है ॥ ९ ॥

अथ पित्तजशूलनिदानसंप्राप्तिलक्षणानि ।

क्षारातितीक्ष्णोष्णविदाहितैलनिष्पावपिण्याककुलत्थयूषैः ॥ कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः ॥ ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याथ करोति शूलम् ॥ तृण्मोहदाहार्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमशोषयुक्तम् ॥ ॥ १० ॥ मध्यन्दिने कुप्यति चार्द्धरात्रे निदाघकाले जलदात्यये च ॥ शीते च शीतैः समुपैति शांति सुस्वादुशीतैररतिभोजनैश्च ॥ ११ ॥

निष्पावो राजमाषः । सौवीरं सन्धानभेदः । सुराविकारैः 'परिपक्वान्नसन्धानसमुत्पन्ना सुरा मता' तस्याः प्रकारैः । रविप्रतापः आतपः । ग्राम्यातियोगो मैथुनाधिक्यम् । विदाहीत्युक्तापि अशनैर्विदग्धैरिति बाधयति । अविदाहिवस्तुनोऽपि पित्तवशाद्विदाहित्वं भवति जलदात्यये शरदि शीतैर्वातादिभिः ॥

खारोंसे अत्यन्त तीक्ष्ण–गरम मरिच आदि और विदाहकारक पदार्थोंसे, तेल–चौरा–खल और कुलथीके यूषसे,तीक्ष्ण तथा खट्टे पदार्थोंसे सौवीर कच्चे यवोंको अथवा पकेभयोंको अर्थात् उनकी भूसी दूर करके जलमें सन्धान करनेको सौविर कहतेहैं बरन् अंग्रेजीमे उसको भी राब कहतेहैं सुराका विकार क्रोध, अग्निके तापसे, परिश्रमसे, सूर्यकी तीक्ष्ण धूपसे, फिरनेसे, अधिक मैथुन करनेसे और विदाही भोजनोंसे कुपित हुआ पित्त नाभिमें शूलको उत्पन्न करैहै, इससे–तृषा, मोह, दाह, पसीना, मूर्च्छा, भ्रम और शोप होताहै । यह शूल मध्याह्नके समयमे, अर्धरात्रिमे, ग्रीष्म ऋतुमें और शरद् ऋतुमें अधिक कुपित होताहै । शीत कालमे, शीतल वायु आदिके लगनेसे,अत्यन्त शीतल अति मधुर भोजनोंसे शान्त होता है ॥ १० ॥ ११ ॥

## अथ कफजशूलनिदानसंप्राप्तिलक्षणानि ।

आनूपवारिजकिलाटपयोविकारैः मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः ॥ अन्यैर्बलासजनकैरपि हेतुभिश्च श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ १२ ॥
हृल्लासकाससदनारुचिसंप्रसेकैरामाशयैस्तिमितकोष्ठशिरोगुरुत्वैः ॥ भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं सूर्योदयेऽथ शिशिरे कुसुमागमे च ॥ १३ ॥

आनूपं बहुलजलदेशजं भक्ष्यम् । वारिजं शालूकादि ॥ पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका ॥ तक्रेण तत्कूर्चकं स्यात्तयोः पिण्डः किलाटकः ॥ १४ ॥

पयोविकारः पायसादिः । पिष्टं माषादिः । अन्यैर्गुर्वादिभिः । स्तिमितमार्द्रपटावगुण्ठितमिव यत्कोष्ठं शिरश्च तयोर्गुरुत्वैः सहसूर्योदय इति त्रिधा विभक्तदिवसप्रथमभागस्य उपलक्षणम् । शिशिरे तत्र कफस्य अतिसञ्चयात् । कुसुमागमे वसन्ते ॥

अधिक जलवाले देशोंमे उत्पन्न हुए भक्षोंसे, पक्षियोका मांस और मछलीआदिका मांस और फटे दूधके मावेको किलाट कहते हैं, जलमें उत्पन्न हुए कमलकन्द आदि पदार्थोंसे किलाट फटे दूधके मावेसे,दूधपाक आदिके पदार्थोंसे, मांससे, ईखके रससे, उडदादि पिसे अन्नसे, खिचडी, तिल, पूरी, कचौरी, दहीवडे और अन्य कफको उत्पन्न करनेवाले कारणोंसे, कुपित हुआ कफ आमाशयमें शूलको उत्पन्न करैहै । इस शूलसे हृल्लास (सूखी रद), खाँसी, ग्लानि, अरुचि और मुखसे लार गिरती हैं, उदर और मस्तक भारी रहताहै । भोजन करनेके पश्चात् यह शूल सर्वदा अत्यन्त पिडा करताहै और दिनके पहिले भागमें, शिशिर ऋतुमे, वसन्तऋतुमें, कफका सञ्चय तथा वृद्धि होनेसे यह शूल अधिक पीडा करताहै ॥१२–१४॥

## अथ द्विदोषोत्पन्नशूललक्षणम् ।

द्विदोषलक्षणैरेतैर्विद्याच्छूलं द्विदोषजम् ॥ १५ ॥

सम्पूर्ण दोपोके लक्षण ऊपर कहे हैं, उनमेंसे जिस शूलमें दो दोपोके लक्षण एकत्र देखनेमे आवें उस शूलको दो दोपोंसे उत्पन्न हुआ जानना ॥ १५ ॥

## अथ त्रिदोषोत्पन्नशूललक्षणम् ।

सर्वेषु देशेषु च सर्वलिंगं विद्याद्भिषक्सर्वभवं हि शूलम् ॥ सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥ १६ ॥

सर्वेषु देशेषु हृत्पृष्ठपार्श्वत्रिकवस्तिनाभ्यामाश येषु । सर्वभवं त्रिदोषजम् ॥

जो शूल (दर्द) ऊपर कहे हुए हृदय, पीठ, पसली, त्रिक, वस्ति, नाभि और आमाशय, इन सब स्थानोंमे होताहो और तीनो दोपोके लक्षणोंयुक्त होय, उसको

त्रिदोषज शूल जानना । यह शूल बहुत कष्टदायक है, विष तथा वज्रकी सदृश है और चिकित्सा करनेके योग्य भी नहीं है ऐसा वैद्योंने कहा है ॥ १६ ॥

### अथामोत्पन्नशूललक्षणम् ।

आटोपहृल्लासवमीगुरुत्वस्तैमित्यमानाहककफप्रसेकैः ॥ कफस्य लिंगेन समानलिगमामोद्भवं शूलमुदाहरन्ति ॥ १७ ॥

कफस्य कफशूलस्य । आमोद्भवम् आमादुद्भवो यस्य तम् । अत्र आमशूले जाते पश्चाद्दोषसम्बन्धः अत एव अस्य शूलस्य अष्टमत्वमुक्तम् । स च प्रथमम् आमाशये भवति पश्चात् सम्बन्धिभिः दोषैः वस्तिनाभिहृत्पार्श्वकुक्षिषु भवति यथादोषसम्बन्धः ॥

जिस शूलमें अफारा, हृल्लास ( उबकाई ), वमन, शरीरमें भारीपन, मन्दता, मुखसे कफका गिरना, यह उपद्रव होय तथा कफज शूलके सदृश लक्षण होय उस शूलको आमशूल कहते हैं । यह आमशूल उत्पन्न होनेपर उसमें दोषोंका सबन्ध होताहै इसकारण आमशूलको आठवा कहा है, यह शूल प्रथम आमाशयमें होताहै और पीछेसे दोषोंका सम्बन्ध होनेपर जिस दोषका सबध हुआ होय उस दोषकी रीतिके अनुसार वस्तिमें, नाभिमें, कोखमें, हृदयमें, पसलियोंमें और पेटमें होताहै ॥ १७ ॥

### दोषभेदेन आमशूलस्थानभेदः ।

वातात्मकं वस्तिगतं वदन्ति पित्तात्मकश्चापि वदन्ति नाभ्याम् ॥ हृत्पार्श्वकुक्षौ कफसन्निविष्टं सर्वेषु देशेषु च सन्निपातात् ॥ १८ ॥

हृत्पार्श्वकुक्षौ हृत्पार्श्वाभ्यां सहिते कुक्षौ । कफसन्निविष्टं कफेन आविष्टम् ॥

वस्तौ हृत्कटिपार्श्वेषु स शूलः कफवातिकः ॥
कुक्षौ हृन्नाभिमध्ये तु स शूलः कफपैत्तिकः ॥
दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः ॥ १९ ॥

आमशूल वायुके सम्बधसे हुआ होय तो मूत्राशयमें, पित्तके सम्बधसे हुआ होय तो नाभिमें, कफके संबधसे हुआ होय तो हृदयमें, पसलियोंमें तथा उदरमें और तीनो दोषोके संबधसे हुआ होय तो संपूर्ण प्रदेशोंमें होताहै । कफके तथा वायुके सबधसे हुआ होय तो मूत्राशय, हृदय, कमर और पसलियोंमे होताहै, कफ तथा पित्तके सबधसे हुआ होय तो पेटमे, हृदय और नाभिके मध्यमें होताहै और वायु तथा पित्तके सबधसे हुआ होय तो दाह तथा ज्वरको उत्पन्न करै है परन्तु यह अत्यन्त भयदायक है यह शूल वातपित्तका समझना और यह भयकर है ॥ १८ ॥ १९ ॥

### अथ तंत्रान्तरोक्तामशूललक्षणम् ।

अतिमात्रं यदा भुक्तं पावके मृदुतां गते ॥ स्थिरीकृतन्तु तत्कोष्ठे वायुरावृत्य तिष्ठति ॥ २० ॥ यदान्नं न गतं पाकं तच्छूलं कुरुते भृशम् ॥ मूर्च्छाध्मानविदाहांश्च हृत्क्लेशं सविलम्बिकम् ॥ २१ ॥ कम्पं वान्तिमतीसारं प्रमेहं जनयेदपि ॥ अविपाकोद्भवं शूलमेतमाहुर्मनीषिणः २२ ॥

अविपाकोद्भवम् आमोद्भवमित्यर्थः ॥

अत्यन्त भोजन किये अन्नसे जठराग्नि मन्द होजानेके कारण वायु कोठेमें अन्नको स्थिरकरती है, वह अन्न वातमें मिलकर उदरमें स्थिर होकर जमजाता है और वात अन्नके चारों ओर रहताहै फिर वह अन्न पक्व नही होता तो वही दुष्ट अन्न नहीं पचकर भारी शूलको उत्पन्न करै है, तथा मूर्च्छा, अफारा, दाह, हृदयमें क्लेश, विलम्बिका, कफ, वमन अतीसार और प्रमेहको उत्पन्न करै है, इस शूलको विद्वान् आमशूल कहते हैं ॥ २०-२२ ॥

### अथ शूलोपद्रवाः ।

वेदनातितृषा मूर्च्छा आनाहो गौरवारुची ॥ कासः श्वासो वमिर्हिक्का शूलस्योपद्रवाः स्मृताः ॥ २३ ॥

वेदना ( पीडा ), अत्यन्त तृषा, मूर्च्छा, मलबन्ध, भारीपन, अरुचि, खाँसी, श्वास, वमन और हिचकी, यह शूलके दश उपद्रव जानने ॥ २३ ॥

### अथ शूलसाध्यासाध्यत्वम् ।

एकदोषानुगः साध्यः कृच्छ्रसाध्यो द्विदोषजः ॥ सर्वदोषान्वितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥ २४ ॥

जो शूल एक दोषवाला होय वह साध्य, दो दोषवाला होय वह कष्टसाध्य और तीन दोषोवाला होय तथा अधिक उपद्रव सहित होय वह असाध्य तथा भयकर जानना ॥ २४ ॥

## अथ शूलारिष्टम्।

**वेदनाऽतितृषा मूर्च्छा आनाहो गारवं ज्वरः॥ भ्रमोऽरुचिः कृशत्वञ्च बलहानिस्तथैव च॥ उपद्रवा दशैवैते यस्य शूलेषु नास्ति सः॥ २५॥**

वेदना, अत्यन्त तृषा, मूर्च्छा, अफारा, भारीपन, ज्वर, भ्रम, अरुचि, दुर्बलता और बलकी हानि, इन दश उपद्रवों सहित शूलरोगी होय तो वह रोगी कदापि नही बच सक्ता ॥ २५ ॥

## अथ शूलभेदः परिणामः।

**स्वैर्निदानैः प्रकुपितो वातः सन्निहितो यदा॥ कफपित्ते समावृत्य शूलकारी भवेद्बली॥ भुक्ते जीर्यति यच्छूलं तदेव परिणामजम्॥ २६॥**

**स्वैर्निदानैरित्यादिना निदानपूर्विका संप्राप्तिरुक्ता। भक्ते जीर्यतीत्यादिना लक्षणमुक्तम्। समावृत्य व्याप्य॥**

**तस्य लक्षणमप्येतत्समासेनाभिधीयते॥ आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः॥ स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक्॥ २७॥ तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तरम्॥ शूलं शीतशमप्रायं पैतिकं लक्षयेद् बुधः॥ २८॥ छर्दिहल्लाससंमोहस्वल्परुग्दीर्घसन्ततिः॥ कटुतिक्तोपशान्तौ च विज्ञेयश्च कफात्मकम्॥ २९॥ संसृष्टलक्षणं बुद्धा द्विदोषं परिकल्पयेत्॥ त्रिदोषजमसाध्यं स्यात्क्षीणमांसबलानलम्॥ ३०॥**

अपने कारणोंसे कुपित हुआ बलवान् वायु जब कफ और पित्तमें व्याप्त होताहै तब शूल उत्पन्न होताहै और वह शूल भोजन किये अन्नके पचनेके समयमे होताहै इसको परिणाम शूल कहतेहैं। पेटका फूलजाना, गुड गुड शब्द होना, मलमूत्रका अवरोध, अरति, (मनका न लगना) तथा कप, यह लक्षण होयँ और स्निग्ध तथा उष्ण पदार्थोसे शांत होता होय उसको वैद्य वातसे उत्पन्न हुआ परिणामशूल कहतेहैं। जिसमें तृषा, दाह, अरति, स्वेद (पसीना), तीक्ष्ण खट्टे तथा खारी पदार्थोंसे हुआ होय और शीतल पदार्थोंसे जो शान्त होता होय उसको विद्वान्, पित्तसे उत्पन्न हुआ परिणाम शूल कहतेहै। जिसमें वमन, हृल्लास, मोह तथा अल्प पीडा होय बहुत दिनोंतक रहै और तीक्ष्ण तथा कडवे पदार्थोंसे जो शात होताहोय तो उस शूलको कफसे उत्पन्न हुआ परिणाम शूल जानना। उपरोक्त लक्षणोमेंसे दो दोषके लक्षण मिलते होयँ तो वह द्वन्द्वज और जिसमे उपरोक्त तीनों दोषोके लक्षण मिलते होयँ उसको त्रिदोषज जानना। जो शूल त्रिदोषज होय और जिसने मांस बल तथा अग्निको क्षीण करदिया होय वह परिणाम शूल असाध्य जानना ॥ २६–३० ॥

## अथान्नद्रवनामकशूललक्षणम्।

**जीर्णे जीर्यति चाप्यन्ने यच्छूलमुपजायते॥ पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा॥ न शमं याति नियमात्सोऽन्नद्रव उदाहृतः॥ ३१॥**

**नेदं शूलमसाध्यं चिकित्साभिधानात्॥**

भोजन किया हुआ अन्न पचनेके ससयमें अथवा पचनेके पश्चात् जो शूल उत्पन्न होजाताहै, तथा पथ्यसे, अपथ्यसे, भोजनसे, अथवा अभोजनसे जिसके शात होनेका नियम नहीं है वह अन्नद्रव शूल कहाताहै, इस शूलको असाध्य नही जानना, क्योंकि ग्रथोंमे वैद्य लोगोंने चिकित्सा कही है ॥ ३१ ॥

## अथ शूलचिकित्सा।

**वमनं लंघनं स्वेदः पाचनं फलवर्तयः॥ क्षारश्चूर्णानि गुटिकाः शस्यन्ते शूलशान्तये॥ ३२॥ विज्ञाय वातशूलन्तु स्नेहस्वेदैरुपाचरेत्॥ स्वल्पशूलाकुलस्य स्यात्स्वेद एव सुखावहः॥ ३३॥**

वमन, लघन, स्वेदन, पाचन, फलवर्त्ति (गुदामे वत्ती चढाना,) क्षार, चूर्ण और गोली, यह सब उपाय शूलके

शांति करनेके लिये उत्तम कहे हैं । शूल वायुसे हुआ जाने तो स्नेहन तथा स्वेदन उपचार करै, किंचित् शूल होय तो स्वेद करनेसे सुख होताहै ॥ ३२ ॥ ३३ ॥

### अथ मृत्तिकास्वेदः ।

**मृत्तिकां सजलां पाकाद्घनीभूतां पटे क्षिपेत् ॥ कृत्वा तत्पोटलीं शूली यथास्वेदं विधारयेत् ॥ ३४ ॥**

मट्टीमें पानी डालकर पकावे, जब गाढी होजाय तब कपडेमें रख पोटली कर लेवे, इससे योग्य सेक करै तो वायुका शूल दूर होताहै, इसको मृत्तिकास्वेद कहते हैं ॥ ३४ ॥

### अथ कार्पासास्थ्यादिस्वेदः ।

**कार्पासास्थिकुलत्थैस्तिलयवैरेरण्डमूला तसीवर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् ॥ स्वेदः स्यादथ कूर्परोदरशिरःस्फिग्जानुपादांगुलीगुल्फस्कन्धकटीरुजो विजयते निःशेषवातार्तिहा ॥ ३५ ॥**

कपासकी अस्थि ( विनोले ), कुलथी, तिल और जो इन सबको अथवा एक एकको अरंडीकी जड, अलसी, गोट, सनके बीज और काँजी, इन सबके साथ मिलाकर गरम करलेवे, इससे स्वेद देवे तो पहुचा, पेट, शिर, कूला, घटुआ, पैर, पांव, अगुली, एडी, कंधा और कमर इनका शूल नष्ट होताहै और अन्यवायु संबंधी सम्पूर्ण पीडा दूर होतीहै, इसको कार्पासास्थ्यादिस्वेद कहतेहैं ॥ ३५ ॥

### अथ तिलादिगुटिका ।

**तिलैश्च गुटिकां कृत्वा भ्रामयेज्जठरोपरि॥ शूलं सुदुस्तरं तेन शान्तिं गच्छति सत्वरम् ॥ नाभिलेपाज्जयेच्छूलं मदनं काञ्जिकान्वितम् ॥ ३६ ॥**

**मदनं मयनफलम् ॥**

**चिर्भटमरण्डजं मूलं क्वाथयित्वा जलं पिबेत् ॥ हिंगुसौवर्चलोपेतं सद्यः शूलनिवारणम् ॥ ३७ ॥**

तिलोंकी मैनफलकी गोली बनावे और पेटके ऊपर फेरे तो इससे दुस्तर शूल भी तुरंत शांत होजाताहै । अथवा मैनफलको कांजीमें पीसकर नाभिके ऊपर लेप करे तो शूल, मूलसे जातारहताहै । सोंठ और अडीकी जड, इनका क्वाथ करके उसमें भूनी हींग तथा कालानोन डालकर पिये तो तुरंतही शूल नष्ट होताहै ॥ ३६ ॥ ३७ ॥

### अथ वातजशूलचिकित्सा ।

**पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः ॥ पायसैः कृशरैः पिंडैः स्निग्धैर्वा पिशितोत्करैः ॥ ३८ ॥ वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः ॥ ससैंधवव्योषयुतः सलावः सहिंगुसौवर्चलदाडिमाढ्यः ॥ ३९ ॥**

शूल रोगीको तिल चावलकी यवागू तथा स्निग्ध मेडक आदिके मांससे स्वेदन करना अत्यन्त उपकारी है । लवापक्षीका मांस और कुलथी इन दोनोंका क्वाथ करके उसके साथ थोडासा सैंधव निमक, त्रिकुटा, ( सोंठ मिरिच पीपल ) अनारदानेका रस और सचरानिमक मिलायके सेवन करै तो शीघ्र वातशूल दूर होताहै ॥ ३८ ॥ ३९॥

**बलापुनर्नवैरंडबृहतीद्वयगोक्षुरैः ॥ सहिंगुलवणोपेतं सद्यो वातरुजापहम् ॥४०॥ तुंबुरुण्यभया हिंगु पौष्करं लवणत्रयम् ॥ पिबेदुष्णांबुना वापि शूलगुल्मापतंत्रकी॥ ॥ ४१ ॥ यवानी हिंगुसिंधूत्थक्षारसौर्वचलाभयाः ॥ सुरामंडेन पातव्या वातशूलनिषूदनाः ॥ ४२ ॥ सौर्वचलाम्लिकाजाजी मरिचैर्द्विगुणोत्तरैः॥ मातुलुंगरसैः पिष्टा गुटिका वातशूलनुत् ॥ ४३ ॥ बीजपूरकमूलं च घृतेन सह पाययेत् ॥ जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः ॥ ४४ ॥**

खिरैंटी, पुनर्नवा, अंड, छोटीकटेरी, बडीकटेरी इनके क्वाथमें हींग और सैंधानिमक डालके पीवे तो वातशूल नष्ट होय अथवा तुंबुरू, हरड, हींग, पोहकरमूल, सचर सैंधा और विड निमक इनका समानभाग चूर्णकर गरम जलके साथ पीवे तो शूल, गोला और अपतत्रवात, दूर होय । अथवा अजमायन, हींग, सैंधानिमक, सज्जीखार, जवाखार, संचरनिमक और हरडके चूर्णको, मद्य, अथवा माडके पीवे तो वातशूल दूर होय अथवा सचरनिमक २ भाग, इमली ४ भाग, जीरा ८ भाग और कालीमिरच

१६ भाग, इन सबको बिजोरेके रसमें खरलकर गोली बनावे, यह वातशूलको नष्ट करेहै अथवा बिजोरेकी जडका २ तोले चूर्ण कर घीके साथ पीये तो वातशूल नष्ट होय ॥ ४०-४४ ॥

## अथ पित्तजशूलचिकित्सा ।

गुडं शालिर्यवक्षारः सर्पिःपानं विरेचनम् ॥ जांगलानि च मांसानि भेषजं पित्तशूलिनाम् ॥ ४५ ॥ मणीरजतताम्राणां भाजनानि गुरूणि च ॥ तोयेन परिपूर्णानि शूलस्योपरि धारयेत् ॥ ४६ ॥ विरेचनं पित्तहरं प्रशस्तं रसाश्च शस्ताः शशलावकानाम् ॥ सगुडां घृतसंयुक्तां भक्षयेद्वा हरीतकीम् ॥ प्रलिह्याच्छूलशान्त्यर्थं धात्रीचूर्णं समाक्षिकम् ॥ ४७ ॥

जिसको पित्तका शूल हुआहो उसके लिये गुड, शालि चावलोंका भात, जवाखार, घी पीना, विरेचन और जांगलदेशके पशु पक्षियोका मांस, यह औषधिरूप हैं । मणि ( रत्नादिक ), चांदी, अथवा तांबेके भारीभारी पात्रोंमें भर कर पित्तज शूलके ऊपर धरै इससे पित्तजशूल नष्ट होताहै । पित्तको हरनेवाला विरेचन, खरगोश और लवेके मांसका रस यह पित्तजशूलको शान्त करैहै । हरडोंका चूर्ण करके उसको गुड घीमें मिलाकर चाटनेसे अथवा सहतके साथ आमलेका चूर्ण चाटे तो पित्तजशूलकी शांति होतीहै ॥ ४५-४७ ॥

## अथ कफजशूलचिकित्सा ।

शाल्यन्नं जांगलं मांसमरिष्टं कटुकं रसम् ॥ मधुना जीर्णगोधूमं कफशूले प्रयोजयेत् ॥ ४८ ॥
अरिष्टं भेषजवारिकाथसिद्धं मद्यम् ॥
लवणत्रयसंयुक्तं पंचकोलं सरामठम् ॥
सुखोष्णेनांबुना पीतं कफशूलं प्रणाशयेत् ४९

कफसम्बन्धी शूल हुआ होय तो शालिचावल, जांगलदेशके पशु पक्षियोंका मांस, अरिष्ट ( योग्य औषधियोंके जलके क्वाथसे बनाईहुई मदिरा ), तीक्ष्ण रस और मदिराके साथ पुराने गेहूँके पदार्थ यह सेवन करे । सैंधानोन, विडनोंन, कालानोन, सोंठ, पीपल, पीपलामूल, चव्य, चीता, मिरच और हींग इनका चूर्ण करके सुहाते २ गरम जलके साथ पिये तौ इससे कफजशूल नष्ट होताहै ॥ ४८ ॥ ४९ ॥

## अथामशूलचिकित्सा ।

आमशूले क्रिया कार्या कफशूलप्रणाशिनी ॥ सेव्यमामहरं सर्वमग्नेर्मन्दस्य वर्द्धनम् ॥ ५० ॥ तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ॥ प्रयोज्यं मधुसर्पिर्भ्यां सर्वशूलनिवारणम् ॥ ५१ ॥ दारुहैमवतीकुष्ठशताह्वाहिंगुसैन्धवैः ॥ अम्लपिष्टैः सुखोष्णैश्च लिम्पेच्छूलयुतोदरम् ॥ ५२ ॥ मूलं बैल्वं तथैरण्डं चित्रकं विश्वभेषजम् ॥ हिंगुसैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥ ५३ ॥

वातरोगान्तर्गताध्मानचिकित्सायां लिखितो नाराचनामा रसोऽन्यच्च विरेचनं शूले हितम् ॥

आमशूल हुआ होय तो कफशूलको नष्ट करनेवाली क्रिया करै, आमको नष्ट करनेवाले सब पदार्थोंका सेवन करै और मन्दहुई अग्निको प्रदीप्त करै । राईका चूर्ण और हरड, बहेडा तथा आमले इनका चूर्ण मद्यमें तथा घीमें मिलाकर खावे तो उससे सर्व प्रकारके शूल नष्ट होतेहैं अथवा देवदारु, सफेदवच, कूठ, सोया, हींग, और सैंधानिमक इनको नींबूके रसमें पीसकर सुहाता २ गरम लेप करै, इससे उदरका शूल निर्मूल होताहै । अथवा बेलकी जड, अण्डकी जड, चीता और सोंठ इनका चूर्ण करके हींग और सैंधेनोनके साथ खाय तो इससे तत्काल शूल निवृत्त होताहै ॥ ५०-५३ ॥

वायुसम्बन्धी रोगोंके प्रकरणमें आध्मानकी चिकित्सापर जो नाराचनामक रस कहाहै वह और अन्य भी विरेचन शूलपर हितकारी हैं ।

## अथ कूष्माण्डक्षारः ।

कूष्माण्डं तनु कृत्वा तु क्षिप्त्वा घर्मे विशोषयेत् ॥ स्थाल्यां निक्षिप्य तत्सर्वं पिधानेन पिधाय च ॥ ५४ ॥ चुल्ल्यां निवेश्य वह्निश्च ज्वालयेत्कुशलो जनः ॥ यथा तन्न भवेद्भस्म किन्त्वंगारो दृढो भवेत् ॥ तदा निर्वापयेच्छीतं सर्वथा

चूर्णितन्तु तत् ॥ ५५ ॥ माषद्वयमितं तावच्छुण्ठीचूर्णेन मिश्रितम् ॥ जलेन भक्षयेन्नित्यं महाशूलाकुलो नरः ॥ असाध्यमपि यच्छूलं तदप्येतेन शाम्यति॥५६॥

पेठेके छोटे २ टुकडे करके धूपमें सुखावे, पश्चात् इन सब टुकडोंको हांडीमें भरकर ऊपरसे ढकदेवे, फिर चूल्हेपर चढाकर नीचे अग्नि जलादेवे, परन्तु अग्नि इस प्रकार जलावे कि जिससे पेठेके टुकडे जल न जायँ किंतु दृढ अंगारोंकी सदृश होजावें फिर इनको शीतल होनेपर चूर्ण करलेवे, और बारह रत्ती इसके चूर्णमें, बारह रत्ती सोंटका चूर्ण मिलाकर पानीसे नित्य भक्षण करै तो इससे असाध्य शूलभी शान्त होजाताहै । अत्यन्त शूलसे व्याकुल हुए मनुष्योंको यह उपाय करना चाहिये, इसको कूष्माण्डक्षार कहतेहैं ॥ ५४–५६ ॥

## अथ परिणामशूलचिकित्सा ।

लंघनं प्रथमं कुर्याद्वमनं सविरेचनम् ॥ पक्तिशूलोपशान्त्यर्थं तत्र वान्तेर्विधिर्यथा ॥ ५७ ॥ पीत्वा तु क्षीरमाकण्ठं मदनकाथसंयुतम ॥ कान्तारकस्य पौण्ड्रस्य कोशकारस्य वा रसम् ॥ ५८ ॥ कषायो वाथ निम्बस्य कटुतुम्बीरसोऽथ वा॥यथाविधि वमेद्धीमान्पक्तिशूलार्दितो जनः ॥ ५९ ॥ त्रिवृता च तथा दंत्या तलैरैरंडजेन वा ॥ दत्तं विरेचनं सद्यः पक्तिशूलनिवारणम ॥ ६० ॥

परिणामशूलकी शांतिके लिये प्रथम लंघन और पश्चात् वमन तथा विरेचन करावे । वमनकी विधि इस प्रकार है कि, परिणाम शूलसे पीडित मनुष्यको मैनफलके काथमें साथ दूधको, अथवा कातार ( कालेगन्ने ) के रसको, अथवा पौण्ड्रक ईखके रसको वा कोशकार ईखके रसको वा नीमके काथको अथवा कडवी तोंबीके काथको कंठतक पीकर विधिपूर्वक वमन करै । निशोत, दन्ती ( [illegible] जड ) अथवा अण्डीके तेलका विरेचन ( [illegible] ) देवे तो तुरन्त परिणामशूल नष्ट होताहै ५७–६०

## अथ विडंगादिमोदकः ।

विडंगतण्डुलव्योषत्रिवृद्दन्तीसचित्रकम ॥ सर्वाण्येतानि संहृत्य सूक्ष्मचूर्णानि कारयेत् ॥ ६१ ॥ गुडेन मोदकान्कृत्वा खादेदुष्णेन वारिणा ॥ जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ ६२ ॥

वायविडंग, चावल, सोंठ, मिरच, पीपल, निसोत, दन्ती और चीता, इन सबका एकत्र बारीक चूर्ण करके गुडमें मिलाकर लड्डू बनालेवे, फिर गरम जलके साथ खाय तो तीनों दोषोंसे उत्पन्न हुआ परिणामशूल नष्ट होता है, इसको विडंगादिमोदक कहतेहैं ॥ ६१–६२ ॥

## अथ शुण्ठ्यादिकल्कः ।

नागरतिलगुडकल्कं पयसा संपिष्य यः पुमाँल्लिह्यात् ॥ उग्रं परिणतिशूलं नश्येत्तस्य त्रिरात्रेण ॥ ६३ ॥ पीतशम्बूकजं भस्म जलेनोष्णेन तत्क्षणात् ॥ पक्तिजं नाशयत्येव शूलं विष्णुरिवासुरान् ॥ ६४ ॥

जो मनुष्य सोंठ, तिल और गुड इनका कल्क करके दूधमें पीसकर चाटे तो उग्र परिणामशूल भी तीन दिनमें नष्ट होजाता है । अथवा छोटे २ घोंघोंकी भस्मको गरम जलके साथ पिये तो जिस प्रकार विष्णु दैत्योंका नाश करतेहैं उसीप्रकार यह भस्म परिणाम शूलको तुरन्त शान्त करैहै ॥ ६३ ॥ ६४ ॥

## अथ पथ्यादिलोहः ।

लौहपथ्याकणाशुण्ठीचूर्णं समधुसर्पिषा ॥ विलिहन्विनिहन्त्येव शूलं हि परिणामजम् ॥ ६५ ॥

लोहेकी भस्म, हरड, पीपल और सोंट इनका चूर्ण करके सहत और घीके साथ चाटे तो इससे परिणामशूल अवश्य नष्ट होजाताहै ॥ ६५ ॥

## अथ नारिकेलक्षारः ।

नारिकेलं सतोयञ्च लवणेन सुपूरितम् ॥ मृदा च वेष्टितं शुष्कं पक्कगोमयवह्निना ॥ ॥ ६६ ॥ पिप्पल्या भक्षितं हन्ति शूलं हि परिणामजम् ॥ वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम् ॥ ६७ ॥

पानी भरेहुए गीले नारियलके पेटमें भलीभांति नोंन भरदेवे, पश्चात् कपडमट्टी करके सुखाकर अर्ने उपलोंकी अग्निसे पकावे और भस्म करलेवे, यह भस्म पीपलके चूर्णके साथ खाय तो इससे वायुसम्बन्धी, पित्तसम्बन्धी,

कफसम्बन्धी और त्रिदोषसम्बन्धी परिणामशूल भी नष्ट होताहै ॥ ६६ ॥ ६७ ॥

### अथान्नद्रवशूलचिकित्सा ।

अन्नद्रवाख्ये शूले तु न तावत्स्वास्थ्यमश्नुते ॥ यावत्कटुकपित्ताम्लमन्नं न च्छर्दयेद्द्रवम् ॥ ६८ ॥ जातमात्रे जरत्पित्ते शूलमाशु विनाशयेत्॥पित्तार्तं वमनं कृत्वा कफार्तश्च विरेचनम् ॥ ६९ ॥ अन्नद्रवे च तत्कार्यं जरत्पित्ते यदीरितम्॥ जरत्पित्तेऽपि यत्पथ्यं प्रोक्तमन्नद्रवे तु यत् ॥ ७०॥ आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम्॥ माषेण्डरीं सलवणां सुस्विन्नां तैलपाचिताम् ॥ तादृशीं सर्पिषा खादेदन्नद्रवनिपीडितः ॥ ७१ ॥ धात्रीफलभवं चूर्णमयश्चूर्णसमन्वितम् ॥ यष्टीचूर्णेन वा युक्तं लिह्यात्क्षौद्रेण तद्द्रवे ॥ ७२ ॥

जबतक तीक्ष्ण, गरम और पित्तमिले खट्टे अन्नको रोगी वमन न करैगा तबतक अन्नद्रवके शूलमे स्वस्थता प्राप्त नहीं होसक्ती । परिणामशूल पित्तसे उत्पन्न हुआ होय तो तुरन्तही वमन करके नष्ट करदेवे और कफसे हुआ होय तो विरेचनसे नष्ट करदेवे । जो चिकित्सा परिणामशूलमें कही है वही अन्नद्रव शूलमें भी करै।जो चिकित्सा अन्नद्रव शूलमें कही है वह परिणामशूलमे भी करै । रोगीका आमाशय और पक्वाशय शुद्ध होनेसे अन्नद्रवशूल शान्त होताहै । अन्नद्रवशूलसे पीडित मनुष्य हींग,मिरच, जीरा तथा अदरख पडीहुई उडदकी पिट्ठीकी छोटी छोटी बडियें करके उनको भलीभांति तेलमे पकाकर घीके साथ खाय । आमलेका चूर्ण करके उसमे लोहेका चूर्ण अथवा मुलैठीका चूर्ण मिलाकर सहतके साथ खाय तो इससे अन्नद्रवशूल नष्ट होजाताहै ॥ ६८-७२ ॥

श्यामाकतण्डुलैः सिद्धं सिद्धं कोद्रवतण्डुलैः॥प्रियंगुतण्डुलैः सिद्धं पायसं सहितं हितम् ॥ ७३ ॥

अत्र प्रियंगुः कंगुविशेषः ॥

गौडिकं शौरणं कन्दं कूष्माण्डमपि भक्षयेत्॥ कलाययवसक्तून्वा सक्तून्वा लाजसम्भवान् ॥ ७४ ॥

गौडिकं गुडेन संस्कृतं पक्वान्नम् ॥

कुलत्थसक्तूनथ वा दध्ना दद्याच्च दाधिकम् ॥ चणकानामथो सक्तून्कोद्रवस्यौदनं तथा ॥ ७५ ॥

दाधिकं दध्ना संस्कृतं भक्तं महेरि इति लोके॥

गोधूममण्डकं तत्र सर्पिषा गुडसंयुतम् ॥ ससितं शीतदुग्धेन मृदितं कथितं हितम् ॥ ७६ ॥ अन्नद्रवो दुश्चिकित्स्यो दुर्विज्ञेयो महागदः ॥ तस्मात्तस्य प्रशमने परं यत्नं समाचरेत्॥७७॥ अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद्यतः ॥ तस्मादत्रान्नपानानि मात्राहीनानि कारयेत् ॥ ७८ ॥ कलाययवगोधूमाः श्यामाकाः कोरदूषकाः ॥ राजमाषाश्च माषाश्च कुलत्थाः कंगुशालयः ॥ ७९ ॥ दधिलुप्तरसं क्षीरं सर्पिर्गव्यं समाहिषम् ॥ वास्तूकं कारवेल्लं च कर्कोटकफलानि च ॥८०॥बर्हिणो हरिणो मत्स्या रोहिताद्याः कपिञ्जलाः ॥ एतस्मिन्नामये शस्ता मता मुनिचिकित्सकैः ॥ ८१ ॥

दधिलुप्तरसं दध्ना लुप्तः प्रकृतो रसो यस्य तत्क्षीरं दधियुक्तं क्षीरमित्यर्थः ॥

समा, कोदो, अथवा कंगनीकी दूधमे खीर बनाकर उसमे पथ्य ( बूरा वगैरह ) इत्यादि पदार्थ डालकर खाय, अन्नद्रवशूलवालेको हितकारी है । अथवा गुडके बने पदार्थ, सूरनकद, पेठा, मटर, जौके सत्तू, खीलेके सत्तू, कुलथीके सत्तू दहीके साथ खाय, अथवा दहीके बने पदार्थ खाय, चनेके सत्तू अथवा कोंदोंका भात खाय यह भी हितकारी है । गेहूँके मांडक ( गेहूँकी खीर) को घी और गुड तथा बूरा मिलाकर शीतलदूधमें मलकर खाय यह भी हितकारी है । और भिषक्जनोंको उचित है कि, अन्नद्रव शूल भयकर महारोग और दुश्चिकित्स्य है इस कारण इसकी शाति करनेमे भलीभाँति प्रयत्नकरै, अन्नद्रव शूलमें और परिणामशूलमे जठराग्नि मंद होजातीहै इसलिये इस रोगमे अन्न और जलकी अल्प मात्रा देनी चाहिये । मटर, जौ, गेहूँ, समा, कोदों, चौरा, उडद, कुलथी,

चगनी, शालिचावल, दहीमिला दूध, गाय तथा भैंसका घी, बथुआ, करेले, ककोडे, मोर तथा हिरनका मास, रोहू आदि मछलिये और तीतरका मास, यह अन्नद्रवशूलमें परम हितकारी है ऐसा वैद्योंने माना है ॥ ७३-८१ ॥

## अथ गुडमंडूरम् ।

गुडामलकपथ्यानां चूर्णं प्रत्येकशः पलम्॥ त्रिपलं लोहकिट्टस्य तत्सर्वं मधुसर्पिषा ॥ ८२ ॥ समालोड्य समश्नीयादक्षमात्रप्रमाणतः ॥ आदिमध्यावसानेषु भोजनस्य निहन्ति तत् ॥ ८३ ॥ अन्नद्रवं जरत्पित्तमम्लपित्तं सुदारुणम्॥परिणामसमुत्थश्च शूलं संवत्सरोत्थितम्॥ ८४ ॥

गुड, आमलेका चूर्ण, हरडोंका चूर्ण यह प्रत्येक चार चार तोले, लोहेकी कीटकी भस्म १२ तोले इनको सहत तथा घीमें मिलाकर भोजनके आदिमें मध्यमें तथा अंतमें एक एक तोलाभर खाय तो यह महादारुण अन्नद्रवशूल, परिणामशूल और जरत्पित्त, इनको नष्ट करैहै । इसको गुडमंडूर कहते हैं ॥ ८२-८४ ॥

## अथ शूलरोगेऽपथ्यम् ।

व्यायामं मैथुनं मद्यं लवणं कटुकं रसम्॥ वेगरोधं शुचं क्रोधं द्विदलं शूलवांस्त्यजेत् ॥ ८५ ॥

इति शूलपरिणामशूलान्नद्रवजरत्पित्ताधिकारः ।

व्यायाम, मैथुन, मद्यपान, नमक, तीक्ष्ण रस, विष्ठा आदिके वेगका अवरोध, शोक क्रोध और चना, मूग आदिकी दाल इनको शूलरोगी त्याग देवै ॥ ८५ ॥

इति शूलाधिकारः समाप्तः ।

# अथोदावर्ताधिकारः ।

## तत्रोदावर्तनिदानम् ।

वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः॥ क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्तसम्भवः ॥ १ ॥

इन्द्रियमत्र शुक्रम् । अत्र तृतीया सहार्था धृत्या वेगविधानेन ॥

अधोवायु, विष्ठा, मूत्र, जम्भाई, आंसू, छींक, डकार, वमन, वीर्य, भूँख, प्यास, श्वास और नींद, इनके तेरह वेगोंके रोकनेसे उदावर्त रोगकी उत्पत्ति होतीहै ॥ १ ॥

## अथोदावर्तसामान्यलक्षणम् ।

यत्रोर्ध्वं जायते वायोरावर्तः स चिकित्सकैः ॥ उदावर्त इति प्रोक्तो व्याधिस्तत्रानिलः प्रभुः ॥ २ ॥

आवर्तो भ्रमः ॥

जिस रोगमें वायुका आवर्त ( चक्कर ) ऊपरको जाताहै उसको वैद्य उदावर्त कहतेहैं, इस रोगमें वायु मुख्य है ॥ २ ॥

## अथाधोवातावरोधोत्पन्नोदावर्तलक्षणम् ।

वातमूत्रपुरीषाणां संगो ध्मानं क्रमो रुजा ॥ जाठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ ३ ॥

संगः अप्रवृत्तिः । ध्मानमाध्मानम् । क्रमः अनायासश्रमः रुजा जठरे । अन्ये तोदशूलगुल्मादयः ॥

अधोवायुके रोकनेसे वायु, मूत्र तथा विष्ठाका अवरोध होताहै, तथा पेटका फूलना, अनायासही परिश्रम और पीडाका होना और शूल, गुल्म आदि अन्य वायुसम्बधी रोगभी होतेहैं ॥ ३ ॥

## अथ पुरीषावरोधोत्पन्नोदावर्तलक्षणम् ।

आटोपशूलौ परिकर्तिका च संगः पुरीषस्य तथोर्ध्ववातः ॥ पुरीषमास्यादथ वा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ४ ॥

पुरीषवेगे धारिते सति आटोपः सरुक् गुडगुडाशब्दः शूलमिति पक्वाशये । परिकर्तिका गुदे कर्तनवत्पीडा । ऊर्द्ध्ववातः उद्गारः ॥

विष्ठाके वेगको रोकनेसे पेटमें गुडगुडाहट, पक्वाशयमें पीडा, गुदामें कतरनेकी सदृश पीडा, होतीहै, मलका रुक जाना, खट्टी खट्टी डकारोंका आना अथवा डकारके साथ मल भी निकलताहै ॥ ४ ॥

अथ मूत्रावरोधोत्पन्नोदावर्तलक्षणम्।

वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा॥ विनामो वङ्क्षणानाहः स्याल्लिंग मूत्रनिग्रहे ॥ ५ ॥

विनामः व्यथया वपुषो नमनम्। वंक्षणानाहः वंक्षणयोराकर्षणवद्व्यथा ॥

मूत्रका वेग रोकनेसे मूत्राशयमे तथा लिंगमे शूल, मूत्रकृच्छ्र, मस्तकमे पीडा, पीडासे शरीरका न उठना और पेड्रूमे अफारा होताहै ॥ ५ ॥

अथ जृम्भावरोधोत्पन्नोदावर्तलक्षणम्।

मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः ॥ तथाक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥ ६ ॥

जम्भाईको रोकनेसे मन्या (गले नाडके पीछेकी नस) और गलेका स्तम्भ, मस्तकमें वातसंबधी पीडा, नेत्र, नाक, मुखमें और कानोंमे तीव्र पीडा होतीहै ॥ ६ ॥

अथ नेत्रोदकावरोधोत्पन्नोदावर्तलक्षणम्।

आनन्दजं वाप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि ॥ शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥ ७ ॥

आनन्द अथवा शोकके कारण प्राप्तहुए आंसुओके वेगोको कभी न रोके, क्योकि रोकनेसे मस्तकमे भारीपन नेत्रपीडा और पीनसरोग होताहै ॥ ७ ॥

अथ छिक्कावरोधोत्पन्नोदावर्तलक्षणम्।

मन्यास्तम्भः शिरःशूलमर्दितार्द्धावभेदकौ॥ इन्द्रियाणाञ्च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥ ८ ॥

छींकके रोकनेसे मन्या (नाडीके पीछेकी नस) का स्तम्भ, शिरमें शूल, अर्दित वात, आधे मुखका टेढा हो जाना और सब इन्द्रियोकी दुर्बलता, ये रोग उत्पन्न होजातेहै ॥ ८ ॥

अथोद्गारावरोधोत्पन्नोदावर्तलक्षणम्।

कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथ वाऽप्रवृत्तिः ॥ उद्गारवेगेऽभिहते भवन्ति जन्तोर्विकाराः पवनप्रसूताः॥९॥

कण्ठास्यपूर्णत्वं कवलेनेव। तोदो हृदि आमाशये च ॥ कूजोऽव्यक्तशब्दः उदरे वायोरप्रवृत्तिः ॥ उच्छ्वासादिनिरोधात् पवनप्रसूताः पवनाज्जाता विकाराः हिक्कादयः॥

डकारके रोकनेसे कंठ कौरसे रुका हुआसा प्रतीत हो, हृदय तथा आमाशयमे चैंठोंके काटनेकेसी अत्यत पीडा, पेटमे वायुका कूजना, श्वास आदिके रुकनेसे पवनकी अप्रवृत्ति और अन्य हिचकी आदि वायुसबधी विकार होते हैं ॥ ९ ॥

अथ वमनावरोधोत्पन्नोदावर्तलक्षणम्।

कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः ॥ कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः ॥ १० ॥

वमनका वेग रोकनेसे शरीरमें खुजली, चकत्ते, दाह, अरुचि, झाँई, सूजन, पाण्डुरोग, ज्वर, कोढ, हृल्लास और विसर्प, ये सब उत्पन्न होते है ॥ १० ॥

अथ वीर्यावरोधोत्पन्नोदावर्तलक्षणम्।

मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च ॥ शुक्राश्मरी तत्स्रवणं भवेच्च तेते विकारा विहते तु शुक्रे ॥ ११ ॥

तत्स्रवणं शुक्रस्रावः। तेते विकाराः वातकुण्डलिकादयः ॥

स्त्रीप्रसग करनेके समय वीर्यका वेग रोकनेसे मूत्राशय, गुदा तथा अडकोषोंमे सूजन और पीडा, मूत्रका अवरोध, शुक्राश्मरी (वीर्यकी पथरी), वीर्यका स्राव और अन्य वातकुण्डलिका आदि विकार होते है ॥ ११ ॥

अथ क्षुधावरोधोत्पन्नोदावर्तलक्षणम्।

तन्द्रांगमर्दावरुचिः श्रमश्च क्षुधाविघातात्कृशता च दृष्टेः ॥ १२ ॥

भूँखके रोकनेसे—तन्द्रा, अगोंका टूटना, अरुचि, परिश्रम और दृष्टिकी मदता, ये उपद्रव होते हैं ॥ १२ ॥

अथ तृषावरोधोत्पन्नोदावर्तलक्षणम् ।

कण्ठस्य शोषः श्रवणावरोधस्तृष्णाविघाताद्धृदये व्यथा च ॥ १३ ॥

प्यासके रोकनेसे कण्ठ और मुखका सूजन, श्रवणशक्तिका मन्द होना और हृदयमें पीडा ये लक्षण होते हैं ॥ १३ ॥

अथ श्वासावरोधोत्पन्नोदावर्तलक्षणम् ।

श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमोहावथ वापि गुल्मः ॥ १४ ॥

थका हुआ मनुष्य श्वासको रोके तो हृदयमें पीडा मोह और गुल्म रोग उत्पन्न होताहै ॥ १४ ॥

अथ निद्रावरोधोत्पन्नोदावर्तलक्षणम् ।

जृम्भांगमर्दोतिशिरोऽतिजाड्यं निद्राविघातादथ वापि तन्द्रा ॥ १५ ॥

अतिजाड्यं गौरवम् । शिरोगात्राक्षिगौरवमिति तन्त्रान्तरे पाठात् ॥

निद्राको रोकनेसे जम्भाई, अंगोंका टूटना, मस्तक, शरीर तथा नेत्रोंमें भारीपन होताहै और तन्द्रा भी होतीहै ॥ १५ ॥

अथ रूक्षादिवस्तुकुपितवातोत्पन्नोदावर्तनिदानसम्प्राप्तिलक्षणानि ।

वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ॥ भोजनैः कुपितः सद्य उदावर्तं करोति च ॥ १६ ॥ वातमूत्रपुरीषास्रुकफमेदोवहानि वै ॥ स्रोतांस्युदावर्तयति पुरीषं च प्रवर्तयेत् ॥१७॥ ततो हृद्वस्तिशूलार्तो हृल्लासारतिपीडितः ॥ वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ १८ ॥ श्वासकासप्रतिश्यायदाहमोहतृषाज्वरान्॥ वमिहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥ बहूनन्यांश्च लभते विकारान्वातकोपजान् ॥ १९ ॥

उदावर्तयति वायुः ऊर्द्ध्वं भ्रमेणैव वातादिवाहीनि स्रोतांसि निरुणद्धि न तु विडादीनधोगमयति । मनोविभ्रमः रज्जौ सर्पज्ञानम् । श्रवणविभ्रमः अन्यथा श्रवणम् ॥

रूखे, कसैले, तीक्ष्ण और कडवे भोजनसे कुपित हुआ कोठेमें रहनेवाला वायु तुरन्त उदावर्तको उत्पन्न करैहै । कुपित हुई वात—अधोवायु, मूत्र, विष्ठा, आँसू, कफ और मेदाको बहानेवाली नाडियोंके मार्गको रोककर मलको स्तभित करैहै तब हृदय तथा वस्तिशूल, हृल्लास, अरति इनकी पीडा होनेसे मनुष्यके अधोवायु, मूत्र और विष्ठा थोडे थोडे अत्यन्त परिश्रमसे उतरतेहैं, तथा श्वास, खाँसी, प्रतिश्याय, दाह, मोह, तृषा, ज्वर, वमन, हिचकी मस्तकमें दर्द, मनका भ्रम, श्रवणमें भ्रम ( कुछका कुछ सुनाई मालूम होना ) तथा और भी बहुतसे वायुके कोपसे हुए विकार होते हैं ॥ १६–१९ ॥

अथोदावर्तासाध्यलक्षणम् ।

तृष्णाछर्दिपरिक्लिष्टं क्षीणं शूलैरुपद्रुतम् ॥ शकृद्वमन्तं मतिमानुदावर्तिनमुत्सृजेत् २० ॥

परिक्लिष्टं क्लेशसंयुक्तम् ॥

उदावर्त रोगी जो तृषा तथा वमनसे व्याकुलहो, क्षीण होगया हो, शूलोंसे दुःखित हो और विष्ठाकी वमन करता होय तो विद्वान् वैद्य उसकी चिकित्सा नहीं करै ॥ २० ॥

अथानाहसामान्यलक्षणम् ।

आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन ॥ प्रवर्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥ २१ ॥

आमम् अपक्कमाहाररसम् । शकृत्पुरीषं वा । क्रमेण निचितं सञ्चितम् । भूयो विगुणानिलेन दुष्टवायुना विबद्धं व्यायामशोषितं वा यथास्वं पूर्ववदप्रवर्तनम् । एनं विकारमानाहम् आहुः ॥

आम ( आहारका नहीं पचा रस ) अथवा मल क्रमसे संचित हो दुष्ट वायुसे बँधकर अथवा सूखकर अपने मार्गसे नहीं निकले, इस विकारको वैद्य आनाह कहतेहैं ॥ २१ ॥

अथामजातानाहलक्षणम् ।

तस्मिन्भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः॥आमाशये शूलमथो गुरुत्वं हृत्स्तम्भ उद्गारविघातनञ्च ॥२२॥

विघातनम अप्रवृत्तिः ॥

आहारके कच्चे रससे जो आनाह हुआ होय तो तृषा, प्रतिश्याय, मस्तकमें दाह, आमाशयमें शूल, शरीरमें भारीपन, हृदयका जकडजाना और डकारका न आना, ये लक्षण होतेहैं ॥ २२ ॥

अथ मलसंचयेनोत्पन्नानाहलक्षणम् ।

स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतो वमिश्च । श्वासश्च पक्काशयजे भवन्ति तथालसोक्तानि च लक्षणानि ॥ २३ ॥

पक्काशयजे शकृत्सञ्चयजे आनाहे । स्तम्भशब्दः कटीपृष्ठयोः स्तब्धतावाची पुरीषमूत्रयोरप्रवृत्तिवाची च । अलसोक्तानि लक्षणानि, आध्मानवातविघातादीनि ॥

जो मलके संचयसे आनाह हुआ होय तो कमर, पीठ, मल, मूत्र इनका अवरोध, शूल, मूर्च्छा, विष्ठा मिली हुई वमन और अलसक, अफारा तथा वायुका विघात आदि लक्षण होताहै ॥ २३ ॥

अथोदावर्तचिकित्सा ।

अधोवातनिरोधोत्थे उदावर्ते हितं मतम्॥ स्नेहपानं तथा स्वेदो वर्तिर्वस्तिर्हितो मतः ॥२४॥ विड्विघातसमुत्थे तु विड्भंगान्नं तथौषधम् ॥ वर्त्यभ्यंगावगाहाश्च स्वेदो वस्तिर्हितो मतः ॥ २५ ॥

वर्तिः फलवर्तिः ॥

मूत्रावरोधजनिते क्षीरवारिवचां पिबेत् ॥ दुःस्पर्शास्वरसं वापि कषायं ककुभस्य च ॥ २६ ॥

दुःस्पर्शा कण्टकारी दुरालभा च तुल्यगुणत्वात् ॥

एर्वारुबीजं तोयेन पिबेद्वा लवणीकृतम्॥ सितामिक्षुरसं क्षीरं द्राक्षां यष्टीमथापि वा॥ सर्वथैव प्रयुञ्जीत मूत्रकृच्छ्राश्मरीविधिः ॥ २७ ॥ जृम्भाभिघातजे स्नेहं स्वेदं वापि प्रयोजयेत् ॥ अन्यानपि प्रयुञ्जीत समीरणहरान्विधीन् ॥ २८ ॥ नेत्रनीरावरोधोत्थे मुञ्चेद्वापि दृशोर्जलम् ॥ स्वप्यात्सुखेन तस्याग्रे कथयेच्च कथाः प्रियाः ॥२९॥ छिक्काविघातजे तीक्ष्णघ्राणस्यार्कप्रदर्शनैः॥ प्रवर्तयेत्क्षुतं सक्तां स्नेहस्वेदौ च शीलयेत् ॥ ३० ॥ उद्गारस्यावरोधे तु स्नैहिकं धूममाचरेत् ॥ छर्दिनिग्रहसञ्जाते वमनं लंघनं हितम् ॥ ३१ ॥ विरेचनं चात्र मतं तैलेनाभ्यञ्जनं तथा ॥ वस्तिशुद्धिकरैः सिद्धं चतुर्गुणजलं पयः ॥ ३२ ॥ आवारिनाशं कथितं पीतवन्तं प्रकामतः॥ रमयेयुः प्रिया नार्यः शुक्रोदावर्तिनं नरम् ॥ ३३ ॥ तस्याभ्यङ्गोऽवगाहश्च मदिरा चरणायुधाः ॥ शालिः पयोनिरूहश्च हितं मैथुनमेव च ॥ ३४ ॥ क्षुद्विघातसमुद्भूते स्निग्धमुष्णं तथा लघु॥ रुच्यमल्पहितं भक्ष्यं पुष्पं सेव्यं सुगन्धि यत् ॥ ॥ ३५ ॥ तृषाविघातसम्भूते शीतः सर्वो विधिर्हितः ॥ कर्पूरशिशिरं स्वल्पं पिबेत्तोयं शनैःशनैः ॥ ३६ ॥ श्रमश्वासधृतौ शस्तौ विश्रामः सरसौदनौ ॥ निद्रावेगविघातोत्थे पिबेत्क्षीरं सितायुतम् ॥ संवाहनं सुशय्याऽत्र हितः स्वमः प्रियाः कथाः ॥ ३७ ॥

अधोवायुका वेग रोकनेसे उदावर्त हुआ होय तो उसमें स्नेहपान, स्वेद, फलवर्ति ( गुदामे बत्तीका प्रवेश करना) और वस्तिकर्म ( पिचकारी ) यह हितकारी हैं, विष्ठाका वेग रोकनेसे उदावर्त हुआ होय तो दस्तावर अन्न, दस्तावर औषधि, फलवर्ति, अभ्यंग, मालिश, अवगाहन ( जल या तेलमें बैठना ), स्वेदन तथा वस्तिकर्म करना हितकारी है ।

मूत्रका वेग रोकनेसे उदावर्त हुआ होय तो दूधमें जल मिलाकर और आगे वचका चूर्ण डालकर पिये अथवा कटेरीका स्वरस अथवा कोह ( अजुर ) की छालका स्वरस पिये ।

अथवा ककडीके बीजोंको पानीमे पीसकर इसमे निमक

डालकर पानीमें पिये अथवा मिश्री, ईखका रस, दूध, दाख तथा मुलहटीका रस पिये । इस उदावर्तमें मूत्रकृच्छ्रके उपाय तथा पथरीके उपाय भी सर्वथा करै ।

जम्भाईके वेगको रोकनेसे उदावर्त हुआ होय तो स्नेहन अथवा स्वेदन क्रिया करै और वातनाशक अन्य उपाय भी करै ।

आँसुओंका वेग रोकनेसे उदावर्त हुआ होय तो भली भाँति रोकर नेत्रोंसे अश्रुधारा बहावे निकाल डालै, फिर सुखसे शयन करै और आनन्द सहित प्रिय कथायें कहै ।

छींकका वेग रोकनेसे उदावर्त हुआ होय तो मिरच तथा राई आदि तीक्ष्ण पदार्थोंको सूंघकर उनका नस्य लेवे और यदि सूर्यके सामने देखनेसे भी छींकें आवें तो सूर्यको देखै और छींक लेवे नाकमें वस्त्रादिककी वत्ती डालकर छींक लेवे, स्नेहन तथा स्वेदनका भी सेवन करै ।

डकारका वेग रोकनेसे उदावर्त हुआ होय तो स्नेहयुक्त पदार्थोंका धूमपान करै । वमनके वेगको रोकनेसे उदावर्त हुआ होय तो वमन तथा लंघन करना हितकारी है। दस्त करावै, तेलका मर्दन करै यह सब उपाय इस रोगमें अत्यन्त उपयोगी है । वीर्यके वेगको रोकनेसे उदावर्त हुआ होय तो पुष्ट दूधमें चौगुना पानी डालकर तथा मूत्राशयको शुद्ध करनेवाले पदार्थ डालकर जब सब जल जल जाय केवल दूधही शेष रहे तब मिश्री डालकर पिये और प्यारी नारीके साथ रमण करै । और अभ्यंग, अवगाहन, मद्यका पीना, मुरगेका मांस, शालिचावल, दूध, निरूहवस्ति, तथा मैथुन, यह भी हितकारी हैं । भूँखका वेग रोकनेसे उदावर्त हुआ होय तो—स्निग्ध, हलका, रुचिकारी और मनोहर अल्प भोजन करना चाहिये, यह उदावर्तरोगी सुगन्धित पुष्पोंका भी सेवन करै । तृषाका वेग रोकनेसे उदावर्त हुआ होय तो—सम्पूर्ण शीतल उपचार [illegible], तथा स्पृक्का वा उत्पलसे सुवासित किया [illegible] थोडा थोडा वारंवार पिये । परिश्रमके श्वास रोकनेसे उदावर्त हुआ होय तो विश्राम करे और मांसरस [illegible] करै । निद्राका वेग रोकनेसे उदा[illegible] हुआ होय तो मिश्री डाला हुआ गरम दूध पिये अथवा [illegible] दबाकर सुंदर आसनपर शयन करै और [illegible] ॥ २८-३७ ॥

## अथ रूक्षादिहेतुकुपितवातोत्पन्नोदावर्तचिकित्सा ।

हिंगुमाक्षिकसिन्धूत्थैः पिष्टैर्वर्तिं विनिर्मिताम् ॥ घृताभ्यक्तां गुदे न्यस्येदुदावर्तविनाशिनीम् ॥ ३८ ॥

हींग, सहत और सैंधानोंन, इनको पीसकर वत्ती बनावे, फिर घीमें भिजोकर गुदामें रखवावै तो यह उदावर्त नष्ट होताहै, इसको फलवर्तिक कहतेहैं ॥ ३८ ॥

## अथ मदनफलादिफलवर्तिः ।

मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ॥ गुडक्षीरशमायुक्ता फलवर्तिरिहोदिता ३९

मैनफल, पीपल, कूठ, वच और सफेद सरसों इनको गुड तथा दूधमें पीसकर गुदामें रक्खे तो उदावर्त रोग नष्ट होताहै ॥ ३९ ॥

## अथ नाराचचूर्णम् ।

खण्डपलं त्रिवृताक्षः कृष्णाकर्षो द्वयोश्चूर्णम् ॥ प्राग्भोजनस्य मधुना बिडालपदकं नरो लिह्यात् ॥ ४० ॥ एतद्गाढपुरीषे देयं विज्ञैरुदावर्ते ॥ मधुरं नरपतियोग्यं चूर्णं नाराचकं नाम्ना ॥ ४१ ॥

खाँड चार तोले, निशोत १ तोला और पीपलका चूर्ण १ तोला, इनको एकत्र करके भोजनसे पहिले इसमें १ तोला सहत मिलाकर चाटै तो उदावर्त दूर होताहै । जिसमें विष्ठा अत्यत दृढ होगई हो ऐसे उदावर्तमें वैद्य यह यत्नकरें,यह चूर्ण अत्यन्त धनी और राजाओंके खाने योग्य है, इसका नाम नाराचचूर्ण है ॥ ४० ॥ ४१ ॥

## अथ गुडाष्टकम् ।

सव्योषपिप्पलीमूलं त्रिवृद्दन्ती च चित्रकम् ॥ तच्चूर्णं गुडसंमिश्रं भक्षयेत्प्रातरुत्थितः ॥ ४२ ॥ एतद्गुडाष्टकं नाम्ना बलवर्णाग्निवर्द्धनम् ॥ उदावर्तप्लीहगुल्मशोथपाण्ड्वामयापहम् ॥ ४३ ॥

सोठ, मिरच, पीपल, पीपलामूल, निसोत, दन्ती, जमालगोटेकी जड और चीता इनका चूर्ण करके गुडमें मिलाकर प्रातःकाल उठतेही खाय, गुडाष्टकके सेवनसे बल काति तथा अग्निकी वृद्धि होतीहै और उदावर्त, प्लीहा, गुल्म, सूजन तथा पाण्डुरोग इनका नाश होता-है ॥ ४२ ॥ ४३ ॥

## अथ शुष्कमूलाद्यघृतम्।

**मूलकं शुष्कमार्द्रं वा वर्षाभूः पञ्चमूलकम् ॥ कृतमालफलं चाप्सु पक्त्वा तेन घृतं पचेत् ॥ तत्पीतं शमयेत्क्षिप्रमुदावर्तमशेषतः ॥ ४४ ॥**

**पञ्चमूलकमत्र बृहत् ॥**

सूखी अथवा गीली मूली, सोंठ, बृहत्पंचमूल और अमलतासका गूदा, इनका क्काथ करके इसमे घृतको पचावे, यह घी पिये तो तत्काल उदावर्त रोग भली भाति शान्त होजातेहैं ॥ ४४ ॥

## अथानाहचिकित्सा।

**तुल्यकारणकार्यत्वादुदावर्तहरीं क्रियाम्॥ आनाहेषु च कुर्वीत विशेषश्चाभिधीयते ॥ ॥ ४५ ॥ त्रिवृत्कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः ॥ गुडेन तुल्या गुटिका हरत्यानाहमुल्बणम् ॥ ४६ ॥**

उदावर्त और आनाहके कारण तथा कार्य समान ही हैं, इसलिये आनाहमें उदावर्तकी ही चिकित्सा करै। जो विशेष चिकित्सा है सो कहते हैं। दो भाग निसोत, चार भाग पीपल और पॉच भाग हरड, इनको सबकी समान गुडमें मिलाकर गोली बनावै और फिर सेवनकरै तो उग्र आनाह भी दूर होजाताहै ॥४५॥४६॥

## अथ त्रिकटुकादिवर्तिः।

**वर्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ॥ मधुनि गुडे वा पक्वैर्विहिता सांगुष्ठसम्मिता विज्ञैः ॥ ४७ ॥ वर्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृताभ्यक्ता ॥ आनाहमुदरजार्ति शमयति जठरे तथा गुल्मम् ॥ ४८ ॥**

इति उदावर्तानाहनिदानचिकित्साधिकारः।

सोठ, मिर्च, पीपल, सैंधव, सरसों, घरका धुआँ, कूठ और मैनफल, इनका चूर्ण करके सहत अथवा घीमे पकावै, फिर अंगूठेकी बराबर बत्ती बनावै, इसको घीसे चुपडकर धीरे धीरे गुदामे रक्खे, इससे आनाह (अफारा) उदररोग और गुल्मरोग नष्ट होताहै, विद्वान् लोगोने इस बत्तीका फल प्रत्यक्ष देखाहै ॥ ४७ ॥ ४८ ॥

इति उदावर्तानाहाधिकारः सम्पूर्णः।

---

# अथ गुल्माधिकारः।

## तत्र गुल्मसन्निकृष्टविप्रकृष्टकारणपूर्वकलक्षणम्।

**दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः॥ कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥ १ ॥**

**दुष्टाः स्वकारणैः मिथ्याहाराध्यशनादिभिः ॥ मिथ्याविहारो बलवद्विग्रहादिः। पञ्चधेति वातपित्तकफसन्निपातरक्तजा एवं पञ्च। द्वन्द्वजास्तु प्रकृतिसमवेतत्वात् पृथक् न गण्यन्ते अर्शोवत्। कोष्ठान्तः हृदयाद्बस्तिपर्यन्तं कोष्ठस्तस्य मध्ये कुत्रापि ग्रन्थिरूपिणम् गुटिकाकारम् ॥**

भोजनके ऊपर भोजन करना आदि मिथ्या आहारसे और बलवान् मनुष्यके साथ लडना आदि मिथ्या विहारोंसे अत्यत दूषित हुए वात, पित्त, कफ और रुधिर, यह कोठेमें अर्थात् हृदयसे लेकर मूत्राशयतकके भागमें गोलीकी सदृश गुल्मको उत्पन्न करेहैं। वायुसे, पित्तसे, कफसे, तीनो दोषोंसे और रुधिरसे उत्पन्न हुआ, इस भाँति गुल्म पॉच प्रकारका होताहै। यद्यपि जो गुल्म दो दोषोसे होतेहैं उनको गिनो तो पाचसे अधिक संख्या होतीहै तथापि सन्निकृष्ट निदानरूप वातपित्तादिकसेही संयुक्त होतेहैं इसलिये अर्शोंकी सदृश उनको भी पृथक् नहीं गिना-है ॥ १ ॥

## अथ गुल्मभेदाः।

**स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितः ॥ पुरुषाणां तथा स्त्रीणां रक्तजं चोपजायते ॥ २ ॥**

यह गुल्म पुरुषोंके तथा स्त्रियोंके कुपित हुए वात, पित्त, कफ, त्रिदोष और रुधिरसे भी होताहै ॥ २ ॥

## अथार्तवोत्पन्नगुल्मः ।

आर्तवादपि गुल्मः स्यात्स तु स्त्रीणां प्रजायते ॥ अन्यस्त्वसृग्भवः पुंसां तथा स्त्रीणां प्रजायते ॥ ३ ॥

आर्तव ( रज ) से भी गुल्म होताहै परन्तु यह गुल्म स्त्रियोंके ही होताहै, रुधिरसे होनेवाले जो अन्य गुल्म हैं वे पुरुषोंके भी होतेहैं और स्त्रियोंके भी होतेहैं ॥ ३ ॥

## अथ गुल्मस्थानानि ।

तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिवस्तयः ॥ ४ ॥

गुल्म-दोनों पसलियोंमें, हृदय, नाभि और मूत्राशयमें होताहै, इस भाँति गुल्मके पाँच स्थान हैं ॥ ४ ॥

## अथ गुल्मसामान्यलक्षणम् ।

हृद्वस्त्योरन्तरे ग्रन्थिः सञ्चारी यदि वा चलः ॥ वृत्तश्चयोपचयवान्स गुल्म इति कीर्तितः ॥ ५ ॥

नाभिशब्देन वस्तिर्बोध्यः सामीप्यादेव यथा गङ्गायां घोष इति वस्तेरपि गुल्माश्रयत्वेन उक्तत्वादन्ये हृद्वस्त्योरेव पाठान्तरं पठन्ति अन्ये तु वस्तौ विद्रधिः स्यात् न गुल्म इति तन्न वस्तेरपि गुल्मस्थानत्वात् । तथा च चरके-"पञ्चस्थानानि गुल्मस्य पार्श्वहृन्नाभिवस्तयः ।" इति । सञ्चारी चलनशीलः । अचलः स्थिरः वृत्तो वर्तुलः । चयोपचयवानिति कदाचिच्चीयते वृद्धिं गच्छति कदाचिदपचीयते हीनो भवति । एतल्लक्षणं सामान्योक्तमपि वातिके व्यवतिष्ठते इति जैज्जटः । गणदासस्तु सामान्यमेवाह, सर्वगुल्मानां वातमूलत्वात् ॥

हृदय तथा नाभिके मध्यमें होनेवाला अथवा विचरनेवाला किसी समय बढनेवाला और किसी समय अल्प होनेवाला जो गोला होताहै उसको गुल्म कहतेहैं । यहां नाभि कहनेसे मूत्राशय जानना, जैसे 'गगामें घोष है' इस वाक्यमें "गगा" शब्दसे समीप होनेके कारण गगाका किनारा समझना, तैसेही इस वाक्यमें भी मूत्राशय नाभिके समीप होनेके कारण 'नाभिसे' मूत्राशयही जानना । कितनेक वैद्य तो उपरोक्त वाक्यको 'हृदय तथा मूत्राशयके मध्यमें फेरकर' ऐसा पढतेहैं और कितने कहतेहैं कि 'मूत्राशयमें विद्रधि होताहै गुल्म नहीं होता' परन्तु यह बात भूलकी है, क्यों कि गुल्मके हृदय, नाभि, पसलियें तथा मूत्राशय ये पाच स्थान हैं, ऐसा चरकमें कहा है उपरोक्त लक्षण यद्यपि सामान्य रीतिसे कहेहैं तथापि ये लक्षण वातज गुल्मसेही मिलते हैं, ऐसा जैजट नामक वैद्यने कहा है । गणदास नामक वैद्य कहताहै कि 'यह लक्षण सब गुल्मोंके लिये साधारण है क्यो कि सब गुल्मोंकी जड वायु है' ॥ ५ ॥

## अथ गुल्मपूर्वरूपम् ।

उद्गारबाहुल्यपुरीषबन्धस्तृप्त्यक्षमत्वान्त्रविकूजनानि ॥ आटोपमाध्मानमपक्तिशूलमासन्नगुल्मस्य वदन्ति चिह्नम् ॥ ६ ॥ अरुचिं कृच्छ्रविण्मूत्रवातत्वं चान्त्रकूजनम् ॥ आनाहं चोर्द्ध्ववातश्च सर्वगुल्मेषु लक्षयेत् ॥ ७ ॥

डकारोंका बहुत आना, मलबन्ध, तृप्तिका होना, सामर्थ्यका नाश, आंतोंका बोलना, पेटमें गुडगुड शब्द होय, अफारा हो और अन्न न पचनेके कारण पीडा हो, यह लक्षण होंय तो जानना कि गुल्मरोग हुआ है । विष्ठा, मूत्र तथा अधोवायुका कष्टसे उतरना, अरुचि, आंतोंमें शब्द होना, अफारा और वायु ऊर्ध्वगत हो यह लक्षण सब गुल्मोंमे होतेहैं ॥ ६ ॥ ७ ॥

## अथ वातगुल्मनिदानम् ।

रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ॥ शोकाभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥ ८ ॥

विचेष्टनं विरुद्धा चेष्टा बलवद्विग्रहादिः । शोकाभिघातः शोकेन मनो-

ऽधिष्ठानस्य हृदयस्य अभिघातः। अतिमलक्षयः विरेकादिना। निरन्नता उपवासः॥

रूक्ष विषम और अत्यंत, ऐसे अन्नपानको सेवन करनेसे, मलमूत्रादिके वेगोंको रोकनेसे, बलवान पुरुषके साथ लडना आदि विरुद्ध चेष्टा, हृदय( कि जो मनके रहनेका स्थान है )में शोक और अभिघात ( चोट ) लगनेसे विरेचन आदिसे मलका अत्यंत क्षय और उपवास इन कारणोंसे वायुसबंधी गुल्म होताहै॥ ८॥

### अथ वातगुल्मलक्षणम्।

न्यः स्थानसंस्थानरुजा विकल्पं विड्वातसङ्गं गलवक्त्रशोषम्॥ श्यावारुणत्वं शिशिरज्वरश्च हृत्कुक्षिपार्श्वाङ्गशिरोरुजश्च॥ ९॥ करोति जीर्णेऽत्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च॥ वातात्स गुल्मो नच तत्र रूक्षं कषायतिक्तं कटु चोपशेते॥ १०॥

श्यावारुणत्वं शरीरस्य। शिशिरज्वरं शीतज्वरम्। जीर्णे आहारे प्रकुप्यति भुक्ते च शान्तिं गच्छति, स वातिको गुल्मः। रूक्षः आहारः। कषायतिक्तकटुरसाः। तत्र तस्मिन्वातगुल्मे नोपशेते न सुखयति॥

स्थान स्थानमें पीडा होतीहै,मल तथा अधोवायु रुकती हो, गला तथा मुख सूख जाता हो, शरीर नीला और लाल हो जाय, शीतज्वर हो, हृदय, कोख, पसली, कधा और शिर इनमें पीडा हो, अन्नके पचनेके समय गोला अधिक होजाय और भोजन करने पर गोला मृदु ( नरम ) हो जाय, ये लक्षण होंय तो वायुसे उत्पन्न हुआ गुल्म जानना, इसमें रूक्ष, कसैले, कडवे और चरपरे पदार्थ अहितकारी हैं॥ ९॥ १०॥

### अथ पित्तगुल्मनिदानम्।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधाऽतिमद्यार्कहुताशसेवा॥ आमोऽभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम्॥ ११॥

विदाहि वंशकरीरादि। अतिशब्दो मद्यादिषु योज्यः। आमोऽत्र विदग्धाजीर्णबोधकः। अभिघातो लगुडादिना॥

चरपरे, खट्टे, तीक्ष्ण, उष्ण, विदाही तथा रूक्ष पदार्थोके सेवन करनेसे क्रोध, मद्यपान तथा धूपके अत्यंत सेवनसे, अग्निके समीप रहनेसे, विदग्ध अजीर्ण, लकडी आदिके अभिघात ( चोट ) और बिगडे हुए रुधिरसे पित्त संबंधी गुल्म उत्पन्न होताहै॥ ११॥

### अथ पित्तगुल्मलक्षणम्।

ज्वरः पिपासा सदनाङ्गरागः शूलं महज्जीर्यति भोजने च॥ स्वेदो विदाहोऽव्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम्॥ १२॥

अङ्गरागः देहस्य लौहित्यम्॥

ज्वर, प्यास, ग्लानि, अगोंका लाल होना,भोजन पचनेके समयमें भारी शूल होना, पसीना आवे, दाह हो और गुल्म व्रणकी सदृश स्पर्श न सह सके, यह लक्षण होयँ तो पित्तसे उत्पन्न हुआ गुल्म जानना॥ १२॥

### अथ कफजत्रिदोषजगुल्मकारणम्।

शीतं गुरुस्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च॥ गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दिष्टो निचयात्मकस्य॥ १३॥

सम्पूरणम् उदरपूरणम्। निचयात्मकस्य सान्निपातिकस्य। सर्वो हेतुः वातपित्तकफानां हेतुः॥

शीतल, भारी तथा स्निग्ध अन्नपान, व्यायामका त्याग और दिनमें सोना, इनसे कफसबंधी गुल्म उत्पन्न होताहै वात, पित्त तथा कफके जो निदान है वें सब मिलनेसे तीनो दोषसबधी गुल्म होताहै॥ १३॥

### अथ कफजगुल्मलक्षणम्।

स्तैमित्यशीतज्वरगात्रसादहृल्लासकासा-

रुचिगौरवाणि ॥ कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफकोपजाते ॥ १४ ॥

कफस्य लिङ्गानि वेदनाल्पता वह्निमान्द्यादीनि ॥

शरीरमें गीलापन, शीतज्वर, ग्लानि, हृल्लास ( उबकाई ), खाँसी, अरुचि, शरीरमें भारीपन और थोडी २ पीडाका होना, तथा अग्निकी मंदता, यह लक्षण होयँ तो कफसे हुआ गुल्म जानना ॥ १४ ॥

## अथ द्विदोषजगुल्मकल्पना ।

व्यामिश्रलिंगानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥ १५ ॥
सान्निपातिके सर्वो हेतुः उपलक्षणम् ॥

जो दो दोषोंके मिश्रित लक्षण दीखते होयँ तो औषधिकी कल्पनाके लिये वातसे तथा पित्तसे हुए, वायु तथा कफसे हुए, और पित्त तथा कफसे हुए इस प्रकार ओर भी तीन गुल्मोंकी कल्पना करलेवें ॥ १५ ॥

## अथ त्रिदोषजगुल्मलक्षणम् ।

महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् ॥ मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥ १६ ॥

जो तीनों दोषोंसे गुल्म हुआ हो तो अत्यंत पीडा तथा दाह होताहै, गोला पत्थरकी सदृश घन तथा ऊपरको उठा हुआ, तत्काल विदग्धाजीर्णको उत्पन्न करनेवाला, मनको भ्रमित करता शरीरको दुर्बल तथा जठराग्निके बलको हरनेवाला और मृत्युको करनेवाला गुल्म होताहै इसको असाध्य समझना ॥ १६ ॥

## अथार्तवरुधिरोत्पन्नगुल्मलक्षणम् ।

नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा ॥ वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥ १७ ॥ पैत्तस्य लिंगेन समानलिंगं विशेषणश्चाप्यपरं निबोध ॥ यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्सशूलः समगर्भलिङ्गः ॥ स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥ १८ ॥

नवप्रसूता प्रकृताग्निबलवर्णमांसहीना अहितभोजना या च आमगर्भं विसृजेत् नवममासादर्वाक् प्रसूयते सापि अहितभोजना ऋतौ वा आर्तवप्रवृत्तिकाले अहितभोजना अपथ्याचरणाद्वा वायुः रक्तं परिगृह्य गुठिकाकारं गर्भाशये गुल्मं करोति भोजनपदं विहारस्यापि उपलक्षणम् । यतश्चाह चरकः—"ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च । संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रिया रक्तभवोऽभ्युपैति।" धातुरूपरक्तजस्यापि विप्रकृष्टनिदानानि लक्षणानि च पैत्तिकस्येव बोद्धव्यानि । परमत्र अभिघातादिहेतुर्विशेषः । चिरात् स्पन्दते चलति नाङ्गैः न हस्तपादाद्यैः । समगर्भलिङ्गः अत्र समशब्दः सर्वशब्दार्थः तेन समानि सर्वाणि गर्भलिंगानि आर्तवप्रवृत्तिकाले आर्तवादर्शनमुखपीततास्तनमुखकृष्णतादोहदादीनि यत्र सः । एते च व्याधिप्रभावात् । यथा यक्ष्मिणे रिरंसा । स रौधिर आर्तवरूपरक्तजः स्त्रीणां प्रजायते इति गर्भसमानलिंगत्वे विशेषज्ञानार्थमाह—'मासे व्यतीते दशमे चिकित्स्यः' । नवमदशममासयोः प्रसवकालत्वादित्येके, तन्न, यः स्पन्दते पिण्डित एव नाङ्गैरित्यादिनैव संशयस्य निराकृतत्वात् । गर्भः प्रत्यंगैः निरन्तरं निःशूलं स्पन्दते गुल्मश्चैतद्विपरीत इति । किञ्च नवमे दशमे प्रसूयत इति उत्सर्गो न तु नियमः ।

तदधिककालेऽपि प्रसवदर्शनादागमाच्च । यत आह चरकः-"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टं यदा वर्षगणैरपि स्यात् ।" तस्मान्मासे व्यतीते दशमे चिकित्स्य इति न संशयव्यवच्छेदार्थं किन्तु तदा सुखेन चिकित्सार्थं यत उक्तम्-"रक्तगुल्मपुराणत्वं सुखसाध्यस्य लक्षणम् ।" पुराणता चास्य दशमासातिक्रमेणैव भवति । जैज्जटेनापि उक्तम् । दशमासोपरि पिण्डिते गुल्मे स्नेहादिना उपस्कृतदेहाय न गर्भाशयक्षतिमादधाति रक्तभेदनमिति ॥

जो नवप्रसूता स्त्री अहित आहार विहार करै, अथवा जो स्त्री अपने गर्भको गिराकर अहित आहार विहार करै अथवा जो स्त्री रजस्वला होनेपर अहित आहार विहार करै, उस स्त्रीके रुधिरको वायु ग्रहण करके गर्भाशयमे गोलेकी सदृश गुल्मको उत्पन्न करेहै, इस गुल्ममें पीडा, दाह और पित्तजगुल्मके लक्षण होते हैं । चरकमे भी कहा है कि "रजोधर्मके समय-उपवास करनेसे, भयसे, रूक्ष पदार्थोंका उपयोग करनेसे, मूत्र आदिके वेगोंको रोकनेसे, स्तम्भन करनेसे, उल्लेखन आदि योनिसंबंधी दोषोंसे स्त्रीके रुधिरजन्य गुल्म उत्पन्न होताहै" धातुरूप रुधिरसे उत्पन्न हुए गुल्मके विप्रकृष्ट निदान तथा 'लक्षण पित्तसे उत्पन्न हुए गुल्मकी सदृशही जानने, परन्तु अभिघात ( चोट ) आदि निदान विशेष करके होतेहैं, रजोरूप गुल्ममें और भी विशेष कहतेहैं कि-रज गिरते समयमें रजका नहीं दीखना, मुखका पीलापन, स्तनोंके आग्रभाग काले होना, तथा खानेपीने आदिके भाव-अभाव इत्यादि जो जो गर्भके चिह्न हैं वे सब चिह्न व्याधिके प्रभावसे जिस गुल्मके देखनेमें आवैं ( जिसप्रकार क्षय रोगवालेको स्त्रीके साथ रमण करनेकी इच्छा व्याधिके प्रभावसे होतीहै तिसीप्रकार रजसम्बन्धी रुधिरके गुल्मवाली स्त्रीके चिह्न व्याधिके प्रभावसे होतेहैं ) तथा जिसमें हाथ पाँव आदि अगोंका नहीं चलना अधिक तर केवल पिडाकारकाही चलना ज्ञात हो और जिसमें शूल हो उस गुल्मको रजरूप रुधिरसे उत्पन्न हुआ जानना । यह गुल्म स्त्रियोंके ही होताहै । गर्भ तो हाथ पाँव आदि शाखाओंसे निरन्तर और शूल विनाही चलताहै (फडकता ) है और यह गुल्म तो अधिकवार पिडाकारही चलताहै और शूलयुक्त होताहै। इस गुल्मकी चिकित्सा दशमे महीनेके व्यतीत होनेपर करै। कोई कहतेहैं कि-"गर्भ होनेका सन्देह न रहै इसकारण दशमे मासके व्यतीत हो जानेपर चिकित्सा करना कहाहै क्यों कि नवमा और दशमा महीना प्रसव होनेका काल है" परन्तु ऐसा कहना अयोग्य है, क्योंकि-'गर्भ तो हाथ पॉव आदि अंगोंसे निरंतर और शूल विनाही चलताहै' इत्यादि कथनके द्वारा गर्भके संशयको दूर किया है, तब 'नवमे अथवा दशमें महीने प्रसव होय' यह भी एक सामान्य बात है, कुछ नियमरूप नहीं है, क्योंकि दशमें महीनेसे अधिक काल वीतनेपर भी प्रसव होते दीखतेहैं, और ग्रन्थोंमें भी दशमें मासके वीतनेपर प्रसव होना लिखा है। चरकमे कहा है कि-"स्त्री गर्भ रहनेके पश्चात् अत्यन्त अधिक काल अर्थात् बहुत वर्ष व्यतीत होनेपर भी गर्भको जनतीहै और इस प्रकार उत्पन्न हुआ बालक अति पुष्ट होताहै" इसलिये दशमें महीने चिकित्सा करना जो कहा है वह गर्भका संशय दूर करनेके लिये नहीं कहा है बरन् दशमें महीने सुगमतासे चिकित्सा हो सक्ती है इससे कहा है, ऐसा जानना चाहिये । कहीं है कि-"रुधिरसंबंधी गुल्म यदि जीर्ण ( पुराना ) होय तो उसको सुखसाध्य समझना" फिर दशमा महीना व्यतीत होनेपर रुधिरसबंधी गुल्म जीर्ण हुआ मानने योग्य होताहै । जैज्जट आचार्य भी कहताहै कि-"दशमा महीना व्यतीत होनेके पश्चात् गुल्मकी स्थिति होतीहै तब तेल आदिसे स्त्रीके शरीरको संस्कार देकर रुधिरका भेदन करे तो इससे गर्भाशयको हानि नहीं होतीहै" ॥ १७ ॥ १८ ॥

### अथाऽसाध्यगुल्मलक्षणम् ।

महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् ॥ मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥ १९ ॥

दाहपरीतं दाहेन व्याप्तसकलदेहम् । शीघ्रविदाहि शीघ्रं विदग्धाजीर्णकरम् ।

दारुणम् मारकम् । मनोऽपहारिणम् मनोवैकृत्यकारकम् । शरीराग्निबलापहारिणम् शरीरस्य कार्श्यकरम् । अपरम् असाध्यलक्षणमाह-

सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ॥ कृतशूलः शिरानद्धो यदा कूर्म इवोन्नतः ॥ २० ॥ दौर्बल्यारुचिहृल्लासकासच्छर्द्यरतिज्वरैः ॥ तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥ २१ ॥

महावास्तुपरिग्रहः व्यापकतया बृहत्स्थलं गृह्णाति । युज्यते युक्तो भवति । अपरञ्च-

गृहीत्वा सज्वरं श्वासं छर्द्यतीसारपीडितम् ॥ हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥ २२ ॥

कर्षति मारणाय कर्षति । अपरञ्च-

श्वासः शूलं पिपासान्नविद्वेषौ ग्रन्थिमूढता ॥ जायते दुर्बलत्वञ्च गुल्मिनो मरणाय वै ॥ २३ ॥

ग्रन्थिमूढता ग्रन्थिरूपस्य गुल्मस्य अकस्माद्विलयनम् ॥

जो गुल्म-अत्यन्त पीडा तथा दाहयुक्त हो, पत्थरकी सदृश घन तथा ऊपरको उठा हुआ हो, तत्काल विदग्धाजीर्णको उत्पन्न करनेवाला हो, मनको भ्रमित करता, शरीरको दुर्बल तथा जठराग्निके बलको हरनेवाला हो और त्रिदोषज गुल्म, यह असाध्य जानना ॥ १९ ॥

जो गुल्म-क्रम क्रम करके अत्यन्त बढगया हो और बहुत स्थान घेर लिया हो, शूलको करनेवाला हो, शिराओंसे बन्धकर कछुएकी भाँति ऊँचा होगया हो और दुर्बलता, अरुचि, हृल्लास, खाँसी, वमन, अत्यत ज्वर, तृषा, तन्द्रा तथा प्रतिश्याय, इनसे युक्त हो इस गुल्म रोगीको असाध्य जानना ॥ २० ॥ २१ ॥

जो गुल्मरोगी ज्वर, श्वास, वमन और अतीसार इनसे पीडित हो तथा हृदय, नाभि, हाथ तथा पाँवमें सूजन हो तब गुल्मरोगीकी मृत्यु होजाती है ॥ २२ ॥

श्वास, शूल, तृषा, अन्नमें अरुचि, गुल्मका अकस्मात् गुप्त होजाना और दुर्बलता, इन लक्षणों युक्त गुल्मरोगी मृत्युगत हुआ जानना ॥ २३ ॥

## अथ गुल्मचिकित्सा ।

वातारितैलेन पयोयुतेन पथ्यासमेतेन विरेचनं हि ॥ संस्वेदनं स्निग्धमतिप्रशस्तं प्रभञ्जनक्रोधकृते च गुल्मे ॥ २४ ॥ स्वर्जिकाकुष्ठसहितः क्षारः केतकसम्भवः । पीतस्तैलेन शमयेद् गुल्मं पवनसम्भवम् ॥ २५ ॥ तित्तिरांश्च मयूरांश्च कुक्कुटान्क्रौञ्चवर्तकान् ॥ सर्पिः शालीन्प्रसन्नाञ्च वातगुल्मे प्रयोजयेत् ॥ २६ ॥ पित्तगुल्मे त्रिवृच्चूर्णं पातव्यं त्रिफलाम्बुना ॥ विरेकाय सितायुक्तं कम्पिल्लं वा समाक्षिकम् ॥ २७ ॥

त्रिफलाम्बुना त्रिफलाक्काथेन । कम्पिल्लकं कबीला इति लोके ॥

अभयां द्राक्षया खादेत्पित्तगुल्मी गुडेन वा ॥ योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ॥ २८ ॥ अपरैश्च बलासघ्नैर्युक्तियुक्तैः शमं नयेत् ॥ २९ ॥

वायुके कोपसे गुल्म हुआ होय तो दूध और हर्रो सहित अंडीका तेलका विरेचन ( जुलाब ) देवै, तथा स्निग्ध पदार्थोंसे स्वेदन करे, यह हितकारक है । अथवा सज्जी, कूठ और केतकीका खार, इनको मिलाकर तेलमें डालकर पिये तो इससे वायुसम्बन्धी गुल्म शांत होजाता है । अथवा वायुसे उत्पन्न हुए गुल्ममें तीतर, मोर, मुरगा, क्रौंच तथा बटेरका मांस, घी, शालिचावल और प्रसन्ना नामक मदिरा इनका सेवन करावै, पित्तके कोपसे गुल्म हुआ होय तो विरेचनके लिये हरड, बहेडा तथा आमलेके काथके साथ निसोतका चूर्ण खाय अथवा सहतके साथ कबीलेका उपयोग करे । अथवा

पित्तगुल्मवाला मनुष्य दाखके साथ अथवा गुडके साथ हरड खाय तो पित्तज गुल्म नष्ट होताहै।

कफसे गुल्म हुआ होय तो–वायुसे हुए गुल्ममें जो प्रयोग कहे हैं वे प्रयोग करै और कफको नष्ट करनेवाले जो प्रयोग हैं उन प्रयोगोंसे भी कफगुल्मको शांत करै॥ २४–२९॥

## अथ हिंग्वादिचूर्णम्।

**हिंगुग्रन्थिकधान्यजीरकवचाचव्याग्निपाठाशटीवृक्षाम्लं लवणत्रयं त्रिकटुक क्षारद्वयं दाडिमम्॥ पथ्यापौष्करवेतसाम्लहपुषाजाज्यस्तदोभिः कृतं चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरद्रवैः॥ ३०॥ गुल्माध्मानगुदांकुरान्ग्रहणिकोदावर्तसंज्ञं गदं प्रत्याध्मानगरोदराश्मरियुतांस्तूनीद्वयारोचकान्॥ ऊरुस्तम्भमतिभ्रमं च मनसो बाधिर्यमष्ठीलिकां प्रत्यष्ठीलिकया सहापहरते प्राक्पीतमुष्णाम्बुना॥ ३१॥ हृत्कक्षिवंक्षणकटीजठरान्तरेषु वस्तिस्तनांसफलकेषु च पार्श्वयोश्च॥ शूलानि नाशयति वातबलासजानि हिंग्वाद्यमाद्यमिदमाश्विनसंहितोक्तम्॥ ३२॥**

हींग, पीपलामूल, धनिया, जीरा, बच, चव्य, चीता, पाढ, कचूर, तितडीक, तीनों जातिके नमक, सोंठ, मिरच, पिपल, जवाखार, सज्जीखार, दाडिम, हरड, पोहकरमूल, अमलवेत, हाऊबेर और जीरा, इनका चूर्ण करके अदरकके रसकी तथा विजौरे नीबूकी भावना देकर उष्णजलके साथ खाय तो इससे गुल्म, अफारा, बवासीर, ग्रहणी, उदावर्त्त, प्रत्याध्मान, विष, उदरके रोग, पथरी, दोनों प्रकारकी तूनी, अरुचि, ऊरुस्तभ, मनका अत्यत भ्रम, बहरापन, अष्ठीलिका और प्रत्यष्ठीलिंका, ये रोग तुरंत नष्ट होतेहै। अश्विनीकुमारकी संहितामे कहा हुआ यह हिंग्वाद्यनामक चूर्ण हृदयमें कोख, वंक्षण, कमर, पेट, वस्ती, स्तन, खभा और पसलिये, इनमें वायुसे हुए तथा कफसे हुए शूलको नष्ट करै है॥ ३०–३२॥

## अथ क्षाराष्टकादियोगः।

**धीमानुपचरेद्गुल्मं प्रत्येकश्च त्रिदोषजम्॥ सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः॥ ३३॥ शरपुंखस्य लवणं पथ्याचूर्णं समं द्वयम्॥ शाणप्रमाणमश्नीयाच्चूर्णं गुल्मगदापहम्॥ ३४॥ स्वर्जिका शाणमाना स्यात्तावदेव गुडं भवेत्॥ उभयोर्वटिकां खादेद्गुल्मामयविनाशिनीम्॥ ३५॥ पलाशवज्रिशिखरीचिञ्चार्कतिलनालजाः॥ यवजः स्वर्जिका चेति क्षारा ह्यष्टौ प्रकीर्तिताः॥ एते गुल्महराः क्षारा अजीर्णस्य च पाचकाः॥ ३६॥**

बुद्धिमान् वैद्य वायुसे हुए गुल्ममें वातनाशक उपचार करै, पित्तसे हुए गुल्ममें पित्त नाशक उपचार करै और कफसे हुए गुल्ममें कफनाशक उपचार करै। यदि तीनों दोषोंसे गुल्म हुआ हो तो उसमे त्रिदोषनाशक उपचार करै। सरफोंकेका खार और हरडोंका चूर्ण, इनको समान भाग लेकर चार मासे खाय, तो इससे गुल्म नष्ट होता-है। अथवा चार मासे सज्जी और चार मासे गुड, इनकी गोली बनाकर खाय तो गुल्मका नाश होताहै। अथवा पलाश (ढाक), थूहर, ओंगा, इमली, आक, तिल, जौ और सज्जी, ये आठ क्षार कहातेहैं। ये गुल्मको नष्ट करतेहैं और अजीर्णका पाचन करतेहैं॥ ३३–३६॥

## अथ वज्रक्षारः।

**सामुद्रं सैन्धवं काचं यवक्षारः सुवर्चलम्॥ टंकणं स्वर्जिका क्षारतुल्यं चूर्णं प्रकल्पयेत्॥ ३७॥ वज्रीक्षीरे रविक्षीरैरातपे भावयेत्र्यहम्॥ वेष्टयेदर्कपत्रेण रुद्ध्वा भाण्डे पुनः पचेत्॥ ३८॥ तत्क्षारं चूर्णयेत्पश्चात्त्र्यूषणं त्रिफला तथा॥ यवानी जीरको वह्निचूर्णमेषाञ्च कारयेत्॥ ३९॥ सर्वचूर्णसमं क्षारं सर्वमेकत्र कारयेत्॥ तच्चूर्णं टंकयुगलं सलिलेन प्रयोजयेत्॥ ४०॥ गुल्म-**

शूले तथाजीर्णे शोथे सर्वोदरेषु च ॥ मन्दे वह्नावुदावर्ते प्लीह्नि चापि परं हितम् ॥ ४१ ॥ वातेऽधिके जलैः कोष्णैर्हितं पित्तेऽधिके घृतैः ॥ गोमूत्रेण कफाधिक्ये कांजिकेन त्रिदोषजे ॥ ४२॥ वज्रक्षार इति ख्यातः प्रोक्तः पूर्वं स्वयम्भुवा ॥ सेवितो हरतेऽजीर्णं तथाऽजीर्णभवान्गदान् ॥ ४३ ॥ सुवर्चिका टंकमिता तत्समानार्दिकापि च ॥ उभे भुञ्जीत युगपद्गुल्माभयनिवृत्तये ॥ ४४ ॥

सुवर्चिका सोरा इति लोके ॥

गुल्मी कुमारिकामांसं कर्षार्द्धं गोघृतान्वितम् ॥ शुक्तिचूर्णस्य गुटिकां टंकमात्रां सुवेष्टयेत् ॥ ४५ ॥

कुमारिका घिवकुमारी इति लोके ॥

गुडेन शाणमानेन तां लिहेद्गुल्मरोगवान् ॥ गिलेद्व्योषाभयासिन्धुसूक्ष्मचूर्णावधूलिताम् ॥ ४६ ॥

सामुद्रनोंन, सैंधानोंन, कांचियानोंन, जवाखार, सोरा, सुहागा और सज्जी इनको समान भाग लेकर उस चूर्णको थूहरके दूधकी अथवा आकके दूधकी तीन दिनतक धूपमें भावना देवे पश्चात् उसका गोला बनाकर आकके पत्तोंमें लपेट हांडीमें रक्खे और हांडीका मुख बन्द करके उस गोलेको अग्निमें पकावे और पश्चात् उस क्षारका चूर्ण करै। तदनन्तर सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, अजवायन, जीरा और चीता इनका चूर्ण करै, इस क्षारके चूर्णको और सोंठ आदिके चूर्णको समानभाग लेकर एकत्र करै, पश्चात् उसमेंसे आठ मासे चूर्ण पानीमें घोलकर पीवे तो इससे गुल्मशूल, अजीर्ण, सूजन, सब प्रकारके उदररोग, अग्निकी मन्दता, उदावर्त और प्लीहा, ये भली भाँति नष्ट होतेहैं, जो वायु अधिक होय तो किंचित् उष्ण जलसे, पित्त अधिक होय तो घीसे, कफ अधिक होय तो गोमूत्रसे और तीनों दोषोंके कोपसे हुआ होय तो कांजीसे इस चूर्णका उपयोग करै। पूर्व कालमें ब्रह्माके कहे हुए इस [illegible] नामक प्रयोग सेवन करनेसे अजीर्ण तथा अजीर्णसे [illegible] रोग नष्ट होतेहैं ॥ ३७-४३ ॥

चारमासे सोरा और चारमासे अदरख, इनको एकत्र करके खाय तो गुल्मका नाश होताहै। अथवा गुल्मवाला मनुष्य आधा तोला घीकारका गूदा लेकर उसमें घी मिलावे, पश्चात् उसके ऊपर सोंठ, मिर्च, पीपल, हरड और सेंधा निमक इनका बारीक चूर्ण बुर बुराकर खाय तो इससे गुल्म नष्ट होताहै ॥ ४३-४६ ॥

## अथ गुल्मरोगित्याज्यपदार्थाः ।

वल्लूरं मूलकं मत्स्यं शुष्कशाकानि वैदलम् ॥ न खादेदालुकं गुल्मी मधुराणि फलानि च ॥ ४७ ॥

वैदलानां निषेधेऽपि माषकुलत्थयोः नात्र निषेध इति सुश्रुतटीका ॥

सूखा हुआ मास, मूली, मछली, सूखे हुए शाक, विदल ( दो दालवाले ) अन्न, आलु और मधुर फल, इनको गुल्मरोगी मनुष्य त्यागदेवे । सुश्रुतकी टीकामें लिखा है कि—"जिनकी दो दाल होतीहैं ऐसे विदल अन्न गुल्म रोगीको निषेध है, परन्तु उडद और कुलथीका निषेध नहीं है" ॥ ४७ ॥

## अथ रौधिरगुल्मचिकित्सा ।

स्निग्धस्विन्नशरीरस्य योज्यं स्नेहविरेचनम् ॥ शताह्वा चिरबिल्वत्वग्दारुभार्ङ्गीकणोद्भवः ॥ ४८ ॥ कल्कः पीतो जयेद्गुल्मं तिलक्वाथेन रक्तजम् ॥ तिलक्वाथो गुडव्योषघृतभार्ङ्गीयुतो भवेत् ॥ ४९ ॥ योनिरक्तभवे गुल्मे नष्टपुष्पेषु योषिताम् ॥ पीतो धात्रीरसो युक्तो मरिचैश्चास्रगुल्मनुत् ॥ ५० ॥ सुरोचनिकाचूर्णं शर्करामाक्षिकान्वितम् ॥ विदधीतासु गुल्मिन्या मलसंचंक्रमेण च ॥ ५१ ॥ विशेषमपरश्चामुं शृणु रक्तप्रभेदनम् ॥ पलाशक्षारतोयेन सर्पिः सिद्धं पिबेच्च सा ॥ ५२ ॥ यस्मिन्न च रसक्षीरतोयमाध्यरसादिषु ॥ सक्षारं

त्र्यूषणं सर्पिः प्रपिबेदसृग्गुल्मिनी ॥ ५३॥ फेनोद्गारस्य निष्पत्तिर्मिष्टदुग्धसमाकृतेः॥ स एव तस्य पाकस्य कालो नेतरलक्षणः ॥ ५४ ॥

इति गुल्मनिदानचिकित्साधिकारः।

रक्तगुल्मवाले रोगीके शरीरको स्वेदनका तथा स्नेहनका सस्कार देकर स्नेहयुक्त पदार्थोंका विरेचन देवै और तदनन्तर अन्य चिकित्सा करै । सतावर, करजकी छाल, दारुहलदी, भारगी और पीपल, इनका कल्क करकै तिलके क्वाथके साथ पिये तो इससे रुधिरसम्बन्धी गुल्म नष्ट होताहै। स्त्रियोका रज नष्ट हुआ हो अथवा योनिके रुधिरसे गुल्म हुआ होय तो तिलका क्वाथ करके उसमें गुड, सोंठ, मिरच, पीपल, घी और भारगी ये पदार्थ डालकर पिये । आमलोंके रसमें कालीमिरच डालकर पिये तो इससे रुधिरसम्बन्धी गुल्म नष्ट होताहै। रुधिरसम्बन्धी गुल्मवाली स्त्रीको दोषोंसे स्वच्छ करनेके लिये गोरखमुण्डी और वशलोचन, इनका चूर्ण मिश्री तथा सहतमें मिलाकर खिलावै। स्त्रियोंका रुधिरसम्बन्धीगुल्म जिससे तत्काल नष्ट होजाय ऐसा और प्रयोग कहतेहैं कि–ढाकके खारके पानीमें पकाया हुआ घी पिये, अथवा जवाखार, सोंठ, मिरच और पीपल, इनका चूर्ण घीमें डालकर पियै तो स्त्रीका रुधिरसम्बन्धी गुल्म नष्ट होजाताहै ॥ ४८–५४ ॥

इति श्रीभावप्रकाशे गुल्माधिकारः सपूर्णः।

---

# अथ प्लीहयकृदधिकारः ।

## तत्र शरीरावयवविशेषेण प्लीहास्वरूपम्।

शोणिताज्जायते प्लीहा वामतो हृदयादधः॥ रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः ॥ १ ॥

बाई ओर हृदयसे नीचे रुधिरसे प्लीहा ( तिल्ली ) उत्पन्न होतीहै और रुधिरको वहानेवाली शिराओंका मूल है, ऐसा महर्षियोने कहाहै ॥ १ ॥

## अथ प्लीहरोगनिदानसम्प्राप्तिलक्षणानि।

विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक्कफश्च ॥ प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ तं प्लीहसंज्ञं गदमामनन्ति ॥ २ ॥ वामे स पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ॥मंदज्वराग्निः कफपित्तलिंगैरुपद्रुतः क्षीणबलोऽतिपांडुः ॥ ३ ॥

विदाहि कुलत्थमाषसर्षपशाकादि। अभिष्यन्दि माहिषं दध्यादि कफपित्तलिंगैरुपद्रुत इत्यर्थः । प्रदुष्टमत्यर्थमसृक्कफश्चेति सम्प्राप्तेः असृजः पित्तस्य च समानधर्मत्वात्॥

कुलथी, उडद तथा सरसोंका शाक आदि विदाही पदार्थोंको और भैंसका दही आदि अभिष्यन्दि पदार्थोंको सेवन करनेवाले मनुष्यका अत्यन्त दूषित हुआ रुधिर और कफ, वृद्धिको प्राप्त होकर प्लीहाको वढातेहै, इसको प्लीहारोग कहतेहैं। अत्यन्त दूषित हुए रुधिर और कफसे प्लीहाकी वृद्धि होतीहै ऐसा जो कहा सो इस रोगकी संप्राप्ति जानना, क्यों कि रुधिर और पित्तका धर्म समान है। यह प्लीहा–बांई पसलीमें वढती है, इससे रोगी अत्यन्त दुःखी होताहै, तथा मन्द मन्द ज्वर, अग्निकी मन्दता, कफ तथा पित्तके चिह्न, बलक्षीण और शरीर अत्यन्त पीला होजाताहै ॥ २ ॥ ३ ॥

## अथ रौधिरप्लीहलक्षणम्।

क्लमो भ्रमो विदाहश्च वैवर्ण्यं गात्रगौरवम् ॥ मोहो रक्तोदरत्वञ्च ज्ञेयं रक्तजलक्षणम् ॥ ४ ॥

ग्लानि, भ्रम, दाह, वर्णकी विपरीतता, शरीरमे भारीपन, मोह और रक्तोदरका होना, ये लक्षण रुधिरसे हुई प्लीहाके जानने ॥ ४ ॥

## अथ पित्तजप्लीहलक्षणम्।

सज्वरः सपिपासश्च सदाहो मोहसंयुतः ॥ पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ॥ ५ ॥

यदि प्लीहारोग पित्तसे हुआ होय तो ज्वर, तृषा, दाह, मोह और विशेष करकै शरीरका पीला पडजाना, ये लक्षण होतेहैं ॥ ५ ॥

### अथ कफजप्लीहलक्षणम् ।

प्लीहा मन्दव्यथः स्थूलः कठिनो गौरवान्वितः ॥ अरोचकेन संयुक्तः प्लीहा कफज उच्यते ॥ ६ ॥

जो प्लीहा हीनपीडावाली हो, तथा मोटी, कठोर, भारी और अरुचि युक्त होय तो जानना कि–कफसे हुआ प्लीहा रोग है ॥ ६ ॥

### अथ वातजप्लीहलक्षणम् ।

नित्यमानद्धकोष्ठः स्यान्नित्योदावर्तपीडितः ॥ वेदनाभिः परीतश्च प्लीहा वातिक उच्यते ॥ ७ ॥

जो वायुसे हुआ प्लीहारोग होय तो कोठा जकडा हुआ रहताहै, नित्य उदावर्तकी पीडा और पीडा चारों ओर व्याप्त रहतीहै ॥ ७ ॥

### अथ प्लीहासाध्यलक्षणम् ।

दोषत्रितयरूपाणि प्लीहासाध्ये भवन्त्यपि ॥

जिस प्लीहामें तीनों दोषोंके लक्षण मिलते होयँ, उस प्लीहारोगको असाध्य जानना ॥

### अथ शरीरावयवविशेषे यकृत्स्वरूपम् ।

अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः ॥ तत्तु रंजकपित्तस्य स्थानं शोणितजं मतम् ॥ ८ ॥

दाहिनी पसलीमें हृदयके नीचे यकृत्की स्थिति होती है, वह यकृत् रुधिरसे होताहै और मनोरञ्जक पित्तका स्थान मानाजाताहै ॥ ८ ॥

### अथ यकृद्रोगः ।

प्लीहामयस्य हेत्वादि समस्तं यकृदामये ॥ किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः ॥ ९ ॥

प्लीहारोगके जो जो निदान, संप्राप्ति और लक्षण हैं वे सब यकृत् रोगकेभी निदान, संप्राप्ति और लक्षण जानने, केवल इतनाही अन्तर है कि–प्लीहाकी स्थिति बाईं पसलीमें है और यकृत्की स्थिति दाहिनी पसलीमें है ॥ ९ ॥

### अथ प्लीहरोगचिकित्सा ।

पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः ॥ तथा दुग्धेन पातव्याः पिप्पल्यः प्लीहशान्तये ॥ १० ॥ अर्कपत्रं सलवणं पुटदग्धं सुचूर्णितम् ॥ निहन्ति मस्तुना पीतं प्लीहानमतिदारुणम् ॥ ११ ॥ हिंगु त्रिकटुकं कुष्ठं यवक्षारं च सैन्धवम् ॥ मातुलुंगरसोपेतं प्लीहशूलहरं भवेत् ॥ १२ ॥ पलाशक्षारतोयेन पिप्पली परिभाविता ॥ प्लीहगुल्मार्तिशमनी वह्निमान्द्यहरी मता ॥ १३ ॥ रसेन जम्बीरफलस्य शंखनाभीरजः पीतमवश्यमेव ॥ शाणप्रमाणं शमयेदशेषं प्लीहामयं कूर्मसमानमाशु ॥ ॥ १४ ॥ शरपुंखमूलकल्कस्तक्रेणालोडितः पीतः ॥ प्लीहानं यदि न हरति शैलोऽपि तदा जले प्लवते ॥ १५ ॥ सुपक्वसहकारस्य रसः क्षौद्रसमन्वितः ॥ पीतः प्रशमयत्येव प्लीहानं नेह संशयः ॥ ॥ १६ ॥ सुस्विन्नं शाल्मलीपुष्पं निशापर्युषितं नरः ॥ राजिकाचूर्णसंयुक्तं खादेत्प्लीहोपशान्तये ॥ १७ ॥ यवानिकाचित्रकयावशूकषड्ग्रन्थिदन्तीमगधोद्भवानाम् ॥ चूर्णं हरेत्प्लीहगदं निपीतमुष्णाम्बुना मस्तुरसासवैर्वा ॥ १८ ॥

प्लीहाकी शांतिके लिये समुद्रकी सीपकी भस्म करके दूधके साथ पिये, अथवा पीपलका चूर्ण दूधके साथ पिये । अथवा आकके पत्तेमें नोन रखकर उसको पुटपाकसे जलाकर चूर्ण करलेवै, पश्चात् ये चूर्ण दहीके पानीके साथ पिये, तो इससे अत्यन्त दारुण प्लीहाभी शांत होतीहै । अथवा हींग, सोंठ, मिरच, पीपल, कूट, जवाखार और सैंधानिमक इनका चूर्णकर बिजौरे नींबूके रससे पिये तो इससे प्लीहा और शूलका नाश होताहै अथवा पीपलका चूर्ण पलाशक्षार ( ढाकका खार ) के जलकी भावना देकर खाय तो इससे प्लीहाकी तथा गुल्मकी पीडा शान्त होजाती है और अग्निकी मन्दता भी नष्ट होजातीहै । अथवा शंखकी नाभिकी भस्म

करकै नीबूके रसके साथ चार मासे पिये तो इससे कछु-एकी सदृश ऊंची प्लीहा भी अवश्य भले प्रकार नष्ट हो-जातीहै। वा सरफोकेकी जडका कल्क करकै तक्र (मठे) में मिलाकर पिये तो इससे भी यदि प्लीहा रोग नष्ट न होय तो पत्थरभी जलमे तैरने लगें अर्थात् जिसप्रकार जलमे पत्थरका तैरना असभव है उसी प्रकार इस यत्नसे प्लीहा रोगका न नष्ट होना असंभव है। भलीभाँति पकेहुए आमके रसको सहतके साथ पिये तो इससे प्लीहा रोग अवश्य नष्ट होजाताहै। इसमें किंचित् सशय नहीं है। सेमलके फूलको भलीभांति उसेकर रात्रिमें धरा रहने दे, फिर राईके चूर्णके साथ खाय तो प्लीहा रोगकी शांति होती है। अथवा अजवायन, चीता, जवाखार, पीपलामूल, दन्ती और पीपल इनका चूर्ण करकै उष्ण पानीसे अथवा मद्यसे पियै तो इससे प्लीहा रोग नष्ट होजाताहै॥ १०—१८॥

### अथ यकृद्रोगचिकित्सा।

**प्लीहोद्दिष्टाः क्रियाः सर्वा यकृद्रोगे समाचरेत्॥ कार्यश्च दक्षिणे बाहौ तत्र शोणितमोक्षणम्॥ १९॥ क्षारं विडङ्गकृष्णाभ्यां पूतीकस्याम्बुनि शृतम्॥ पिबेत्प्रातर्यथावह्नि यकृत्प्लीहप्रशान्तये॥२०॥ अत्र पूतीकः करञ्जः॥**

इति प्लीहयकृदाधिकारः।

यकृत् रोगमें प्लीहाके लिये जो क्रिया कही हैं वह सब करै और दाहिनी बाँहकी नस खुलवाकर रुधिर निकलवा देवै। अथवा वायविडग तथा पीपलकी भस्म करकै जठराग्निके बलानुसार प्रातःकाल करंजके रसके साथ पिये तो इससे प्लीहा तथा यकृत् रोग शांत होताहै॥१९॥२०॥

इति प्लीहायकृदधिकारः सम्पूर्णः।

---

## अथ हृद्रोगाधिकारः।

### अथ हृदयरोगनिदानम्।

**अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः॥ संचिन्तनैर्वेगविधारणैश्च हृदामयः पंचविधः प्रदिष्टः॥ १॥**

**प्रसङ्गः सततं सेवा। संचिन्तनम् अतिचिन्ता राजभयादिकमिति यावत्। हृदामयः स पंचविधः। वातिकः पैत्तिकः श्लैष्मिकः सान्निपातिकः क्रिमिजश्चेति॥**

अत्यत उष्ण, भारी, खट्टे, कसैले और कडवे पदार्थ निरंतर सेवन करनेसे, परिश्रमसे, अभिघात (चोट) से भोजनके ऊपर भोजन करनेके अभ्याससे, राजभय आदिके अत्यत चितवनसे और मलमूत्रादिके वेगोंको रोकनेसे वात पित्त कफ तथा त्रिदोष संबंधी और कृमिज इस भाँति पाँच प्रकारका हृदयरोग होताहै॥ १॥

### अथ हृदयरोगसंप्राप्तिलक्षणे।

**दूषयित्वा रसं दोषा विगुणा हृदयङ्गताः॥ हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते॥२॥**

**विगुणाः दुष्टाः। बाधां दोषभेदेन नानाविधां व्यथाम्। भङ्गवत्पीडामिति गणदासः॥**

दूषित हुए वातादि दोष हृदयमे रहकर रसको दूषित कर अनेक प्रकारकी पीडा उत्पन्न करैहैं, उसको हृदय रोग कहतेहैं॥ २॥

### अथ वातजहृदयरोगलक्षणम्।

**आयम्यते मारुतजे हृदयं तुद्यते तथा॥ निर्मथ्यते दीर्यते च स्फोट्यते पाट्यतेऽपि वा॥ ३॥**

**मारुतजे हृद्रोग इति शेषः। आयम्यते व्यथया विस्तार्यत इव। तुद्यते सूचीभिरिव विद्ध्यते। निर्मथ्यते मन्थनेनेव। दीर्यते करपत्रेण द्विधा क्रियत इव। स्फोट्यते अस्त्रेणेव। पाट्यते कुठारेण बहुधा क्रियत इव॥**

वायुसबंधी हृदयरोगमें सम्पूर्ण हृदयमें पीडा व्याप्त हो जातीहै। सुई चुभोनेकीसी, मथनेकी सदृश, चीरनेकी समान, शस्त्रसे फाडने सरीखी और कुल्हाडीसे काटनेकी सदृश अनेक प्रकारकी पीडा होतीहै॥ ३॥

### अथ पित्तजहृदयरोगलक्षणम्।

**तृष्णोष्मदाहचोषाः स्युः पैत्तिके हृदये क्लमः॥ धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च॥ ४॥**

तृष्णा शीतगात्रस्येव शीतवाताभिलाष-हेतुः किंचिदन्तरौष्ण्यम् । दाहः पार्श्वस्थेन वह्निनेव दुःखहेतुर्गात्रस्य सन्तापः । चोषं चूषणेनेव पीडा । हृदये क्लमः हृदयाकुलत्वं ग्लानिर्वादित्यर्थः । धूमायनम् कण्ठाद्धूमनिर्गमः । क्लेदः किंचिद्दुर्गन्धः शठित इव ॥

पित्तसंबंधी हृदयरोगमें तृषा जिससे शीतल पवनकी इच्छा होय ऐसी भीतर किंचित् गरमी रहती है, जैसे अग्नि शरीरके समीपमेंही रहती हो ऐसा शरीरको दुःखदायी संताप होताहै, चूसनेकी सदृश पीडा होतीहै, हृदयको व्याकुल करनेवाली ग्लानि होतीहै, कंठसे धुआँ निकलता-है, मूर्छा होतीहै, सडा हुआ पसीना आताहै और मुख सूख जाताहै ॥ ४ ॥

## अथ कफयुक्तहृदयरोगलक्षणम् ।

गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम् ॥ माधुर्यमपि चास्यस्य बलासावतते हृदि ॥ ५ ॥

बलासावतते हृदि कुपितकफव्याप्ते । गौरवं हृदयस्य । स्तम्भो जडता । मार्दवं जलप्लुतमिव । माधुर्यं मुखे ॥

कफसंबंधी हृदयरोग हुआ होय तो कुपित कफसे व्याप्त हुए हृदयमें भारीपन रहताहै, तथा कफका स्राव, अरुचि, जडता, जठराग्नि मृदुता और मुखमें मीठापन रहताहै॥५॥

## अथ त्रिदोषजहृदयरोगलक्षणम् ।

विद्यात्त्रिदोषमप्येवं सर्वलिंगं हृदामयम् ६॥

तीनों दोषोंके कोपसे जो हृदयरोग हुआ होय तो उसमें तीनों दोषोंके लक्षण होतेहैं ॥ ६ ॥

## अथ कृमिजहृदयरोगनिदानसंप्राप्ती ।

त्रिदोषजेतुहृद्रोगे यो दुरात्मा निषेवते ॥ तिलक्षीरगुडादींश्च ग्रन्थिस्तस्योपजायते ॥ ७ ॥ मर्मैकदेशे संक्लेदं रसश्चाप्युपगच्छति ॥ संक्लेदात्कृमयश्चास्य पतन्त्युपहतात्मनः ॥ ८ ॥

अत्र क्रिमयो जायन्ते अस्मिन्निति क्रिमिजनिरुक्तिः।मर्मैकदेशे हृदयैकदेशे संक्लेदं शठितत्वं रस उपगच्छति । संक्लेदाद्रसस्य शठितत्वादुपहतात्मनः तिलाद्यहिताहारेण ॥

तीनों दोषोंसे हुए हृदय रोगमें जो मूर्ख मनुष्य तिल दूध तथा गुडादिक पदार्थोंका सेवन करताहै उसका रस हृदयके एक भागमें सडजाताहै, उसके सडनेसे इस दूषित हृदयमें कृमि (कीडे) उत्पन्न होजातेहैं । जिस हृदयरोगमें कृमियें उत्पन्न होतेहैं इस लिये इसको कृमिज कहतेहैं ॥ ७ ॥ ८ ॥

## अथ कृमिजहृद्रोगलक्षणम् ।

उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः ॥ अरुचिः श्यावनेत्रत्वं शोषश्च कृमिजे भवेत् ॥ ९ ॥

उत्क्लेदः वमनमिव उपस्थितत्वम् । शोषो यक्ष्मा ॥

जो कृमियोंसे हृदयरोग हुआ होय तो उत्क्लेद (मानों वमन होनेवाली है ), मुखसे पानी गिरना, सुईसे छेदने सरीखी पीडा, शूल, हल्लास, अंधेरेका आना, अरुचि, नेत्रोंका काला होना और क्षयरोग यह लक्षण होतेहैं॥९॥

## अथ हृदयरोगोपद्रवाः ।

क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः॥क्रिमिजे तु क्रिमीणां ये श्लेष्मिकाणां हि ते मताः ॥ १० ॥

क्लमः पिपासास्थानस्य सादः शोषः । शोषो मुखस्य । तेषां हृद्रोगाणाम् । क्रिमि-

जे तु हृद्रोगे श्लैष्मिकाणां क्रिमीणां ये उपद्रवा हृल्लासास्यस्रवणविपाकादयः ते मताः ॥

तृषा लगनेके स्थानमे शोष, मुखका सूखना और भ्रम होता है, और हृदयरोगोके जो उपद्रव हैं, परन्तु यदि कृमिज हृदयरोग होय तो कफसे हुए कृमियोंके हृल्लास और मुखस्राव आदि उपद्रव भी होतेहैं ॥ १० ॥

## अथ हृदयरोगचिकित्सा ।

घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये ॥ हृद्रोगजीर्णज्वर-रक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ ११ ॥ हरीतकीवचारास्नापिप्पलीनागरोद्भवम् ॥ शटीपुष्करमूलोत्थं चूर्णं हृद्रोगनाशनम् ॥ ॥ १२ ॥ पुटदग्धं हरिणशृंगं पिष्टं गव्येन सर्पिषा पिबतः ॥ हृत्पृष्ठशूलमचिरादुपैति शान्तिं सुकष्टमपि ॥ १३ ॥ तैलाज्य-गुडविपक्वं चूर्णं गोधूमपार्थोत्थम् ॥ पिबति पयोभुक्स भवति गतसकलहृदा-मयः पुरुषः ॥ १४ ॥

पार्थः कौह इति लोके ॥

गोधूमककुभचूर्णं पक्वमजाक्षीरगव्यसर्पि-र्भ्याम् ॥ मधुशर्करासमेतं शमयति हृद्रोग-मुद्धतं पुंसाम् ॥ १५ ॥

घीके साथ, दूधके साथ, अथवा गुडके पानीके साथ कोहकी छालका चूर्ण पिये तो इससे हृदयरोग, जीर्णज्वर, तथा रक्तपित्तका नाश होताहै और आयुकी वृद्धि होतीहै। अथवा हरड, वच, रायसन, पीपल, सोंठ, कचूर और पोहकरमूल, इनका चूर्ण करके खाय तो हृदयरोगका नाश होताहै । अथवा हिरनके सींगको संपुटमे रख भस्म करके चूर्ण कर लेवै, पश्चात् गायके घीके साथ पिये तो इससे हृदयका, पीठका शूल महादुःखदायी होय तो भी तत्काल शांत होजाताहै । अथवा गेहूँ तथा कोहके चूर्णको बराबर-के दूधमे अथवा गायके घीमे पकावै, पश्चात् सहत तथा मिश्रीके साथ भक्षण करे तो इससे अत्यत वृद्धिको प्राप्त हुआ हृदयरोग भी शांत होजाताहै ॥ ११-१५ ॥

## अथार्जुनघृतम् ।

पार्थस्य कल्केन रसेन सिद्धं शस्तं घृतं सर्वहृदामयेषु ॥ १६ ॥

कोहकी छालके कल्कसे तथा स्वरससे पकायाहुआ घी सम्पूर्ण हृदयरोगोंमे हितकारी होता है ॥ १६ ॥

## अथ बलाद्यघृतम् ।

घृतं बलानागबलार्जुनानां क्काथेन कल्केन च यष्टिकायाः ॥ सिद्धन्तु हन्याद्धृदयामयं हि सवातरक्तक्षतरक्तपित्तम् ॥ १७ ॥

इति हृद्रोगनिदानचिकित्साधिकारः ।

खिरैंटी, गुलसकरी तथा कोह, इनके क्काथसे और मुलेठीके कल्कसे पकायाहुआ घी हृदयरोग, वातरक्त, क्षत और रक्तपित्तको नष्ट करैहै ॥ १७ ॥

इति हृदयरोगाधिकारः सम्पूर्णः ।

---

# अथ मूत्रकृच्छ्राधिकारः ।

## तत्र मूत्रकृच्छ्रनिदानम् ।

व्यायामतीक्ष्णौषधरूक्षमद्यप्रसंगनृत्यद्रुत-पृष्ठयानात् ॥ आनूपमत्स्याध्यशनादजी-र्णात्स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥ १ ॥

तीक्ष्णौषधं राजिकासूरणादिकयुक्तम् । रूक्षेति मद्यविशेषणम् । प्रसंगः सन्ततं सेवा । नृत्यं नर्तनम् । नित्येति द्वितीयः पाठः । द्रुतपृष्ठयानात् अश्वादिना गमनात् । आनूपं प्रचुरजलदेशसम्भवम् । अष्टौ वाति-कपैत्तिकश्लैष्मिकसान्निपातिकशल्यजपुरीषज शुक्रजाश्मरीजानि ॥

अत्यन्त व्यायाम ( कसरत ) करनेसे राई आदि तीक्ष्ण पदार्थोंकी औषधिका तथा रूक्ष मद्यका अत्यन्त सेवन कर-नेसे, बहुत नाचनेसे, घोडा आदिकी सवारी पै चढकर बहुत दौडानेसे, अधिक जलवाले देशकी मछलियोंको खानेसे, भोजनपर भोजन और अजीर्णसे, मनुष्योंके आठ प्रकारका मूत्रकृच्छ्र होता है । वातसे, पित्तसे, कफसे, तीनों दोषोंसे, शल्यसे, विष्ठासे, वीर्यसे और पथरीसे हुआ, इस प्रकार मूत्रकृच्छ्रके आठ भेद जानने ॥ १ ॥

### अथ मूत्रकृच्छ्रसम्प्राप्ति-सामान्यलक्षणे।

पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथ वा कोपमुपेत्य वस्तौ ॥ मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥ २ ॥

अपने अपने कारणोंसे कुपित हुआ एक एक दोष अथवा इसी प्रकार कुपितहुए सम्पूर्ण दोष मूत्राशयमें कुपित होकर जब मूत्रके मार्गको पीडित करते हैं तब मनुष्य बहुत कष्टसे मूत्र करसक्ताहै ॥ २ ॥

### अथ वातजमूत्रकृच्छ्रलक्षणम्।

तीव्रा च रुग्वंक्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात् ॥ ३ ॥

तीव्रा मारणात्मिका। वंक्षणः ऊरुमेढ्रागामभ्यन्तरालसन्धिः॥

जो वायुसे मूत्रकृच्छ्र हुआ होय तो वक्षण तथा मूत्राशयमें और लिंगमें अत्यन्त तीव्र पीडा होतीहै और बारबार अल्प २ मूत्र आता है ॥ ३ ॥

### अथ पित्तजमूत्रकृच्छ्रलक्षणम्।

पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥ ४ ॥

कृच्छ्रमिति क्रियाविशेषणम् ॥

जो पित्तसे मूत्रकृच्छ्र हुआ होय तो बारबार, पीला रुधिरयुक्त, वेदनासहित और दाहयुक्त थोडा २ मूत्र उतरता है ॥ ४ ॥

### अथ कफजमूत्रकृच्छ्रलक्षणम्।

वस्तेः सलिंगस्य गुरुत्वशोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ॥ ५ ॥

सपिच्छं पिच्छिलम्।

जो कफसे मूत्रकृच्छ्र हुआ होय तो मूत्राशय और लिंगमें भारीपन तथा सूजन होतीहै और चिकनासा मूत्र उतरताहै ॥ ५ ॥

### अथ सन्निपातजमूत्रकृच्छ्रलक्षणम्।

सर्वाणि रूपाणि तु सन्निपाताद्भवन्ति तत्कृच्छ्रतमं हि कृच्छ्रम् ॥ ६ ॥

जो तीनों दोषोंसे मूत्रकृच्छ्र हुआ होय तो उपरोक्त तीनों दोषोंके लक्षण होतेहैं, यह मूत्रकृच्छ्र बहुत दुःखदायी है ॥ ६ ॥

### अथ शल्यजनितमूत्रकृच्छ्रलक्षणम्।

मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ॥ मूत्रकृच्छ्रं तदाघाताज्जायते भृशदारुणम्॥ वातकृच्छ्रेण तुल्यानि तस्य लिंगानि निर्दिशेत् ॥ ७ ॥

मूत्रवाहिषु स्रोतःसु शल्येन कण्टकेन क्षतेषु सक्षतीकृतेषु। अथ वा। अभिहतेषु मुष्ट्यादिभिः अभिहतेषु तदाघातान्मूत्रमार्गाघातात्तत्कृच्छ्रं जायते। भृशदारुणं मारकम्। तस्य शल्यजस्य॥

मूत्रका वहन करनेवाले स्रोत ( मार्ग ) काटे आदि शल्यसे क्षतयुक्त होजायँ, अथवा मुठी आदिकी चोट लगे तो मूत्रके मार्गका आघात होनेसे मृत्युकी सदृश महादारुण मूत्रकृच्छ्र उत्पन्न होताहै और वह शल्यज मूत्रकृच्छ्र कहलाताहै, इस मूत्रकृच्छ्रके लक्षण वायुसे हुए मूत्रकृच्छ्रकी सदृशही होतेहैं ॥ ७ ॥

### अथ पुरीषजमूत्रकृच्छ्रलक्षणम्।

शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः ॥ आध्मानं वातशूलश्च मूत्रसंगं करोति च ॥ ८ ॥

विष्ठाका प्रतिघात ( अवरोध ) होनेसे दूषित हुआ वायु पेटमें अफारेको उत्पन्न करैहै और मूत्रका अवरोध होताहै ॥ ८ ॥

### अथ वीर्यजन्यमूत्रकृच्छ्रलक्षणम्।

शुक्रदोषैरुपहते मूत्रमार्गे विधारिते ॥ सशुक्रं मूत्रयेत्कृच्छ्राद्वस्तिमेहनशूलवान् ॥ ९ ॥

उपहते दूषित ॥

वीर्यके दोषोंसे दूषित होकर मूत्रका मार्ग संकुचित होताहै तब अल्प २ मूत्र उतरताहै मूत्रके साथ वीर्य निकलताहै और मूत्राशय तथा लिंगमें शूल होताहै ॥ ९ ॥

### अथाश्मरीजन्यमूत्रकृच्छ्रलक्षणम्।

अश्मरीहेतुकश्चापि मूत्रकृच्छ्रमुदाहृतम् १०

सुश्रुते शर्कराजमपि मूत्रकृच्छ्रमुक्तमत्र तु तस्य नवमसंख्यानियमार्थमश्मरीशर्करयोः साम्यमाह–

अश्मरी शर्करा चैव तुल्यसम्भवलक्षणे ॥ विशेषणं शर्करायाः शृणु कीर्तयतो मम ॥ ११ ॥

सम्भवः कारणम् ॥

पच्यमानाऽश्मरी पित्ताच्छोष्यमाणा च वायुना ॥ विमुक्तकफसन्धाना क्षरन्ती शर्करा मता ॥ १२ ॥

पित्तेन पच्यमाना मूत्रशुक्रश्लेष्मसंहतिः प्रथमं पित्तेन इन्धनकर्मणा पच्यमाना पश्चाद्वातेन शोषिता कफेनाश्लिष्टा अश्मरी सैव विमुक्तकफसन्धाना त्यक्तकफाश्लेषा सती शर्करारूपा मूत्रमार्गात्क्षरन्ती शर्करा मता एतावता किञ्चिदेव भेदः ॥

पथरी होनेसे मूत्र जो कष्टसे होताहै वह अश्मरीज मूत्रकृच्छ्र कहाताहै । जो कि सुश्रुतमे 'शर्कराज' (कंकरीसे हुआ) नामक नवमा मूत्रकृच्छ्रभी कहा है तो भी इस प्रकरणमें मूत्रकृच्छ्रकी आठ सख्याका नियम रखनेके कारण और पथरी तथा कंकरी यह समानही होनेके कारण शर्कराज मूत्रकृच्छ्रको पृथक् नहीं गिना । कहा है कि "पथरी और कंकरी इनके निदान तथा लक्षण तुल्यही है तो भी पथरीसे ककरीमें जो भेद हैं उनको कहतेहैं सुनो, पित्त–कि जो पकानेका काम करताहै उससे पककर पश्चात् वायुसे सूखकर और कफके संयोगको प्राप्त हुई पथरी नामक वस्तु–कि जो मूत्र वीर्य और कफका समुदायरूप है वह पथरी जब कफके संयोगसे छूटकर मूत्रके मार्गमेंसे कंकरीरूप झरने लगतीहै तब वह ककरी कहातीहै" इस प्रकार पथरी और ककरीमें केवल इतनाही भेद है ॥ १०–१२ ॥

### अथ शर्करोपद्रवाः ।

हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च दुर्बलः ॥ तथा भवति मूर्च्छा च मूत्रकृच्छ्रश्च दारुणम् ॥ १३ ॥

हृदयमे पीडा, कम्प, शूल, पेटमें अग्निकी मन्दता, मूर्च्छा और दारुण मूत्रकृच्छ्र ये शर्करासे हुए मूत्रकृच्छ्रमें उपद्रव होतेहैं ॥ १३ ॥

### अथ वातजमूत्रकृच्छ्रचिकित्सा ।

अभ्यञ्जनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान् ॥ स्थिरादिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥१४॥ अमृता नागरं धात्री वाजिगन्धात्रिकण्टकैः ॥ प्रपिबेद्वातरोगार्तः शूलवान्मूत्रकृच्छ्रवान् ॥ १५ ॥

वायुसे मूत्रकृच्छ्र हुआ होय तो वैद्य रोगीको अभ्यंग (तैलादिकी मालिश) स्नेहन, निरूहवस्ति तथा उत्तरवस्ति देवै, अगोंमे योग्य औषधिये बँधवावै घी आदिसे सिकवावे, तथा वातनाशक, शालिपर्णी आदि पदार्थोंसे पकाये हुए रस पिलावै । अथवा गिलोय, सोंठ, आंवला, असगन्ध और गोखुरू, इनका क्काथ करके पिलावै तो इससे वायुसम्बन्धी रोग, शूल तथा मूत्रकृच्छ्र नष्ट होताहै ॥ १४ ॥ १५ ॥

### अथ पुनर्नवाद्यमिश्रकम् ।

पुनर्नवैरण्डशतावरीभिः पत्तूरवृश्चीवबलाश्मभिद्भिः ॥ द्विपञ्चमूलेन कुलत्थकेन यवैश्च तोयोत्क्वथिते कषाये ॥ १६ ॥ तैलं वराहर्क्षवसाघृतञ्च तैरेव कल्कैर्लवणैश्च सिद्धम् ॥ तन्मात्रयाऽत्र प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥ १७ ॥

पुनर्नवा, एरण्ड, शतावर, पत्तूर, सफेद फूलवाली सांठ, खिरेटी, पाखानभेद, बृहत्पञ्चमूल, लघुपचमूल, कुलथी और जौ, इनका क्काथ करके उस क्काथमे इनहीं पदार्थोंका कल्क डालकर तथा सैंधानोन डालकर पकाया हुआ तेल, सुअरकी चरबी, रीछकी चरबी और घी इनको योग्यमात्रानुसार पियै तो इससे शूलसहित वायुसबधी मूत्रकृच्छ्र नष्ट होताहै ॥ १६ ॥ १७ ॥

### अथ पित्तजमूत्रकृच्छ्रचिकित्सा ।

सेकावगाहाः शिशिराः प्रदेहा ग्रैष्मो विधिर्वस्तिपयोविकाराः ॥ द्राक्षाविदा-

रीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्याः ॥ १८ ॥

मूत्रकृच्छ्र पित्तसे हुआ होय तो वैद्य रोगीके अंगोंपर जल आदि शीतल पदार्थोंका सेचन करावे, रोगीको ऐसेही शीतल पदार्थों युक्त कोठीमें अवगाहन करावे, शीतल लेप करै, ग्रीष्म ऋतुके योग्य उपचार करै और दाखका रस, विदारीकंदका, रस, ईखका रस तथा घी, इनकी पिचकारी लगावै, तथा इनही पदार्थोंको डालकर दूधके विकार खिलावे ॥ १८ ॥

## अथ तृणपञ्चमूलम् ।

कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम् ॥ पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम् ॥ १९ ॥

कुश, काँस, रामसर, डाभ, और ईख, इन पाँचोंकी जडको तृणपचमूल कहतेहैं, इन पचमूलका उपयोग करनेसे पित्तसम्बन्धी मूत्रकृच्छ्र नष्ट होताहै और वस्त्याशय शुद्ध होताहै ॥ १९ ॥

## अथ शतावर्यादिक्वाथः ।

शतावरीकाशकुशश्वदंष्ट्राविदारिशालीक्षुकसेरुकाणाम् ॥ क्वाथं सुशीतं मधुशर्कराभ्यां युक्तं पिबेत्पैत्तिकमूत्रकृच्छ्रे ॥ २० ॥

सतावर, काँस, कुशा, गोखुरू, विदारीकन्द, शालि चावल, ईख और कसेरू, इनका क्वाथ करके सहत और मिश्री डाले जब शीतल होजाय तब पिये तो पित्तसम्बन्धी [illegible] नष्ट होताहै ॥ २० ॥

## अथैर्वारुबीजादिपानम् ।

एर्वारुबीजं मधुकञ्च दार्वी पैत्ते पिबेत्तण्डुलधावनेन ॥ दार्वीं तथैवामलकीरसेन समाक्षिकं पित्तकृते तु कृच्छ्रे ॥ २१ ॥

ककडीके बीज मुलेठी और दारुहल्दी इन सबको चावलोंके जलमें पीसकर चावलोंके जलमेंही पिये तो इससे पित्तसम्बन्धी मूत्रकृच्छ्र नष्ट होताहै । अथवा दारुहल्दीको आमलेके रसमें पीसकर सहत डालकर पिये तो इससे पित्तसंबंधी मूत्रकृच्छ्र नष्ट होजाताहै ॥ २१ ॥

## अत्र हरीतक्यादिक्वाथः ।

हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम् ॥ क्वाथं पिबेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ २२ ॥

हरड, गोखुरू, अमलतासका गूदा, पाखानभेद, धनिया और धमासा, इनका क्वाथ करके सहत डालकर पिये तो इससे दाहयुक्त तथा वेदनायुक्त मूत्रकृच्छ्र और मलबंध नष्ट होताहै ॥ २२ ॥

## अथ शतावरीघृतम् ।

शतावरीकाशकुशश्वदंष्ट्राविदारिकेक्ष्वामलकेषु सिद्धम् ॥ सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥ २३

शतावर, काँस, कुशा, गोखुरू, विदारीकन्द, ईखका रस और आमले, इनको दूध अथवा घीमें पकाकर मिश्री डाले, पश्चात् इसको पिये तो इससे पित्तसबंधी मूत्रकृच्छ्र नष्ट होजाताहै ॥ २३ ॥

## अथ त्रिकंटकाद्यघृतम् ।

त्रिकण्टकैरण्डकुशाद्यभीरुकर्कारुकेक्षु स्वरसेषु सिद्धम् ॥ सर्पिर्गुडार्द्धांशयुतं प्रयोज्यं कृच्छ्राश्मरीमूत्रविघातदोषे ॥ २४ ॥ अथ विशेषेण पुनर्विधेयः सर्वाश्मरीणां प्रवरः प्रयोगः ॥ २५ ॥

गोखरु, एरण्ड, कुशा आदिकी जड, शतावर, ककडीके बीज और ईखका स्वरस, इनको घीमें पकावै, फिर इसमें आधाभाग गुड डालकर खाय तो इससे मूत्रकृच्छ्र, पथरी और मूत्राघात ये नष्ट होतेहैं । यह उत्तम प्रयोग, सब प्रकारकी पथरियोंमें विशेष करके देवै॥२४॥२५॥

## अथ कफजमूत्रकृच्छ्रचिकित्सा ।

क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहः ॥ तक्रञ्च तिक्तोषणसिद्धतैलान्यभ्यंगपानं कफमूत्रकृच्छ्रे ॥ २६ ॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा ॥ कफकृच्छ्रविनाशाय सूक्ष्मं पिष्ट्वा त्रुटिं पिबेत् ॥ २७ ॥ तक्रेण युक्तं शितिवार-

कस्य बीजं पिबेन्मूत्रविघातहेतोः ॥ पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ २८ ॥ त्रिकटु त्रिफला मुस्तं गुग्गुलुश्च समाक्षिकम् ॥ गोक्षुरक्काथसंयुक्तं गुटिकां भक्षयेद्बुधः ॥ २९ ॥ प्रमेहं मूत्रकृच्छ्रश्च मूत्राघातं तथैव च॥ अश्मरीं प्रदरश्चैव नाशयेदविकल्पतः ॥ ३० ॥

खार, उष्ण तथा तीव्र औषधि और अन्नपान, स्वेदन, जौका भोजन, वमन, निरूहणवस्ति, तक्र और कडवे पदार्थोंसे तथा काली मिरचोंसे पकाये हुए तेलका अभ्यग अथवा पीनेसे कफसंबंधी मूत्रकृच्छ्र नष्ट होताहै ॥

अथवा गोमूत्रसे, मदिरासे तथा केलेके स्वरससे छोटी इलायचीको बारीक पीसकर पिये तो कफसंबंधी मूत्रकृच्छ्र नष्ट होताहै। अथवा शितिवार (शिरिआरी) के बीजोंको तक्रमें पीसकर पियै तो कफसंबंधी मूत्रकृच्छ्र नष्ट होताहै। अथवा मूँगेकी भस्मको चावलोंके धोवनसे पियै तो कफसंबंधी मूत्रकृच्छ् दूर होताहै। अथवा सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, मोथा, गूगल और सहत, इनकी गोली बनाकर गोखुरूके क्वाथके साथ खाय तो इससे प्रमेह, प्रदर, मूत्रकृच्छ्र, मूत्राघात और पथरी इनको नष्ट करैहै, इसमें कुछ भी संशय नहीं है ॥ २६-३० ॥

## अथ त्रिदोषजमूत्रकृच्छ्रचिकित्सा।

सर्वत्रिदोषप्रभवे च वायोः स्थानानुपूर्व्या प्रसमीक्ष्य कार्यम् ॥ त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्पित्ते विरेकः पवने तु वस्तिः ॥ ३१ ॥ बृहती धावनी पाठा यष्टीमधुकलिंगका॥पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥ ३२ ॥ गुडेन मिश्रितं क्षीरं कटूष्णं कामतः पिबेत् ॥ मूत्रकृच्छ्रेषु सर्वेषु शर्करावातरोगनुत् ॥ ३३ ॥

तीनो दोषोंसे मूत्रकृच्छ्र हुआ होय तो रोगीके बलको विचारकर तीनों दोषोंकी चिकित्सा करै। कफ अधिक होय तो प्रथम वमन करावै, पित्त अधिक होय तो प्रथम विरेचन देवै और वायु अधिक होय तो प्रथम पिचकारी लगावै। अथवा बडी कटेरी, पिठवन, पाढ, मुलहठी और इन्द्रजौ इनका क्वाथ तीनों दोष संबधी मूत्रकृच्छ्रको दूर करताहै अथवा दूधमें गुडको मिलाकर उसको किंचित् उष्णकर इच्छानुसार पिलावै तो इससे सर्वप्रकारके मूत्रकृच्छ्र शर्करा और वायुसबंधी रोग नष्ट होतेहैं ॥ ३१-३३ ॥

## अथाभिघातजन्यमूत्रकृच्छ्रचिकित्सा।

मूत्रकृच्छ्रेऽभिघातोत्थे वातकृच्छ्रक्रिया मता ॥ ३४ ॥ मद्यं पिबेद्वा ससितं ससर्पिः शृतं पयो वार्द्धसिताप्रयुक्तम् ॥ धात्रीरसश्चेक्षुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम् ॥ ३५ ॥

चोटके लगनेसे मूत्रकृच्छ्र हुआ होय तो वायुसे हुए मूत्रकृच्छ्रके लिये जो क्रिया कहीं हैं वो करै, रुधिर सहित मूत्र उतरता होय तो घी, मिश्री तथा सहत, इनसे मिलाकर मद्य पियै अथवा औटाया हुआ दूध सहतके साथ तथा आधाभाग बूरा डालकर पिये। वा आमलोंका रस तथा ईखका रस, इनको मिलाकर उसमें सहत डालकर पियै ॥ ३४ ॥ ३५ ॥

## अथ पुरीषजमूत्रकृच्छ्रचिकित्सा।

स्वेदचूर्णक्रियाभ्यंगवस्तयः स्युः पुरीषजे॥ क्काथो गोक्षुरबीजस्य यवक्षारयुतः सदा॥ मूत्रकृच्छ्रं शकृज्जन्म पीतं शीघ्रं नियच्छति ॥ ३६ ॥

मूत्रकृच्छ्र विष्ठाके रोकनेसे हुआ होय तो स्वेदन, दस्तावर चूर्णोंका सेवन, तैलादिक अभ्यग और वस्तिकर्म करै। अथवा गोखुरूके बीजोंका क्वाथ करकै उसमे जवाखार डालकर नित्य पिवै तो विष्ठासे हुआ मूत्रकृच्छ्र तत्काल नष्ट होजाताहै ॥ ३६ ॥

## अथ वीर्यजन्यमूत्रकृच्छ्रचिकित्सा।

लेहः शुक्रविबन्धोत्थे सशिलाजतु माक्षिकम् ॥ एलाहिंगुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः ॥ ३७ ॥ मूत्रदोषप्रशुद्ध्यर्थं शुक्रदोषहरश्च तत् ॥ वृष्यबृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥ ३८ ॥

शिलाजीत, तथा सहत, इनको मिलाकर चाटै तो इससे वीर्यजनित मूत्रकृच्छ्र नष्ट होताहै अथवा दूधमें इलायची, हींग तथा घी, इनको मिलाकर पिवै तो मूत्रके दोष स्वच्छ होजातेहैं और वीर्यके दोष नष्ट होजातेहै। अथवा जिसको वीर्यके दोषसे मूत्रकृच्छ्र हुआ होय तो उसको वृष्य पदार्थ खिलाकर वीर्यको बढावे, पश्चात् उस पुरुषको उत्तम स्त्रियोंसे रमण करावे ॥ ३७ ॥ ३८ ॥

## अथाऽश्मरीजन्यमूत्रकृच्छ्रचिकित्सा ।

सप्तच्छदारग्वधकेवुकैला निम्बः करञ्जः कुटजो गुडूची ॥ साध्या जले तेन पचेद्यवागूं सिद्धं कषायं मधुसंयुतं वा॥३९॥ एर्वारुवीजकल्कश्च श्लक्ष्णपिष्टोऽक्षसंमितः॥ धान्याम्ललवणैः पेयो मूत्रकृच्छ्रविनाशनः ॥ ४० ॥ त्रिकण्टकारग्वधदर्भकाशदुरालभापर्वतभेदपथ्याः ॥ निघ्नन्ति पीता मधुनाऽश्मरीन्तु संप्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥ ४१ ॥

सतोना, अमलतास, सुपारी, इलायची, नीम, करंज, कुडेकी छाल और गिलोय, इनका क्वाथ करके उसमें सहत डालकर पिवे, अथवा इस क्वाथमें यवागू बनाकर खाय तो पथरीसे हुआ मूत्रकृच्छ्र नष्ट होजाताहै । अथवा ककडीके बीजोंका कल्क करके महीन पीसलेवै, इसको एक तोला लेकर कांजी तथा सेंधेके साथ खाय तो मूत्रकृच्छ्र नष्ट होताहै । वा गोखरू, अमलतास, डाभ, काँस, धमासा, पाषानभेद, और हरड, इनको पीस सहतके साथ पिवै तो इससे मृत्युकी सदृश मूत्रकृच्छ्रभी नष्ट होजाताहै ॥ ३९-४१ ॥

## अथ मूत्रकृच्छ्रसामान्यचिकित्सा ।

निदिग्धिकायाः स्वरसं कुडवं मधुसम्मितम् ॥ मूत्रदोषहरं पीत्वा नरः सम्पद्यते सुखी ॥ ४२ ॥ कषायोऽतिबलामूलसाधितोऽशेषकृच्छ्रजित् ॥ पीतश्च त्रपुसीबीजं सतिलाज्यपयोन्वितम् ॥ ४३ ॥

त्रिफलायाः सुपिष्टायाः कल्कं कोलसमन्वितम् ॥ वारिणा लवणीकृत्य पिबेन्मूत्ररुजापहम् ॥ ४४ ॥ यवोरुबूकतृणपञ्चमूलीपाषाणभेदैः सशतावरीभिः ॥ कृच्छ्रेषु गुग्गुल्वभयाविमिश्रैः कृतः कषायो गुडसंप्रयुक्तः ॥ ४५ ॥ मूलानि कुशकाशेक्षुशराणां चेक्षुबालिका ॥ मूत्रघाताश्मरीकृच्छ्रे पञ्चमूली तृणात्मिका ॥४६॥ गुडमामलकं वृष्यं श्रमघ्नं तर्पणं प्रियम् ॥ पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम् ॥ ॥ ४७ ॥ सितातुल्यो यवक्षारः सर्वकृच्छ्रप्रसाधनः ॥ द्राक्षासितोपलाकल्कं कृच्छ्रघ्नं मस्तुना युतम् ॥ ४८॥ विदारी सारिवा छागशृंगी वत्सादनी निशा ॥ कृच्छ्रं पित्तानिलाद्धन्ति वल्लिजं पञ्चमूलकम् ॥ ॥ ४९ ॥ एलाश्मभेदकशिलाजतुपिप्पलीनामेर्वारुवीजलवणोत्तमकुंकुमानाम् ॥ चूर्णानि तण्डुलजले लुलितानि पीत्वा प्रत्यग्रमृत्युरपि जीवति मूत्रकृच्छ्री॥५०॥ अयोरजः सूक्ष्मपिष्टं मधुना सह योजितम् ॥ मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥ ५१ ॥

कटेरीका सोलहतोले स्वरस सहत डालकर पिवै तो मूत्रदोष दूरहोकर मनुष्यको सुखकी प्राप्ति होतीहै । अतिबला ( कघी ) की जडका क्वाथ करके पिवै तो इससे सर्व प्रकारके मूत्रकृच्छ्र दूर होजातेहैं । अथवा खीराके बीज और तिल, इनको घीमें तथा दूधमें पीसकर पिवै तो मूत्रकृच्छ्र नष्ट होताहै । हरड, बहेडा और आमला, इनका कल्क करके इसमें बेरकी मींग और सैंधानोन डालकर पानीसे पिवै तो इससे मूत्रकृच्छ्र नष्ट होजाताहै जौ, एरंड, तृणपञ्चमूल, पाषाणभेद, शतावर, गूगल और हरड इनका क्वाथ करके गुड डालकर पिवै तो इससे मूत्रकृच्छ्र नष्ट होताहै । अथवा कुशा, काँस, ईख, रामसर और नरसल इनकी जडको पीसकर पिवै तो मूत्रा-

वात और पथरिसंबंधी मूत्रकृच्छ्र नष्ट होताहै। गुड और आमलोंका सेवन—वृष्य, श्रमनाशक, तृप्तिदायक, प्रिय और पित्त, रुधिरविकार, दाह तथा शूल नाशक है। मिश्री मिलाकर जवाखार खाय तो सर्वप्रकारके मूत्रकृच्छ्र नष्ट होतेहैं। अथवा दाख और मिश्री इनका कल्क करकै दहीके पानीके साथ पियै तो मूत्रकृच्छ्र दूर होताहै। विदारी कंद, सारिवा, मेंढासिंगी, गिलोय, हलदी, वायविडंग और तृणपंचमूल, इनको पीसकर पियै तो तत्काल मूत्रकृच्छ्र नष्ट होताहै। अथवा इलायची, पाषाणभेद, शिलाजीत, पीपल, ककडीके बीज, सैंधानिमक और केसर, इनका चूर्ण करकै चावलोंके पानीमें मिलाकर पियै तो मृत्युको प्राप्त होनेवालाभी मूत्रकृच्छ्ररोगी रोगरहित होकर जीवित रहताहै। वा लोहेकी भस्मको बारिक पीस सहतमें मिलाकर तीन दिनतक चाटै तो इससे शीघ्र मूत्रकृच्छ्र नष्ट होताहै, इसमें किंचित् भी संदेह नहीं है ॥ ४२–५१ ॥

## अथ सुकुमारकुमारकपुनर्नवावलेहः ।

**पुनर्नवामूलतुलां दर्भमूलं शतावरीम् ॥ बला तुरङ्गगन्धा च तृणमूलं त्रिकण्टकम् ॥ ५२ ॥ विदारिकन्दनागाह्वगुडूच्यतिबलास्तथा ॥ पृथग्दशपलान्भागानपां द्रोणे विपाचयेत् ॥ ५३ ॥ तेन पादावशेषेण घृतस्यार्द्धाढकं पचेत् ॥ मधुकं शृङ्गवेरश्च द्राक्षां सैन्धवपिप्पलीम् ॥ ५४ ॥ द्विपलांशान्पृथग्दत्त्वा यवान्याः कुडवं तथा ॥ त्रिंशद्गुडपलान्यत्र तैलस्यैरण्डजस्य च ॥ ५५ ॥ एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम् ॥ राज्ञां राजसमानानां बहुस्त्रीपतयश्च ये ॥ ५६ ॥ मूत्रकृच्छ्रे कटिस्रस्ते तथा गाढपुरीषिणाम् ॥ मेढ्रवंक्षणशूले च योनिशूले च शस्यते ॥ ५७ ॥ यथोक्तानाञ्च गुल्मानां वातशोणितनिश्चये ॥ बल्यं रसायनं श्रीदं सुकुमारकुमारकम् ॥ पुनर्नवाशते द्रोणे प्रदेयः सोऽपि चापरः ॥ ५८ ॥ मूत्राघातादिविधानमपि कार्यम् ॥**

इति सुकुमारकुमारकावलेहः ।

चारसौ तोले पुनर्नवाकी जड और डाभकी जड, सतावर, खिरेटीकी जड, असगंध, तृणपंचमूल, गोखरू, विदारीकंद, नागकेसर, गिलोय तथा ये प्रत्येक चालीस चालीस तोले लेकर एक हजार चौवीस ( १०२४ ) तोले जलमें क्वाथ करे, जब चौथा भाग शेष रहै तब उस क्वाथमें एकसौ अट्ठाईस ( १२८ ) तोले घी पकावे, इस घीमें—मुलैठी, अदरख, मुनक्का, सैंधानिमक और पीपल, इन प्रत्येक पदार्थके चूर्णको आठ आठ तोले डाले और एकसौ वीस ( १२० ) तोले अंडीका तेल डाले तब 'सुकुमारकुमारकपुनर्नवा अवलेह' सिद्ध होताहै, इस अवलेहको सेवन करनेसे मूत्रकृच्छ्र, कमरकी शिथिलता, विष्ठाकी अत्यंत दृढता, लिंगका शूल, वक्षणशूल, योनिका शूल, सर्व प्रकारके गुल्म और वातरक्त, इनका नाश होताहै। यह अवलेह—राजाओंको, राजाके सदृश पुरुषोंको और अधिक स्त्रीवाले पुरुषको सेवन करावे। यह लेह—बलवर्द्धक, लक्ष्मीदायक और बालकोंको सुकुमार ( शोभायमान) करनेवाला है ॥ ५२–५८ ॥

और भी मूत्राघातमें जो चिकित्सा कही है सो करे ॥

इति मूत्रकृच्छ्राधिकारः सम्पूर्णः ।

---

# अथ मूत्राघाताद्यधिकारः ।

## तत्र मूत्राघातकारणम् ।

**जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥ प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः ॥ १ ॥**

विशेष करकै मूत्रादिकके वेगोंको रोकनेसे कुपित हुए दोष वातकुंडलिका आदि तेरह प्रकारके मूत्राघातोंको उत्पन्न करै हैं ॥ १ ॥

## अथ वातकुंडलिकालक्षणम् ।

**रौक्ष्याद्वेगविघाताद्वा वायुर्वस्तौ सवेदनः । मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः ॥ २ ॥ मूत्रमल्पाल्पमथवा सरुजं सम्प्रवर्तते ॥ वातकुण्डलिकां तां तु व्याधिं विद्यात्सुदारुणम् ॥ ३ ॥**

रौक्ष्यात्कायस्य । वेगविघातान्मूत्रादिवेगनिरोधात्, आविश्य आवृत्य मूत्रमिति, रौक्ष्यादिभिर्वेगविघातादिभिश्च विगुणः दुष्टः कुण्डलीकृतः वातावर्तो वस्तावेव भ्रमन् तिष्ठति । कुण्डलीभूतो वायुः वस्तौ मूत्राशये चरति प्रधावति । आवद्धत्वाद् भ्रमन् तिष्ठति ॥

शरीरके रूक्ष होनेसे अथवा मूत्रआदिके वेगोंको रोकनेसे दूषित हुई वायु कुण्डलाकार ( गोलाकार ) हो मूत्रमें मिलकर पीडाको उत्पन्न करतीहै तव मूत्रमें मिली हुई होनेसे मूत्राशयमेंही विचरती रहतीहै इससे अल्प अल्प और पीडायुक्त मूत्र उतरता है, यह तीव्र और महादारुण रोग वातकुण्डलिका कहाताहै ॥ २ ॥ ३ ॥

## अथाष्ठीलालक्षणम् ।

आध्मापयन्वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम् ॥ कुर्यात्तीव्रार्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ॥ ४ ॥

वातः वस्तिगुदं रुद्ध्वा अर्थात्तदन्तर्गतं मूत्रं मलञ्च निरुध्य वस्तिं गुदञ्च आध्मापयन् आध्मानं कुर्वन् अष्ठीलाम् अष्ठीलातुल्यां ग्रंथिं कुर्यात् । चलोन्नतां चलामुन्नताञ्च ॥

वायु, मूत्र तथा मलको रोककर मूत्राशय तथा गुदामें अफारा करके चंचल, ऊँची, तीव्रपीडावाली और मूत्रके तथा विष्ठाके मार्गको रोकनेवाली पिंडीकी सदृश गांठको उत्पन्न करैहै, इसको अष्ठीला कहतेहैं ॥ ४ ॥

## अथ वातलक्षणम् ।

वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ॥ निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥ ५ ॥ मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडितः ॥ वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ ६ ॥

अकुशलो मूर्खः । पुरुषस्य वस्तेर्मुखं निरुणद्धि वस्तिगतो वायुः । तेन वायुना मूत्रसंगः विघातो भवति, वस्तिकुक्षिनिपीडित इति, वस्तौ कुक्षौ निपीडितः संपीडितो वायुरिति सम्बन्धः । मूत्रसङ्गः मूत्रावरोधः ॥

जो मूर्ख मनुष्य मूत्रके वेगको रोकताहै उसके मूत्राशयमें रहनेवाली वायु वस्ति ( मूत्राशय ) के मुखको वंदकरदेतीहै, तव मूत्र रुकजाताहै और वस्त्याशय तथा कोखमें पीडा होतीहै इसको वातवस्ति कहतेहैं । यह वातवास्तिरोग कष्टसाध्य जानना ॥ ५ ॥ ६ ॥

## अथ मूत्रातीतलक्षणम् ।

चिरं धारयतो मूत्रं त्वरया न प्रवर्तते ॥ मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ ७ ॥

मेहमानस्य मूत्रमुत्सृजतः मन्दं वा अल्पं वा ।

मूत्रको अधिक समय रोकनेसे फिर मूत्र तत्काल नहीं उतरै अथवा थोडा थोडा उतरै उसको मूत्रातीत रोग कहतेहैं ॥ ७ ॥

## अथ मूत्रजठरलक्षणम् ।

मूत्रस्य वेगेऽभिहते तदुदावर्तहेतुकः ॥ अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥ ८ ॥ नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनाम् ॥ तन्मूत्रजठरं विद्यादधोवस्तिनिरोधनम् ॥ ९ ॥

तदुदावर्तहेतुक इति मूत्रवेगधारणजनितोदावर्तनिदानम् । आध्मानं कुर्यात् अधोवस्तिनिरोधनम् वस्तेरधोदेशे विवन्धकारकम् ।

मूत्रका वेग रुकनेसे कुपित हुआ अपानवायु पेटको अत्यत भरदेताहै तव इस प्रकारका उदावर्त हुआ नाभिके नीचे तीव्रवेदनायुक्त अफारा करताहै कि जिससे अधोवस्ति ( मूत्राशयके नीचेका भाग ) रुकजाताहै, इस रोगको मूत्रजठर कहतेहैं ॥ ८ ॥ ९ ॥

## अथ मूत्रोत्संगलक्षणम् ।

वस्तौ वाप्यथवा नाले मणौ वा यस्य

देहिनः ॥ मूत्रं प्रवृत्तं सज्येत सरक्तं वा प्रवाहतः ॥ १० ॥ स्रवेच्छनैरल्पमल्पं सरुजं वापि नीरुजम् ॥ विगुणानिलजो व्याधिः स मूत्रोत्संगसंज्ञितः ॥ ११ ॥

नाले मेढ्रे । मणौ मेहनग्रन्थौ । सज्येत निरुद्धं स्यात् । सरक्तं प्रवाहतः कण्ठहृद्बलेन सशब्दं मूत्रपुरीषवातानामधः प्रेरणम् प्रवाहणं तेन कुपितेन वायुना वस्त्यादिभेदात् सरक्तं मूत्रं स्रवेदित्यर्थः ॥

जिस पुरुषका प्रवर्ता हुआ मूत्र मूत्राशयमें लिंगमे अथवा लिंगके अग्रभागमें रुका रहै और हृदयके श्वासादि बलसे करै तब वायु वस्तिको भेदन करकै पीडा युक्त अथवा विना पीडाके रुधिरयुक्त थोडा थोडा मूत्र धीरे धीरे स्रवे ऐसे दूषित वायुसे उत्पन्न हुआ मूत्रोत्सर्ग नामक रोग कहाताहै ॥ १० ॥ ११ ॥

## अथ मूत्रक्षयलक्षणम् ।

रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ ॥ मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ १२ ॥

क्लान्तदेहस्य म्लानदेहस्य । तदाह्वयं मूत्रक्षयसंज्ञम् ॥

जिसका शरीर रूक्ष और ग्लानियुक्त हो ऐसे मनुष्यके मूत्राशयमे रहनेवाले पित्त और वायु मूत्रका क्षय करके पीडा तथा दाहको उत्पन्न करते हैं यह रोग मूत्रक्षय कहाताहै ॥ १२ ॥

## अथ मूत्रग्रन्थिलक्षणम् ।

अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ॥ अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ १३ ॥

अन्तर्वस्तिमुखे वस्त्यभ्यन्तरे । अल्पः क्षुद्रामलकप्रमाणः । ननु अस्य अश्मर्या सह को भेदः । उच्यते–अश्मरी क्रमशः सञ्चयेन स्यात् अयन्तु सहसा भवेत् इति भेदः । अपरो भेदः अश्मर्या पित्ताधिक्यम् मन्यते अत्र तु रक्तमेव । यत उक्तं तन्त्रान्तरे–

"रक्तं वातकफादुष्टं वस्तिद्वारे सुदारुणम् । ग्रन्थिं कुर्यात्स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥"

मूत्राशयके भीतर सहसा गोल आकारवाली स्थिर छोटे आमलेकी सदृश बडी और पथरीकी समान पीडायुक्त गांठ उत्पन्न होती है उसको मूत्रग्रंथि कहते हैं ॥ १३ ॥

शंका–इस मूत्रग्रन्थिमें और पथरीमे क्या अन्तर है ?

समाधान–पथरी क्रम क्रमसे मूत्र आदिका संचय होकर होती है और यह गाठ तो सहसा होजाती है इतनाही अन्तर है । दूसरा भेद यह भी है कि पथरीमे पित्त अधिक होताहै और इस मूत्रग्रन्थिमें तो रुधिरही अधिक होताहै । अन्य ग्रथोंमे कहा है कि " वायुसे तथा कफसे दूषित हुआ रुधिर मूत्राशयमें अत्यंत दारुण गांठको उत्पन्न करे है कि–जिससे वहुत पीडायुक्त मूत्र उतरता है वह मूत्र रुधिरसहित होताहै " ।

## अथ मूत्रशुक्रलक्षणम् ।

मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ॥ स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥ भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ १४ ॥

मूत्रितस्य मूत्रवेगयुक्तस्य शुक्रं स्थानाच्च्युतं पश्चाद्वायुना उद्धृतम् ऊर्ध्वं नीतं भस्मोदकप्रतीकाशं भस्मसहितजलसदृशम्, मूत्रशुक्रं तदुच्यते ॥

जो पुरुष मूत्रका वेग होनेपर विना मूते स्त्रीका संग करै उसका स्थानसे भ्रष्ट हुआ और पश्चात् वायुसे ऊपरको चढा वीर्य मूतनेसे प्रथम अथवा पीछे राखमिले हुए पानीकी सदृश निकलताहै, इस रोगको मूत्रशुक्र कहते हैं ॥ १४ ॥

## अथोष्णपातलक्षणम् ।

व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलावृतम् ॥ वस्तिं मेढ्रं गुदञ्चैव प्रदहन्स्रावयेदधः ॥१५॥ मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ॥ कृच्छ्रात्पुनःपुनर्जन्तोरुष्णवातं वदन्ति तम् ॥ १६ ॥

सरक्तम् ईषल्लोहितम् ॥

व्यायाम ( परिश्रम ) करनेसे, अत्यत मार्ग चलनेसे, तथा धूपमें फिरनेसे पित्त मूत्राशयमें प्राप्त हो वायुसे लिपट कर मूत्राशय, लिंग, योनि और गुदा, इनमें दाह करके मनुष्यको अधिक कष्टसे वारंवार हलदीकी समान वर्णवाला किंचित् लाल अथवा रुधिर युक्त मूत्र उतरताहै इसको उष्णवात कहते हैं ॥ १५ ॥ १६ ॥

## अथ मूत्रसादलक्षणम्।

पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ॥ कृच्छ्रान्मूत्रं तथा पीतं रक्तं श्वेतं घनं स्रवेत् ॥ १७ ॥ सदाहं रोचनाशंखचूर्णवर्णं भवेच्च तत् ॥ शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ १८ ॥

संहन्येते घनीक्रियेते शुष्कम् अल्पम्। समस्तवर्णम् उक्तसकलवर्णयुक्तम् ॥

पित्त कफ अथवा दोनों पवनसे गाढे हुए होंय तो वारवार पीला, लाल, अथवा सफेद वा शंखकी भस्मकी सदृश, वा इन सब रंगोंवाला, गाढा दाहयुक्त और थोडा थोडा मूत्र स्रवताहै उसको मूत्रसाद कहते हैं॥१७॥१८॥

## अथ विड्विघातलक्षणम्।

रूक्षदुर्बलयोर्वातेनोदावर्तं शकृद्यदा ॥ मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ॥ विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥ १९ ॥

उदावर्तम् ऊर्ध्वनीतं विड्गन्धं वा शब्दोऽत्र योजनीयः ॥

रूखे हुए मनुष्यकी अथवा दुर्बल हुये मनुष्यकी वायुसे ऊपरको चढी हुई विष्ठा जब मूत्रके स्रोत ( मार्ग ) को प्राप्त होती है तब वह मनुष्य विष्ठायुक्त वा विष्ठाकी गन्धयुक्त कष्टकर मूत्र करताहै इसको विड्विघात कहते हैं ॥ १९ ॥

## अथ वस्तिकुंडललक्षणम्।

द्रुताध्वलंघनायासैरभिघातात्प्रपीडनात् ॥ स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥ २० ॥ मूलस्पन्दनदाहार्तो बिन्दुं बिन्दुं स्रवत्यपि ॥ पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्तिमान् ॥ २१ ॥ वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ॥ पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥ २२ ॥ तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता ॥ श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् ॥ २३ ॥

द्रुताध्वलंघनं शीघ्रं मार्गचलनम्। उद्वृत्तः उत्थितः। स्पन्दनं किञ्चित् चलनम्। घोरं मारकम्। शस्त्रविषोपमं शस्त्रं खड्गादि तद्वच्छीघ्रमारकम्, विषमत्र गरलस्तद्वद्विलम्ब्य मारकम्। एतावता मारकमवश्यं शीघ्रं विलम्बेन वा ॥

वेगपूर्वक अत्यत चलनेसे, अत्यत परिश्रम करनेसे, अभिघात ( चोट ) से अथवा दवानेसे वस्ति अपने स्थानसे उठकर गर्भकी सदृश मोटी तथा शूलयुक्त होजाती है किंचित् कॉपती रहती है दाहसे पीडा करती है, मूत्र बूँद २ स्रवताहै और दवानेसे मूत्रकी धारभी निकलती है, परन्तु धार निकलनेसे जडतायुक्त होजाती है और पीडा होतीहै इसको वस्तिकुडल कहते हैं। यह रोग भयकर है, खड्ग आदि शस्त्रकी सदृश तत्काल मृत्यु करनेवाला है, विषकी सदृश विलम्बसे भी मार डालता है, वायुकी प्रबलतायुक्त है और अधिक करके मूर्ख लोगोंसे निवारण भी नहीं होसक्ता। यही रोग पित्तसे युक्त हो तो दाह, शूल, तथा मूत्रकी विवर्णता होती है। और यदि कफसे युक्त होय तो भारीपन तथा शोथ ( सूजन ) होताहै और मूत्र स्निग्ध, गाढा तथा सफेद होताहै, यह रोग थोडे समयमें वा अधिक समयमें मार डालताहै ॥ २०–२३ ॥

## अथ वस्तिकुण्डलासाध्यलक्षणम्।

श्लेष्मरुद्धबिलो वस्तिः पित्तोदीर्णो न सिद्ध्यति ॥ अविभ्रान्तबिलः साध्यो न च यः कुण्डलीकृतः ॥ स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥ २४ ॥

बिलं वस्तिमुखरन्ध्रम् । पित्तोदीर्णः पित्तेन उद्धृतः । अविभ्रान्तबिलः कफेन अनावृतबिलः पश्चात्कुण्डलीकृतः स साध्यः । एतेन कुण्डलीभूतोऽसाध्यः । कुण्डलीभूतस्य लक्षणमाह—तृडित्यादि । कुण्डलीभूतस्य अयमर्थः,कफेन बिलावरोधात्तत्र वातः कुंडलाकारेण तिष्ठति इत्यर्थः ॥

जो मूत्राशय पित्तसे ऊँचा होगया हो और मूत्राशयका मुख कफसे रुक गया हो वह वस्तिकुण्डल असाध्य होताहै । जिस मूत्राशयका मुख कफसे न ढका हो और कुण्डलाकार न हुआहो वह वस्तिकुडल साध्य जानना । जिस मूत्राशयमे वायु कुडलाकार होगया होय तो तृषा, मोह, तथा श्वास होताहै अर्थात् यह लक्षण कुंडलीभूत हुएके जानने ॥ २४ ॥

## अथ मूत्राघातचिकित्सा ।

स्नेहस्वेदोपपन्नस्य हितं स्नेहविरेचनम् ॥ दद्यादुत्तरवस्तींश्च मूत्राघाते सवेदने ॥ ॥ २५ ॥ नलकुशकाशेक्षुबलाक्वाथं प्रातः सुशीतलं ससितम् ॥ पिबतो नश्यति नियतं मूत्रग्रह इत्युवाच कविः ॥ २६ ॥ गोजानाम्नो मूलं पलमेकं क्वथितशेषितं पीतम्॥क्षिप्त्वा मधु च सिताश्च प्रणुदति मूत्रस्य संरोधम् ॥२७॥ गोधापद्या मूलं क्वथितं घृततैलगोरसोन्मिश्रम् ॥ पीतं निरुद्धमचिराद्भिनत्ति मूत्रस्य संघातम् ॥ ॥ २८ ॥ पिबेच्छिलाजतुक्वाथे युक्तं वीरतरादिजे ॥ क्वाथं सपत्नमूलस्य गोक्षुरस्य फलस्य च ॥ २९ ॥ पिबेन्मधुसितायुक्तं मूत्रकृच्छ्ररुजापहम् ॥ घनसारस्य चूर्णेन वस्तस्याथाविकाम्बुना ॥ गुण्डयित्वा ध्वजे क्षिप्त्वा मूत्ररोधं जहाति तम् ॥ ॥ ३० ॥ सदाभद्राश्मभिन्मूलं शतावर्याः सचित्रकम ॥ रोहिणीकोकिलाक्षौ च वचाशैलत्रिकण्टकम् ॥ ३१ ॥ श्लक्ष्णपिष्टः सुरापीतो मूत्राघातप्रबाधनः ॥ पिबेद्बर्हिशिखामूलं दुग्धभुक्तण्डुलाम्भसा ॥ ३२ ॥ वस्तिमुत्तरवस्तिं वा सर्वेषामेव दापयेत् ॥ निदिग्धिकायाः स्वरसं पिबेद्वा तत्परिस्रुतम् ॥ ३३ ॥ जले कुंकुमकल्कं वा सक्षौद्रमुषितं निशि ॥ सतैलं पाटलाभस्मक्षारं बद्ध्वा परिस्रुतम् ॥ ३४ ॥ त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपंचमूले ॥ गुडप्रगाढं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥३५॥ सितक्षारान्वितं मूलं वायसीतैलकूर्चयोः॥ कोशकाररसैः पीतं वस्तिकुण्डलजिद्भवेत् ॥ ३६ ॥ शृतशीतपयोऽन्नाशी चन्दनं तंडुलांबुना ॥ पिबेत्सशर्करं श्रेष्ठमुष्णवाते सशोणिते ॥ ३७ ॥

पीडायुक्त मूत्राघात होय तो स्नेहन तथा स्वेदन क्रिया करके पश्चात् स्नेहयुक्त पदार्थोंसे विरेचन देवै तथा उत्तरवस्ति भी देवै, यह हितकारी है । अथवा नरसल, कुशा, कास, ईख और खिरैटी, इनका क्वाथ बनावे शीतल होनेपर मिश्री डालकर पिये तो इससे मूत्राघात अवश्य नष्ट होता है ऐसा शुक्राचार्यने कहा है । वा चार तोले गोजियाकी जड लेकर इसका क्वाथ करै इसमें सहत तथा मिश्री डालकर पिये तो मूत्रका अवरोध नष्ट होजाताहै । अथवा गोधापदी ( काली मुसली ) की जडका क्वाथ करके इसमें घी, तेल तथा दहीका पानी डालकर पियै तो इससे अधिक समयका रुका हुआ मूत्रभी उतरताहै । अथवा वीरतरादिगण ( पथरीकी चिकित्साके प्रकरणमें कहैंगे ) का क्वाथ करकै उसमें शिलाजीत डालकर अथवा धमासेका क्वाथ डालकर वा अडूसेका क्वाथ डालकर पियै तो इससे मूत्राघात नष्ट होताहै । पत्ते जड तथा फलसहित गोखरू लेकर उसका क्वाथ करकै उसमे सहत तथा मिश्री डालकर पियै तो इससे मूत्रकृच्छ्रकी पीडा नष्ट होतीहै । कपूरका चूर्णकर बकरी और भेडके मूत्रमें पीस कपडेकी वत्ती-

पर लपेटकर लिंगमें डाले तो इससे मूत्रका रोग नष्ट होताहै । अथवा कमारी, पाखानभेद तथा शतावरकी जड, चीता, कुटकी, तालमखाने, वच, छारछबीला और गोखरु इनको बारीक पीस मदिराके साथ पिये तो इससे मूत्राघात नष्ट होताहै । मोरशिखाकी जड पीसकर चावलोंके धोवनसे पिये और दूधका भोजन करै तो मूत्राघात दूर होताहै । अथवा सब मूत्राघातोंमें वस्ति और उत्तरवस्ति देवै । वा कटेरीकी जडका स्वरस निकालकर पिये तो मूत्राघात दूर हो । केशरका कल्क करके उसमें सहत डालकर रात्रिमें रखा रहने देवै, फिर प्रातःकाल पिये तो मूत्राघात दूर होताहै । अथवा पाढलकी भस्म और जवाखार जलमें घोलकर तेल डालके पिये तो मूत्राघात नष्ट होताहै । गोखरू, अण्डकी जड और सतावर इनका क्वाथ करके पिये तो मूत्राघात नष्ट होताहै । तृणपचमूलका क्वाथ करके पिये तो इससे मूत्राघात नष्ट होताहै गुडसे मिश्रित किया हुआ घी दूधमें डालकर पीवै तो मूत्रकृच्छ्र आदि रोगोंपर हितकारी होता है, मालकागनी और चौयेकी जड इनको पीस इसमें मिश्री तथा जवाखार डालकर गाढे ईखके रसके साथ पीवै तो मूत्राघात नष्ट होताहै । चन्दनको घिस उसमें मिश्री मिलाकर चावलोंके जलके साथ पीवै और औटाया हुआ शीतल दूधके साथ अन्न खाय तो इससे रुधिरसहित उष्णवातका नाश होताहै ॥ २५-३७ ॥

## अथ शिलोद्भिदादितैलम् ।

शिलोद्भिदेरण्डशमास्थिरादिपुनर्नवाभीरुरसेषु सिद्धम् ॥ तैलं श्रृतं क्षीरमथानुपानं कालेषु कृच्छ्रादिषु सम्प्रयोज्यम् ॥ ३८॥

पाखानभेद, एरण्डकी जड, शालपर्णी, पुनर्नवा और सतावर, इनके रससे तेल पकावै और दूधके अनुपानसे सेवन करै इससे मूत्रकृच्छ्रादि रोग नष्ट होतेहैं ॥ ३८ ॥

## अथ धान्यगोक्षुरकघृतम् ।

धान्यगोक्षुरकक्वाथकल्कयुक्तं घृतं हितम् ॥ मूत्राघाते मूत्रकृच्छ्रे शुक्रदोषे च दारुणे ॥ ३९ ॥

धनिया तथा गोखरू, इनके क्वाथसे तथा कल्कसे पकाया हुआ घी खाय तो मूत्राघात, मूत्रदोष और वीर्यके दारुण दोषोंमें हितकारी होताहै ॥ ३९ ॥

## अथ भद्रावहघृतम् ।

अम्बष्ठा पाटला चैव वर्षाभूद्वयमेव च ॥ विदारीकन्दः काशश्च कुशमोरटगोक्षुराः ॥ ४० ॥ पाषाणभेदो वाराही शालिमूलं शरस्तथा ॥ भल्लातकं शिरीषस्य मूलमेषामथाहरेत् ॥ ४१ ॥ समभागानि सर्वाणि क्वाथयित्वा विचक्षणः ॥ पादशेषकषायेण घृतप्रस्थं विपाचयेत् ॥ ४२ ॥ कल्कं दत्त्वाऽथ मतिमान्गिरिजं मधुकं तथा ॥ नीलोत्पलञ्च काकोलीं बीजं त्रापुसमेव च ॥ ४३ ॥ कूष्माण्डञ्च तथैर्वारुसम्भवञ्च समं भवेत् ॥ उष्णवातं निहन्त्येतद् घृतं भद्रावहं स्मृतम् ॥ ४४ ॥

पाठा, पाढल, साठ, विसखपरा, विदारीकन्द, कास, कुशा, ईखकी जड, गोखरू, पाखानभेद, वाराहीकन्द, शालिधान्यकी जड, रामसर, भिलावा और सिरसकी जड, इनको समान भाग लेकर क्वाथ करै जब चौथा भाग जल शेष रहै तब उसमें शिलाजीत, मुलेठी, नील कमल, काकोली, खीरेके बीज, पेठेके बीज और ककडीके बीज समान भाग ले कल्क डालकर चौसठ तोले घी पकावै, यह भद्रावह नामक घी उष्णवात ( मूत्रकृच्छ्र) को नष्ट करताहै ॥ ४०-४४ ॥

## अथ विदारीघृतम् ।

विदारी वृषको यूथी मातुलुंगी च भूस्तृणम् ॥ पाषाणभेदः कस्तूरी वसुको वशिरोऽनलः ॥ ४५ ॥ पुनर्नवा वचा रास्ना बला चातिबला तथा ॥ कशेरुविषशृंगाटतामलक्यः स्थिरादयः ॥ ४६ ॥ शरेक्षुदर्भमूलञ्च कुशः काशस्तथैव च ॥ पलद्वयन्तु संहृत्य जलद्रोणे विपाचयेत् ॥ ४७॥ पादशेषे रसे तस्मिन्घृतप्रस्थं विपाचयेत् ॥ शतावर्यास्तथा धात्र्याः स्वरसो घृतसम्मितः ॥ ४८ ॥ पट्पलं शर्करायाश्च

कार्षिकाण्यपराणि च ॥ यष्ट्याह्वं पिप्पली द्राक्षा काश्मर्यं सपरूषकम् ॥ ४९ ॥ एला दुरालभा कौन्ती कुंकुमं नागकेसरम् ॥ जीवनीयानि चाष्टौ च दत्त्वा च द्विगुणं पयः ॥ ५० ॥ एतत्सर्पिर्विपक्तव्यं शनैर्मृद्वग्निना बुधैः ॥ मूत्राघातेषु सर्वेषु विशेषात्पित्तजेषु च ॥ ५१ ॥ शर्कराऽश्मरिशूलेषु शोणितप्रभवेषु च ॥ हृद्रोगे पित्तगुल्मे च वातासृक्पित्तजेषु च॥ ५२ ॥ कासश्वासक्षतोरस्कधनुःस्त्रीभारकर्षिते ॥ तृष्णाच्छर्दिमनःकम्पशोणितच्छर्दने तथा ॥ ५३ ॥ रक्ते यक्ष्मण्यपस्मारे तथोन्मादे शिरोग्रहे ॥ योनिदोषे रजोदोषे शुक्रदोषे स्वरामये ॥ ५४ ॥ एतत्स्मृतिकरं वृष्यं वाजीकरणमुत्तमम्॥ पुत्रदं बलवर्णाढ्यं विशेषाद्वातनाशनम् ॥ ॥ ५५ ॥ पानभोजननस्येषु न क्वचित्प्रतिहन्यते ॥ विदारीघृतमित्युक्तं रसायनमनुत्तमम् ॥ ५६ ॥

विदारीकंद, अडूसा, जुही, बिजोरा, भूतृण, पाखानभेद, कस्तूरी, साँभरनोन, दरियाई नोंन, चीता, पुनर्नवा, वच, रासना, खिरैटी, गगेरन, कसेरू, भसींडा, सिंघाडे, भुँई आमला, स्थिरादि गण, रामसर, ईख, डाभ, कुशा और काँस, ये प्रत्येक पदार्थ आठ आठ तोले लेकर १६ सोलह सेर जलमे पकावै, जब चौथा भाग जल शेष रहै तब उसमें एक सेर घी, शतावर तथा आमलोंका ६४ तोले स्वरस, चौवीस तोले बूरा और मुलहठी, पीपल, दाख, कंभारी, फालसे, इलायची, धमासा, रेणुक, केसर, नागकेसर और जीवनीयगणकी आठो औषधि ये प्रत्येक एक एक तोला और दो सेर दूध ये सब डालकर मंद मंद अग्निसे धीरे धीरे पकावै तो यह विदारी घृत सिद्ध होताहै । यह घृत सब प्रकारके मूत्राघात, विशेषकरकै पित्तसे हुए मूत्राघात, शर्करा, पथरी, शूल, रुधिरविकारसे हुए शूल, हृदयरोग, पित्तसे हुआ गुल्म, पित्तज वातरक्त, खाँसी, श्वास, क्षत, धनुष चढानेसे कर्षित हुए तथा स्त्रीप्रसंग करनेसे कर्षित हुए, तृषा, वमन, मनकी पीडा, कंप, रुधिरकी वमन, क्षयरोग, अपस्मार, उन्माद, शिरोग्रह, योनिदोष, रजके दोष, वीर्यके दोष और स्वरभंग आदि स्वरके रोग, इन सब रोगोंमें हितकारी है । यह घी स्मृतिको बढानेवाला, वृष्य, उत्तम वाजीकरण, पुत्रदायक, बलवर्णकर्ता, और विशेषकरकै वातविनाशक है और पीनेमें, खानेमें तथा नस्यमे सर्वत्र उपयोगी है और उत्तम रसायन है ॥ ४५–५६ ॥

पिष्ट्वाखुमूलमुष्णेन चारनालेन पेष्यते ॥ बद्धमूत्रं निहन्त्याशु तथैव करभीभवम् ॥ ५७ ॥ स्त्रीणामतिप्रसङ्गेन शोणितं यस्य रिच्यते॥ मैथुनोपरमश्चास्य बृंहणीयो विधिर्हितः ॥ ५८ ॥ ताम्रचूडवसातैलं हितं चोत्तरवस्तिषु ॥स्वगुप्ताफलमृद्वीकाकृष्णेक्षुरसितारजः ॥ ५९ ॥ समांशमर्द्धभागानि क्षीरक्षौद्रघृतानि च ॥ सर्वं सम्यग्विमथ्याक्षमात्रं लीढ्वा पयः पिबेत्॥ ६०॥ हन्ति शुक्रक्षयोत्थांश्च दोषान्वन्ध्यासुतप्रदम् ॥

मूसाकानीकी जडको अथवा सफेद अरनीकी जडको पीसकर उष्ण आरनाल (काँजी) से पिये तो मूत्रका अवरोध तत्काल दूर होताहै । अथवा जिसके अत्यंत मैथुन करनेसे मूत्रमें रुधिर आवै उसको मैथुनसे रोककर धातुको बढानेवाले उपाय करै पश्चात् मुरगेकी चरबी और तेलसे उत्तरवस्ति देवै यह अत्यत हितकारी है । अथवा कौंछके बीज, दाख, काली ईखका रस और काली मिट्टी इनको समान भाग लेवै और दूध, सहत तथा घी इनका आधा भाग लेवै, सबको मिलाकर एक तोलाभर खाय और ऊपरसे दूधको पिये तो इससे वीर्यके क्षयसे उत्पन्न हुई पीडा नष्ट होतीहै और वंध्या स्त्रीको पुत्रकी प्राप्ति होतीहै ॥ ५७–६० ॥

### अथ क्षौद्रार्द्धभागघृतम् ।

क्षौद्रार्द्धभागः कर्तव्यो भागः स्यात्क्षीरसर्पिषोः ॥ ६१ ॥ शर्करायाश्च चूर्णं च द्राक्षाचूर्णं च तत्समम् ॥ स्वयंगुप्ताफल-

श्चैव तथैवेक्षुरकस्य च ॥ ६२ ॥ पिप्पलीनां तथा चूर्णं समभागं प्रदापयेत् ॥ तदेकध्यं समानीय खल्लेनातिविमथ्य च ॥ ६३ ॥ तस्य पाणितलं चूर्णं लिहेत्क्षीरं ततः पिबेत् ॥ एतत्सर्पिः प्रयुञ्जाना योनिदोषात्प्रमुच्यते ॥ ६४ ॥

एक भाग दूध, एकभाग घी, आधाभाग सहत, एक भाग मिश्री, दाख, कौंछके बीज, तालमखाना और पीपल, ये एक एक भाग लेवे । इनको एकत्र करके रईसे भलीभाँति मथकर इसमेंसे एक तोला घी चाटै और उसके ऊपर दूध पिये । इस घीको सेवन करनेवाली स्त्री योनिके दोषसे मुक्त होतीहै ॥ ६१–६४ ॥

### अथ वर्तिः ।

कर्पूररसजा युक्ता वस्त्रवर्तिः शनैःशनैः ॥ मेढ्रमार्गान्तरे न्यस्ता मूत्राघातं व्यपोहति ॥ ६५ ॥

वस्त्रको कपूरके चूर्णसे भलीभाँति लपेटकर लिंगके मार्गमें रक्खे तो इससे मूत्राघात नष्ट होताहै ॥ ६५ ॥

### अथातिदेशः ।

मूत्रकृच्छ्राश्मरीरोगे भेषजं यत्प्रकीर्तितम् ॥ मूत्राघातेषु कृच्छ्रेषु तत्कुर्याद्देशकालवित् ॥ ६६ ॥

इति मूत्राघाताधिकारः ।

मूत्रकृच्छ्रमें जो औषधि कही है तथा पथरीरोगमें जो औषधि कही है वे सब औषधि देशके तथा कालके अनुसार मूत्राघात और मूत्रकृच्छ्ररोगमें देवै ॥ ६६ ॥

इति मूत्राघाताधिकारः समाप्तः ।

## अथाश्मर्यधिकारः ।

### तत्राश्मरीनिदानम् ।

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजा मता ॥ प्रायः श्लेष्माश्रयाः सर्वा अश्मर्यः स्युर्यमोपमाः ॥ १ ॥

श्लेष्माश्रयाः श्लेष्मसमवायिकारणाः शुक्रजां विना शुक्रजायास्तु शुक्रस्यैव समवायिकारणत्वात् अन्ये तु शुक्राश्मर्यामपि कफकारणत्वमिच्छन्ति । प्रायःशब्दश्च मात्रविशेषार्थः । यमोपमाः चिकित्सां विना ॥

वात, पित्त और कफसे, ऐसे तीनप्रकारकी और चौथीपथरी वीर्यसे होतीहै । वीर्यसे हुई पथरीको छोडकर शेष तीनों प्रकारकी पथरी अधिक करके कफाश्रयसे होतीहैं और वीर्यसे हुई पथरीमें वीर्यही कारण है । कोई कोई वैद्य तो वीर्यसे हुई पथरीमेंभी कफको कारण मानतेहैं । सर्वप्रकारकी पथरी विना चिकित्साके अवश्य यमरूप ( मृत्युकर्ता ) होजातीहैं ॥ १ ॥

### अथाश्मरीसम्प्राप्तिः ।

विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ॥ यदा तदाश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥ २ ॥

यदा पवनो वस्तिगतं सशुक्रं मूत्रं सपित्तं कफं वा शोषमुपनयेत्तदाऽश्मरी भवति क्रमेण क्रमशो वर्द्धमाना । यथा गोपित्तेषु रोचना इव इति अन्वयः । तस्याः अनेकदोषाश्रयत्वमाह । नैकदोषाश्रयाः सर्वाः ॥

जब वायु मूत्राशयमें रहनेवाले वीर्यसहित मूत्रको अथवा पित्त सहित कफको सुखातीहै तब पथरी उत्पन्न होतीहै, यह पथरी जिसप्रकार गायके पित्तमें गोरोचन बढताहै उसीप्रकार अनुक्रमसे बढतीहै । सब प्रकारकी पथरी अनेक दोषोंके समागमसे होतीहैं ॥ २ ॥

### अथाश्मरीपूर्वरूपम् ।

वस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ॥ मूत्रे बस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ ३ ॥

बस्तः छगलकः ॥

जब पथरी होनेको होतीहै तब मूत्राशयमें अफारा, मूत्राशयके चारोंओर अत्यन्त पीडा, मूत्रमें बकरेके

मूत्रकी दुर्गन्ध, मूत्रकृच्छ्र, ज्वर और अरुचि ये लक्षण होतेहैं ॥ ३ ॥

## अथाश्मरीसामान्यलक्षणम् ।

**सामान्यलिंगं रुङ्नाभिसेवनीवस्तिमूर्द्धसु ॥ विशीर्णधारं मूत्रं स्यात्तया मार्गनिरोधने॥ ॥ ४ ॥ तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ॥ तत्संक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ॥ ५ ॥**

**वस्तिमूर्द्धा नाभेरधोदेशः, विशीर्णधारं सविच्छेदधारम्, तया अश्मर्या । मार्गः मूत्रवाहिस्रोतः । तद्व्यपायात्कदाचिद्वायुना अश्मर्या मूत्रमार्गादन्यत्र गमनात्सुखं मेहेन्मूत्रयेद्गोमेदकोपमं गोमेदको मणिः किञ्चिल्लोहितः तद्वर्णम् । तत्संक्षोभात्तस्याः अश्मर्याः सञ्चाराद्घर्षणेन मूत्रवह स्रोतसि क्षते जाते सास्रं सरक्तं मेहेत् । आयासात्प्रवाहनादिजनितात् ॥**

पथरी हुई होय तो नाभिमें, सीमनमें तथा नाभिसे नीचेके प्रदेशमें पीडा होतीहै, पथरीसे मूत्रके वहन करनेवाले स्रोतोका रोध होनेपर मूत्रकी धार बीचमेंही कटजाती है, किसी समय वायुसे पथरी मूत्रके मार्गसे अन्यस्थानको चलीजातीहै तब गोमेद मणिके सदृश वर्णवाला स्वच्छ मूत्र सुखसे उतरताहै, पथरीके सचारसे मूत्रका मार्ग घिसकर मूत्र रुधिरयुक्त उतरताहै और अत्यत पीडा होतीहै ॥ ४ ॥ ५ ॥

## अथ वातोल्वणाश्मरीलक्षणम् ।

**तत्र वाताद्भृशं चार्तो दन्तान्खादति वेपते ॥ मृद्नाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ॥ ६ ॥ सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः ॥ श्यावा रूक्षाश्मरी सा स्यात्सञ्चिता कण्टकैरिव ॥७॥**

पथरीमे यदि वायुकी उल्वणता होय तो मनुष्य अत्यत पीडायुक्त होताहै, तथा दाँतोको चबावै, काँपता है, लिंग तथा नाभिको दबावै और निरतर पीडासे चिल्लाताहै और अधोवायुके साथ विष्ठा आतीहै, बारंबार बूँदबूँद मूततहि । यह पथरी नीली, रूखी और मानों ऊपर कांटे लगे हैं ऐसी होती है ॥ ६ ॥ ७ ॥

## अथ वातोल्वणाश्मरीचिकित्सा ।

**तस्याः पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥ ८ ॥**

पथरीके पूर्वरूप होनेपर स्नेहन आदि प्रयोग करने चाहिये ॥ ८ ॥

## अथ शुण्ठ्यादिकषायः ।

**शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः ॥ काश्मर्यारग्वधफलैः क्वाथं कृत्वा विचक्षणः ॥ रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः ॥ ९ ॥ अश्मरीमूत्रकृच्छ्रघ्नं दीपनं पाचनं परम् ॥ हन्यात्कोष्ठाश्रितं वातं कटयूरुगुदमेढ्रजम् ॥ १० ॥**

सोंठ, अरनी, पाखानभेद, सहँजना, वरना, गोखुरू, कंभारी और अमलतास, इनका क्वाथ करकै उसमें हींग, जवाखार और सैंधानिमक, इनका चूर्ण डालकर पिये तो इससे पथरी, मूत्रकृच्छ्र, कोठेकी वायु तथा कमर, घुँटुने, गुदा और लिंगकी वायु नष्ट होतीहै, अग्नि दीपन होतीहै, और अन्न आदि भलीभाँति पचतेहैं ॥ ९ ॥ १० ॥

## अथैलादिक्वाथः ।

**एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुबूकैः ॥ शृतं पिबेदश्मजतु प्रगाढं सशर्करश्चाश्मरिमूत्रकृच्छ्रे ॥ ११ ॥**

इलायची, पीपल, मुलेठी, पाखानभेद, रेणुक, गोखरू, अडूसा और अण्डकी जड, इनके क्वाथमे शिलाजीतको भलीभाँति पकाकर क्वाथ पियै तो पथरी और मूत्रकृच्छ्र नष्ट होताहै ॥ ११ ॥

## अथ वरुणादिक्वाथः ।

**वरुणस्य त्वचं श्रेष्ठां शुण्ठीं गोक्षुरसंयुताम् ॥ यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धिमम् ॥ अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् ॥ १२ ॥**

वरनाकी छाल, सोंठ, गोखरू, जवाखार और गुड, इनका काथ करके पिये तो वायुकी उल्वणतासे हुई पथरी अधिक कालकी होय तो भी नष्ट होजातीहै ॥ १२ ॥

## अथ पाषाणभेदाद्यघृतम् ।

पाषाणभेदो वसुको वशीरोऽश्मन्तकस्तथा ॥ शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका ॥ १३ ॥ कपोतवङ्कार्तगलकाञ्चनोशीरगुन्द्रकाः ॥ वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम् ॥ १४ ॥ यवाः कुलत्थाः कोलानि कतकस्य फलानि च ॥ ऊषकादिप्रतीवापमेषां क्काथे शृतं घृतम् ॥ भिनत्ति वातसम्भूतामश्मरी क्षिप्रमेव तु ॥ १५ ॥

पाषाणभेद, आककी जड, लाल चिरचिटा, कोविदार, सतावर, गोखरू, भटकटैया, कटेरी, ब्राह्मी, नीलेफूलकी कटसरैया, कचनार, खस, गुन्द्रतृण, वदा, वरना, सागोनके फल, जौ, कुलथी, बेर और निर्मलीफल इनका काथ करके उसम ऊषकादिगणकी औषधि डालकर उस काथमें पकायाहुआ घी खाय तो वायुकी उल्वणतासे हुई पथरी तत्काल नष्ट होजातीहै ॥ १३–१५ ॥

## अथ वीरतरादिगणः ।

क्षारान्यवागूं पेयां च कषायांश्च पयांसि च ॥ भोजनानि प्रकुर्वीत वर्गेऽस्मिन्वातनाशने ॥ १६ ॥ वीरवृक्षोऽग्निमन्थश्च काशवृक्षादनीकुशाः ॥ मोरटेन्दीवरः सूर्यभक्ता गोक्षुरुटुण्टुकाः ॥ १७ ॥ वसुको वशीरो दर्भशैरीयावश्मभेदकः ॥ गुन्द्रो नलः कुरुण्टश्च गणो वीरतरादिकः ॥ ॥ १८ ॥ अश्मरीशर्कराकृच्छ्रमारुतार्तिहरो मतः ॥ वृद्धाते वीरतरस्तदभावे मतः शरः ॥ १९ ॥

[illegible] वातादमरी ।

[illegible], [illegible], [illegible], वादा, [illegible], मोरट ( ईखकी [illegible] ), [illegible], [illegible], [illegible], [illegible], आककी जड, लाल चिरचिटा, डाभ, कटसरैया, पाखानभेद, गुन्द्रतृण, नरसल और कुरण्ट, यह वीरतरादिगण कहाताहै । ये सब औषधि–पथरी, शर्करा, मूत्रकृच्छ्र और वायुके रोगोको नष्ट करैहैं, इस लिये इन औषधियोंमें क्षार, यवागू, पेया, काथ, दूध और भोजन सिद्ध करके देवे तो इससे पथरी आदि वायुसे उत्पन्न हुए रोग नष्ट होजातेहैं ॥ १६–१९ ॥

इति वाताश्मरीचिकित्सा ।

## अथ पित्तोल्वणाश्मरीलक्षणम् ।

पित्तेन दह्यते वस्तिः पच्यमान इवोष्मणा ॥ भल्लातकास्थिसंस्थाना रक्ता पीता सिताश्मरी ॥ २० ॥

पित्तकी उल्वणतासे पथरी हुई होय तो वस्तीमे दाह और अग्निसे पकानेकी सदृश पीडा होतीहै, और पथरी भिलावेकी गुठलीकी सदृश, लाल, पीली, तथा सफेद होतीहै ॥ २० ॥

## अथ पित्ताश्मरीचिकित्सा ।
## तत्र कुशादिघृतम् ।

कुशः काशः शरो गुन्द्र उत्कटो मोरटाश्मभित् ॥ दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥ २१॥ भल्लुकः पाटला पाठा पत्तूरोऽथ कुरुण्टकः ॥ पुनर्नवा शिरीषश्च कथितास्तेषु साधितम् ॥ २२॥ घृतं शिलाह्वमधुकैर्बीजैरिन्दीवरस्य च ॥ त्रपुसैर्वारुकादीनां बीजैश्चावापितं शुभम्॥ भिनत्ति पित्तसंभूतामश्मरीं क्षिप्रमेव च २३ बीजं बीजसारः सरोबीजं वा ॥

कुश, कास, रामसर, गुन्द्रतृण, उत्कट ( एक प्रकारके तृण ) मोरट ( ईखकी जड ), पाखानभेद, डाभ, विदारीकन्द, वाराहीकन्द, शालिपर्णीकी जड, गोखुरू, भिलावे, पाटर, पाढ, पत्तूर, कटसरैया, पुनर्नवा, और सिरस इनके काथमें घी पकावे, उसमें शिलाजीत, मुलेठी, महुएके बीज खीरे और ककडीके बीज इनका चूर्ण डालकर खाय तो इससे तत्काल पित्ताश्मरी नष्ट होतीहै ॥ २१–२३ ॥

क्षारान्यवागूं पेयाश्च कषायांश्च पयांसि च ॥ २४ ॥ भोजनानि च कुर्वीत वर्गेऽस्मिन्पित्तनाशने ॥ शिलाजतु शिलाह्वं स्यात्पटीरो गुत्थगुन्द्रकौ ॥ २५ ॥ मधुकः कृतह्रस्वत्वाद्बीजैर्बीजकमुच्यते ॥ कुर्यात्क्षीरादिकं क्वाथे तस्मिन्क्षेपमवापकैः ॥ वर्गत्वेन यथालाभं परिभाषा प्रवर्तते ॥ २६ ॥

इति पित्ताश्मरी।

पित्तको नष्ट करनेवाला वीरतरादि वर्ग जो ऊपर कहा है उसमे क्षार, यवागू, पेया, कषाय, दूध और भोजन सिद्ध करकै पित्तकी उल्वणतासे हुई पथरीवालेको देवै। वर्गके लिये वैद्यक ग्रथोकी यह परिभाषा है कि—वर्गमें की सब औषधि नहीं मिले तो उनमेंसे जितनी मिले उनकाही उपयोग करै ॥ २४–२६ ॥

## अथ कफोल्वणाश्मरीलक्षणम्।

वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥ अश्मरी महती श्लक्ष्णा मधुवर्णाऽथवा सिता ॥ २७ ॥ एता भवन्ति बालानां तेषामेव तु भूयसाम् ॥ आश्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखाः ॥ २८ ॥

कफकी उल्वणतासे पथरी हुई होय तो नोचने सरीखी पीडा होतीहै और पथरी शीतलता युक्त, भारी, मोटी, सहतके समान वर्णवाली, अथवा सफेद होतीहै। यह पथरी अधिक करकै बालकोंकेही होतीहै, और बालकोके वृद्धिका आश्रय अल्प होताहै इससे बालकोंकी पथरी निकालनेमें सुगम होतीहै ॥ २७॥२८ ॥

## अथ कफाश्मरीचिकित्सा। तत्र वरुणादिघृतम्।

गणे वरुणकादौ तु गुग्गुल्वेलाहरेणुभिः ॥ कुष्ठभद्राह्वमरिचचित्रकैः समुराह्वयैः ॥ २९ ॥ एतैः सिद्धमजासर्पिरूषकादिगणेन वा ॥ भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव च ॥ शठ्यादिस्तेन चात्रेष्टो गणः श्यामादिको बुधैः ॥ ३० ॥

वरुणादि गण (जो नीचे कहा है), गूगल, इलायची, रेणुका, कूट, नीम, काली मिर्च, चीता और देवदार इनको डालकर अथवा ऊषकादि गणकी औषधि डालकर इनमें पकाया हुआ बकरीका घी खाय तो कफकी उल्वणतासे हुई पथरी तुरत नष्ट होजातीहै। शठ्यादि गणके क्वाथमें अथवा श्यामादि गणके क्वाथमें घी पकाकर उसका उपयोग करनेसे भी कफकी उल्वणतासे हुई पथरी नष्ट होतीहै ऐसा पंडितोने माना है ॥ २९ ॥ ३० ॥

## अथ वरुणादिगणः।

वरुणार्तगलौ शिग्रुस्तर्कारी नक्तमालकौ ॥ मोरटारणिबिल्वाश्च बिम्बीवसुकचित्रकाः ॥ ३१ ॥ शैरीयो वशिरः क्षौद्रमजशृङ्गी शतावरी ॥ दर्भौ बृहतिका व्याघ्री मुनिभिः परिकीर्तितः ॥ ३२ ॥ वरुणादिगणो ह्येष कफमेदोनिवारणः ॥ विनिहन्ति शिरःशूल गुल्माभ्यन्तरविद्रधीन् ॥ ३३ ॥

वरना, झिटी, सहँजना, तर्कारी (जैंती), करज, ईखकी जड, अरनीं, वेल, कुदरू, आककी जड, चीता, शैरेय (कटसरैया), लाल चिरचिटा, सहत, मेंढासिगी, शतावर, डाभ, भटकटैया और बडी भटकटैया, इन औषधियोंको वरुणादिगण कहतेहैं, यह वरुणादि गण—कफ तथा मेदाको निवारण करे है और मस्तकशूल, गुल्म तथा भीतरके विद्रधिको नष्ट करैहै ॥ ३१–३३ ॥

क्षारान्यवागूं पेयां च कषायांश्च पयांसि च ॥ भोजनानि च कुर्वीत वर्गेऽस्मिन्कफनाशने ॥ ३४ ॥

कफको नष्ट करनेवाले इस वर्गमें क्षार, यवागू, पेया, कषाय, दूध तथा भोजनको सिद्ध करकै कफके रोगोमें देवै ॥ ३४ ॥

## अथ शुक्राश्मरीनिदानम्।

शुक्राश्मरी तु महती जायते शुक्रधारणात् ॥

अव्ययानामनेकार्थत्वात्तुशब्दोऽत्र अवधारणार्थः तेन महतामेव न तु बालानां वक्ष्य-

माणसम्प्राप्तिरसम्भवान्नतु शुक्राभावो वाच्यः शुक्रधारणाच्छुक्रवेगागमस्य धारणात् ॥

वीर्यकी पथरी अधिक अवस्थावालोंके ही होतीहै, बालकोंके नहीं होती. यद्यपि बालकोंके भी वीर्य होताहै तो भी शुक्राश्मरीकी जो सम्प्राप्ति कहेंगे वह बालकोंके होनी असम्भव है इसलिये बालकोंके वीर्यकी पथरी होतीही नहीं । स्थानसे भ्रष्ट होकर प्रवर्ते हुए वीर्यके रुकनेसे वीर्यकी पथरी होजातीहै ।

अथ शुक्राश्मरीसंप्राप्तिः ।

स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥ शोषयित्वोपसंहृत्य शुक्रं तच्छुक्रमश्मरी ॥ ३५ ॥

अनिलः मैथुनवेगेन स्थानाच्च्युतं शुक्रं मैथुनवेगनिवारणेन धृतं शुक्रं मुष्कयोः मेढ्रसहितयोः मेढ्रवृषणयोरंतर इति सुश्रुतवचनात्तेन मेढ्रवृषणमध्यगतवस्तिमुखे उपसंहृत्य एकीकृत्य शोषयति तच्छुक्राश्मरी तथाभूतं शुक्रमेवाश्मरी ॥

मैथुनका वेग होनेपर स्थानसे पतित हुए और पीछे मैथुनका वेग शांत होनेपर नहीं निकले हुए वीर्यको वायु लिंगके तथा अंडकोषोंके मध्यमें मूत्राशयके मुखपर एकत्रकरके सुखादेताहै तब वह वीर्य पथरीरूप होजाताहै ॥ ३५ ॥

अथ शुक्राश्मरीलक्षणम् ।

वस्तिरुक्कृच्छ्रमूत्रत्वमुष्कश्वयथुकारिणी ॥ तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥ पीडिते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा ॥ ३६ ॥

तस्यां शुक्राश्मर्याम् उत्पन्नमात्रायां यदा सा कथमपि विलीयते विलयं याति तदा शुक्रम् एति मूत्रमार्गात् प्रवर्तते । पीडिते तु अवकाशेऽस्मिन् । तुशब्दोऽवधारणे तेन अस्मिन्नेव अवकाशे स्थाने मेढ्रवृषणयोरन्तरे पीडिते सति सा विलीयते अन्तर्लीना भवति । अवस्थाभेदात् अश्मरी शर्करा सिकता भवतीति आह—'अश्मर्येव च शर्करा' । चकारात् सिकता च भवति शर्करासिकतयोश्च भेदो महत्त्वाल्पत्वाभ्यां बोद्धव्यः ॥

वीर्यकी पथरी होते ही मूत्राशयमें पीडा, बूँद बूँद मूत्रका उतरना और अंडकोषोंमें सूजन होतीहै । लिंग और अंडकोषोंका मध्यभाग दबानेसे यह पथरी भीतर लीन होजातीहै, इसप्रकार जब लीन होजातीहै तब ही मूत्रके मार्गसे वीर्य प्रवर्तताहै, जिस वीर्यकी पथरी होतीहै वह अपनी स्थितिके भेदसे शर्करारूप तथा रेतीरूप होजाताहै । वीर्यके कण मोटे होयँ तो शर्करारूप और सूक्ष्म होयँ तो रेतेकी समान होताहै ॥ ३६ ॥

अथ शुक्राश्मर्याः शर्करारूपत्वमाह ।

सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते ॥ ३७ ॥

सा अश्मरी ॥

इस वीर्यकी पथरी जब वायुसे बिखर जातीहै तब शर्करा कहातीहै ॥ ३७ ॥

अथ शर्करानिःसरणावरोधकारणम् ।

अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे ॥ निरेति सह मूत्रेण प्रतिलोमे विबध्यते ॥ मूत्रस्रोतःप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥ ३८ ॥

अश्मरी तस्मिन् आश्रये सा शर्करा सक्ता लग्ना सती ॥

वायुसे बिखर २ कर टुकडे टुकडे रूप यह पथरी वायुके सीधे चलनेसे मूत्रके साथ निकलतीहै और वायु उलटा चले तब रुकतीहै । मूत्रके मार्गमें प्रवर्तकर अनेक उपद्रवोंको करती है ॥ ३८ ॥

अथाश्मर्युपद्रवाः ।

दौर्बल्यं सदनं कार्श्यं कुक्षिरोगमथारुचिम् ॥ पाण्डुत्वमुष्णवातश्च तृष्णां हृत्पीडनं वमिम ॥ ३९ ॥

उष्णवातं मूत्राघातविशेषणम् ॥

शर्करासे दुर्बलता, ग्लानि, शरीर कृश, कूखमें पीडा, अरुचि, पाण्डुता, उष्णवात ( मूत्राघात ), तृषा, हृदयमें पीडा और वमन होतीहै ॥ ३९ ॥

## अथाश्मरीशर्करारिष्टम्।

प्रसूननाभिवृषणं बद्धमूत्रं रुजातुरम् ॥ अश्मरी क्षपयत्याशु शर्करा सिकतान्विता ॥ ४० ॥

शर्करा सिकतेति नामद्वयमन्वर्थम् ॥

जिसकी नाभि और अडकोष सूजजायँ, मूत्र रुक रहा हो और पीडासे व्याकुलता हो, तो वह मनुष्य तत्काल मरजाताहै। वीर्यकी पथरी ही शर्करारूप होजाय तो शर्करा और रेतरूप होजाय तो सिकता कहातीहै ॥ ४० ॥

## अथाश्मरीचिकित्सा।

शुक्राश्मर्यान्तु सामान्यो विधिरश्मरिनाशनः ॥ यवक्षारगुडोन्मिश्रं रसं पुष्पफलोद्भवम् ॥ ४१ ॥ पिबेन्मूत्रविबन्धघ्नं शर्कराश्मरिनाशनम् ॥ तिलापामार्गकदलीपलाशयवबिल्वजः ॥ ४२ ॥ क्राथः पेयोऽविमूत्रेण शर्कराश्मरिनाशनः ॥ केबुकांकोलकतकशाकेन्दीवरजैः फलैः ॥ पीतमुष्णाम्बु सगुडं शर्करां पातयत्यधः॥ ॥ ४३ ॥ पाषाणभिद्गोक्षुरकोरुबूकौ द्वौ कण्टकार्यौ क्षुरकाह्वमूलम् ॥ दध्ना पिबेत्क्षीरसुपिष्टमेतत्स्याद्भेदनार्थं सिकताश्मरीणाम् ॥ ४४ ॥ यः पिबेद्रजनीं सम्यक् सगुडां तुषवारिणा ॥ तस्याशु चिरगूढापि यात्यस्तं मेढ्रशर्करा ॥ ४५ ॥ पिबतः कटजं दध्ना पथ्यमन्नञ्च खादतः॥ निपतत्यचिरात्तस्य नियतं मेढ्रशर्करा ॥ ॥ ४६ ॥ त्रापुसबीजं पयसा पीतं वा नालिकेलजं कुसुमम्। विण्मूत्रशर्करायां भवति सुखी कतिपयैर्दिवसैः ॥ ४७ ॥ श्वदंष्ट्रा वरुणः शुण्ठी क्वाथं क्षौद्रयुतं पिबेत् ॥ शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रहरं परम् ॥ ४८ ॥ कूष्माण्डकरसो हिंगुयवक्षारसमायुतः ॥ वस्तौ मेढ्रे च शूलघ्नो मूत्रकृच्छ्रहरस्तथा ॥ ४९ ॥ पुनर्नवाऽयोरजनीश्वदंष्ट्राफलप्रवालश्च सदर्भपुष्पः ॥ क्षीराम्रमद्येक्षुरसप्रविष्टो हितो भवेदश्मरिशर्करासु ॥ ५० ॥ वरुणत्वक्छिलाभेदशुण्ठीगोक्षुरकैः कृतः ॥ कषायः क्षारसंयुक्तः शर्कराश्च भिनत्त्यपि ॥ ५१ ॥

जो अन्य पथरियोंकी चिकित्सा कही है वह भी शुक्राश्मरीमे करै। अथवा नारियलके रसमे जवाखार तथा गुड मिलाकर पियै तो इससे मूत्रकी रुकावट, पथरी तथा शर्करा नष्ट होजातीहै। वा तिल, चिराचिटा, केला, ढाक, जौ और बेल, इनका क्राथ करकै बकरीके मूत्रके साथ पिये तो शर्करा तथा शुक्राश्मरीका नाश होताहै। सुपारी, अंकोल, निर्मलीके फल, सागोनके फल और कमलगट्टे इनका क्राथ करकै गुड डालकर पिये तो शर्करा नष्ट होतीहै। पाखानभेद, गोखुरू, एरडकी जड, छोटी और बडी कटेरी तथा तालमखाने इनको दूधमे पीसकर दहीमें डालकर खाय इससे पथरी तथा शर्करा नष्ट होजातीहै। अथवा हलदीको गुडके साथ भली भाँति मिलाकर तुषोदकके साथ पियै तो इससे अधिक कालकी पथरी भी नष्ट होजातीहै। कुडेकी छालके कल्कको दहीमे डालकर पियै और पथ्य अन्न खाय तो शर्करा अवश्य नष्ट होजाती है। खीरेके बीजोंको अथवा नारियलके फूलोंको पीसकर दूधमें डालकर पिये तो मूत्रसे पीडित तथा शर्करासहित मनुष्य किंचित् दिनोंमें सुखी होताहै। गोखरू, बरना और सोंठ इनका क्राथ करकै सहत डालकर पियै तो इससे पथरी, शर्करा, शूल तथा मूत्रकृच्छ्र भली भाँति नष्ट होताहै। अथवा पेठेके रसमें हींग, तथा जवाखार डालकर पिये तो इससे मूत्राशयकी पीडा, लिंगका शूल, पथरी तथा मूत्रकृच्छ्र अवश्य नष्ट होताहै। पुनर्नवा, लोहेकी भस्म, हलदी, गोखुरू, मूँगेकी भस्म, और डाभके फूल, इन सबको दूध, आमका रस, मदिरा, और ईखका रस इनमे पीसकर पिये तो इससे वीर्यकी पथरी तथा शर्करा नष्ट होतीहै। अथवा बरनाकी छाल, पाखानभेद, सोंठ और गोखुरू, इनका क्राथ करकै उसमे जवाखार डालकर पिये तो शर्करा नष्ट होजातीहै ॥ ४१-५१ ॥

### अथ तृणपञ्चमूलाद्यघृतम् ।

पञ्चमूल्यास्तृणाख्यायास्तथा गोक्षुरकस्य तु ॥ पृथग्दशपलान्भागाञ्जलद्रोणे विपाचयेत् ॥ ५२ ॥ चतुर्भागावशिष्टेन घृतप्रस्थं विपाचयेत् ॥ गुडगोक्षुरबीजञ्च कल्कं तत्र प्रदापयेत् ॥ ५३ ॥ तत्सिद्धं मूत्रदोषेषु शर्करास्वश्मरीषु च ॥ स्नेहने भोजने चैव प्रयोज्यं सर्पिरुत्तमम् ॥ ५४ ॥

तृणपञ्चमूल और गोखरू, इन प्रत्येकको चालीस चालीस तोले लेकर १६ सेर जलमें पकावे, जब चौथा भाग जल शेष रहै तब उसमें गुड तथा गोखरूका कल्क डाल कर एक सेर घी पकावे । इस उत्तम घीको स्नेहनमें तथा भोजनमें सेवन करै तो इससे मूत्रसंबंधी विकार, पथरी और शर्करा नष्ट होजातीहै ॥ ५२–५४ ॥

### अथ वरुणतैलम् ।

त्वक्पत्रफलमूलस्य वरुणस्य त्रिकण्टकात् ॥ कषायेण पचेत्तैलं वस्तिनास्थापनेन च ॥ शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रात्प्रमुच्यते ॥ ५५ ॥

छाल, पत्ते, फल तथा मूलसहित वरना तथा गोखरू लेकर इनके काथमें पकाये हुए तेलसे निरूह वस्ति देवै तो इससे पथरी, शर्करा, शूल तथा मूत्रकृच्छ्र नष्ट होता-है ॥ ५५ ॥

### अथ कुशाद्यतैलम् ।

कुशाग्निमन्थशैरेयनलदर्भेक्षुगोक्षुराः ॥ कपोतवंकावसुकवशीरेन्दीवरीशराः ॥ ५६ ॥ धातक्यरलुवन्दाकाः कणपूराश्मभेदकाः ॥ एषां कल्ककषायाभ्यां सिद्धं तैलं प्रयोजयेत् ॥ ५७ ॥ पानाभ्यञ्जनयोगेन वस्तिनोत्तरवस्तिना ॥ शर्कराश्मरिरोगेषु मूत्रकृच्छ्रे च दारुणे ॥ ५८ ॥ प्रदरे योनिशूले च शुक्रदोषे तथैव च ॥ वन्ध्यागर्भप्रदं प्रोक्तं तैलमेतत्कुशादिकम् ॥ ५९ ॥

कुशा, अरणी, पियावासा, नरसल, डाभ, ईख, गोखरू, ब्राह्मी, आककी जड, लाल चिरचिटा, सतावर, रामसर, आमला, अरलू, बॉंदा, सिरस और पाखानभेद, इनके काथसे पकायाहुआ तेल कुशाद्यतैल कहाता-है । इस तेलको पीनेमे, अभ्यंगमें, वस्तिमें और उत्तर-वस्तिमें उपयोग करै तो इससे शर्करा, पथरी, दारुण मूत्रकृच्छ्र, प्रदर, योनिशूल और वीर्यके दोष नष्ट होजातेहैं. यह तेल वन्ध्याओंको गर्भदायक है ॥ ५६–५९ ॥

### अथाश्मरीणां सामान्यचिकित्सा ।

नागरवरुणगोक्षुरपाषाणभित्कपोतवंकजः क्राथः ॥ गुडयवशूकविमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ ६० ॥ त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् ॥ अविक्षीरेण सप्ताहं पेयमश्मरिनाशनम् ॥ ॥ ६१ ॥ पिबेद्वरुणजं मूलं क्राथं तत्कल्कसंयुतम् ॥ क्राथः शिग्रुमलोत्थश्च कटूष्णोऽश्मरिनाशनः ॥ ६२ ॥ शृङ्गवेरयवक्षारपथ्याकालीयकान्वितः ॥ दधिमण्डो भिनत्युग्रामश्मरीमाशु पानतः ॥ ॥ ६३ ॥ पाषाणभेदवरुणगोक्षुरककपोतवंकजः क्राथः ॥ गिरिजतुगुडप्रगाढः कर्कटिकात्रपुसबीजयुतः ॥ ६४ ॥ पयोऽश्मरीमवश्यं दुर्भेदामपि भिनत्ति योगवरः ॥ शिखरिणमिव शतकोटिः शतमन्योर्हस्तनिर्मुक्तः ॥ ६५ ॥ श्रीकारिणीफलबीजं पिष्टं मथितेन यः पुमानद्यात् ॥ शाकमशितमथवास्या हन्यादश्मरी भवौ पीडाम् ॥ ६६ ॥ श्वदंष्ट्रैरण्डबीजानि नागरं वरुणत्वचः ॥ एतत्क्राथवरं प्रातः पिबेदश्मरिनाशनम् ॥ ६७ ॥ रक्तोद्भवे सूक्ष्ममृणालतालकाशेक्षुनालेक्षुकुशोदकानि ॥ पिबे-

त्सिताक्षौद्रयुतानि खादेद्विदारिमिक्षुत्रपुसानि चैव ॥ ६८ ॥ पलान्यष्टौ तु कुर्वीत क्षाराणां वरुणत्वचम् ॥ तद् यावशूकन्तु ततोऽप्यर्द्धं गुडात्स्मृतम् ॥ ६९॥ एकीकृत्य विमृद्यैतत्खादेत्कर्षप्रमाणतः ॥ घर्माम्बुपानतोऽवश्यं कृच्छ्राश्मरिविनाशनम् ॥ ७० ॥

सोठ, वरना, गोखरू, पाखानभेद और ब्राह्मी इनका क्वाथ करकै उसमें गुड तथा जवाखार डालकर पिये तो इससे उग्र पथरी भी नष्ट होजातीहै। अथवा गोखरूके बीजोका चूर्णकर सहतमे मिलावे और सात दिनतक बकरीके दूधके साथ पिये तो इससे पथरीका नाश होताहै। वरनाकी जडका क्वाथ करकै उसमें वरनेकी जडकाही कल्क डालकर पियै तो इससे पथरीका नाश होताहै। सहँजनेकी जडका क्वाथ करकै किञ्चित् उष्ण पिये तो इससे पथरी दूर होतीहै। अदरख, जवाखार, हरड, और दारुहलदी, इनका चूर्णकर दहीके मडके साथ पिये तो उससे भयंकर पथरी भी तत्काल नष्ट होजातीहै। अथवा पाखानभेद, वरना, गोखरू और ब्राह्मी, इनका क्वाथ करकै उसमें शिलाजीत तथा गुडको भलीभाँति मिलावै और ककडी तथा खीरेके बीजोका कल्क डालकर पिये तो इस उत्तम उपायसे जो पथरी किसीसे न भिदै वह भी अवश्य भिदजातीहै। जिस प्रकार इन्द्रके हाथमे से निकला हुआ वज्र पर्वतोंको भेद डालताहै तिसी प्रकार यह योग पथरीको भेद डालताहै। अथवा श्रीकरिणी (अरणी) के फलोंके बीजोंको विना पानी पडे तक्र (मठे) में पीसकर खाय, अथवा इसके शाकको खाय तो इससे पथरीकी पीडा दूर होजातीहै। गोखरू, एरडके बीज, सोंठ और वरनाकी छाल, इनका उत्तम क्वाथ करकै प्रातःकाल पिये तो इससे पथरीका नाश होताहै। अथवा पथरीसे मूत्रमें रुधिर देखनेमें आवै तो सूखे हुए कमलकी नाल, ताडका फल, कॉस, ईख, वाली ईख और डाभ, इनको पानीमें पीसकर उसमें सहत तथा मिश्री डालकर पिये और विदारीकद, ईख, तथा खीरेका भक्षण करै। वरनाकी छालका बत्तीस (३२) तोले खार, सोलह तोले जवाखार और आठ तोले गुड, इनको एकत्र कर इसमेंसे एक तोला खाय और ऊपरसे गरम जल पिये तो इससे मूत्रकृच्छ्र तथा पथरीका नाश होताहै ॥ ६०-७० ॥

## अथ वरुणाद्यचूर्णम् ।

वरुणकभस्मपरिस्रुतसलिलं तच्चूर्णयावशूकयुतम् ॥ क्वथनीयं तत्तावद्यावच्चूर्णत्वमायाति ॥ ७१ ॥ तद्गुडयुक्तं हन्यादुदारामश्मरीं घोराम् ॥ प्लीहानं गुल्मवरं श्रोण्यां कुक्षौ रुजां तीव्राम् ॥ ७२ ॥ आमचयं वस्तिगदान्कृच्छ्रं वा वातजं घोरम् ॥ वह्निसदनं सुकष्टमश्ममयीमश्मरीश्चाशु ॥ ७३ ॥

वरनेकी भस्म करकै उस भस्मको पानीमें डाले और वस्त्रमें डालकर नितारे, पश्चात् उस नितरे हुए पानीको जवाखारके चूर्णसे मिश्रित करकै तबतक पकावै जबतक वह सब जलकर चूर्णरूप होय, फिर इस चूर्णको गुडमे मिलाकर खाय तो इससे भयकर पथरी, प्लीहा, गुल्म, कमर तथा पेटकी पीडा, आमका संचय, वस्तिरोग, वायुसे हुआ भयकर मूत्रकृच्छ्र, अग्निकी मदता, और पत्थरकी समान कठोरपथरी तत्काल नष्ट होजातीहै ॥ ७१-७३ ॥

## अथ वरुणकगुडः ।

नो जग्धं कृमिभिर्घनं सुतरुणं स्निग्धं शुचिस्थानजं घस्रे पुण्यनिरीक्षिते वरुणकं छित्त्वा तुलां ग्राहयेत् ॥ संगृह्याशु चतुर्गुणासु विपचेत्पादावशेषं जलं तत्तुल्येन गुडेन वै दृढतरे भाण्डे पचेत्तत्पुनः ॥ ७४ ॥ ज्ञात्वैवं घनतां गुडे परिणते प्रत्येकमेषां पलं शुण्ठ्येर्वारुकबीजगोक्षुरकणापाषाणभिच्छीतलाः ॥ कूष्माण्डत्रपुसाक्षबीजकुनटीवास्तूकशोभाञ्जनैर्द्राक्षैलागिरिजाभयाकृमिहृतां चूर्णीकृतानां क्षिपेत् ॥ ७५॥ पथ्याशी प्रतिवासरं गुडममुं युंज्यात्प्रमाणं नरः ॥ खादेत्तस्य समस्तदोषजनिताऽश्मर्यः पतन्ति द्रुतम् ॥ ७६ ॥

# अथ प्रमेहाधिकारः ।

## तत्र प्रमेहनिदानम् ।

**आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसः पयांसि ॥ नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥**

बैठेरहनेका सुख, निद्राका सुख, दही, ग्राम्य जीवोंका मांस, जलचरजीवोंका मांस, जलवाले देशके प्राणियोंका मांस, दूध, नवीन अन्न, नवीन पान, गुड, गुडके विकार (राब आदि) और सम्पूर्ण कफकारी पदार्थ, ये सब प्रमेह होनेके कारण हैं ॥ १ ॥

## अथ प्रमेहसंप्राप्तिः ।

**मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो वस्तिगतं प्रदूष्य ॥ करोति मेहान्ससमुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि ॥ क्षीणेषु दोषेष्ववकृष्य धातून्संदूष्य मेहान्कुरुतेऽनिलश्च ॥ २ ॥**

कफ-मूत्राशयमें रहनेवाली मेदा (चरबी) को, मांसको और शरीरके क्लेदको दूषित करके प्रमेहको उत्पन्न करैहै। उष्ण पदार्थोंसे बढाहुआ पित्तभी सौम्यधातु कफ आदिका क्षय होनेपर उनही मेद आदि पदार्थोंको दूषित करके प्रमेहोंको उत्पन्न करैहै। कफ आदि सब धातु क्षीण होने पर वायु भी प्रमेहको संपादन करनेवाली धातुओंको दूषित करके प्रमेहोंको उत्पन्न करैहै ॥ २ ॥

## अथ प्रमेहसंख्यासाध्यत्वादिकं ।

**साध्याः कफोत्था दश पित्तजाः षट् याप्या न साध्याः पवनाच्चतुष्काः ॥ समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ॥ ३ ॥**

कफसे दशप्रकारके प्रमेह होतेहैं वे साध्य हैं, पित्तसे छः प्रकारके प्रमेह होतेहैं वे याप्य हैं वायुसे चार प्रकारके प्रमेह होतेहैं वे असाध्य हैं। कफसे हुए प्रमेह साध्य इस कारण होतेहैं कि-वे केवल मेदा आदिके दूषित होनेसे होतेहैं, और समक्रियासे नष्ट होतेहैं, पित्तसे हुए प्रमेह याप्य इस कारण हैं कि-वे कफ आदि सौम्य धातुके क्षय होनेपर मेदा आदिके दूषितपनेसे होतेहैं और मधुर तथा रूक्ष आदि विषम क्रियासे नष्ट होतेहैं, वायुसे हुए प्रमेह असाध्य इस कारण हैं कि सम्पूर्ण धातुओंके क्षयसे होतेहैं और शरीरका क्षय करनेवाले हैं ॥ ३ ॥

## अथ प्रमेहदोषदूष्यज्ञानम् ।

**कफश्च पित्तं पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः ॥ मज्जारसौजः पिशितश्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ॥ ४ ॥**

कफ, पित्त और वायु यह दोष हैं और उनसे मेदा, रुधिर, वीर्य, रस, वसा, लसीका, मज्जा तथा ओज और मांस ये दूषित होतेहैं, जो दूषित होतेहैं वे दूष्य कहातेहैं। उपरोक्त प्रमेह वीस प्रकारके हैं ॥ ४ ॥

## अथ प्रमेहपूर्वरूपम् ।

**दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः ॥ दाहश्चिक्कणता देहे तृट् स्वाद्वास्यञ्च जायते ॥ ५ ॥**

प्रमेह होनेवाला होय तो दांत आदिमे मैल, हाथ पावोंमें दाह, शरीरमे चिकनापन, तृषा और मुखमें मीठापन होताहै ॥ ५ ॥

## अथ प्रमेहसामान्यलक्षणम् ।

**सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ॥ दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ॥ ६ ॥**

मूत्रकी अधिकता और मैलापन, यह प्रमेहोंका सामान्य लक्षण है। दोष और दूष्य इनकी विशेषतासे और संयोगकी विशेषतासे मूत्रके वर्ण आदिमें जो अंतर होताहै उससे प्रमेहोंके भेदोंकी कल्पना करी है ॥ ६ ॥

## अथ कफजप्रमेहलक्षणम् ।

**अच्छं बहुतरं शीतं निर्गन्धमुदकोपमम ॥ मेहत्युदकमेहेन किञ्चिच्चाविलपिच्छिलम ॥ ७ ॥ इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ सान्द्रीभवेत्प-**

युंषितं सान्द्रमेहेन मेहति ॥ ८ ॥ सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ॥ ॥ ९ ॥ शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ मूत्राणून्सिकतामेही सिकतारूपिणो मलान् ॥ १० ॥ शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ॥ लालातंतुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ ११ ॥

जो उदकमेह हुआ होय तो स्वच्छ, अधिक सफेद, शीतल, गन्धरहित, पानीकी सदृश, किंचित् गदला और चिकना मूत्र आताहै ( १ ) इक्षुमेह हुआ होय तो ईखके रसके सदृश अत्यन्त मीठा मूत्र होताहै ( २ ) सान्द्रमेह हुआ होय तो मूत्र रात्रिमें धरा हुआ जैसा गाढा होताहै ऐसा आताहै ( ३ ) सुरामेह हुआ होय तो मदिराकी सदृश मूत्र उतरताहै और वह मूत्र रात्रिमें रखे हुए की सदृश ऊपर स्वच्छ और नीचे गाढा होताहै ( ४ ) पिष्टमेह हुआ होय तो चावलोंके धोवनके समान सफेद और अधिक मूततोहै तथा मूत्र करते समय रोमांच होजातेहैं ( ५ ) शुक्रप्रमेह हुआ होय तो वीर्यकी सदृश तथा वीर्य मिला मूत्र आताहै ( ६ ) सिकतामेह हुआ होय तो मूत्रमें रेतीकी सदृश सूक्ष्म और परस्परमें नहीं मिले कफके कण होतेहैं ( ७ ) शीतमेह हुआ होय तो बारंबार मीठा और शीतल मूत्र आताहै ( ८ ) शनैर्मेह हुआ होय तो धीरे धीरे मन्द मन्द मूत्र उतरताहै ( ९ ) और लालामेह हुआ होय तो लारके तन्तुकी समान तारवाला और चिकना मूत्र आताहै ( १० ) ॥ ७-११ ॥

## अथ पित्तजप्रमेहलक्षणम्।

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥ ॥ १२ ॥ नीलमेहेन नीलाभं कालमेही मषीनिभम् ॥ हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ॥ १३ ॥ विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिनः ॥ १४ ॥

क्षारमेह हुआ होय तो जिसमें खारी जलकी सदृश गन्ध, वर्ण, रस और स्पर्श होय ऐसा मूत्र आताहै ( ११ ) नीलप्रमेह हुआ होय तो नीलकी सदृश मूत्र होताहै ( १२ ) कालप्रमेह हुआ होय तो स्याहीकी सदृश श्यामवर्णका मूत्र आताहै ( १३ ) हारिद्रमेह हुआ होय तो हलदीकी सदृश वर्णवाला, दाहयुक्त और तीक्ष्ण मूत्र आताहै ( १४ ) मांजिष्ठ मेह हुआ होय तो कच्चे पदार्थकी सदृश गंधवाला और मजीठके पानी सदृश रंगका मूत्र होताहै ( १५ ) रक्तमेह हुआ होय तो गन्धयुक्त, गरम, खारी और रक्तकी सदृश लाल मूत्र आताहै ( १६ ) ॥ १२-१४ ॥

## अथ वातजप्रमेहलक्षणम्।

वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः॥ मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥ १५ ॥ कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद् बुधः ॥ हस्ती मत्त इवाजस्रं मूत्रवेगविवर्जितम् ॥ सलसीकं विबद्धश्च हस्तिमेही प्रमेहति ॥ १६ ॥

वसामेह हुआ होय तो वारवार चरबीसे मिला और चरबीकी सदृश वर्णवाला होताहै ( १७ ) मज्जामेह हुआ होय तो मज्जासे मिश्रित और मज्जाकी सदृश वर्णवाला मूत्र वारवार आताहै ( १८ ) मधुमेह ( क्षौद्रमेह ) हुआ होय तो कसेला, मीठा, और रूक्ष मूत्र होताहै ( १९ ) और हस्तिमेह हुआ होय तो उन्मत्त हस्तीकी सदृश निरन्तर वेगरहित लसीकासहित और रुकरुक कर मूत्र आताहै ( २० ) ॥ १५ ॥ १६ ॥

## अथ कफजप्रमेहोपद्रवाः।

अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ॥ उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ १७ ॥

यदि कफसे प्रमेह हुआ होय तो खाये हुए अन्नका नहीं पचना, अरुचि, वमन, निद्रा, खांसी और पीनस ये उपद्रव होतेहैं ॥ १७ ॥

## अथ पित्तजप्रमेहोपद्रवाः।

वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः॥

दाहस्तृष्णाम्लको मूर्च्छा विड्भेदः पित्त-जन्मनाम् ॥ १८ ॥

पित्तसे प्रमेह हुआ होय तो मूत्राशय तथा लिंगमें शूल, अण्डकोषोंका फटना, ज्वर, दाह, तृष्णा, खट्टी डकारोंका आना मूर्च्छा और पतले दस्तका होना ये लक्षण होते-हैं ॥ १८ ॥

## अथ वातजप्रमेहोपद्रवाः ।

वातजानामुदावर्तकम्पहृद्ग्रहलोलताः ॥ शूलमुन्निद्रता शोषः श्वासः कासश्च जायते ॥ १९ ॥

यदि वायुसे प्रमेह हुआ होय तो उदावर्त, कंप, हृद-यका रुकना, चपलता, शूल, निद्रासे रहितपना, शोष, श्वास और खांसी ये उपद्रव होतेहैं ॥ १९ ॥

## अथ प्रमेहारिष्टम् ।

यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव च ॥ पिडिकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ २० ॥ मूर्च्छाच्छर्दिज्वरश्वासकासवीसर्पगौरवैः ॥ उपद्रवैरुपेतो यः प्रमेही दुष्प्रतिक्रियः ॥ २१ ॥

प्रमेहयुक्त मनुष्य जो उपरोक्त उपद्रवोंसे घिरा हो, मूत्र अधिक आता हो और पिडका ( फुन्सियों ) ओंसे अत्यत पीडित हुआ होय वह मनुष्य मरजाताहै । अथवा जो प्रमेही मनुष्य मूर्च्छा, वमन, ज्वर, श्वास, खांसी, विसर्प और गुरुता, इन उपद्रवोंसे युक्त होय तो असाध्य जानना ॥ २० ॥ २१ ॥

## अथ स्त्रीणामप्रमेह कारणम् ।

रजः प्रवर्तते यस्मान्मासिमासि विशोधयत् ॥ सर्वाञ्छरीरदोषांश्च न प्रमेहन्त्यतः स्त्रियः ॥ २२ ॥

स्त्रियोंके महीनेके महीने रज प्रवर्तताहै उससे ही शरीरके सब दोष स्वच्छ होजातेहैं, इस लिये स्त्रियोंके प्रमेह नहीं होता ॥ २२ ॥

## अथासाध्यप्रमेहलक्षणम् ।

जातः प्रमेही मधुमेहिनो वा न साध्यरोगः स हि बीजदोषात् ॥ ये चापि केचित्कुलजा विकारा भवन्ति तांश्चापि वदन्त्यसाध्यान् ॥ २३ ॥ सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः ॥ मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति च ॥ ॥ २४ ॥ मधुमेहो मधुनिभो जायते स किल द्विधा ॥ क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथ वा ॥ २५ ॥ आवृतो दोषलिंगानि सोऽनिमित्तं प्रदर्शयन् ॥ क्षीणः क्षणात्क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥ २६ ॥

जिसको जन्मसेही प्रमेह हुआ होय, अथवा माता पिताकी परंपरासे जिसको प्रमेह हुआ हो वह असाध्य है, क्यों कि—यह प्रमेह वीर्यके दोषसे ही उत्पन्न होताहै अन्य भी जो कोई रोग, कुलकी परपरासे प्राप्त हुआ होय वह भी असाध्य है ऐसा विद्वानोंने कहा है । अथवा सब प्रकारके प्रमेह जो अधिक कालतक चिकित्सा विना रहे तो मधुमेह रूप होजातेहैं ये भी असाध्य हैं । मधुमेह दोप्रकारका होताहै वह इस भांति है कि—धातुओंके क्षयसे वायुका कोप होनेपर होताहै, अथवा दोषसे वायुका मार्ग रुकजानेसे होताहै, दोषसे वायुका मार्ग रुकजानेपर वह वायु अकस्मात् दोषोंके चिह्नोंको दिखातीहै और तैसेही क्षणमात्रमें मूत्राशयको खालीकर डाले है तथा क्षणमात्रमे पूर्ण करदेहै, इसीसे प्रमेह कष्टसाध्य होजाताहै ॥ २३–२६ ॥

## अथ मधुमेहशब्दप्रवृत्तौ कारणम् ।

मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति ॥ सर्वेऽपि मधुमेहाख्या माधुर्य्याच्च तनोरतः ॥ २७ ॥

अधिक करके सब प्रमेहोंमें मनुष्य मीठा और मधुकी सदृश मूत्र मूतता है और शरीरमे मधुरता होतीहै, इस लिये सब प्रमेहोंको मधुमेह इस नामसे कहतेहैं ॥ २७ ॥

## अथ प्रमेहोपेक्षाजनितदशपिडिकानां नामस्थानानि ।

शराविका कच्छपिका जालिनी विनताऽलजी ॥ मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २८ ॥ विद्रधिश्चेति

पिडिकाः प्रमेहोपेक्षया दश ॥ सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ २९ ॥

प्रमेहोकी उपेक्षा करनेसे सधियोंमे, मर्मस्थानोंमें और अधिक मांसवाले प्रदेशोंमे दश प्रकारकी पिडिका (फुसी) होतीहैं और वे अनुक्रमसे शराविका, कच्छपिका, जालिनी, विनता, अलजी, मसूरिका, सर्षपिका, पुत्रिणी, विदारिका तथा विद्रधि, इन नामोंसे कही है ॥ २८ ॥ २९ ॥

## अथ दशप्रकारकपिडिकालक्षणम्।

अन्तोन्नता च तद्रूपा निम्नमध्या शराविका ॥ गौरसर्षपसंस्थाना तत्प्रमाणा तु सर्षपी ॥ ३० ॥ सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥ जालिनी तीव्रदाहा तु शिराजालसमावृता ॥ ३१ ॥ अविगाढरुजा क्लेदा पृष्ठे वाप्युदरेऽपि वा ॥ महती पिडिका नीला सा बुधैर्विनता स्मृता ॥ ३२ ॥ महत्यल्पचिता ज्ञेया पिडकापि च पुत्रिणी ॥ मसूरदलसंस्थाना विज्ञेया तु मसूरिका ॥ ३३ ॥ रक्ता सितास्फोटचिता विज्ञेया त्वलजी बुधैः ॥ विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ॥ ३४ ॥

जो पिडिका—अतमे ऊची, मध्यमें नीची हो और मट्टीके सकोरे ( सरइया ) की सदृश हो, उसको शराविका जाननी। जो पिडिका दाह युक्त, तथा कछुएकी पीठकी सदृश होय उसको कच्छपिका जाननी। जो पिडिका तीव्र दाहवाली और सूक्ष्म सूक्ष्म नसोंके जालसे लिपटी हुई होय उसको जालिनी जाननी। जो पिडिका बडी, मोटी, नीलवर्णवाली और पीठ तथा पेटमें हुई होय वह विनता जाननी। जो पिडिका लाल तथा काली होय और अन्य फुसियोंसे व्याप्त होय वह अलजी जाननी। जो पिडिका मसूरकी दालकी बराबर बडी हो वह मसूरिका जाननी। जो पिडिका सफेद सरसोकी समान आकारवाली और इतनीही बडी होय वह सर्पपिका जाननी। जो पिडिका बडी और सूक्ष्म सूक्ष्म फुसियोंसे व्याप्त हो वह पुत्रिणी जाननी। जो पिडिका विदारीकंदकी सदृश गोल होय और कठोर होय वह विदारिका जाननी। जो पिडिका विद्रधिके लक्षणो ( जो आगे कहेंगे ) से युक्त होय वह विद्रधिका जाननी ॥ ३०–३४ ॥

## अथ प्रमेहपिडकादोषनिर्णयः।

ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः ॥ ३५ ॥

जो प्रमेह जिस दोषयुक्त हो उस प्रमेहकी पिडिकाभी उसी दोषवाली होतीहै ॥ ३५ ॥

## अथ प्रमेहमन्तरा पिडिकोत्पत्तिः।

विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ॥ तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ३६

जिस मनुष्यकी मेदा दूषित होय उसके विना प्रमेहभी पिडिका होतीहैं, जबतक इन पिडिकाओंने अपने अपने स्थानको भलीभाँति पकडा न होय तबतक यें पिडिका नहीं दीखतीहैं ॥ ३६ ॥

## अथ पिडिकासाध्यत्वम्।

गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिताः॥ सोपद्रवा दुर्बलाग्नेः पिडिकाः परिवर्जयेत् ॥ ३७ ॥

गुदा, हृदय, शिर, कधा, पीठ, इनके मर्मस्थानोंमे उत्पन्न हुई, उपद्रवयुक्त और मदाग्निवालेके हुई पिडिकाओंकी चिकित्सा नहीं करै ॥ ३७ ॥

## अथ पिडिकोपद्रवाः।

तृट्च्छ्वासमांससंकोचमेहहिक्कामदज्वराः ॥ विसर्पमर्मसंरोधाः पिडिकानामुपद्रवाः ॥ ३८ ॥

तृषा, श्वास, मांसका सकोच, मोह ( बेहोसी ), हिचकी, मद, ज्वर, विसर्प और मर्मस्थानोंका अवरोध ये पिडिकाओंके उपद्रव हैं ॥ ३८ ॥

## अथ प्रमेहपथ्यानि।

श्यामाककोद्रवोद्दालगोधूमाश्चणकास्तथा॥ आढक्यश्च कुलत्थाश्च पुराणा मेहिनां हिताः ॥ ३९ ॥ मेहिनां तिक्तशाकानि जाङ्गला हरिणाण्डजाः ॥ यवान्नविकृतिर्मुद्गाः शस्यन्ते शालिषष्टिकाः ॥४०॥

समा, कोदों, वनकोदो, गेहू, चना, अरहर और कुलथी, यह धान्य यदि पुराने होंयँ तो प्रमेह रोगीको हितकारी हैं । कडवे शाक, जागल देशके हिरन तथा पक्षी, जौके आटेके बने पदार्थ, मूँग, लाल चावल और सांठीके चावल, ये प्रमेह रोगीको हितकारी हैं ॥ ३९ ॥ ४० ॥

### अथ प्रमेहेऽहितवस्तूनि ।

सौवीरकं सुरा तक्रं तैलं क्षीरं घृतं गुडम् ॥
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ४१

सौवीर, मदिरा, तक्र, तेल, दूध, घी, गुड, अम्ल-पदार्थ, ईखका रस, आटेके बने पदार्थ और अनूप देशके जीवोंका मास, इनको प्रमेहरोगी त्याग देवै ॥ ४१ ॥

### अथ प्रमेहचिकित्सा ।

तत्र आदित एव प्रमेहिणमुपस्निग्धमन्यतमेन प्रियंग्वादिसिद्धेन तैलेन वामयेत् प्रगाढं विरेचयेच्च । विरेचनादनन्तरं सुरसादिकषायेण आस्थापयेत् । महौषधभद्रदारुमुस्तावापेन मधुसैन्धवयुक्तेन दह्यमानं वा न्यग्रोधादिकषायेण निस्तैलेन ॥

वातोत्कटेषु मेहेषु स्नेनपानं विशेषतः ॥
पारिजातजयानिम्बवह्निगायत्रिणां पृथक् ॥ ४२ ॥ पाठायाः सागुरोः पीता द्वयस्य शारदस्य च ॥ जलेक्षुमद्यसिकताशनैर्लवणपिष्टकान् ॥ सान्द्रमेहान्क्रमाद्धन्ति क्वाथाश्चाष्टौ समाक्षिकाः ॥ ४३ ॥ हरीतकीकट्फलमुस्तलोध्राः पाठाविडङ्गार्जुनधन्वनाश्च ॥ उभे हरिद्रे तगरं विडङ्गं कदंबशालार्जुनदीप्यकाश्च ॥४४॥ दार्वी विडङ्गः खदिरो धवश्च सुराह्वकुष्ठागुरुचन्दनानि ॥ दार्व्यग्निमन्थौ त्रिफला वचा च पाठा च मूर्वा च तथा श्वदंष्ट्रा ॥ ४५ ॥ वचाह्युशीराण्यभया गुडूची वृषं शिवाचित्रकसप्तपर्णाः ॥ पादैः कषायाः कफमेहविज्ञैर्दशोपदिष्टा मधुसम्प्रयुक्ताः ॥ ४६ ॥ उशीरलोध्रार्जुनचन्दनानामुशीरमुस्तामलकाभयानाम् ॥ पटोलनिम्बामलकामृतानां मुस्ताभयामुष्ककवृक्षकाणाम् ॥ ४७ ॥ लोध्राम्रकालीयकधातकीनां विश्वार्जुनैलानिविषोत्पलानाम् ॥ शिरीषधान्यार्जुनकेशराणां प्रियंगुपद्मोत्पलकिंशुकानाम् ॥ ४८ ॥ अश्वत्थपाठासनवेतसानां कटंकटेर्युत्पलमुस्तकानाम् ॥ पैत्तेषु मेहेषु दशोपदिष्टाः कषाययोगा मधुसम्प्रयुक्ताः ॥ ४९ ॥ कफमेहहरक्काथसिद्धं सर्पिः कफे हितम् ॥ पित्तमेहघ्ननिर्यूहसिद्धं पित्तहरं घृतम् ॥ ५० ॥ कम्पिल्लसप्तच्छदशालजानि वैभीतरोहीतककौटजानि ॥ पटोलकालीयगदागुरूणि क्षौद्रेण लिह्यात्कफपित्तमेही ॥ ५१ ॥ दूर्वाकसेरुपूतीककुम्भीकप्लवशैवलम् ॥ जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥ ॥ ५२ ॥ त्रिफलारग्वधद्राक्षाकषायो मधुसंयुतः ॥ पीतो निहन्ति फेनाभं प्रमेहं नियतं नृणाम् ॥ ५३ ॥ अश्वत्थाच्चतुरंगुलया न्यग्रोधादेः फलत्रयात् ॥ सरक्तसारमञ्जिष्ठाः क्वाथाः पञ्च समाक्षिकाः ॥ ५४ ॥ मधुना त्रिफलाचूर्णमथवाश्मजतूद्भवम् ॥ लोहजं वाभयोत्थं वा लिहेन्मेहनिवृत्तये ॥ ५५ ॥ कटंकटेरीमधुकत्रिफलाचित्रकैः समैः ॥ सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः ॥ ॥ ५६ ॥ फलत्रिकं दारुनिशां विशालां मुस्तां च निष्क्वाथ्य निशांशकल्कम् ॥ पिबेत्कषायं मधुसम्प्रयुक्तं सर्वप्रमेहेषु समुच्छ्रितेषु ॥ ५७ ॥ गोभक्षितान्यवान्मूत्रभावितान्केवलानपि ॥ चित्रितोद्श्विता खादन्निम्बमुद्गरसेन वा ॥ ५८ ॥

**भक्षयीताम्बुना मांसं प्रमेही यवपिष्टकम् ॥ मेदोघ्ना बद्धमूत्राश्च समाः सर्वेषु धातुषु॥यवास्तस्माद्विशिष्यन्ते प्रमेहेषु विशेषतः ॥ ९९ ॥**

जिसको प्रमेह हुआ होय उसको प्रथमसेही प्रियगु आदिसे सिद्ध किये तेलसे स्निग्ध करकै वमन तथा बिरेचन करावै, विरेचन करानेके पीछे सुरसादिक्वाथमें सोंठ, देवदार तथा मोथेका चूर्ण डालकर सहत तथा सैंधा मिलावै और पश्चात् उस क्वाथसे निरूहबस्ति देवै, जो दाह होती होय तो तेल रहित न्यग्रोधादि क्वाथसे निरूहबस्ति देवै। वायुकी अधिकतावाले प्रमेहोंमे विशेष करके स्नेहपान करावै । पारिजात ( फरहद ) का क्वाथ करकै उसमे सहत डालकर पिये तो इससे उदकप्रमेह नष्ट होता है। नीलीदूब अथवा अरनेका क्वाथ करकै उसमे सहत डालकर पिये तो इससे इक्षुमेह नष्ट होता है । नीमका क्वाथकर उसमे सहत डालकर पिये तो इससे सुरामेह नष्ट होताहै । चीतेका क्वाथकर उसमें सहत डालकर पिये तो इससे सिकतामेह दूर होताहै । खैरका क्वाथकर उसमें सहत डालकर पिये तो इससे शनैर्मेह नष्ट होताहै। कालीपाढका क्वाथकर उसमे सहत डालकर पिये तो इससे क्षारमेह नष्ट होताहै । अगरका क्वाथकर उसमें सहत डालकर पिये तो इससे पिष्टप्रमेह नष्ट होताहै । दोनों जातिकी हलदीका क्वाथकरके उसमें सहत डालकर पिये तो इससे सान्द्रप्रमेह नष्ट होताहै। हरड, कायफल, मोथा और लोध, इनका क्वाथ करके उसमें सहत मिलाकर पिये तो इससे कफसबधी प्रमेह नष्ट होताहै । पाढ, वाय विडग, कोह और धमासा इनका क्वाथकरके उसमे सहत डालकर पिये तो इससे कफसबधी प्रमेह नष्ट होताहै। हलदी, दारुहलदी, तगर और वायविडग, इनका क्वाथ करके उसमे सहत डालकर पिये तो इससे कफसबधी प्रमेह नष्ट होताहै। कदव, शाल, कोह और चीता, इनका क्वाथ करके उसमें सहत डालकर पिये तो इससे कफसंबंधी प्रमेह नष्ट होताहै । दारुहलदी, वायविडग, खैर और धाय, इनका क्वाथ करके उसमें सहत डालकर पिये तो इससे कफसंबधी प्रमेह दूर होताहै । देवदार, कूठ, अगर और चन्दन, इनका क्वाथ करके उसमें सहत डालकर पिये तो इससे कफसंबधी प्रमेह नष्ट होताहै। दारुहलदी, अरनी, हरड, बहेडा, आमला और वच, इनका क्वाथ करके सहत डालकर पिये तो कफसंबंधी प्रमेह दूर होता है। अथवा पाढ, मूर्वा और गोखरू इनका क्वाथ करके सहत डालकर पिये तो इससे कफसंबंधी प्रमेह नष्ट होजाताहै। वच, खस, हरड और गिलोय इनका क्वाथ करकै उसमे सहत डालकर पिये तो उससे कफसबधी प्रमेह दूर होताहै । अडूसा, हरड, चीता और सतौना, इनका क्वाथकर उसमे सहत डालकर पिये तो कफसबधी प्रमेह नष्ट होताहै । खस, लोध, कोह और चन्दन, इनका क्वाथकरकै सहत डालकर पीनेसे पित्तसबधी प्रमेह दूर होताहै । अथवा खस, मोथा, आमले और हरड इनका क्वाथ करकै उसमे सहत डालकर पिये तो पित्तसबधी प्रमेह दूर होताहै । परवल, नीम, आमले और गिलोय इनका क्वाथकर उसमे सहत डालकर पियै तो पित्तसबधी प्रमेह नष्ट होताहै । मोथा, हरड और मोखा इनका क्वाथ करकै उसमें सहत डालकर पिये तो इससे पित्तसबधी प्रमेह दूर होताहै। लोध, आमकी छाल, दारुहलदी तथा धाय, इनका क्वाथकरकै सहत डालकर पिये तो पित्तसंबंधी प्रमेह नष्ट होताहै । सोंठ, अर्जुन (कोह), इलायची, अतीस और कमल, इनका क्वाथ करकै सहत डालकर पीनेसे पित्तसंबधी प्रमेह नष्ट होताहै । सिरस, धनियां, कोह और नागकेसर, इनका क्वाथ करकै इसमे सहत डालकर पिये तो इससे पित्तसबधी प्रमेह दूर होताहै। प्रियगु, कमल उत्पल तथा कसूम इनका क्वाथ करकै सहत डालकर पिये तो इससे पित्तसबधी प्रमेह नष्ट होताहै । पीपलकी छाल, पाढ, पीतशाल, तथा वेंत इनका क्वाथ करकै सहत डालकर पिये तो पित्तसबधी प्रमेह दूर होता है। दारुहलदी, उत्पल और मोथा, इनका क्वाथ करकै सहत डालकर पिये तो पित्तसंबंधी प्रमेह दूर होताहै। कफसबधी प्रमेहको नष्ट करनेवाले क्वाथोंसे पकाया हुआ घी कफसबधी प्रमेहको नष्ट करेहै । पित्तसबधी प्रमेहको नष्ट करनेवाले क्वाथोंसे पकाया हुआ घी पित्तसबधी प्रमेहोंको नष्ट करेहै। अथवा कबीला, सतौना, शाल, बहेडा, रोहेडा, कुडेके बीज, परवल, दारुहलदी, कूट और अगर इनका चूर्णकर सहतमें मिलाकर चाटनेसे कफसबधी प्रमेह दूर होताहै। दूब, कसेरु, करज, कायफल, मोथा तथा सिवार इनका क्वाथ पिये तो इससे शुक्रमेह अवश्य दूर होताहै। हरड, बहेडा, आमला, अमलतास और दारु, इनका क्वाथकर उसमें सहत मिलाकर पिये तो फेनोंकी सदृश प्रमेह दूर होताहै । त्रिफला अथवा शिलाजीत वा

हरडोंका चूर्णकर सहतमें मिलाकर खाय तो प्रमेह नष्ट होजाताहै । दारुहलदी, मुलहटी, त्रिफला और चीता, इन सबका काढा पीनेसे सब प्रकारके प्रमेह दूर होतेहैं । अथवा त्रिफला, दारुहलदी, इन्द्रायन, मोथा और हलदी इनका क्वाथ करके सहत डालकर पिये तो सम्पूर्ण प्रमेह नष्ट होतेहैं, इस क्वाथको फलत्रिकादि क्वाथ कहतेहैं । गायके खाये हुए जौंको गोबरमेंसे निकालकर गोमूत्रकी भावना देवे, अथवा विना भावनाकेही चितकबरी गायके उदश्वित् ( आधापानी पडा हुआ मट्ठा ) के साथ अथवा नीमके तथा मूगके रसके साथ खाय तो प्रमेह नष्ट होता है । अथवा एक मासतक पानीके साथ जौके आटेका भक्षण करनेसे प्रमेह नष्ट होजातेहैं, जो प्रमेहको नष्ट करनेवाले, मूत्रको रोकनेवाले और सब धातुओंमें समास्थितिवाले है, इस लिये विशेष करके प्रमेहमें जौ बहुत हितकारी हैं ॥ ४२–५९ ॥

## अथ त्रिकट्वाद्यमोदकः ।

त्रिकटु त्रिफला पाठा मूलं शोभाञ्जनस्य च ॥ ६० ॥ विडंगतण्डुला हिंगु तथा कटुकरोहिणी ॥ बृहती कण्टकारी च हरिद्रे द्वे यवानिका ॥ ६१ ॥ केबुकं शालपर्णी च तथातिविषचित्रकौ ॥ सौवर्चलं जीरकञ्च हपुषा धान्यमेव च ॥ ६२ ॥ एषां कर्षप्रमाणञ्च श्लक्ष्णचूर्णञ्च कारयेत् ॥ यवसक्तुपलानाञ्च नवतिं द्वितयाधिकाम् ॥ ६३ ॥ घृततैलमधूनाञ्च प्रत्येकञ्च पलानि षट् ॥ एभिः कर्षप्रमाणञ्च प्रत्यहं मोदकं सुधीः ॥ भक्षयन्नाशयेदुग्रान्प्रमेहानतिदारुणान् ॥ ६४ ॥

सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, पाढ, सहँजनेकी जड, वायविडगके दाने, हींग, कुटकी, दोनों प्रकारकी कटेरी, हलदी, दारुहलदी, अजवायन, सुपारी, शालपर्णी, अतीस, चीता, कालानोंन, जीरा, हाउबेर और धनिया, इन प्रत्येक पदार्थोंको एक एक तोले लेकर बारीक चूर्ण करके पश्चात् तीनसौ अडसठ ( ३६८ ) तोले जौके सत्तुओंमें यह चूर्ण डालकर चौवीस ( २४ ) तोले घी और चौवीस तोले सहत डाले और एक एक तोलेके लड्डू बनालेवे, इन लड्डुओंमेंसे नित्य एक एक लड्डू खाय तो अत्यत दारुण प्रमेह भी नष्ट होजाताहै ॥ ६०–६४ ॥

## अथ न्यग्रोधाद्यचूर्णम् ।

न्यग्रोधोदुम्बराश्वत्थश्योनाकारग्वधासनम् ॥ आम्रं कपित्थं जम्बूञ्च प्रियालं ककुभं धवम् ॥ ६५ ॥ मधूकं मधुकं लोध्रं वरुणं पारिभद्रकम् ॥ पटोलं मेषशृंगी च दन्ती चित्रकमाढकी ॥ ६६ ॥ करञ्जत्रिफलासक्तुर्भल्लातकफलानि च ॥ एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ ६७ ॥ न्यग्रोधाद्यमिदं चूर्णं मधुना सह योजयेत् ॥ फलत्रयरसं चानु पीत्वा मूत्रं विशुध्यति ॥ ॥ ६८ ॥ एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ॥ प्रशमं यान्ति योगेन पिडिका न च जायते ॥ ६९ ॥

बड, गूलर, पीपल, अरलू, अमलतास, विजैसार, आम, कैथ, जामुन, चिरोंजी, कोह, धाय, महुआ, मुलैठी, लोध, वरुणा, फरहद, परवल, मेढासिगी, दन्ती, चीता, अरहर, हरड, बहेडा, आमला, इन्द्रजौ और भिलावे इनको समान भाग लेकर बारीक चूर्ण करै, इस चूर्णको सहतमें मिलाकर खाय और ऊपरसे त्रिफलेका क्वाथ पियै तो इससे मूत्र शुद्ध होजाताहै, बीसों प्रकारके प्रमेह और सब प्रकारके मूत्रकृच्छ्र शात होजातेहैं तथा प्रमेह पिडिकाभी नहीं होती ॥ ६५–६९ ॥

## अथ लोहादिचूर्णगुडूचीस्वरसौ ।

चूर्णानि लोहत्रिफलासितानां क्षौद्रेण लिह्याच्च पृथक् समं वा । मेहान्समस्तानपि नाशयन्ति पीताः कदाचित्स्वरसा गुडूच्याः ॥ ७० ॥

लोहेकी भस्म, त्रिफला और मिश्री, इनका चूर्ण मिश्रित कर सहतमें मिलाकर चाटे अथवा केवल लोहेकी भस्म, अथवा त्रिफलेके चूर्णको तथा केवल मिश्रीके चूर्णको सहतमे मिलाकर पृथक् पृथक् चाटे तो सब प्रकारके प्रमेह नष्ट होजातेहैं। अथवा केवल गिलोयका स्वरस निकालकर पीनेसे भी प्रमेह नष्ट होजाताहै ॥ ७० ॥

## अथ त्रिकटुगुटिका।

**त्रिकटु त्रिफलातुल्यं गुग्गुलुश्च समांशिकम् ॥ गोक्षुरक्काथसंयुक्तां गुटिकां कारयेद्बुधः ॥ ७१ ॥ दोषकालबलापेक्षी भक्षयेच्चानुलोमिकाम् ॥ न चात्र परिहारोऽस्ति कर्म कुर्याद्यथेप्सितम् ॥ ७२ ॥ प्रमेहान्वातरोगांश्च वातशोणितमेव च ॥ मूत्राघातं मूत्रदोषं प्रदरं चाशु नाशयेत् ॥ ७३ ॥**

सोंठ, मिर्च, पीपल, हरड, बहेडा और आमला, इनका समानभाग चूर्णकर उसमें समानभाग गूगल डाले, पश्चात् गोखरूके क्काथसे इसकी गोली बनालेवे। वायुका अनुलोमन करनेवाली यह गोली दोष काल तथा शरीरके बलको विचारकर खाय तो प्रमेह, वायुसवधी रोग, वातरक्त, मूत्राघात, मूत्रदोप तथा प्रदरका नाश होताहै। यह गोली खानेवाले अपनी इच्छाके अनुसार प्रवर्तै और किसीप्रकारका परहेज नहीं करै ॥ ७१–७३ ॥

## अथ दाडिमाद्यघृतम्।

**दाडिमस्य च बीजानि कृमिघ्नस्य च तण्डुलाः ॥ रजनी चविकाऽजाजी नागरं त्रिफला कणा ॥ ७४ ॥ त्रिकण्टकस्य च फलं यवानी धान्यकं तथा ॥ वृक्षाम्लचविकालोध्रसिन्धूद्भवसमाहितैः ॥ ७५ ॥ कल्कैरक्षसमैरेभिर्घृतप्रस्थं विपाचयेत् ॥ भोज्ये पाने प्रदातव्यं सर्वर्तुषु च मात्रया ॥ ॥ ७६ ॥ प्रमेहान्विंशतिं चैव मूत्राघातं तथाश्मरीम् ॥ कृच्छ्रं सुदारुणश्चैव हन्यादेव न संशयः ॥ ७७ ॥ विबन्धानाहशूलघ्नं कामलाज्वरनाशनम् ॥ दाडिमाद्यं घृतं चैतदश्विभ्यां परिकीर्तितम् ॥ ७८ ॥**

दाडिमी अनारके दाने, वायविडग, हलदी, चव्य, जीरा, सोंठ, हरड, बहेडा, आमला, पीपल, गोखरू, अजवायन, धनिया, वृक्षाम्ल ( तंतडीक ), लोध और सैंधानोंन, इन प्रत्येक पदार्थोंका एक एक तोले कल्कसे एकसेर घी पकावे तो 'दाडिमाद्य नामक घृत' सिद्ध होताहै। अश्विनीकुमारोका कहा यह घी सर्व ऋतुओंमें मात्राके अनुसार भोजन पानके उपयोगमे सेवनकरै, इससे बीसो प्रकारके प्रमेह, मूत्राघात, पथरी, महादारुण मूत्रकृच्छ्र, मलबन्ध, आनाह, शूल, कामला तथा ज्वर, ये अवश्यही नष्ट होतेहैं ॥ ७४–७८ ॥

## अथ गोक्षुरादिचूर्ण गुटिका च।

**श्वदंष्ट्रा सकणा मुस्ता गुडूची फल्गुपल्लवाः ॥ दर्भाङ्कुरास्तु गण्डीरी रोहिषस्य च पल्लवाः ॥ ७९ ॥ काला पुनर्नवा श्यामा शारिवा देवदारु च ॥ पिप्पली शृंगवेरश्च विडंगं मरिचानि च ॥ ८० ॥ पाठा कम्पिल्लकं भार्ङ्गी द्वे हरिद्रे निदिग्धिका ॥ एरण्डमूलं दन्ती च चित्रकं कटुरोहिणी ॥ ८१ ॥ एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ यावन्त्येतानि चूर्णानि स्युस्तावत्स्यादयोरजः ॥ ८२ ॥ ततो बिडालपदकं पिबेदुष्णेन वारिणा ॥ अलाभे चापि मद्यानां प्रमेहान्हन्ति विंशतिम् ॥ ८३ ॥ श्वयथुश्च तथार्शांसि पाण्डुरोगं हलीमकम् ॥ औदराण्यथ शूलानि प्लीहानं चापकर्षति ॥ ८४ ॥ एभिर्गोमूत्रपिष्टैस्तु गुटिकाः कारयेद्भिषक् ॥ रोगेष्वेतेषु मुख्याः स्युर्बलमांसविवर्द्धनाः ॥ ८५ ॥**

गोखरू, पीपल, मोथा, गिलोयके सूक्ष्मसूक्ष्म पत्ते, डाभके अकुर, मजीठ, रोहिषके पत्ते, निसोत, पुनर्नवा, शारिवा, देवदार, पीपल, अदरख, वायविडंग, मिरच, पाढ, कबीला, भारगी, दोनो हलदी, कटेरी, एरंडकी जड दन्ती ( जमालगोटेकी जड ), चीता और कुटकी, इनको

समानभाग लेकर बारीक चूर्ण करें, पश्चात् सब चूर्णसे दूना लोहेका चूर्ण लेवे, इन सबको मिलानेसे गोक्षुरादि चूर्ण सिद्ध होताहै, यह चूर्ण मद्यसे और मद्य न मिले तो उष्ण पानीसे पिये तो बीसों प्रकारके प्रमेह, सूजन, बवासीर, पाण्डुरोग, हलीमक, सब प्रकारके उदररोग, शूल तथा प्लीहा नष्ट होतीहै । इस चूर्णको गोमूत्रमें पीसकर गोलियें बना लेवे इनको 'गोक्षुरादि गुटिका' कहतेहैं ये गोलीभी उपरोक्त रोगोंको नष्ट करनेमें मुख्य हैं, तथा बल और मांसको बढानेवाली हैं ॥ ७९-८५ ॥

## अथ सिंहामृतघृतम् ।

**कण्टकार्या गुडूच्याश्च संहरेच्च शतं शतम् ॥ संकुट्योदूखले विद्वांश्चतुर्द्रोणेऽम्भसः पचेत् ॥ ८६ ॥ तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ त्रिकटुत्रिफलारास्नाविडङ्गान्यथ चित्रकम् ॥ ८७ ॥ काश्मर्याणाश्च मूलानि पूतीकस्य त्वगेन च ॥ कलिङ्ग इति सर्वाणि सूक्ष्मपिष्टानि कारयेत् ॥ ८८ ॥ अक्षमात्रां पिबेत्प्राज्ञः शालिभिः पयसा हितैः ॥ प्रमेहं मधुमेहञ्च मूत्रकृच्छ्रं भगन्दरम् ॥ ॥ ८९ ॥ आलस्यं चान्त्रवृद्धिञ्च कुष्ठरोगं विशेषतः ॥ क्षयञ्चैव निहन्त्येतन्नाम्ना सिंहामृतं घृतम् ॥ ९० ॥**

सौ सौ तोले कटेरी और गिलोय लेकर चारद्रोण ( एकहजार चौवीस १०२४ तोलेका एकद्रोण ) जलमें क्वाथ करै, जब चौथा भाग जल शेष रहै तब उसमें १ सेर घी पकावे और पकातेसमय उस घीमें सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, रासना, वायविडंग, चीता, खंभारीकी जड, करंजकी छाल और इन्द्रजौ, इनका बारीक चूर्ण करके डाले, यह घी एकतोलाभर सेवन करै, और उसके ऊपर दूध चावल खाय तो प्रमेह, मधुमेह, मूत्रकृच्छ्र, भगंदर, आलस्य, अन्त्रवृद्धि, कुष्ठरोग और क्षय, इनका नाश होता है । इसको 'सिंहामृत घृत' कहतेहैं ॥ ८६-९० ॥

## अथ धान्वन्तरघृतम् ।

**दशमूलं करञ्जौ द्वौ देवदारु हरीतकी ॥ वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥ ॥ ९१ ॥ सुधानीपकदम्बाश्च बिल्वं भल्लातकानि च ॥ शटी पुष्करमूलं च पिप्पलीमूलमेव च ॥ ९२ ॥ पृथग्दशपलान्भागानेतांस्तोयार्मणे पचेत् ॥ यवकोलकुलत्थानां प्रस्थंप्रस्थं विपाचयेत् ॥ ९३ ॥ तेन पादावशेषेण घृतप्रस्थं पचेद्भिषक् ॥ निचुलं त्रिफला भार्ङ्गी रोहिषं गजपिप्पली ॥ ९४ ॥ शृङ्गवेरविडंगानि चव्यं कम्पिल्लकं तथा ॥ गर्भेणानेन तत्सिद्धं पाययेत्तु यथाबलम् ॥ ९५ ॥ एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम् ॥ कुष्ठप्रमेहगुल्मांश्च श्वयथुं वातशोणितम् ॥ ॥ ९६ ॥ प्लीहोदराणि चार्शांसि विद्रधिं पिडिकाश्च याः ॥ अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ॥ ९७ ॥ पृथक्तोयार्मणे ह्यत्र पचेद्द्रव्याच्छतंशतम् ॥ शतत्रयाधिके तोये व्युत्सर्गः क्रमतो भवेत् ॥ ९८ ॥**

दशमूल, दोनों प्रकारकी करञ्ज, देवदारु, हरड, सफेद गदहपूर्णा, बरना, दन्ती, चीता, पुनर्नवा, लालगदहपूर्णा, दोनों प्रकारके करंज, बेल, भिलावे, कचूर, पोहकरमूल और पीपलामूल इन प्रत्येक पदार्थोंका चालीस ४० तोले चूर्ण, चौसठ तोले जौ, चौसठ तोले मिरच और चौसठ तोले कुलथी, इनका एक द्रोण ( १०२४ तोले ) जलमें क्वाथ करै, जब चौथा भाग जल शेष रहै तब इसमें १ सेर ( ६४ तोले ) घी पकावे, और उस घीमें पकातेसमय नीम, त्रिफला, भारंगी, रोहिषतृण, गजपीपल, सोंठ, वायविडंग, बच और कबीला, इनका चूर्ण डाले, इस भाँति सिद्धकिया घी 'धान्वन्तरघृत' कहाताहै । शरीर आदिके बलके अनुसार यह उत्तम घी सेवन करै तो कोढ, प्रमेह, गुल्म, सूजन, वातरक्त, प्लीहा, उदररोग, विद्रधि, प्रमेहसंबंधी पिडिका, अपस्मार और उन्माद इन सबका नाश होताहै ॥ ९१-९८ ॥

## अथार्जुनाद्यघृततैले ।

**अर्जुनपटोलनिम्बैः सवचादीप्यकरसास-**

मञ्जिष्ठैः ॥ भल्लातकागुरुघनैः सगदानलचन्दनोशीरैः ॥ ९९ ॥ गोक्षुरकसोमवल्कैर्नवपटोलैर्हरिद्रया त्रिफलाः ॥ अश्मन्तकार्जुनाभ्यां दीप्यकयुक्तेन चैव लोध्रेण॥ ॥ १०० ॥ मञ्जिष्ठातिविषाभ्यां कल्ककषायैः पचेत्तैलम् ॥ कफवातोत्थे मेहे पित्तकृते साधयेत्सर्पिः ॥ १०१ ॥

कोह, परवल, नीम, वच, अजमाइन, रास्ना, मजीठ, भिलावे, अगर, मोथा, कूठ, चीता, चन्दन, खस, गोखुरू और सफेद कत्था इनका क्काथ कर, उसमें नवीन परवल, हलदी, हरड, बहेडा, आमला, पाखानभेद, कोह, अजमोद, लोध, मजीठ और अतीस, इनका कल्क डालकर पकाया हुआ घी 'अर्जुनाद्यघृत' कहाताहै, इस घीका उपयोग करनेसे पित्त संबंधी प्रमेह नष्ट होतेहैं, इसही क्काथमे इसही कल्कसे पकाया हुआ तैल 'अर्जुनाद्यतैल' कहाताहै, इस तेलका उपयोग करनेसे कफसंबंधी तथा वायु संबधी प्रमेह दूर होतेहैं ॥ ९९–१०१ ॥

## अथ सारलेहः।

सारवर्गकषायं चतुर्थांशावशिष्टमवतार्य। परिस्राव्य पुनरपनीय साधयेत्। सिध्यति चामलकलोध्रप्रियंगुदन्तीकृष्णायसताम्रचूर्णान्यावपेत्। तदेतददग्धं लेहीभूतमवतार्यानुगुप्तं निदध्यात्। ततो यथायोगमुपयुञ्जीत। एष लेहः सर्वमेहानपहन्ति ॥ १०२ ॥

सारवर्ग की औषधियोंका क्काथ करै, चौथाई पानी शेष रहनेपर उतारलेवै, वस्त्रसे छानकर फिर चूल्हे पै चढादेवै, पकनेपर उसमें आमले, लोध, प्रियगू, दन्ती, लोहेकी भस्म और ताँबेकी भस्म, इनका चूर्ण डालै, जब वह अवलेहके सदृश गाढा होजाय तो उसको उतार लेवै जिससे जल न जाय, फिर स्वच्छ पात्रमें करदेवै और योग्य रीतिसे सेवन करै तो इससे सर्व प्रकारके प्रमेह नष्ट होतेहैं ॥ १०२ ॥

## अथ गोक्षुरकाद्यवलेहः।

गोकण्टकं सदलमूलफलं गृहीत्वा संकुट्टितं पलशतं क्कथितं तु तोये ॥ पादस्थितेन सलिलेन पलानि दत्त्वा पञ्चाशतं तु विपचेदथ शर्करायाः ॥ १०३ ॥ तस्मिन्घनत्वमुपगच्छति चूर्णितानि दद्यात्पलद्वयमितानि सुभाजनानि ॥ शुण्ठीकणामरिचनागदलत्वगेलाजातीयकोषककुभत्रपुसीफलानि ॥ १०४ ॥ वांसीपलाष्टकमिह प्रणिधाय नित्यं लेह्यं तु शुद्धममृतं पलसंमितन्तु ॥ हन्त्याशु मूत्रपरिदाहविबन्धशुक्रकृच्छ्राश्मरीरुधिरमेहमधुप्रमेहान् ॥ १०५ ॥

पत्र, जड तथा फलसहित चारसौ (४०० ) तोले गोखुरू लेवै, भलीभाँति कूटकर पानीमें क्काथकरै, चौथा भाग जलशेष रहनेपर उसमे दोसौ ( २०० ) तोले बूरा ( चीनी ) डालकर पकावै, जब यह पानी गाढा होने लगै तब उसमें सोंठ, पीपल, मिरच, नागकेसर, तेजपात, इलायची, जायफल, ककोल, कोहके फल और खीरेके बीज, इन प्रत्येक पदार्थको आठ आठ तोले चूर्ण और बत्तीस तोले वंशलोचनका चूर्ण डालकर उतार लेवै तो 'गोक्षुरकाद्यवलेह' सिद्ध होताहै। यह शुद्ध अमृतकी सदृश अवलेह नित्य चार तोले चाटै तो मूत्रका दाह, मलबध, वीर्यके दोष, मूत्रकृच्छ्र, पथरी, रक्तप्रमेह और मधुमेह इनको तत्काल नष्ट करैहै ॥ १०३–१०५ ॥

## अथासनादियोगः।

असनञ्च प्रियालञ्च शालं खदिरकं तथा ॥ शालवर्गं तथा ग्राह्यं भवेच्चैतद्विचक्षणैः ॥ ॥ १०६ ॥ मधुमेहत्वमापन्नं भिषग्भिः परिवर्जितम् ॥ योगेनानेन मतिमान्प्रमेहिणमुपाचरेत् ॥ १०७ ॥

पीतसाल, चिरोंजी, शाल, खैर और शालवर्गकी औषधि, इनका योगकर बुद्धिमान् वैद्य प्रमेह रोगीका उपचार करै तो जो प्रमेह मधुमेहताको प्राप्त होगयाहो तथा जिसकी चिकित्सा अन्य वैद्योंनें छोड दी हो, वह प्रमेहभी नष्ट होजाताहै ॥ १०६ ॥ १०७ ॥

## अथ शिलाजतुस्वर्णमाक्षिकरौप्यमाक्षिकप्रयोगाः।

मासि शुक्रे शुचौ वापि शैलाः सूर्यांशुतापिताः ॥ जतुप्रकाशं स्वरसं शिलाभ्यः

प्रस्रवन्ति हि ॥ १०८ ॥ शिलाजत्विति विख्यातं महाव्याधिनिवारणम् ॥ त्रप्वादीनां तु लोहानां षण्णामन्यतमश्च यत् ॥ १०९ ॥ ज्ञेयं स्वगन्धतश्चापि षड्योनिप्रथितं क्षितौ ॥ लोहाद्द्रवति तद्यस्माच्छिलाजतु जतुप्रभम् ॥ ११० ॥ तस्य लोहस्य तद्वीर्यरसं वापि बिभर्ति तत् ॥ त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ॥ १११ ॥ यथा तथा प्रयोगेऽपि श्रेष्ठे श्रेष्ठगुणाः स्मृताः ॥ तत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ॥ ११२ ॥ कटुपाक्युष्णवीर्यश्च शोषणं छेदनं तथा ॥ तत्र यल्लघु कृष्णाभं स्निग्धं निःशर्करञ्च यत् ॥ ११३ ॥ गोमूत्रगन्धि नीलं वा तत्प्रधानश्च वक्ष्यते ॥ तद्भावितं सारगणैर्हतदोषं दिनादितः ॥ ११४ ॥ पिबेत्सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम् ॥ जांगलेन रसेनाद्यात्तस्मिञ्जीर्णे तु भोजनम् ॥ ११५ ॥ उपयुज्य तुलामेकाममृतस्यास्य जन्मतः ॥ विजित्य मधुमेहाख्यमातंकं रोगकारकम् ॥ ११६ ॥ वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥ शतंशतं तुलायां तु सहस्रं दशतौलिकम् ॥ ११७ ॥ भल्लातकविधानेन परिहारविधिः स्मृतः ॥ मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं परम् ॥ ११८ ॥ शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम् ॥ व्यपोहत्यचिरात्कालाच्छिलाजतु निषेवितम् ॥ ११९ ॥ न सोऽस्ति रोगो यं वापि न निहन्याच्छिलाजतु ॥ शर्करां शिरसम्भूतां भिनत्ति च तथाश्मरीम् ॥ ॥ १२० ॥ भावनालोडने चास्य कर्त्तव्ये भेषजैर्हितैः ॥ एवं च माक्षिकं धातुं तापीजममृतोपमम् ॥ १२१ ॥ मधुरं काञ्चनाभासमम्लं वा रजतप्रभम् ॥ व्यपोहति जराकुष्ठमेहपाण्ड्वामयक्षयान् ॥ तद्भावितान्कुलत्थांश्च कपोतांश्च विवर्जयेत् ॥ १२२ ॥

जेठ अथवा आषाढके महीनेमें सूर्यकी किरणोंसे तपकर पर्वत अपनी शिलाओंमेंसे लाखकी सदृश रसको छोडताहै वह रस शिलाजीत कहाताहै और महारोगोंको नष्ट करताहै। सीसेको आदि लेकर लोहे पर्यंत छहों धातुओंका शिलाजीत होताहै इस भाँति शिलाजीत छै प्रकारका है। अपनी अपनी गंधसे परीक्षा करनी चाहिये। जो शिलाजीत लोहसे लाखकी सदृश उत्पन्न होताहै उसमें लोहेका रसवीर्य होताहै। राग, सीसा और लोहेमे जो लाखकी सदृश शिलाजीत उत्पन्न होतेहैं ये उत्तरोत्तर अधिक गुणवाले हैं। सब प्रकारके शिलाजीतोंमें लोहेका शिलाजीत श्रेष्ठ गुणवाला है। सब प्रकारके शीलाजीत कडवे, चरपरे, कसैले रसके संबधी, दस्तावर, पाकमें चरपरे, वीर्यमें गरम, शोषण और मलच्छेदक हैं। जो शिलाजीत हलका, काली तथा नीली कांतियुक्त, स्निग्ध, शर्करारहित और गोमूत्रकी सदृश गंधवाला होय वह श्रेष्ठ कहाताहै। सारवर्गकी औषधियोंसे भावना देकर बारीक पीस शरीर आदिके बलानुसार सारगणके क्वाथके साथ पिये और इसके पचनेपर जगली जीवोंके मांसरसके साथ भोजन करै। जन्मसे अमृतकी सदृश यह शिलाजीत चारसौ तोले खाय तो इससे मनुष्य महापीडायुक्त-मधुमेहनामक हाथीको जीतकर सौ वर्षतक आरोग्यतासे जीताहै और उसका, शरीर वर्ण तथा बल अति उत्तम होताहै। जब एक तुला ( ४०० तोले ) खानेसे सौ वर्षतककी आयु होतीहै तो दशतुला खानेसे हजार वर्षकी आयु होतीहै। जितना परहेज भिलावे खानेमें होताहै, उतनाही परहेज इसमे करै। शिलाजीतका सेवन करनेसे प्रमेह, कोढ, अपस्मार, उन्माद, श्लीपद, क्षय, सूजन, बवासीर, गुल्म, पाण्डुरोग और विषमज्वर, ये तत्काल नष्ट होजातेहैं। जिसको शिलाजीत नष्ट नही करसके ऐसा कोई रोग भी नहीं है। शिलाजीत अधिक कालसे हुई पथरी शर्कराको भी नष्ट करदेताहै। हितकारी औषधियोंमें शिलाजीतकी भावना देवै तथा ऐसीही औषधियोंमें मिलावै। इसीप्रकार सोनामाखी अथवा रूपामाखी कि जो अमृतकी तुल्य हैं उनको सारगणकी औषधियोंसे भावन

देकर सारगणके क्वाथके साथ पिये तो इससे ज्वर, कोढ, प्रमेह, पांडुरोग तथा क्षय, इनका नाश होताहै । जो सानामाखी मधुर होय तथा सुवर्णकी सदृश वर्णवाली होय तथा जो रूपामाखी खारी और चाँदीके सदृश वर्णवाली होय वह उत्तम जाननी । सोनामाखी तथा रूपामाखी सेवन करनेवाले कुलथी और कबूतरका मांस त्याग देवैं ॥ १०८–१२२ ॥

## अथ प्रमेहपिडिकाचिकित्सा ।

**प्रमेहपिडिकानां प्राक्कार्यं रक्तावसेचनम्॥ पाटनञ्च विपक्कानां तासां पाने प्रशस्यते ॥ १२३ ॥ क्काथो वनस्पतेर्बस्तमूत्रं तीक्ष्णञ्च शोधनम् ॥ एलादिकेन कल्केन तैलं च व्रणरोपणम् ॥ १२४ ॥ आरग्वधादिना क्काथं कुर्यादुद्वर्तनानि च ॥ शालसारादिना सेकान्भोज्यादींश्चणकादिना ॥ १२५ ॥**

प्रमेहसंबंधी पिडिका होगई होयँ तो प्रथम उनमेंसे रुधिर निकलवावै और पकगई होयँ तो शस्त्रसे चिरवाना उत्तम है । वनस्पतियोंके क्काथसे,बकरीके मूत्रसे और तीक्ष्ण पदार्थोंसे पिडिकाओंकी जगह शुद्ध करै । शुद्ध करनेके पश्चात् इलायची आदि पदार्थोंके कल्कसे पकायाहुआ तेल लगावै कि जिससे व्रण भर आताहै । पिडिकावालेको अमलतासआदिका क्काथ पिलावे और योग्य पदार्थोंसे उबटन और शालसारादिके योग्य क्काथसे सेचन करै, पिडिकावालेको चने आदि पदार्थोंका भोजन करावै ॥ १२३–१२५ ॥

## अथ प्रमेहिण आरोग्यपरीक्षा ।

**प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम् ॥ विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥ १२६ ॥**

इति प्रमेहपिडिकानिदानचिकित्साधिकारः ।

जब प्रमेहरोगीका मूत्र स्वच्छ, पिच्छिलता रहित, विशद और तिक्त तथा कटुरसयुक्त होय, तब आरोग्य हुआ जानना ॥ १२६ ॥

इति प्रमेहाधिकारः समाप्तः ।

---

# अथ मेदोऽधिकारः ।

## तत्र मेदोवृद्धिनिदानम् ।

**अव्यायामदिवास्वप्नश्लेश्मलाहारसेविनः॥ मधुराऽन्नरसप्रायःस्नेहान्मेदो विवर्द्धते ॥ १ ॥**

व्यायाम ( कसरत ) नहीं करनेसे, दिनमें सोनेके अभ्याससे, कफकारी आहारोंके सेवन करनेसे, मधुर अन्नोंसे, मधुर रसोंसे और घी आदि स्नेहोंके सेवनसे मेदकी वृद्धि होतीहै ॥ १ ॥

## अथ मेदोवृद्धिसम्प्राप्तिः ।

**मेदसावृतमार्गत्वात्पुष्यन्त्यन्ये न धातवः ॥ मेदस्तु चीयते तस्मादसक्तः सर्वकर्मसु ॥ २ ॥**

मेदसे मार्ग रुकनेके कारण अन्य धातुओंका पोषण नहीं होता इससे मेदा बढतीजातीहै कि जिससे मनुष्य सर्व कामोंमे अशक्त होजाताहै ॥ २ ॥

## अथ मेदोवृद्धिलक्षणम् ।

**क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनैः ॥ युक्तः क्षुत्स्वेददौर्गन्ध्यैरल्पप्राणोऽल्पमैथुनः ॥ ३ ॥ मेदस्तु सर्वभूतानामुदरे हि व्यवस्थितम् ॥ अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ ४ ॥ मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ॥ चरन्सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥ ५ ॥ तस्मात्स शीघ्रं जरयत्याहारश्चापि कांक्षति ॥ विकारांश्चाश्नुते घोरान्कांश्चित्कालविपर्ययात् ॥ ६ ॥ एतावुपद्रवकरौ विशेषादग्निमारुतौ ॥ एतौ हि दहतः स्थूलं वनं दावानलौ यथा ॥ ७ ॥ मेदस्यतीव संवृद्धे सहसैवानिलादयः ॥ विकारान्दारुणान्कृत्वा नाशयन्त्याशु जीवितम् ॥ ८ ॥ मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ॥ मेदसोऽयथोपचयान्नरोऽतिस्थूल उच्यते ॥ ९ ॥ स्थूले स्युर्दुस्तराः कुष्ठा विसर्पाः सभ-**

गन्दराः ॥ ज्वरातीसारमेहार्शःश्लीपदापचिकामलाः ॥ १० ॥ मेदसः स्वेददौर्गन्ध्याज्जायन्ते जन्तवोऽणवः ॥ ११ ॥

जिसके मेदकी वृद्धि हुई होय वह मनुष्य क्षुद्रश्वास, तृषा, मोह, निद्रा, पीडा, ग्लानि, क्षुधा, पसीना तथा दुर्गन्धतासे युक्त होताहै और अल्पशक्तिवाला तथा अल्पमैथुनवाला होजाताहै । मेद सब प्राणियोंके पेटमें रहतीहै इस लिये मेदकी वृद्धिवाले मनुष्यका अधिक करकै पेट वढजाताहै । वायुका मार्ग मेदसे रुकनेके कारण वह वायु विशेष करकै कोठेमेंही फिरती रहनेसे अग्निको प्रदीप्त करैहै और खाये हुए अन्नको सुखाभी डाले है कि जिससे मेदवृद्धिवाले मनुष्यको आहार तत्काल पचजाताहै और फिर भोजन करनेकी इच्छा होतीहै । कुछ कालके अनन्तर इस मनुष्यके भयकर विकार भी उत्पन्न होतेहैं, अग्नि और वायु ये विशेष करकै उपद्रवोको उत्पन्न करैं हैं और जिस प्रकार दावानल ( अग्नि ) वनको जला देतीहै उसी प्रकार ये मेद उस मोटे मनुष्यको जला देतीहै । मेद अत्यंत वढनेपर वायु आदि धातु सहसा दारुण विकारोंको उत्पन्न करके तत्काल जीवनका नाश करदेतीहैं, मेद और मासकी अत्यत वृद्धि होनेपर मनुष्यके कूले पेट और स्तन हला करतेहैं । जिसका मेद अयोग्य प्रकारसे वढता होय, वह मनुष्य वहुत मोटा कहाताहै । मोटे मनुष्यको कोढ, विसर्प, भगदर, ज्वर, अतीसार, प्रमेह, ववासीर, श्लीपद, अपची और कामला, ये रोग दुस्तर होजातेहैं । मेदसे पसीनेमें दुर्गन्धता होनेपर सूक्ष्म सूक्ष्म जीवभी होजातेहैं ॥ ३-११ ॥

## अथ मेदोवृद्धिचिकित्सा ।

पुराणाः शालयो मुद्गाः कुलत्थोद्दालकोद्रवाः ॥ लेखना वस्तयश्चैव सेव्या मेदस्विना सदा ॥ धूमपानं तथा क्रोधो रक्तमोक्षणमेव च ॥ १२ ॥ जीर्णे च भोजनं कार्यं यवगोधूमयोः सदा ॥ उपवासोऽसुखा शय्या सत्त्वौदार्यं तमोजयः ॥ १३ ॥ सन्तर्पणकृतैर्दोषैः स्थौल्याद्युक्तया विमुच्यते ॥ श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः ॥ १४ ॥ हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः ॥ सचव्यजीरकव्योषहिंगुसौवर्चलानलाः ॥ १५ ॥ मस्तुना सक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥ फलत्रयं त्रिकटुकं सतैलं लवणान्वितम् ॥ १६ ॥ षण्मासादुपयोगेन कफमेदोऽनिलापहम् ॥ विडङ्गं नागरं क्षारः काललोहरजो मधु ॥ १७ ॥ यवामलकचूर्णैस्तु योगोऽयं स्थौल्यनाशनः । मूलं वा त्रिफलाचूर्णं मधुयुक्तं मधूदकम् ॥ १८ ॥ बिल्वादिपञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः ॥ अतिस्थौल्यहरः प्रोक्तो मण्डलं सेवितो ध्रुवम् ॥ १९ ॥ कर्कशदलवह्निसलिलं शतपुष्पाहिंगुसंयुक्तम् ॥ पुटके निहन्ति नियतं सर्वभवां मेदसां वृद्धिम् ॥ २० ॥ क्षारं वातारिपत्रस्य हिंगुयुक्तं पिबेन्नरः॥ मेदोवृद्धिविनाशाय भक्तं मण्डसमन्वितम् ॥ २१ ॥ गवेधुकानां पिष्टानां यवानाश्चाथ सक्तवः॥ सक्षौद्रत्रिफलाक्वाथः पीता मेदोहरा मताः ॥ २२ ॥ गुडूची त्रिफलाक्वाथस्तथा लोहरजोऽन्वितः ॥ अश्मजं महिषाक्षं वा तेनैव विधिना पचेत् ॥ २३ ॥ अतिमुक्ताद्बीजमध्यं मधुलीढं हन्त्युदरवृद्धिम्॥ मधुना चित्रकमूलं तथैव हितभोजनो भुंक्ते ॥ यद्वोरुबूकमूलं मधुदिग्धं स्थाप्यते निशां सकलाम् ॥ तस्य सलिलस्य पानाज्जठरे वृद्धिं शमं याति॥२४॥ प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ॥ उष्णमन्नस्य मण्डं वा पिबन्कृशतनुर्भवेत् ॥२५॥बदरीपत्रकल्केन पेया काञ्जिकसाधिता ॥ स्थौल्यनुत्स्यादग्निमन्थरसक्वाथः शिलाजतु ॥ २६ ॥ शैलेयकुष्ठागुरुदेवदारुकौन्तीसमुस्तान्यथ पञ्चपत्रैः ॥

**श्रीवासपृक्काखरपुष्पदेवपुष्पं तथा सर्वमिदं प्रपिष्य ॥ २७ ॥ धत्तूरपत्रस्य रसेन गाढमुद्वर्तनं स्थौल्यहरं प्रदिष्टम् ॥ २८ ॥**

मेदकी वृद्धिवाला मनुष्य सदा पुराने चावल, मूग, कुलथी, वनकुलथी और कोदों तथा लेखनवस्ति, इनका सेवन करै। यह मनुष्य धूमपान, क्रोध तथा रक्तमोक्षण (फस्त खुलवाना) इनका सेवन करै। उपवास, सुख न हो ऐसी शय्यामे शयन, मनकी उदारता और निद्रा आदि तमोगुणके जीतनेसे स्थूलता नष्ट होजातीहै। स्थूलता कि जो अत्यन्त तृप्त करनेवाले दोषोंसे हुई है उससे मुक्त होनेके लिये यह युक्ति है कि परिश्रम, मैथुन, मार्ग, मदिरा और रात्रिजागरण, इनसे प्रेम रक्खै, चिंतामें तत्पर रहै और जौ तथा समेके भोजन करै ऐसा मनुष्य अपनी अत्यन्त स्थूलताको अवश्य नष्ट करदेताहै। चव्य, जीरा, त्रिकुटा, हींग, कालानोंन और चीता, इनका चूर्ण डालकर दहीके पानीके साथ सत्तू पिये तो इससे मेद नष्ट होजातीहै और अग्निदीपन होतीहै। अथवा हरड, बहेडा, आमला, सोंठ, मिर्च, पीपल, तेल और लवण, इनको छै महीनेतक भली भाँति उपयोग करे तो इससे कफ, मेद तथा वायु नष्ट होतीहै। वायविडग, सोंठ, जवाखार, कान्तिसार, जौ तथा आमला, इनके चूर्णमें सहत मिलाकर खाय तो इससे अत्यन्त स्थूलता नष्ट होतीहै। मूली अथवा त्रिफलेका चूर्ण सहतमें मिलाकर सहत मिले पानीके साथ सेवन करे, अथवा बृहत्पञ्चमूलका चूर्ण सहतमें मिलाकर खाय, इसप्रकार जो चालीस दिनतक करे तो इससे अवश्य अत्यन्त स्थूलता नष्ट होतीहै। परवल और चीता, इनका क्वाथ कर, इसमें सोफ तथा हींगका चूर्ण डालकर पिये तो इससे पेटमें सर्व प्रकारसे हुई मेदकी वृद्धि अवश्य नष्ट होतीहै अथवा एरडका क्षार हींग डालकर पिये और ऊपरसे मांडसहित भात खाय तो इससे मेदकी वृद्धि नष्ट होजातीहै। गवेधुक, (मुनियोंके खानेका अन्नविशेष) अथवा जौके सत्तू और त्रिफलेके क्वाथमे सहत डालकर पिये तो इससे मेदकी वृद्धि दूर होतीहै। गिलोय, हरड, बहेडा और आमला, इनके क्वाथमे लोहभस्म डालकर पिये तो मेदकी वृद्धि नष्ट होतीहै। शिलाजीत अथवा गूगलको उपरोक्त गिलोय आदिके क्वाथमें पकाकर खाय तो मेदकी वृद्धि दूर होतीहै। अतिमुक्त (कुन्दपुष्पभेद या माधवीलता) के बीजके मध्यभागको सहतमें मिलाय चाटनेसे मेदोवृद्धि दूर होतीहै, चीतेकी जडका चूर्ण सहतमें मिलाकर चाटे, अथवा एरंडकी जडको रात्रिभर सहतमे भीजा रहनेदेवे उसके रसको प्रातःकाल पिये और हितकारी भोजनका नियम रक्खै तो उदरकी वृद्धि नष्ट होतीहै। प्रातःकाल नित्य सहत मिलाकर जल पिये तो मोटापन दूर होताहै। पकाये हुए भातका गरम मांड पिये तो शरीर कृश होताहै। बेरके पत्तोका कल्क डालकर, कांजीसे पकाई पेया सेवन करै तो इससे मेदकी वृद्धि दूर होतीहै। अथवा अरनीके क्वाथमे शिलाजीत डालकर पिवै तो इससे स्थूलता नष्ट होतीहै। शिलाजीत, कूठ, अगर, देवदारु, रेणुकानामक सुगंधित द्रव्य, मोथा, श्रीवास, स्पृक्का, पिण्डशाक, ब्राह्मी और लोग इन सबको धत्तूरेके पत्तोंके रससे पीसकर, शरीरको भलीभाँति मलै तो स्थूलता नष्ट होतीहै ॥ १२-२८ ॥

## अथामृतादिगुग्गुलुः।

**अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुग्गुलुः ॥ क्रमवृद्धमिदं मधुप्लुतं पिडिकास्थौल्यभगन्दराञ्जयेत् ॥ २९ ॥**

गिलोय एक भाग, इलायची दो भाग, वायविडंग तीन भाग, इन्द्रजौ चार भाग, बहेडा पांच भाग, हरड छै भाग, आमला सात भाग और गूगल आठ भाग, इनको सहतमे मिलाकर खाय तो इससे पिडिका स्थूलता और भगदर इनका नाश होताहै ॥ २९ ॥

## अथ दशांगगुग्गुलुः।

**व्योषाग्नित्रिफलामुस्ताविडंगैर्गुग्गुलुं समम् ॥ खादन्सर्वाञ्जयेद्व्याधीन्मेदःश्लेष्मामवातजान् ॥ ३० ॥**

सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, मोथा और वायविडग इनका चूर्णकर सबकी बराबर गूगल मिलाकर खाय तो मेद, कफ, आम और वायु इनसे उत्पन्न हुए सम्पूर्ण रोग नष्ट होतेहै ॥ ३० ॥

## अथ त्र्यूषणादिगुग्गुलुः।

**त्र्यूषणाग्निवनवेल्लवचाभिर्भक्षयन्समघृतं महिषाक्षम् ॥ आशु हन्ति कफमारुतमेदोदोषजान्बलवतोऽपि विकारान् ॥ ३१ ॥**

सोंठ, मिर्च, पीपल, चीता, मोथा और वच इनका चूर्ण गूगलमें डालकर गूगलकी बराबर ही मिलावे तो त्र्यूषणादि गूगल सिद्ध होताहै, यह गूगल कफसे, वायुसे, तथा, मेदके दोषोंसे हुए बलवान् विकारोंको तत्काल नष्ट करैहै ॥ ३१ ॥

## अथ लोहरसायनम् ।

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम् ॥ त्रिवृताऽलम्बुषी शुण्ठी निर्गुण्डी चित्रकस्तथा ॥ ३२ ॥ एषां दशपलान्भागांस्तोये पञ्चाढके पचेत् ॥ पादशेषं ततः कृत्वा कषायमवतारयेत् ॥ ॥ ३३ ॥ पलद्वादशकं देयं रुक्मलोहं सुचूर्णितम् ॥ ३४ ॥ पुराणसर्पिषः प्रस्थं शर्कराष्टपलान्वितम् ॥ पचेत्ताम्रमये पात्रे सुशीते चावतारिते ॥ ३५ ॥ प्रस्थार्द्धं माक्षिकं देयं शिलाजतु पलद्वयम् ॥ एलात्वचः पलार्द्धश्च विडंगानि पलत्रयम् ॥ ३६ ॥ मरिचाञ्जनकृष्णे द्वे द्विपलञ्च फलान्वितम् ॥ पलद्वयन्तु कासीसं सूक्ष्मचूर्णीकृतं बुधैः ॥ ३७ ॥ चूर्णं दत्त्वा सुमथितं स्निग्धे भांडे निधापयेत् ॥ ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम् ॥ ३८ ॥ अनुपानं पिबेत्क्षीरं जांगलानां रसं तथा ॥ वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम् ॥ ३९ ॥ कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम् ॥ मूर्च्छामोहविषोन्मादगराणि विषमाणि च ॥ ४० ॥ स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥ कर्षयेच्चातिमात्रेण कुक्षि पातालसन्निभम् ॥ ४१ ॥ बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥ श्रीकरं पुत्रजननं वलीपलितनाशनम् ॥ ४२ ॥ नाश्नीयात्कदलीकन्दं काञ्जिकं करमर्दकम् ॥ करीरं कारवेल्लञ्च ककारादि विवर्जयेत् ॥ ४३ ॥

गूगल, मुसली, हरड, बहेडा, आमला, खैर, अडूसेकी छाल, निसोत, गोरखमुडी, सोंठ, निर्गुण्डी और चीता ये प्रत्येक पदार्थ चालीस चालीस तोले लेकर पाँच आढक ( २० सेर ) जलमें क्वाथकरे, चौथा भाग जल शेष रहै तब क्वाथको उतार उसमें भली भाँति चूर्णित किया हुआ अडतालीस ( ४८ ) तोले कानलोह, चौसठ तोले पुराना घी और बत्तीस तोले शर्करा ( बूरा, चीनी ) डालकर ताँबेके पात्रमें फिर उसका पाककरे, शीतल होजानेपर उतारलेवे, फिर उसमें बत्तीस तोले सहत, आठ तोले शिलाजीत, दो तोले इलायची, दो तोले दालचीनी, बारह तोले वायविडंग, आठ तोले मिर्च, आठ तोले रसोत, चार तोले पीपल और आठ तोले कसीस, इनका चूर्ण डाल मथकर स्निग्ध पात्रमें उसको रक्खै तो लोहरसायन सिद्ध होतीहै । वमन विरेचनादिसे शरीरको शुद्ध करके उसमेंसे एक तोलेभर खाय और उसके ऊपर दूध तथा जांगल देशके जीवोंके मांसका रस पिये । यह रसायन श्रेष्ठ है और वायु, कफ, कोढ, प्रमेह, उदररोग, कामला, पाण्डुरोग, सूजन, भगंदर, मूर्च्छा, मोह, विष, उन्माद और विषम विषको भी नष्ट करै है । यह रसायन स्थूलताको कर्षण करनेका उत्तम उपाय है, मेदरोगीकी परम औषधि है, पातालकी सदृश पेटको अत्यंत पतला करनेवाला है, तथा बलदायक, बुद्धिको स्वच्छ करनेवाला, उत्तम वाजीकरण, लक्ष्मीदायक, पुत्रदाता और वलीपलितनाशक है । इस रसायनको सेवन करनेवालेने केला, कन्द, काँजी, करोंदे, करील, करेला, यह छै ककार त्याग करने चाहिये ॥ ३२–४३ ॥

## अथ लौहारिष्टः ।

शालसारादिनिर्यूहं चतुर्थांशावशेषितम् ॥ परिस्रुत ततः शीतं मधुना मधुरीकृतम् ॥ ॥ ४४ ॥ फाणितीभावमापन्नं गुडे शोधितमेव च ॥ सूक्ष्मपिष्टानि चूर्णानि पिप्पल्यादेर्गणस्य च ॥ ४५ ॥ ऐकध्यमावपेत्कुम्भे संस्कृते घृतभाविते ॥ पिप्पलीचूर्णमधुभिः प्रलिप्ते चान्तरे शुचौ ॥ ४६ ॥ श्लक्ष्णानि तीक्ष्णलोहस्य तनुपत्राणि बुद्धिमान् ॥

खदिराङ्गारतप्तानि बहुशः प्रक्षिपेद्बुधः॥ ॥ ४७ ॥ सुपिधानं ततः कृत्वा यवखल्वे निधापयेत् ॥ मासांस्त्रींश्चतुरो वापि यावद्वा लोहसंक्षयात् ॥ ४८ ॥ ततो जातरसं जन्तुः प्रातःप्रातर्यथाबलम् ॥ उपयुञ्ज्याद्यथायोग्यमाहारं चास्य कल्पयेत् ॥४९॥ एष स्थूलं समाकर्षेन्नष्टस्याग्नेः प्रशोधनः ॥ शोथघ्नः कुष्ठमेहघ्नो गुल्मपाण्ड्वामयापहः ॥ ॥ ५० ॥ प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः ॥ अभिष्यन्दापहरणे लोहारिष्टो महागुणः ॥ ५१ ॥

शालसार आदि औषधियोंका क्राथ कर चौथा भाग जल शेष रहनेपर वस्त्रसे छान लेवै फिर शीतल होनेपर सहत डालकै मधुर करै, पश्चात् गुडकी चासनीकर पिप्पल्यादि गणका चूर्ण और वह क्राथ मिलावै, फिर घी चुपडे पवित्र पात्रमें पीपलका चूर्ण और सहत लगाकर उसको रक्खै, पश्चात् बुद्धिमान् वैद्य तीक्ष्ण लोहके पतले पत्रोंको खैरके अग्निमें बारबार तपातपाकर उसमें डालै, फिर पात्रका मुख भलीभाँति बंदकर उस घडेको तीन चार महीनेतक अथवा जबतक लोहा गले तबतक जौके ढेरमें रक्खै, यह सब लोहा उसमें रसरूप होजाय तो लोहारिष्ट सिद्ध होताहै । शरीरादिकके बलानुसार प्रातः–काल यह लोहारिष्ट पिये और उसके ऊपर योग्य आहार करै तो लोहारिष्ट स्थूल शरीरको पतला करदेताहै, नष्ट हुई जठराग्निको प्रदीप्त करताहै और सूजन, कोढ, प्रमेह, गुल्म, पाण्डुरोग, प्लीहा, उदररोग और अभिष्यन्द इनको नष्ट करैहै, विषमज्वरको तत्काल नष्ट करैहै और भी अधिक गुण करैहै ॥ ४४–५१ ॥

## अथ व्योषाद्यसक्तुप्रयोगः ।

व्योषचित्रकशिग्रूणि त्रिफलां कटुरोहिणीम् ॥ बृहत्यौ द्वे हरिद्रे च पाठामातिविषां स्थिराम् ॥ ५२ ॥ हिंगुकेमुकमूलानि यवानीं धान्यचित्रकम् ॥ सौवर्चलमजाजीश्च हपुषाश्चेति चूर्णयेत् ॥ ५३ ॥ चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः॥ सक्तूनां षोडशगुणे भागे सन्तर्पणं पिबेत् ॥ ५४ ॥ प्रयोगात्त्वस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ॥ प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ॥ ॥ ५५ ॥ प्लीहा पाण्ड्वामयः शोथो मूत्रकृच्छ्रमरोचकः ॥ हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ॥ ५६ ॥ कृमयो ग्रहणीदोषः श्वैत्यं स्थौल्यमतीव च ॥ नराणां दीप्यते वह्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ ५७ ॥

सोंठ, मिरच, पीपल, दूनोचीता, सहँजना, हरड, बहेडा, आमला, कुटकी, दोनों प्रकारकी कटेरी, हलदी, दारुहलदी, पाढ, अतीस, शालपर्णी, हींग, सुपारीकी जड, अजवायन, धनिया, कालानोंन, जीरा और हाउबेर इनका चूर्ण करै, पश्चात् इस चूर्णको घीके और सहतके समान ले सोलह गुने सत्तू डालकर सत्तू पियै । इस प्रयोगकी तृप्तिसे हुए रोग, प्रमेह, मूढवात, कोढ, बवासीर, कामला,प्लीहा, पाण्डुरोग, सूजन, मूत्रकृच्छ्र, अरुचि, हृदयरोग, क्षयरोग, खासी, श्वाँस, गलग्रह, कृमि, ग्रहणी, श्वेतकोढ और अत्यत स्थूलता, इनको नष्ट करैहै, अग्नि दीपन होतीहै और बुद्धि तथा स्मरणशक्ति बढती-है ॥ ५२–५७ ॥

## अथ त्रिफलाद्यतैलम् ।

त्रिफलातिविषा मूर्वा त्रिवृच्चित्रकवासकैः॥ निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाह्वयैः ॥ ॥ ५८ ॥ गुडूचीन्द्रासुरीकृष्णाकुष्ठसर्षपनागरैः ॥ तैलमेभिः समैः पक्वं सुरसादिरसप्लुतम् ॥ ५९ ॥ पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम् ॥ स्थूलतालस्यपाण्ड्वादीञ्जयेत्कफकृतान्गदान् ॥६०॥

हरड, बहेडा, आमला, मूर्वा, निसोत, चीता, अडूसा, नीम, अमलतास, वच, सतवन, हलदी, गिलोय, इन्द्रवारुणी, पीपल, कूठ, सरसो और सोंठ, इनको समान भाग लेकर उनके कल्कसे पकाया हुआ तेल सुरसादिगणके क्राथके साथ पीनेमें, अभ्यङ्गमें, गण्डूष धारण ( कुले करने ) में, नस्यमें और पिचकारी देनेमें, उप-

योग करै तो इससे स्थूलता, आलस्य तथा पाण्डुता आदि कफसंबंधी सब रोग नष्ट होतेहैं ॥ ५८–६० ॥

अथ महासुगंधितैलम् ।

चन्दनं कुंकुमोशीरप्रियंगुत्रुटिरोचनाः ॥ तुरुष्कागुरुकस्तूरी कर्पूरो जातिपत्रिका ॥ ॥ ६१ ॥ जातीकंकोलपूगानां लवंगस्य फलानि च ॥ नलिका नलदं कुष्ठं हरेणु-तगरं प्लवम् ॥ ६२ ॥ नवव्याघ्रनखं स्पृक्का बोलो दमनकं तथा ॥ स्थौणेयकं चोरकश्च शैलेयं शैलवालुकम् ॥ ६३ ॥ सरलं सप्तपर्णश्च लाक्षा तामलकी तथा ॥ लामज्जकं पद्मकश्च धातक्याः कुसुमानि च ॥ ६४ ॥ प्रपौण्डरीकं कर्चूरं समांशैः शाणमात्रकैः ॥ महासुगन्धमित्येतत्तैल-प्रस्थेन साधयेत् ॥ ६५ ॥ प्रस्वेदमल-दौर्गन्ध्यकण्डूकुष्ठहरं परम् ॥ अनेनाभ्य-क्तगात्रस्तु वृद्धः सप्ततिकोऽपि वा ॥ ६६॥ युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तव-ल्लभः ॥ सुभगो दर्शनीयश्च गच्छेच्च प्रमदाशतम् ॥ ६७ ॥ वन्ध्यापि लभते गर्भं षण्ढोऽपि पुरुषायते॥अपुत्रः पुत्रमा-प्नोति जीवेच्च शरदां शतम् ॥ ६८ ॥

चदन, केसर, खस, प्रियंगु, इलायची, गोरोचन, लोवान, अगर, कस्तूरी, कपूर, जावित्री, जायफल, ककोल, सुपारी, लौंग, नली, जटामॉसी, कूठ, रेणुका, तगर, नागरमोथा, नवीन व्याघ्रका नख, स्पृक्का, वाल, दौना, स्थौणेयक, चोरक, शैलेय, एलुआ, सरल, सतवन, लाख, आमला, लामज्जकतृण, पद्माख, धायके फूल, पुण्डरीक और कचूर, ये प्रत्येक पदार्थ तीन तीन मासे लेकर इससे चौसठ तोले तैल पकावै, तो महासुगन्धि तैल सिद्ध होताहै। इस तेलसे पसीना, मलसे हुई दुर्गन्धता, खुजली तथा कोढ, भली भाँति नष्ट होताहै। इस तैलका अभ्यग (मालिस) करै तो सत्तर वर्षका वृद्ध भी युवा, अधिक वीर्यवान्, स्त्रियोंको अत्यत प्रिय, भाग्यवान, सुन्दर और सौ स्त्रियोंसे सग करने को समर्थ होताहै। व या स्त्रियोंके गर्भ रहताहै, नपुसक पुरुषताको प्राप्त होताहै, विना पुत्रवाली स्त्रीके पुत्रकी प्राप्ति होतीहै और आयु सौ वर्षकी होती-है ॥ ६१–६८ ॥

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ॥ बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥ ६९ ॥ अलम्बुषाभवं चूर्णं पीतं काञ्जिकसंयुतम् ॥ दौर्गन्ध्यं नाशयत्याशु दृष्टं मेदोभवं नृणाम् ॥ ७० ॥ बिल्व-शिवासमभागा लेपाद्भुजमूलगन्धमपहर-ति ॥ परिणतपिडकामपि पूतिकरञ्जो-त्थबीजं वा ॥ ७१ ॥ चिञ्चापत्रस्वरसं म्रक्षितकक्षादियोजितं जयति ॥ ह्रस्व-हरिद्रोद्वर्तनमचिराच्चिरदेहदौर्गन्ध्यम् ॥ ॥ ७२ ॥ शिरीषलामज्जकहेमलोध्रैस्त्व-ग्दोषसंस्वेदहरः प्रघर्षः ॥ पत्राम्बुलोहा-भयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ ७३ ॥ हिलमोचिरसो युक्तश्चूर्णैरुद-धिफेनजैः ॥ प्रलेपेन हरत्याशु देहदौर्ग-न्ध्यमुत्कटम् ॥ ७४ ॥ हरीतकी तु सम्पि-ष्य गात्रमुद्वर्तयेन्नरः ॥ पश्चात्स्नानं प्रकु-र्वीत देहस्वेदप्रशान्तये ॥ ७५ ॥ हरीतकी लोध्रमरिष्टपत्रं चूतत्वचो दाडिमवल्कलं-श्च ॥ एषोऽङ्गरागः कथितोऽङ्गनानां जम्ब्वाः कषायस्तु नराधिपानाम् ॥ ७६ ॥ गोमूत्रपिष्टं विनिहन्ति कुष्ठं वर्णोज्ज्वलं गोपयसा च युक्तम् ॥ कक्षादिदौर्गन्ध्यहरं पयोभिः शस्तं वशीकृद्रजनीद्वयेन ॥७७॥ बब्बुलस्य दलैः सम्यग्वारिणा परिपे-षितैः ॥ गात्रमुद्वर्तयेत्पश्चाद्धरीतक्या सुपिष्टया ॥ ७८ ॥ भूय उद्वर्तनं कृत्वा पश्चात्स्नानं समाचरेत् ॥ प्रस्वेदान्मुच्यते शीघ्रं ततस्त्वेवं समाचरेत् ॥७९॥ बिल्वा-म्रजम्बूफलपूरकाणां पत्रैः कपित्थस्य दला-नुमिश्रैः ॥ अनूपवत्कर्मविधानयोगैर्वचा

विशोध्या वरगन्धहेतोः ॥ ८० ॥ पथ्यानखीचन्दनकुष्ठसर्जैः पुनःपुनश्चागुरुशर्कराभ्याम् ॥ धूपो जनानां हृदयापहारी विख्यातनामा मलयानिलोऽयम् ॥ ८१ ॥ चण्डांशुगतिलैर्लोध्रशिरीषोशीरकेसरैः ॥ उद्वर्त्तनं भवेद्ग्रीष्मे स्वेदकर्मनिवारणम् ॥ ॥ ८२ ॥ सुरया सममभयाफलचूर्णं मधुना विलिह्य प्रत्यूषे ॥ स्वेदान्हत्वा लभते पुरुषोऽप्यत्यन्तसौरभ्यम् ॥ ८३ ॥ मल्लीकुसुमाभयकरिलेपो घर्मे विचर्चिकादाहे॥ विचकिलपत्रहरिद्रे पर्कटिपत्रश्च दूर्वया सहितम् ॥ ८४ ॥ सम्पिष्य गात्रलेपाद्धर्मविचर्ची शमं याति ॥ ८५ ॥ हस्तपादस्रुतौ योज्यं गुग्गुलुः पञ्चतिक्तकम् ॥ अशक्तौ पञ्चतिक्तं वा पक्वं खादेदतन्द्रितः ८६॥

इति मेदोरोगाधिकारः ।

अडूसेके पत्तोंके रसमें शखका चूना मिलाकर लेप करनेसे अथवा बेलके पत्तोंके स्वरसका लेप करनेसे शरीरकी दुर्गंध दूर होती है ॥

गोरखमुंडीको पीसकर कांजीके साथ पीनेसे मेदसे उत्पन्न हुई मनुष्यके शरीरकी दुर्गंध दूर होती है ॥

बेलके पत्ते और हरड इनको एकत्र पीसकर लेप करनेसे बगलकी दुर्गंध दूर होती है ॥

इमलीके पत्तोंका रस निकालकर किसी उत्तम औषधिके कल्कके साथ मिलाकर लेप करनेसे शरीरकी दुर्गन्ध दूर होती है ॥

हलदीको दूधमें पीसकर उसका शरीरपर लेप करनेसे शरीरकी दुर्गंध बहुत दिनोंकी होय तो भी दूर होजाती है॥

सिरस, लामज्जक, नागकेसर और लोध इनका चूर्ण करके शरीरपर मलनेसे त्वचाके दोष और पसीना दूर होजाताहै ॥

बेलके पत्ते, सुगंधवाला, काली अगर, खस और चदन इनको पीसकर शरीरपर लेप करनेसे शरीरकी दुर्गंध दूर होती है ॥

समुद्रफेनको ब्राह्मीके रसमे पीसकर शरीरपर लेप करनेसे शरीरकी विशेष दुर्गंध तत्काल नष्ट होजातीहै ॥

हरडीको पीसकर शरीरपर मलकर पश्चात् स्नान करनेसे शरीरका पसीना बद होताहै ॥

हरड, लोध, नीमके पत्ते, आमकी छाल और अनारकी छाल इनको पीसकर स्त्री और पुरुषोके शरीरपर मलनेसे शरीरकी दुर्गंधता दूर होती है ॥

जामुनके पत्तोका कल्क बनाकर उसका लेप करनेसे शरीरकी दुर्गंधता दूर होती है ॥

हरड, लोध, नीमके पत्ते, आमकी छाल और अनारकी छाल इनको गोमूत्रमे पीसकर लेप करनेसे कोढ दूर होजाताहै । गायके दूधमें पीसकर लेप करनेसे वर्ण उज्ज्वल होताहै । जलमें पीसकर लेप करनेसे शरीरकी दुर्गंध दूर होती है । और हलदी तथा दारुहलदीके साथ पीसकर लेप करनेसे उत्तम वशीकरण होताहै ॥

बबूरके पत्तोंको उत्तम प्रकारसे जलमे पीसकर शरीरपर मले, फिर हरडको जलमें पीसकर उससे शरीरको मले और इन दोनों पदार्थोंको मलनेबाद स्नान करे तो पसीनेकी अधिकता तत्काल दूर हो जाती है ॥

स्नान करनेके पश्चात् हरड, छोटी नखी, चदन, कूठ, राल, अगर और खाड इनकी धूप वारंवार देवे, इससे शरीरमे सुगधता उत्पन्न होती है । मनुष्योंके चित्तको हरनेवाली यह धूप 'मलयानिल' इस नामसे प्रसिद्ध है ॥

दारुहलदी, तिल, लोध, सिरसकी छाल, खस और केसर इनको पीसकर शरीर पर मलनेसे ग्रीष्म ऋतुमें पसीनेका अधिक आना बद होताहै ।

हरडके चूर्णको मद्य अथवा सहतके साथ चाटे तो पसीना दूर होकर अत्यंत सुगध आती है ॥

पसीना अधिक आता होय और विचर्चिका तथा दाह होय तो मोतियाके पत्ते सुगंधवाला और नागकेसर इनका लेप करे ॥

मोतियाके पत्ते, हलदी, जलपीपलके पत्ते और दाख इनको पीसकर शरीरपर लेप करनेसे पसीना और विचर्चिका दूर होती है ॥

जो हाथ पॉव पसीजते होंय तो गूगल और पचतिक्त नामक सिद्ध किये घीका उपयोग करे । शरीरमें शक्ति न होय तो पथ्यसे रहकर पचतिक्त घृतको भक्षण करे ॥ ६९–८६ ॥

इति मेदोरोगाधिकारः ।

## अथ कार्श्याधिकारः ।

### तत्र कृशतानिदानम् ।

वातो रूक्षान्नपानानि लंघनं प्रमिताशनम् ॥ क्रियातियोगः शोकश्च वेगनिद्राविनिग्रहः ॥ १ ॥ नित्यं रोगो रतिर्नित्यं व्यायामो भोजनाल्पता ॥ भीतिर्धनादिचिन्ता च कार्श्ये कारणमीरितम् ॥ २ ॥

लंघनमुपवासः । प्रमितमल्पम् । क्रियातियोगः वमनविरेकाद्यतिविधानम् । वेगनिद्राविनिग्रहः निद्रानिग्रहः विशोषाय ॥

वायु, रूक्ष अन्नपान, लंघन, अल्पभोजन, वमन, तथा विरेचन आदि क्रियाओंका अतियोग, शोक, मूत्र आदिके वेगोंका रोकना, निद्राका रोकना, सर्वदा रोग, नित्य मैथुन, नित्य कसरत, भोजनका थोडा मिलना, भय और धनआदिचिंता, इनसे कृशता ( दुवलापन ) होताहै, निद्राको रोकनेसे तुरत कृशता होती है ॥१॥२॥

### अथ कृशलक्षणम् ।

शुष्कस्फिगुदरग्रीवाधमनीजालसन्ततिः॥ त्वगस्थिशेषोऽतिकृशः स्थूलपर्वाननो मतः ॥ ३ ॥

जिसका कूला, पेट, तथा गरदन सूखीहुई होय, शरीर मे नसोंका जाल दीखताहो, त्वचा तथा हड्डिये ही शेष होय, तथा संधियें और मुख मोटा होय वह मनुष्य अत्यंत कृश कहाताहै ॥ ३ ॥

### अथात्यंतकृशतारोगाः ।

प्लीहकासक्षयश्वासगुल्मार्शांस्युदराणि च ॥ भृशं कृशं प्रधावन्ति रोगाश्च ग्रहणीमुखाः॥ कश्चिदन्यः कृशोऽतीव वलवान्दृश्यते तदा ॥ ४ ॥

अत्यत कृश मनुष्यको प्लीहा, खाँसी, श्वास, गुल्म, बवासीर, उदररोग और ग्रहणीआदि रोग दौडकर प्राप्त होते हैं, कोई २ कृश मनुष्य भी अत्यंत वलवान् दीखते हैं ॥ ४ ॥

### अथ सत्यपिकृशे वलवत्वकारणम् ।

आधानसमये यस्य शुक्रभागोऽधिको भवेत् ॥ मेदोभागस्तु हीनः स्यात्स कृशोऽपि महाबलः ॥ ५ ॥

यस्य आधानसमये जनयितुः शुक्रस्य आधिक्यं भवति, मेदसोऽल्पता तस्य कृशस्यापि बहुबलमित्यर्थः ॥

गर्भाधानके समय जिसमें पिताके वीर्यका भाग अधिक आया हो और मेदका भाग अल्प होय, वह मनुष्य कृश होनेपर भी बहुत बलवाला होताहै ॥ ५ ॥

### अथ सत्यामपि स्थूलतायां बलहीनत्वकारणम् ।

मेदसस्त्वधिको यस्य शुक्रभागोऽल्पको भवेत् ॥ स स्निग्धोऽपि सुपुष्टोऽपि बलहीनो विलोक्यते ॥ ६ ॥

व्याख्यानं पूर्ववत् ॥

गर्भाधानके समय जिसमें पिताके वीर्यका भाग अल्प आया हो, और मेदका भाग अधिक हो, वह मनुष्य भली भाँति स्निग्ध होनेपर और भली भाँति पुष्ट होनेपर भी बलहीन देखनेमें आते हैं ॥ ६ ॥

### अथ कार्श्यचिकित्सा ।

रूक्षान्नादिनिमित्ते तु कृशे युञ्जीत भेषजम् ॥ बृंहणं बलकृद्वृष्यं तथा वाजीकरश्च यत् ॥ ७ ॥ पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा ॥ कृशस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाम्बुवृष्टिः ॥ ८ ॥

जो मनुष्य रूक्ष अन्नपानादिसे कृश हुआ हो उसको बलदायक, धातुओंको पुष्ट करनेवाले, मैथुनमें रुचिकर्ता और वाजीकर औषधि देवै । अथवा एक पक्षतक दूधके साथ, घीके साथ, तैलके साथ,

अथवा उष्ण जलके साथही असगंधका चूर्ण पिये तो जिस प्रकार जलकी वृष्टिसे धान्योंकी पुष्टता होतीहै उसी प्रकार, उसके शरीरकी पुष्टता होतीहै ॥ ७ ॥ ८ ॥

### अथाश्वगंधातैलम्।

**अश्वगन्धस्य कल्केन क्वाथे तस्मिन्पय-स्यपि॥ सिद्धं तैलं कृशाङ्गानामभ्यंगादंग-पुष्टिदम् ॥ ९ ॥**

असगधके क्वाथमें दूध तथा असगंधकाही कल्क डालकर पकाये हुए तेलसे अभ्यग करै तो मनुष्यके अंग पुष्ट होतेहैं ॥ ९ ॥

### अथाश्वगंधाघृतादि।

**पुष्टिकृद्बालरोगोक्तमश्वगन्धाघृतं भजेत् ॥ वाजीकरोदितं तद्वदश्वगन्धाघृतादि-कम् ॥ १० ॥**

बालकोंके रोगोमे जो अश्वगधाघृत कहेंगे वह तथा वाजीकरणके प्रकरणमें जो अश्वगधा घृतादि कहेंगे वह सब पुष्टिकारक हैं ॥ १० ॥

### अथासाध्यकृशता।

**स्वभावादतिकार्श्यो यः स्वभावादल्पपा-वकः ॥ स्वभावादबलो यश्च तस्य नास्ति चिकित्सितम् ॥ ११ ॥**

इति कार्श्यचिकित्साधिकारः।

जो मनुष्य स्वाभाविक रीतिसेही अत्यत कृश होय, अल्प अग्निवाला होय और निर्बल होय वह असाध्य है उसकी चिकित्सा नहीं करै ॥ ११ ॥

इति कार्श्यचिकित्साधिकारः समाप्तः।

---

## अथोदराधिकारः।

### तत्रोदरनिदानम्।

**रोगाः सर्वेपि मन्देऽग्नौ सुतरामुदराणि च ॥ अजीर्णान्मलिनैश्चान्नैर्जायन्ते मल-सञ्चयात् ॥ १ ॥**

**अग्नौ मन्दे सर्वे रोगाः जायन्ते। किन्तु सुतराम् अतिशयेन उदराणि जायन्ते। अपरानपि हेतूनाह, अजीर्णात् मलिनैश्चान्नैः अत्यन्तदोषजनकैः। मलसञ्चयात् मलादीनां पुरीषस्य च अतिवृद्धेः। अत्र उदरशब्देन उदरस्थो रोग उच्यते। यत आह—**

**अर्थतो धर्मतः साम्यात्तत्समीपतयापि च ॥ तत्साहचर्याच्छब्दानां वृत्तिरुक्ता चतुर्विधा ॥ २ ॥**

यदि जठराग्नि मंद होगई होय तो सम्पूर्ण रोग होतेहैं, और उनमें उदरके रोग तो अत्यंत होतेहैं। अजीर्णसे, अत्यत दोष उत्पन्न करनेवाले अन्नोंसे और दोष तथा विष्ठाकी अत्यन्त वृद्धिसेभी उदररोग होतेहैं ॥ १ ॥

मूलमें केवल उदर शब्द है, परन्तु उस शब्दसे यहाँ उदरमें रहनेवाले रोग जानने, क्योंकि कहा है कि—"कहीं अर्थसे, कहीं धर्मसे, तथा उस पदार्थमें रहनेसे, कहीं समीपमें रहनेसे, और कहीं साथ रहनेसे, इस भाँति शब्दोंकी वृत्ति चार प्रकारकी मानी जाती है ॥ २ ॥

### अथोदररोगसम्प्राप्तिः।

**रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि सञ्चिताः ॥ प्राणाग्न्यपानान्संदूष्य जनय-न्त्युदरं नृणाम् ॥ ३ ॥**

सचय हुए दोष पसीना तथा जलको वहन करनेवाले स्रोतोंको रोककर जठराग्नि, प्राणवायु और अपान वायुको दूषित करके उदरके रोगोंको उत्पन्न करैहैं ॥ ३ ॥

### अथोदररोगसामान्यरूपम्।

**आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाऽ-ग्निता ॥ शोथः सदनमंगानां संगो वात-पुरीषयोः ॥ दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ॥ ४ ॥**

अफारा, चलनेंमे अशक्तता, दुर्बलता, अग्निकी मदता, सूजन, अगोंमें ग्लानि, वायु तथा विष्ठाका अवरोध, दाह और तन्द्रा, ये लक्षण सर्व प्रकारके उदर रोगोंमें होतेहैं ॥ ४ ॥

### अथोदररोगनिदानपूर्वकसंख्या।

**पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥**

सम्भवन्त्युदराण्यष्टौ तेषां लिंगं पृथक्छृणु ॥ ५ ॥

वात, पित्त, कफ, तीनोंदोष, प्लीहा, गुदाका अवरोध, क्षत, और पेटमें पानीकी एकत्रता, इनसे आठ प्रकारके उदररोग होतेहैं। इन आठ प्रकारके उदररोगोंके अनुक्रमसे वातोदर, पित्तोदर, कफोदर, सन्निपातोदर, प्लीहोदर, बद्धोदर, क्षतोदर और जलोदर, इस भाँति आठ नाम हैं। इनके पृथक् पृथक् लक्षण कहतेहैं सुनो ॥ ५ ॥

## अथ वातोदरलक्षणम् ।

तत्र वातोदरे शोथः पाणिपन्नाभिकुक्षिषु ॥ कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्वभेदनम् ॥ ६ ॥ शुष्ककासोऽङ्गमर्दश्च गुरुता मलसंग्रहः ॥ श्यावारुणत्वगादित्वमकस्माद्ध्रासवृद्धिमत् ॥ ७ ॥ सतोदभेदमुदरं तनुकृष्णशिराततम् ॥ आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ॥ वायुश्चात्र सरुक्छब्दो विचरेत्सर्वतोगतिः ॥ ८ ॥

कुक्षिपार्श्वोदरेत्यत्र कुक्षिशब्द उदरस्य वामदक्षिणभागद्वयवाची। सर्वतोगतिः सकलकोष्ठे सञ्चरन् ॥

वातोदर हुआ होय तो हाथ पाँव, नाभि तथा पेटमें सूजन होतीहै, पेटकी दोनों पसलियोंमें, कोखमें, पेट तथा कमर और पीठमें पीडा होतीहै, सन्धियें टूटतीहैं, सूखी खाँसी होतीहै तथा अंगोंका टूटना, भारीपन, मलोंका संग्रह, त्वचा आदिमें कालापन तथा लाली, पीडका अकस्मात् बढना घटना, पेटमें छेदना तथा भेदनकी भाँति पीडा, पेटका काली सूक्ष्म सूक्ष्म नसोंसे व्याप्त होना, पेटको हाथसे बजानेपर फुली मशकका सा शब्द हो और सब कोटेमें वायु विचरता हुआ पीडा तथा शब्द करताहै ये लक्षण होतेहैं ॥ ६–८ ॥

## अथ पित्तोदरलक्षणम् ।

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता ॥ भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ ९ ॥ पीतताम्रशिरानद्धं सस्वेदं सोष्म दह्यते ॥ धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १० ॥

हरित् शाकवर्णात्मकम् । सोष्म अन्तस्तापयुक्तम् । दह्यते बहिर्दाहयुक्तं भवति । धूमायते धूममिव उद्गमति । क्षिप्रपाकं क्षिप्रपाकाज्जलोदरं जायते । प्रदूयते व्यथते ॥

पित्तोदर हुआ होय तो ज्वर, मूर्च्छा, दाह, तृषा, मुखमें तीखापन, भ्रम, अतीसार और त्वचा आदिमें पीलापन होताहै । पेट शाककी भाति हरे वर्णवाला, पीली तथा लाल नसोंसे बंधेहुएकी समान, पसीने सहित हो, भीतर उष्णतायुक्त हो, बाहर दाह हो और आतोंसे धुआँसा निकलता हो, स्पर्शमें मृदु, पाक शीघ्रहोय और पीडायुक्त होताहै, तथा तुरन्त पकजावे उससे जलोदर होजाताहै ॥ ९ ॥ १० ॥

## अथ कफोदरलक्षणम् ।

श्लेष्मोदरेऽङ्गसदनं श्वयथुर्गौरवं तथा ॥ तन्द्रोत्क्लेशोऽरुचिः स्वापः कासः शौक्ल्यं त्वगादिषु ॥ ११ ॥ उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् ॥ चिराभिवृद्धिं कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १२ ॥

गौरवमंगानाम् । तन्द्रा निद्रावाहुल्यम् । उत्क्लेशो हल्लासः । स्वापः स्पर्शाज्ञता । शुक्लराजीततं शुक्लशिराव्याप्तम् ॥

कफोदर हुआ होय तो अंगोंमें ग्लानि, सूजन, गुरुता, तन्द्रा, उत्क्लेश ( वमन होनेवालीसी ज्ञातहो ), अरुचि, अंगोंमें स्पर्श करनेसे मालूम न हो, खाँसी, त्वचादिक श्वेत हों, और पेट बँधासा चिकना, सफेद नसोंसे व्याप्त, मोटा, अधिककालमें बढनेवाला, कठोर, स्पर्शमें शीतल, भारी तथा गडगडाहट रहित हो, यह लक्षण होतेहैं ॥ ११ ॥ ॥ १२ ॥

## अथ सन्निपातोदरलक्षणम् ।

स्त्रियोऽन्नपानं नखलोममूत्रविडार्तवैर्युक्तमसाधुवृत्ताः ॥ यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाच्च ॥ १३ ॥ तस्याशु रक्तं कुपिताश्च दोषाः कुर्युः

सघोरं जठरं त्रिलिंगम् ॥ तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च॥ १४ ॥ स चातुरो मूर्च्छति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च॥ दूष्योदरं कीर्तितमेतदेव प्लीहोदरं कीर्तयतो निबोध ॥ १५ ॥

स्त्रिय इत्यविवेकिसन्निहितजनोपलक्षणम्। ताश्च स्वसौभाग्यमिच्छन्त्यः । विट् मार्जारादीनाम् । आर्तवं रजः। अरयः शत्रवः। गरान्संयोगजानि विषाणि । दुष्टमम्बु सविषमत्स्यतृणपर्णादियुक्तम्। दूषीविषं विषमेव अग्न्याद्युपघातेन स्वल्पप्रभावम् । यत उक्तम् "जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा । स्वभावतो वा गुणविप्रयुक्तं विषं हि दूषीविषतामुपैति ॥" गुणविप्रयुक्तं गुणवियुक्तं तदुदरं शीतादिषु कुप्यति। तत्र दूषीविषस्य प्रकोपात्। मूर्च्छति विषयोगात् । प्रसक्तं निरन्तरम् । एतदेव सन्निपातोदरं तन्त्रान्तरे दूष्योदरं कीर्तितम् । अथ वा परस्परं दूषयन्ति दोषा एव दूष्याः तैः कृतम् उदरं दूष्योदरम् ॥

खोटे आचरणयुक्त स्त्री—वशीकरण आदिकी इच्छासे जिस पुरुषको नख, रोम, मूत्र,विष्ठा, आर्तव ( रजोदर्शका रक्त ), इनसे युक्त किया हुआ अन्न खिलावै उस पुरुषको अन्य भी पाका अविवेकी मनुष्य जिसको ऐसा अन्न खिलावै उसको, शत्रु जिसके सयोगसे विष खिलावै, अथवा विषैली मछली, विषैले पत्ते आदिका पानी जो पियै उसको और दूषित विष ( अग्निआदिसे उपघात होनेके कारण अल्प प्रभाव युक्त विष ) जिसके खानेपीनेमें आवै उसके कुपित हुआ रुधिर और कुपित हुए दोष तत्काल त्रिदोषोंके चिह्नयुक्त अति भयंकर उदर रोगको उत्पन्न करैहैं यह उदररोग शीतल पवनके समयमें और जिस समय अधिक बादल घिरे होयँ उस समय विशेष करके कुपित होताहै तथा दाह और मूर्च्छित भी कर देताहै । क्योंकि इन समयोमे दूषित विषका प्रकोप होताहै, तथा विषके योगसे मूर्च्छा होना भी संभव है । यह रोगी मनुष्य नित्य पाण्डु, कृश और तृषासे व्याकुल रहताहै । यह उदररोग 'सन्निपातोदर' कहाताहै और अन्य ग्रन्थोंमें इसको ' दूष्योदर ' इस नामसे भी कहा है। परस्परसे दूषित हुए दोष भी दूष्य कहातेहैं इस कारण दूष्यके किये उदररोगको ' दूष्योदर ' भी कहाहै अब प्लीहोदरके लक्षण कहतेहैं सुनो ॥ १३–१५ ॥

## अथ प्लीहोदरलक्षणम् ।

वर्द्धते प्लीहवृद्ध्या यद्विद्यात्प्लीहोदरं हि तत् ॥ तद्वामे वर्द्धते पार्श्वे निमित्तं तत्र तस्य यत् ॥ १६ ॥ प्रवृद्धे प्लीह्नि लिंगानि यान्युक्तानि भिषग्वरैः ॥ प्लीहोदरेऽपि दृश्यन्ते तानि सर्वाणि देहिनाम् ॥ प्लीहोदरस्यैव भेदो यकृद्दाल्युदरं तथा ॥ १७ ॥

तस्य पुनरपि विशेषकमित्याह।

सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १८ ॥

यकृद्दालयति दोषैर्भिनत्तीति यकृद्दाल्युदरम् । तदेव उदरमेव ॥

प्लीहाके बढनेसे पेट जो बढजाताहै उसको प्लीहोदर कहतेहैं, प्लीहा बाँई पसलीमें होतीहै इससे पेटभी वाम-ओरका बढताहै । उत्तम वैद्योंने प्लीहा बढनेके जो लक्षण कहेहैं वे लक्षण सब प्राणियोंके प्लीहोदर नामक रोगमें भी दीखतेहैं । 'यकृद्दाल्युदर' नामक जो उदररोगका एक भेद है वह भी प्लीहोदरकी एक जाति है । प्लीहोदरसे यकृद्दाल्युदरमें पृथक्ता इतनीही है कि जो दाहिनी ओरकी गाठ है वह ' यकृत् ' कहाती है, उसके बढनेसे दाहिनी ओरका पेट बढजाताहै, उसको ' यकृद्दाल्युदर ' कहतेहैं । इस रोगमे दोषोंके कारण यकृत् भिदजाताहै इस लिये इस रोगका नाम यकृद्दाल्युदर है ॥१६–१८॥

जिसकी अन्नमें अरुचि हो, सूजन तथा दस्त होते हों और विरेचन देनेपर भी पेट पूर्ण होगया हो उसकी चिकित्सा नहीं करै ॥ २६–३१ ॥

## अथोदररोगचिकित्सा ।

**ऐरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तं त्रिफलारसो वा ॥ निहन्ति वातोदरशोथशूलं क्काथः समूत्रो दशमूलजश्च ॥ ३२ ॥**

अण्डीका तेल, दशमूलका क्काथ मिलाकर अथवा गोमूत्र, त्रिफलेका रस मिलाकर वा दशमूलके क्काथमें गोमूत्र मिलाकर पिये तो इससे वायुसम्बन्धी उदररोग सूजन तथा शूल नष्ट होताहै ॥ ३२ ॥

## अथ कुष्ठादिचूर्णम् ।

**कुष्ठं दन्ती यवक्षारो व्योषं त्रिलवणं वचा ॥ अजाजी दीप्यकं हिंगु स्वर्जिका चव्यचित्रकम् ॥ शुण्ठी चोष्णाम्भसा पीता वातोदररुजापहा ॥ ३३ ॥**

कूठ, दन्ती ( जमालगोटेकी जड ), जवाखार, सोंठ, मिरच, पीपल, सेंधा, साभर, संचलनोन, वच, जीरा, अजवायन, हींग, सज्जी, चव, चीता और सोंठ इनका चूर्णकर उष्ण जलसे पिये तो वायुसंबंधी उदररोग नष्ट होताहै, इसको 'कुष्ठादि चूर्ण' कहतेहैं ॥ ३३ ॥

## अथ लशुनतैलम् ।

**लशुनस्य तुलामेकां जलद्रोणे विपाचयेत्॥ त्रिकटु त्रिफला दन्ती हिंगु सैन्धवचित्रकम् ॥ ३४ ॥ देवदारु वचा कुष्ठं मधु शिग्रुः पुनर्नवा ॥ सौवर्चलं विडंगानि दीप्यको गजपिप्पली ॥ ३५ ॥ एतेषां पलिकान्भागांस्त्रिवृतः षट्पलानि च ॥ पिष्ट्वा कषायेणानेन तैलं मृद्वग्निना पचेत् ॥ ३६ ॥ तत्पिबेत्प्रातरुत्थाय यथाग्निबलमात्रया ॥ निहन्ति सकलान्रोगानुदराणि विशेषतः ॥ ३७ ॥ मूत्रकृच्छ्रमुदावर्त्तमन्त्रवृद्धिं गुदक्रिमीन् ॥ पार्श्वकुक्षिभवं शूलमामशूलमरोचकम् ॥ ३८ ॥ यकृदष्ठीलिकानाहान्प्लीहानं चांगवेदनाम् ॥ मासमात्रेण नश्यन्ति अशीतिर्वातजा गदाः ॥ ३९ ॥**

एक तुला ( चारसौ तोले ) लहसनका एक द्रोण (१०२४ तोले ) जलमें क्काथकरै, पश्चात् सोंठ, मिर्च, पीपल, हरड, बहेडा, आमला, दन्ती, हींग, सेंधा, चीता, देवदार, वच, कूठ, मुलेठी, सहॅजना, पुनर्नवा, सोंचलनोन, वायविडंग, अजमाइन, तथा गजपीपल, ये प्रत्येक पदार्थ चार चार तोलेभर और निसोत २४ तोले लेकर पीस लेवै, यह कल्क उस क्काथमें डालकर कोमल अग्निसे तैल पकावै । प्रातःकाल उठकर अग्नि तथा बलानुसार योग्य मात्रासे यह तेल पिये तो इससे सब रोग नष्ट होतेहैं और उदररोग विशेष करके दूर होतेहैं । मूत्रकृच्छ्र, उदावर्त, अन्त्रवृद्धि, गुदाकी कृमि, पसली तथा कोखका शूल, आमशूल, अरुचि, यकृत्, अष्ठीलिका, आनाह, प्लीहा और अंगमें हुई पीडा, इस तेलके प्रयोगसे नष्ट होतीहै । तथा वायुसम्बन्धी अस्सी प्रकारके वायुरोग एक महीनेतक इस तेलका सेवन करनेसे नष्ट होतेहैं, इसको 'लशुनतैल' कहतेहैं ॥ ३४–३९ ॥

## अथ पित्तोदरकफोदरचिकित्सा ।

**पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत् ॥ पयसा च त्रिवृत्कल्कै रुबूकस्य शृतेन च ॥ ४० ॥ पिप्पल्यादिगणेनाज्यं पाचितं पाययेद्भिषक् ॥ नरं पथ्यभुजं नित्यं कफोदरनिवृत्तये ॥ ४१ ॥ नागरत्रिफलाकल्कैर्द्व्यम्बुपरिपेषितैः ॥ पाचितं तैलमाज्यं वा पिबेत्सर्वोदरेषु च ॥ ४२ ॥ शालिषष्टिकगोधूमयवनीवारभोजनम् ॥ निरूहो रेचनं श्रेष्ठं सर्वेषु जठरेषु च ॥ ॥ ४३ ॥ आनूपमौदकं मांसं शाकं पिष्टकृतं तिलाः ॥ व्यायामाध्वदिवास्वप्नस्नेहपानानि वर्जयेत् ॥ ४४ ॥ तथोग्रलवणोष्णानि विदाहीनि गुरूणि च ॥ नाद्यादन्नानि जठरे तोयपानञ्च वर्जयेत् ॥ ४५ ॥ उदराणां मलाढ्यत्वादङ्कुशः शोधनं हितम् ॥ क्षीरमेरण्डजं तैलं पिबेन्मूत्रेण वा शकृत ॥ ४६ ॥ वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वि-**

तम् ॥ शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ४७ ॥ यवानीहपुषाजाजीव्योषयुक्तं कफोदरी ॥ सन्निपातोदरी युक्तं त्रिकटुक्षारसैन्धवैः ॥ ४८ ॥

पित्तसंबंधी उदररोग हुआ होय और रोगी बलवान् हो तो उसको प्रथमही दूध, निसोतका कल्क और अडीका क्वाथ, इनसे विरेचन देवै। और यदि उदररोग कफसे हुआ होय तो रोग नष्ट करनेके लिये नित्य पथ्य खानेका रोगी नियम रक्खै, वैद्य पिप्पली आदि गणकी औषधियोंसे पकाया हुआ तेल पिलावे। सोंठ, हरड, बहेडा तथा आमला, इनको दहीके पानीमें पीस कल्क करै, फिर उस कल्कसे पकाया हुआ तेल अथवा घी पिलावे तो सर्वप्रकारके उदररोग नष्ट होजातेहैं। ये नागरादि तैल वा घृत इन नामोंसे कहेहैं। शालिचावल, साठीके चावल, गेहूँ, जौ तथा नीवार इनका भोजन, निरूहवस्ति और विरेचन, ये सब विधि उदररोगोंमें हितकारी हैं। अथवा उदररोगी अनूप देशके जीवोंका तथा जलजंतुओंका मांस, शाक, पिठीसे बने पदार्थ, तिल, व्यायाम (कसरत), मार्गका चलना, दिनमें सोना और स्नेहपान, इनका त्याग करै। उदररोग हुआ होय तो उग्र (तीक्ष्ण), खारी, गरम, दाहकारक, और भारी पदार्थ नही खाय तथा पानीभी नही पियै। इस रोगमे पेट अधिक मलके समूहसे युक्त रहताहै इस कारण अधिकवार विरेचनसे शुद्ध करै यह हितकारी होताहै। दूधमें अण्डीका तेल मिलाकर पियै, अथवा गायका गोबर मूत्रमें डालकर पियै। वायुसे हुआ उदररोगी पीपल तथा सैंधा, इनका चूर्ण डालकर गाढा तक्र (मट्ठा) पियै, पित्तसे हुआ उदररोगी बूरा तथा मिरचोंको डालकर मीठा मट्ठा पियै और कफसे हुआ उदररोगी अजवायन, हाऊबेर, जीरा, सोंठ, मिरच तथा पीपल इनका चूर्ण डालकर गाढा मट्ठा पियै, और त्रिदोष (सन्निपात) से हुआ उदररोगी सोंठ, मिरच, पीपल, जवाखार और सैंधानिमक, इनका चूर्ण डालकर गाढा मट्ठा पिये ॥ ४०-४८ ॥

## अथ नारायणचूर्णम्।

यवानी हपुषा धान्यं त्रिफला चोपकुञ्चिका ॥ कारवीपिप्पलीमूलमजगन्धा शटी वचा ॥ ४९ ॥

उपकुञ्चिका कारवी च बृहज्जीरकः मंगरैला इति लोके ॥

शताह्वा जीरकं व्योषं स्वर्णक्षीरी च चित्रकम् ॥ द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ ५० ॥ विडंगश्च समांशानि दन्त्या भागत्रयं भवेत् ॥ त्रिवृद्विशाला द्विगुणा शातला स्याच्चतुर्गुणा ॥ ५१ ॥

विशाला इन्द्रवारुणी। शातला सेहुण्ड इति प्रसिद्धः ॥

एष नारायणो नाम्ना चूर्णो रोगगणापहः ॥ एनं प्राप्य निवर्तन्ते रोगा विष्णुमिवासुराः ॥ ५२ ॥ तक्रेणोदारिभिः पेयो गुल्मिभिर्बदराम्बुना ॥ आनद्धवाते सुरया वातरोगे प्रसन्नया ॥ ५३ ॥ दधिमण्डेन विड्भेदे दाडिमाम्बुभिरर्शसि ॥ परिकर्तिषु वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ ५४ ॥

परिकर्तिः गुदे परिकर्तनवत्पीडा ॥

भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ॥ हृद्रोगे ग्रहणीरोगे कुष्ठे मन्देऽनले ज्वरे ॥ ५५ ॥ दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ॥ यथार्ह स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ ५६ ॥

अजवायन, हाउबेर, धनिया, हरड, बहेडा, आमला, कालाजीरा, कलौंजी, पीपलामूल, अजमोद, कचूर, वच, सतावर, जीरा, सोंठ, मिरच, पीपल, चोक, चीता, जवाखार, सज्जी, पोहकरमूल, कूठ, पाँचोनोन और वायविडंग, इनको समान भाग लेवै, तथा दन्ती (जमालगोटेकी जड), तीन भाग, निसोत दो भाग, इन्द्रायन दो भाग और थूहर चार भाग लेव, फिर इन सबका चूर्ण करै तो 'नारायणचूर्ण' बनताहै। यह चूर्ण रोगोंके समूहको नष्ट करताहै, जिस प्रकार विष्णुके प्रभावसे दैत्य भागजाते हैं, उसी प्रकार

इस चूर्णके प्रभावसे रोग भागजाते हैं । यह चूर्ण उदररोगवाले गाढे मठेके साथ पिये, गुल्मरोगी बेरकी छालके काथसे पिये, आनाहरोगमें मदिराके साथ पिये, वायु रोगवाले मदिराकी कांजीके साथ पिये, दस्तोंमें दहीके मडसे पिये, बवासीर रोगवाला दाडिमके रससे पिये, पेटमें कत रनेकेसी पीडा होय तो तितडीकसे पिये और अजीर्ण रोगी गरम पानीके साथ पिये। भगदर, पाण्डुरोग, खासी, श्वास, गलगण्ड, हृदयरोग, ग्रहणीरोग, कुब्जवात रोग, मदाग्नि, ज्वर, दातका विष, मूलका विष और अकृत्रिम विषसे बनाये हुए विष, इनमें भी प्रथम कोठेको स्निग्ध करकै पश्चात् योग्य पदार्थके साथ यह विरेचन करनेवाला नाराचूर्ण पिये ॥ ४९-५६ ॥

### अथ नाराचघृतम् ।

**स्नुक्क्षीरदन्तीत्रिफलाविडंगासिंहीत्रिवृच्चित्रककर्षकर्षम् ॥ घृतं विपक्कं कुडवप्रमाणं तोयेन तस्याक्षमथार्द्धकर्षम् ॥ ५७ ॥ पीत्वोष्णमम्भोऽनुपिबेद्विरेके पेयां रसं वा प्रपिबेद्विधिज्ञः ॥ नाराचमेतज्जठरामयानां युक्त्योपयुक्तं प्रवदन्ति सन्तः ॥ ५८ ॥**

थूहरका दूध, दन्ती, हरड, बहेडा, आमला, वायविडंग, कटेरीकी जड, निसोत और चीता, ये प्रत्येक पदार्थ एक एक तोलाभर ले. उनके कल्कसे सोलह तोले घी पकावे, तो 'नाराचघृत' सिद्ध होताहै । विरेचनके लिये पानीके साथ एक तोला अथवा आधा तोला, घी पीकरऊपरसे गरम पानी पिये । विधि जाननेवाला पुरुष इस घीसे विरेचन होनेपर योग्य पेया अथवा योग्य रस पिये । जिस प्रकार बाण निशानको तोडता है तिसी प्रकार युक्तिसे उपयोगमें लाया हुआ यह घी उदरके रोगोंको नष्ट करदेताहै ऐसा वैद्य कहते हैं ॥ ५७ ॥ ५८ ॥

### अथ वज्रकल्कः ।

**वज्रायाः कर्षमात्रायाः कल्कं दध्यादिवेष्टितम् ॥ निगिलेद्वारिणा नित्यमुदरव्याधिशान्तये ॥ ५९ ॥**

**वज्राण्डीति वनसूरणेति लोके ॥**

वनसूरणका एक तोला कल्क करकै उस कल्कको दही वगैरहसे मिलाकर नित्य पानीसे खावे तो उदररोग शान्त होतेहैं ॥ ५९ ॥

### अथ पुनर्नवादिक्वाथः ।

**पुनर्नवा दारुनिशा सतिक्ता पटोलपथ्यापिचुमन्दमुस्ताः ॥ सनागरच्छिन्नरुहेति सर्वैः कृतः कषायो विधिना विधिज्ञैः ॥ ६० ॥ गोमूत्रयुग्गुग्गुलुना च युक्तः पीतः प्रभाते नियतं नराणाम् ॥ सर्वांगशोथोदरपाण्डुशूलश्वासान्वितं पाण्डुगदं निहन्ति ॥ ६१ ॥**

**पुनर्नवादिः क्वाथः ॥**

इति उदररोगनिदानचिकित्साधिकारः ।

पुनर्नवा, दारुहलदी, कुटकी, परवल, हरड, नीम, मोथा, सोंठ और गिलोय, इन सब पदार्थोंको एकत्र करकै विधिअनुसार क्वाथ करै, उस क्वाथमें गोमूत्र तथा गूगल डालकर प्रातःकाल पिये तो इससे सब प्रकारके अंगकी सूजन, उदररोग, पाण्डुरोग, शूलरोग और श्वास आदि रोगोंका समूह अवश्य नष्ट होताहै ॥ ६० ॥ ६१ ॥

इति उदररोगाधिकारः सपूर्णः ।

---

## अथ शोथाधिकारः ।

### तत्र शोथनिदानम् ।

**शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ॥ दध्याममृच्छाकविरोधिपिष्टगरोपसृष्टान्ननिषेवणं च ॥ १ ॥ अर्शांस्यचेष्टा वपुषो ह्यशुद्धिर्मर्माभिघातो विषमा प्रसूतिः ॥ मिथ्योपचारः प्रतिकर्मणाश्च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥ २ ॥**

शुद्धिः-वमनविरेकादिः । आमयाः पांडुरोगादयः । अभक्तम्-अभोजनम् । आमः अपक्वो भुक्तस्य रसः । पिष्टगरोपसृष्टान्नम् पिष्टो यो गरः संयोगजं विषं तेन संसृष्टमन्नम् । वपुषो ह्यशुद्धिः शोधनार्हस्य वपु-

षेऽशोधनम् । मर्मोपघातः दोषकृत् एव ज्ञेयः। बाह्यहेतुकृतस्तु मर्मोपघात आगन्तुजशोथहेतुरेव। विषमा प्रसूतिः आमगर्भपतनादिका। प्रतिकर्मणां वमनादिपञ्चकर्मणाम्। मिथ्योपचारः असम्यक्करणम्। श्वयथोः शोथस्य। निजस्य आत्मीयस्य सन्निकृष्टस्य हेतुर्वाताद्यात्मकस्य उक्तः॥

वमन, विरेचन आदि शोधनसे, पाण्डुरोगादि रोगोंसे अथवा उपवासोंसे कृश हुए अथवा निर्बल हुए लोगोंके सूजन होतीहै। खारी, खट्टे, तीक्ष्ण, उष्ण अथवा भारी पदार्थोंको सेवन करनेसे भी सूजन होतीहै। दहीके सेवनसे, खाये हुए अन्नके अपक्करससे, मट्टी, शाक परस्परमे विरुद्ध अथवा सयोगसे विरुद्ध हुए ऐसे अन्नोके सेवनसे, बवासीरसे, शरीरको परिश्रम नहीं होनेसे, शोधनके योग्य हुए शरीरको वमन विरेचनादि देकर शुद्ध नही करनेसे, दोषोंसे हुए मर्मस्थलोंके उपघातसे, कच्चा गर्भ गिरना आदि विषम प्रसवसे और वमन आदि पॉचो कर्म अयोग्य रीतिके होनेसे, वायु आदि दोषसम्बंधी सूजन उत्पन्न होतीहै॥ १ ॥ २ ॥

## अथ शोथस्य सम्प्राप्तिपूर्वकसामान्यलक्षणम्।

रक्तपित्तकफान्वायुर्दुष्टो दुष्टान्बहिः शिराः॥ नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम्॥ उत्सेधं संहतं शोथं तमाहुर्निचयादतः॥ ३ ॥ सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माऽथ शिरातनुत्वम्॥ सलोमहर्षश्च विवर्णता च सामान्यलिंगं श्वयथोः प्रदिष्टम्॥ ४ ॥

उत्सेधम् उन्नतत्वम्। किंविशिष्टम् उत्सेधम्। अतः पूर्वोक्तान्निचयाद्रक्तपित्तकफवातानां समुदायात् संहतं घनम्। तमुत्सेधं शोथमाहुरित्यन्वयः। तस्य शोथस्य किं स्यात्। इत्याकांक्षायामाह अनवस्थितत्वं स्यात्, अनियता स्थितिः स्यादित्यर्थः। चिकित्साव्यतिरेकेणापि निवृत्तेः। तच्च अनवस्थितत्वं सगौरवं स्यात्। गौरवमपि अनवस्थितं स्यात्। अथ च सोत्सेधं स्यात्। उन्नतत्वमपि अनवस्थितं स्यादित्यर्थः॥

दूषित वायु रुधिर, पित्त तथा कफ यह बाहरकी शिराओंमे प्राप्त होय और गति रुकजाय तो त्वचा तथा मांसमे रुधिर, पित्त तथा कफके समुदायसे अधिक ऊँचाईको उत्पन्न करैहै उसको सूजन कहतेहैं, इस सूजनकी स्थिति अनियमित होतीहै, क्योंकि वह सूजन समयपर चिकित्सा न होनेसे भी उतर जातीहै, यह अनियमितपन गुरुतायुक्त होताहै, गुरुता (भारीपन) भी विना नियमके होतीहै और सूजनकी ऊँचाई भी विना व्यवस्थाके होतीहै। सूजनसे उष्णता, शिराओंकी दुर्बलता, रोमोंका खडा होना और वर्णका बदलना ये सामान्य लक्षण सूजनमें होतेहैं॥ ३ ॥ ४ ॥

## अथ वातजशोथलक्षणम्।

चरस्तनुत्वक्परुषोऽरुणोऽसितः प्रसुप्तिहर्षार्त्तियुतोऽनिमित्ततः॥ प्रशाम्यति प्रोन्नमति प्रपीडितो दिवाबली स्याच्छ्वयथुः समीरणात्॥ ५ ॥

चरः सञ्चारी। प्रसुप्तिः स्पर्शाज्ञता। हर्षोऽत्र फिनिफिनी रोमाञ्चो वा। अर्त्तिः पीडा। एतद्युतः दिवाबली विकृतिविषमसमवायारब्धत्वात्। अत एव उक्तं चरकेण—

स्नेहोष्णवमनाद्यैर्यः प्रशाम्येत स वातिकः॥ यश्चाप्यरुणवर्णः स्याच्छोथो नक्तं प्रशाम्यति॥ ६ ॥

वायुसबंधी सूजन—चंचल, पतली त्वचावाली, कठोर, लाल, काली, स्पर्शमें अज्ञान, रोमाच तथा पीडा सहित, विना कारणही शांत होनेवाली, दबानेसे ऊँची और दिनमें बलवान् होतीहै। इस सूजनमें दिनको बलवान् होनेका कारण यह है कि, वह विकृतिविषमसमवायसे होतीहै, इस कारणही चरकमें कहा है कि "जो सूजन स्नेहसे, उष्णसे तथा वमन आदिसे

शांत होय और लालवर्णकी हो वह सूजन वायुसंबंधी जाननी" ॥ ५ ॥ ६ ॥

## अथपित्तजशोथलक्षणम् ।

**मृदुः सगन्धोऽसितपीतरागवान्भ्रमज्वरस्वेदतृषामदान्वितः ॥ यस्तूष्यते स्पर्शसहोऽक्षिरागवान्स पित्तशोथो भृशदाहपाकवान् ॥ ७ ॥**

उष्यते सन्तप्यते । भृशदाहपाकवान् भृशं दाहो यः पाकस्तद्युक्तः ॥

जो सूजन-मृदु, गन्धसहित, काले तथा पीलेवर्णवाली हो, भ्रम, ज्वर, स्वेद ( पसीना ), तृष्णा, तथा मदसे संयुक्त हो, दाह हो, स्पर्शको सहै, नेत्रोंमें लाली होजाय, और पकते समय अत्यंत दाह हो उसको पित्त संबंधी जानना ॥ ७ ॥

## अथ कफजशोथलक्षणम् ।

**गुरुः स्थिरः पाण्डुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकृत् ॥ सकृच्छ्रजन्मप्रशमो निपीडितो न चोन्नमेद्रात्रिबली कफात्मकः ॥ ८ ॥**

जो सूजन भारी, स्थिर, पाण्डुवर्णवाली होय, अरुचि, लारका झरना, निद्रा तथा वमनसे युक्तहो, अग्निको मंद करनेवाली हो, दवानेसे ऊँची न होती हो, रातमें बलवान् हो और जिसकी उत्पत्ति तथा शांति बहुत दुःखदायक हो उसको कफ संबंधी जानना ॥ ८ ॥

## अथ द्विदोषजशोथलक्षणम् ।

**निदानाकृतिसंसर्गाज्ज्ञेयः शोथो द्विदोषजः ॥ ९ ॥**

जिसमें दो प्रकारके कारण दीखैं और उपरोक्त प्रकारोंमे दोके लक्षण मिलते होयँ तो वह सूजन दो दोषोंसे उत्पन्न हुई जाननी ॥ ९ ॥

## अथ सन्निपातजशोथलक्षणम् ।

**सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः ॥ १० ॥**

व्यामिश्रलक्षण इत्युक्ते सर्वाकृतिरिति उक्तवातजादिशोथसकललक्षणनियमार्थम् ॥

जो सूजन मिश्रित लक्षणोंवाली, अथवा उपरोक्त सब सूजनोंके लक्षणोंवाली होय उसको सन्निपातिज जानना ॥ १० ॥

## अथाभिघातजशोथलक्षणम् ।

**अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः ॥ हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥ ॥ ११ ॥ रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ॥ भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ १२ ॥**

छेदः खड्गादिना । भेदः पाषाणादिना । क्षतं शरादिना । आदिना व्रणादि । आदिशब्देन लगुडप्रहारादि गृह्यते । भल्लातजैः रसैः । कपिकच्छुजैः शूकैः । विसर्पवान्प्रसरणशीलः । पित्तलक्षणः पैत्तिकशोथलक्षणः ॥

जो सूजन खड्ग आदिके छेदनसे, पत्थर आदिके भेदनसे, वाणआदिके घाव हो जानेसे, अथवा लकडी आदिके प्रहार होने आदि कारणोसे हुई हो, अथवा भिलावेके रससे वा कौंछकी फलीके स्पर्शसे हुई होय, फैलतीहो, दाहयुक्त, लालवर्णवाली और अधिक करके पित्तसे हुई सूजनके लक्षणोंयुक्त हो वह सूजन अभिघातसे हुई जाननी ॥ ११ ॥ १२ ॥

## अथ विषजशोथलक्षणम् ।

**विषजः सविषप्राणिपरिसर्पणमूत्रणात् ॥ दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ ॥ १३ ॥ विण्मूत्रशुक्रोपहतमलवद्वस्तुसङ्करात् ॥ विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ॥ १४ ॥**

परिसर्पणाच्छरीरोपरि सञ्चरणात् । दंष्ट्रा द्विगुणीकृता दन्तावलिः चोढ इति लोके । दन्ताः अग्रेभवाः । अविषप्राणिनां दंष्ट्रादिविषं शोथव्यथादिकरं भवतीति विशेषः । विण्मूत्रेत्यादि । विडाद्युपहतं मलिनञ्च यद्वस्तु, तथा संकरः सम्मार्जनीभिः क्षिप्तो-

धूल्यादिः तेषां सम्पर्कात् । गरयोगावचूर्णनात, गरः संयोगजं विषं तस्य योगो यस्य तेन वस्तुना अवधूलनात् । अवलम्बी लम्बमानः । अयमपि आगन्तुजस्तथापि सामान्यागन्तुजशोथचिकित्सातोऽस्य विशिष्टचिकित्साभिधानात्पृथक्पठितः ॥

शरीरके ऊपर विषैले जीवोंके फिरनेसे, अथवा मूतनेसे, जो जीव विषैले नहीं हैं उनके भी दाढ दाँतोंसे, नखोसे, आघात होनेसे, ( विना विषवाले जीवोंके भी दाढ आदिका विष सूजन तथा पीडा आदिको उत्पन्न करताहै ) विष्ठासे, मूत्रसे, वीर्यसे, उपहत हुई वस्तुके संबधसे, बुहारकर फेंकी हुई धूल आदि कूडेके संबंधसे, विषैले वृक्ष अथवा विषैली पवनके स्पर्शसे और जिसमें संयोगज विषका योग हुआ होय वह वस्तु शरीरके मिलनेसे जो सूजन उत्पन्न हुई हो उसको विषसे उत्पन्न हुई जाननी । यह सूजन–मृदु, चचल, लटकती हुई, तत्काल होनेवाली और पीडा अधिक करनेवाली होती है १३॥१४॥

## अथ दोषस्थानस्थितिविशेषेण शोषस्थानविशेषः ।

दोषाः श्वयथुमूर्द्धं हि कुर्वन्त्यामाशये स्थिताः ॥ पित्ताशयस्था मध्ये तु वर्चःस्थानगतास्त्वधः ॥ कृत्स्नं देहमनुप्राप्य कुर्युः सर्वसरास्तथा ॥ १५ ॥

ऊर्द्धम् उरःप्रभृत्यूर्द्धम् । मध्ये उरःपक्काशयमध्ये । अधः पक्काशयादधः ॥

दोष आमाशयमें रहनेवाले होयँ तो हृदयसे ऊपरके भागमे सूजनको उत्पन्न करैं हैं, पित्ताशयमें रहनेवाले होयँ तो हृदय और पक्काशयके बीचमें सूजनको उत्पन्न करैंहैं, मलाशयमें रहनेवाले दोष होयँ तो पक्काशयसे नीचेके भागमें सूजनको उत्पन्न करैंहै, और सम्पूर्ण स्थानमें फैलेहुए होयँ तो सम्पूर्ण शरीरमें सूजन उत्पन्न करैंहैं ॥ १५ ॥

## अथ शोथोपद्रवाः ।

छर्दिः श्वासोऽरुचिस्तृष्णाज्वरोऽतीसार एव च ॥ सम्पाक आमदौर्बल्यं शोथस्यैत उपद्रवाः ॥ १६ ॥

वमन, श्वास, अरुचि, तृषा, ज्वर, अतीसार, अत्यत पाक और अत्यंत निर्बलता ये सूजनके उपद्रव हैं ॥ १६ ॥

## अथ शोथासाध्यता ।

श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च ॥ यस्य चान्ने रुचिर्नास्ति शोथिनं तं विवर्जयेत् ॥ १७ ॥

जिस सूजनवालेको श्वास, तृषा, वमन, निर्बलता, ज्वर और अन्नमें अरुचि हो उसकी चिकित्सा नही करै ॥ १७ ॥

## अथ शोथकष्टसाध्यत्वादिः ।

यो मध्यदेशे श्वयथुः कष्टः सर्वांगगश्च यः ॥ अर्द्धांगोऽरिष्टभूतः स्याद्यश्चोर्द्धं परिसर्पति ॥ १८ ॥

मध्यदेशे उरःपक्काशयमध्ये । सर्वांगः सकलशरीरव्यापी । सर्वांगज इति वा पाठः । सान्निपातिकः । अर्द्धांगः अर्द्धनारीश्वराकारः । यश्चोर्द्धं परिसर्पतीति पुरुषविषयः । तथाच—

ऊर्द्धगामी नरं पद्भ्यामधोगामी तथा स्त्रियम् ॥ उभयं वस्तिसञ्जातः शोथो हन्ति न संशयः ॥ १९ ॥

ऊर्ध्वगामी मुखगामी । उभयं नरं नारीञ्च । तथाच तन्त्रांतरे—

पादात्प्रवृत्तः श्वयथुर्नृणां यः प्राप्नुयान्मुखमिति ॥ २० ॥

स न सिध्यतीति शेषः । अधोगामी पद्गामी । तथाच तन्त्रान्तरे—

नृणां वक्त्रात्पदं याति वस्तिजश्च न सिध्यतीति ॥ २१ ॥

अनन्योपद्रवकृतः शोथः पादसमुत्थितः ॥ पुरुषं हन्ति नारीन्तु मुखजो वस्तिजो द्वयम् ॥ २२ ॥

अयमर्थः । पादसमुत्थितः पादाभ्यामुत्थितो मुखगामीति यावत् । शोथः पुरुषं हन्ति । स किंविशिष्टः ? अन्योपद्रवकृतः शोथादन्ये व्याधयोऽतिसारग्रहण्यर्शःप्रभृतयः तेषामुपद्रवैः कृतः तदुपद्रवत्वेन जात इत्यर्थः । न अन्योपद्रवकृतः अनन्योपद्रवकृतः अर्थात् स्वहेतुभिरेव जातः । द्वयम् पुरुषञ्च नारीञ्च हन्ति सोऽपि अनन्योपद्रवकृत एव ॥

जो सूजन हृदय तथा पक्वाशयके मध्यमें हुई हो अथवा जो सूजन सम्पूर्ण शरीरमें व्याप्त होय ( सान्निपातिक होय ) वह सूजन कष्टसाध्य है । जो सूजन अर्द्धनारीश्वरके आकारकी आधे शरीरमें हुई होय वह सूजन मृत्युदायक है । पुरुषके हुई सूजन ज्यों ज्यों ऊपरको चढती है त्यों त्यों मृत्युको ढूँढकर, लातीहै । पुरुषोंके हुई सूजन पाँवोंसे ऊपरको चढै वह सूजन अवश्य मृत्यु करतीहै । स्त्रीके हुई जो सूजन मुखसे नीचे नीचे को जाय वह सूजन स्त्रीको अवश्य मारडालतीहै । जो सूजन मूत्राशयमें हुई हो वह सूजन पुरुष और स्त्री दोनोंको मारडालतीहै, इसमें कुछ भी संशय नहीं है। अन्य ग्रथोंमे भी कहा है कि–" पुरुषोंके पावोंसे चढा जो शोथ मुखको प्राप्त होय और स्त्रीके मुखसे हुआ जो शोथ पाँवो को प्राप्त होय वह सूजन असाध्य है, पुरुष अथवा स्त्रीके मूत्राशयमें हुआ शोथभी असाध्यही है "। और भी कहा है कि–" पुरुषके पाँवोंमें हुई सूजन जो मुखमें जाय और अतीसार, ग्रहणी तथा बवासीर आदि अन्य रोगोंके उपद्रव रूप नहीं हुई हो अर्थात् अपने कारणोंसे ही हुई हो तो पुरुषको मारडालतीहै । स्त्रीके मुखमें हुई सूजन जो पाँवोंपर जाय और वह सूजन अतीसार, ग्रहणी तथा बवासीर आदि अन्य रोगोंके उपद्रवरूप न हुई हो, अर्थात् अपने कारणोंसे हुई वह स्त्रीको मारडालतीहै । मूत्राशयमें हुई जो सूजन अन्य रोगोके उपद्रव रूप नही हुई हो, अर्थात् अपने कारणोंसेही हुई हो वह सूजन पुरुष और स्त्री दोनोंको मारडालतीहै ॥ १८–२२ ॥

## अथ शोथचिकित्सा ।

शुण्ठीपुनर्नवैरण्डपञ्चमूलीशृतं जलम् ॥ वातिके श्वयथौ शस्तं पानाहारपरिग्रहे ॥ २३ ॥ पटोलत्रिफलारिष्टदार्वीक्वाथः सगुग्गुलुः ॥ तद्वत्पित्तकृतं शोथं हन्ति श्लेष्मोद्भवं तथा ॥ २४ ॥ मिश्रे मिश्रक्रमं कुर्यात्सर्वजे सर्वमेव हि ॥ बिल्वपत्ररसं पूतं शोषणं त्रिभवे पिबेत् ॥ २५ ॥ शोथे त्वागन्तुजे कुर्यात्सेकलेपादि शीतलम् ॥ भल्लातक्या हरेच्छोथं सतिला कृष्णमृत्तिका ॥ २६ ॥ महिषीक्षीरसंपिष्टैर्नवनीतसमन्वितैः । तिलैर्लिप्तः शमं याति शोथो भल्लातकोत्थितः ॥ ॥ २७ ॥ यष्टीदुग्धतिलैर्लेपो नवनीतन संयुतः ॥ शोथमारुष्करं हन्ति चूर्णैः शालदलस्य च ॥ २८ ॥

विषजशोथचिकित्सा तु विषचिकित्सायां द्रष्टव्या ॥

सोंठ, पुनर्नवा, एरंड और बृहत्पंचमूल, इनका क्वाथ करके पिवै और भोजनमें हीं उस क्वाथको ही सेवनकरै तो इससे वायुसंबंधी सूजन नष्ट होतीहै । परवल, हरड, बहेडा, आमला, नीम और दारुहलदी, इनका क्वाथकर उसमें गूगल डालकर पिये तो इससे पित्तसंबंधी और कफसंबंधी सूजन दूर होतीहै । जो सूजन दो दोषोंसे हुई हो उसमें दो दोषकी मिश्रित चिकित्सा करै और जो सूजन तीनों दोषोंसे हुई हो उसमें बेलके पत्तोंका रस निकाल करके वस्त्रसे छानके फिर उसमें सोंठ, मिरच तथा पीपलका चूर्ण डालकर पिये तो इससे सान्निपातिक सूजन नष्ट होतीहै । अथवा उपरोक्त तीनों दोषोंकी मिश्रित चिकित्सा करै । जो आगंतुज ( अभिघात आदिसे ) सूजन हुई हो तो उसके ऊपर शीतल सेचन तथा शीतल लेप आदिक करै । तिल और काली मिट्टी इनको पीसकर लेप करै तो इससे भिलावेकी सूजन दूर होतीहै । भैंसके दूधमें तिल पीसकर उसमें भैंसका मक्खन मिलाकर लेप करै तो भिलावेकी सूजन दूर होतीहै । मुलेठी, दूध, तिल और मक्खन इनका लेप करै तो भिलावेकी सूजन दूर होतीहै । अथवा शालके पत्तोंका चूर्ण पानीसे पिये तो भिलावेकी

सूजन दूर होतीहै। विषसे हुए शोथकी चिकित्सा तो विषकी चिकित्साके प्रकरणमें कहेंगे इसलिये उस प्रकरणमेंसे देख लेना ॥ २३-२८ ॥

## अथ शोथसामान्यचिकित्सा।

महिष्या नवनीतं वा लेपाद्दुग्धतिलान्वितम् ॥ २९ ॥

अत्र दुग्धश्च महिष्या एव ॥

पथ्यानिशाभाङ्र्यमृताग्निदार्वीपुनर्नवादारुमहौषधानाम् ॥ क्वाथः प्रसह्योदरपाणिपादमुखाश्रितं हन्त्यचिरेण शोथम् ॥ ३० ॥

भैंसका मक्खन और भैंसका दूध इनमें तिल पीसकर लेपकरै तो सूजन दूर होतीहै। हरड, हलदी, भारंगी, गिलोय, चीता, दारुहलदी, पुनर्नवा, देवदारु और सोंठ, इनका क्वाथ पेटमें, हाथमें, पाँवोंमें तथा मुखमें हुई सूजन तत्काल बलात्कारसे नष्ट करदेताहै। यह क्वाथ 'पथ्यादिक्वाथ' इस नामसे कहाजाताहै ॥ २९ ॥ ३० ॥

फलत्रिकोद्भवं क्वाथं गोमूत्रेणैव साधितम् ॥ वातश्लेष्मोद्भवं शोथं हन्याद्वृषणसम्भवम् ॥ ३१ ॥ वृश्चीवदेवद्रुमनागरैर्वा दन्तीत्रिवृत्त्र्यूषणचित्रकैर्वा ॥ दुग्धं सुसिद्धं विधिना निपीतं गीतं परं शोथहरं भिषग्भिः ॥ ३२ ॥

अत्र वृश्चीवः श्वेतवर्षाभूः ॥

सेकस्तथार्कवर्षाभूनिम्बक्वाथेन शोथहृत् ॥ गोमूत्रेणापि कुर्वीत सुखोष्णेनावसेचनम् ॥ ३३ ॥ पुनर्नवा दारु शुण्ठी शिग्रुः सिद्धार्थकस्तथा ॥ अम्लपिष्टः सुखोष्णोऽयं प्रलेपः सर्वशोथहृत् ॥ ३४ ॥ गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलीं वा ॥ कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥ ॥ ३५ ॥ शोथप्रतिश्यायगलास्यरोगान्सश्वासकासारुचिपीनसादीन् ॥ जीर्णज्वरार्शोग्रहणीविकारान्हन्यात्तथान्यान्कफवातरोगान् ॥ ३६ ॥ विश्वं गुडेन तुल्यं वृश्चीवरसानुपानमभ्यस्तम् ॥ विनिहन्ति सर्वशोथं घनवृन्दं चण्डवायुरिव ॥ ॥ ३७ ॥ कणानागरकं चूर्णं सगुडं शोथनाशनम् ॥ आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ ३८ ॥

हरड, बहेडा तथा आमला, इनका क्वाथ कर गोमूत्रमें मिलाकर पिवै तो इससे वृषणो (पोता) में हुई वायुसंबंधी तथा कफसंबंधी सूजन नष्ट होतीहै। अथवा सफेद पुनर्नवा, देवदारु और सोंठ, इनसे अथवा दन्ती, निसोत, सोंठ, मिरच, पीपल और चीता इनसे भलीभाँति पकाया-हुआ दूध योग्यविधिसे पिये तो सूजन अवश्य दूर होजाती-है ऐसा वैद्योंने कहा है। आक, पुनर्नवा और नीम, इनका क्वाथ करकै उस सूजनके ऊपर सेचन करै तो सूजन दूर होतीहै। गोमूत्रको किंचित् गरम करके उस सूजनके ऊपर सेचन करै तो सूजन दूर होतीहै। पुनर्नवा, देवदारु, सोंठ, सहँजना और सरसों इनका क्वाथ करकै अम्लरसमें पीस किंचित् गरम करकै लेप करै तो सर्व प्रकारकी सूजन नष्ट होतीहै। गुड और अदरख, अथवा गुड और सोंठ, अथवा गुड और हरड वा गुड और पीपल इनका नित्य एक एक तोला अधिक करकै बारह तोलेतक सेवन करै इस भाँति एक मास अथवा एक पक्षतक खाय तो इससे सूजन, प्रतिश्याय, गलेके रोग, मुखके रोग, श्वास, खाँसी, अरुचि, पीनस, जीर्णज्वर, बवासीर, संग्रहणी और अन्यभी कफसंबंधी तथा वायुसंबंधी रोग दूर होजातेहैं अथवा सोंठ और गुड इनको समान भाग लेकर खाय और इसके ऊपर सफेद पुनर्नवाका रस पीनेका अभ्यास करै तो जिस प्रकार प्रचंड पवनसे बादलोंका समूह नष्ट होजाताहै उसी प्रकार सर्व प्रकारकी सूजन भी दूर हो जाती है। वा सोंठ और पीपल इनके चूर्णको गुडमें मिलाकर खावै इससे सूजन, आमाजीर्ण तथा शूल दूर होताहै और मूत्राशय शुद्ध होताहै ॥ ३१-३८ ॥

## अथ गुडादिवटिका।

गुडात्पलत्रयं ग्राह्यं शृङ्गवेरपलत्रयम् ॥ शृङ्गवेरसमा कृष्णा लोहकिट्टतिलयोः

पलम् ॥ चूर्णमेतत्समुद्दिष्टं सर्वश्वयथुनाशनम् ॥ ३९ ॥

बारह तोले गुड, बारह तोले सोंठ, बारह तोले पीपल, चार तोले कीटीकी भस्म और चार तोले तिल, इनको चूर्ण करके खाय तो सर्व प्रकारकी सूजन दूर होतीहै ३९॥

## अथ मानकघृतम् ।

मानककाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ॥ एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ॥ ४० ॥

मानकदके क्वाथमें मानकदकाही कल्क डालकर ६४ तोले घी पकावे तो 'मानकघृत' सिद्ध होताहै । इस घीके सेवन करनेसे एक दोषसंबधी, दो दोषसंबधी, और तीनों दोष सबधी सूजन दूर होतीहै ॥ ४० ॥

## अथ शुष्कमूलकतैलम् ।

शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः ॥ पक्वमभ्यञ्जनं तैलं सशूलं श्वयथुं हरेत् ॥ ४१ ॥

इति शोथनिदानचिकित्साधिकारः ।

सूखीमूली, पुनर्नवा, देवदारु, रायसन और सोंठ इन औषधियोंके कल्कके द्वारा तेलको सिद्धकरे यह तेल शूल सहित सूजनको दूर करेहै ॥ ४१ ॥

इति शोथाधिकारः सम्पूर्णः ।

---

# अथ वृद्धिब्रध्नाधिकारः ।

## तत्र वृद्धिनिदानसंख्ये ।

दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ॥ मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलः ॥ १ ॥

वात, पित्त, कफ, रुधिर, मेद, मूत्र और आँतें इन भेदोंसे वृद्धिरोग सात प्रकारका है । इनमें मूत्र और अन्त्रजन्य वृद्धि वातरूप निदानके होनेसे एकही प्रकारकी है तथापि निदान और चिकित्सामें भेद होनेसे अलग गिनी है ॥ १ ॥

## अथ वृद्धिसम्प्राप्तिः ।

वृद्धिं करोति कोषस्थः फलकोषाभिवाहिनीः ॥ रुद्धा रुद्धगतिर्वायुर्धमनीर्मुष्कगामिनीः ॥ २ ॥

अपने कारणोंसे कुपित हुई वायु अडकोषोंमें प्राप्त होकर अडकोषोंकी शिराओंको ( नसोंको ) रोककर अंडोंकी तथा त्वचाकी वृद्धि करतीहै ॥ २ ॥

## अथ वातवृद्धिलक्षणम् ।

वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥ ३ ॥

अहेतुरुक् अत्रेषदर्थे नञ् । तेन स्वल्पादपि विप्रकृष्टात् कारणाद्रुक् पीडा यत्र सः ॥

जो वृद्धि वायुसे भरीहुई मसकको समान स्पर्शवाली हो, रूक्ष हो, और जिसमें अंडकोषोंमे स्वल्प कारणोंसे पीडा हो, उसको वातकी वृद्धि जानना ॥ ३ ॥

## अथ पित्तजन्यवृद्धिलक्षणम् ।

पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान् ॥ ४ ॥

दाहः आभ्यन्तरः ऊष्मा बहिस्तप्तता ॥

जो वृद्धि पकेहुए गूलरके फलकी समान हो, दाह, गरमी और पकनेवाला हो उसको पित्तकी वृद्धि जानना ॥ ४ ॥

## अथ कफवृद्धिलक्षणम् ।

कफाच्छीतो गुरुः स्निग्धः कण्डुमान्कठिनोल्परुक् ॥

जो वृद्धि शीतल होय, भारी होय, स्निग्ध ( चिकनी ) होय, खुजलीयुक्त होय, कठिन होय और जिसमें अल्प पीडा होय, उसको कफकी वृद्धि जानना ॥

## अथ रुधिरवृद्धिलक्षणम् ।

कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः ॥ ५ ॥

कृष्णस्फोटावृत इति पैत्तिकोद्भवः ॥

जो वृद्धि काले फोडोंसे व्याप्त हो और जिसमें पित्तकी वृद्धिके सब लक्षण होयँ उस वृद्धिको रक्तकी जानना॥५॥

## अथ मेदोवृद्धिलक्षणम् ।

कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः॥६॥

जो वृद्धि नरम होय, तालके फलकी समान नीली और गोल होय तथा जिसमें कफकी वृद्धिके सम्पूर्ण लक्षण मिलते होयँ उस वृद्धिको मेदकी जानना ॥ ६ ॥

## अथ मूत्रवृद्धिलक्षणम् ।

मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ॥ अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ् मृदुः ॥ मूत्रकृच्छ्रमधः कुर्यात्सश्चलन्फलकोषयोः ॥ ७ ॥

सश्चलन्फलकोषयोः अधः मूत्रकृच्छ्रं मूत्रेण व्यथां कुर्यात् इत्यर्थः ॥

जिस मनुष्यको मूत्र रोकनेका अभ्यास होय अथवा स्वभाव होय उस मनुष्यको मूत्रकी वृद्धि होती है, मूत्रकी वृद्धि चलते समय जलसे भरी हुई, पखाल या मसककी समान हिलती है, पीडा होती है, नरम होती है, उसमें मूत्रकृच्छ्रकी समान वेदना हो और अंडकोषोंको चलायमान करती है ॥ ७ ॥

## अथांत्रवृद्धिलक्षणम् ।

वातकोपिभिराहारैः शीततोयावगाहनैः ॥ धारणे रणभाराध्वविषमांगप्रवर्त्तनैः ॥८॥ क्षोभणैः क्षोभितोऽन्यैश्च क्षुदान्त्रावयवं यदा ॥ पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ॥ कुर्याद्वंक्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ ९ ॥

धारणम् उपस्थितस्य वेगस्य । ईरणमनुपस्थितस्य वेगस्य प्रेरणम् । विषमांगप्रवर्तनं वक्रत्वेनांगमोटनम् । अन्यानि क्षोभणानि बलवद्विग्रहकठोरधनुराकर्षणादीनि तैः क्षोभितः सन्दूष्य सञ्चालितः पवनः यदा क्षुद्रान्त्रावयवं विगुणीकृत्य स्वनिवेशादधो नयेत् तदा वंक्षणसन्धिस्थः सन्वंक्षणसन्धौ ग्रन्थिरूपं श्वयथुं कुर्यात् इत्यर्थः ॥

उपेक्षमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः ॥ प्रपीडितोऽन्तः स्वनवान्प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः ॥ १० ॥

तत्र आध्मानमुदरे रुग् वृद्धयोर्मुष्कयोः स्तम्भो गात्रे तद्युक्तां कुर्यात् इत्यर्थः ॥

अन्त्रं विगुणमादाय वातो नयति वंक्षणम् ॥ वंक्षणात्तद्रुजा युक्तं फलकोषं प्रपद्यते ॥ ११ ॥

स मुष्कवृद्धिम् अन्तः उदरे प्रध्मापयन् आगमनमार्गं निरुद्धं कुर्वन् एति आयाति ॥

वायुको कुपित करनेवाले आहारोंके सेवन करनेसे, शीतल जलमें घुसकर स्नान करनेसे, मूत्रादिके वेगोंको रोकनेसे, मूत्रादिको बलात्कारसे प्रवर्तन करनेसे, बहुत बोझको उठानेसे, बहुत मार्गके चलनेसे, अगोंकी विषम चेष्टा करनेसे और बलवानके साथ युद्ध तथा कठिन धनुष आदिको चढानेसे, इत्यादि कारणोंसे अत्यंत क्षोभको प्राप्त हुई वायु छोटी छोटी आँतोंके प्रदेशको दूषित करके उनके स्थानसे नीचे लेजाती है तब वह वायु वृषण और कोषकी संधियोंमें प्राप्त होकर उन संधियोंमें गाठकी समान सूजनको उत्पन्न करती है । यह अन्त्रवृद्धि कहीजाती है । जो इस अत्रवृद्धिकी उपेक्षा की जावे तो पेट अफरआताहै, बढेहुए वृषणोंमें पीडा होती है और शरीर स्तम्भितसा होजाताहै । इस वृद्धिको जो हाथसे दबायाजाय तो शब्द होकर भीतरको बैठजाती है और दबानेसे छोटी होकर फिर फूलजाती है ॥ ८–११ ॥

## अथांत्रवृद्धिसाध्यलक्षणम् ।

यस्यान्त्रावयवाश्लेषो मुष्कयोर्वातसञ्चयात् ॥ अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ॥ १२ ॥

अत्रवृद्धि कि जिसमे वायुके संचय होनेसे दोनो वृषणोंमें आँतोंके अवयव मिलजाते हैं वह यदि वायुकी वृद्धिकी समान आकारवाली होय तो उसको असाध्य जानना ॥ १२ ॥

## अथ ब्रध्नस्यापि वृद्धिसमीपोत्पन्नत्वादत्र तन्निदानलक्षणमाह ।

अत्यभिष्यन्दिगुर्वन्नशुष्कपूत्यामिषाशनात् ॥ करोति ग्रन्थिवच्छोथं दोषो वंक्षणस-

न्धिषु ॥ ज्वरशूलांगसादाढ्यं तं ब्रध्नंति विनिर्दिशेत् ॥ १३ ॥

अत्यंत अभिष्यन्दि पदार्थ, भारी अन्न, सूखा तथा दुर्गंधित सडाहुआ मांस, इनको भक्षण करनेसे कोपको प्राप्त हुये दोष साथलकी सन्धियोंमें गांठकी समान सूजनको उत्पन्न करते हैं उस सूजनकी समान गिलटीके होनेसे ज्वर, शूल तथा शरीरमें अत्यंत ग्लानि होती है, यह सूजन ब्रध्न ( बद ) इस नामसे कही-जाती है ॥ १३ ॥

## अथ वृद्धिरोगचिकित्सा ।

वृद्धावत्यशनं मार्गमुपवासं गुरूणि च ॥ वेगाघातं पृष्ठयानं व्यायामं मैथुनं त्यजेत् ॥ १४ ॥ वातवृद्धौ पिबेत्स्निग्धं यथाप्राप्तं विरेचनम् ॥ सक्षीरश्च पिबेत्तैलं मासमेरण्डसम्भवम् ॥ १५ ॥

वृद्धिरोगवाले मनुष्यको अधिकतर भोजन, मार्ग, मूत्रादि वेगोंका रोकना, चलना, उपवास, भारी पदार्थोंका खाना, घोडे आदिकी सवारी, दृढ कसरत आदि परिश्रम और मैथुन ये सब त्यागदेने चाहिये । जो मिलसके ऐसे स्निग्ध विरेचन पीनेसे वातसम्बन्धी वृद्धि दूर होजाती है, दूध और अंडीके तेलको एक महीनेतक पीनेसे वातकी वृद्धि दूर होजाती है ॥ १४ ॥ १५ ॥

गुग्गुलवेरण्डजं तैलं गोमूत्रेण पिबेन्नरः ॥ वातवृद्धिं जयत्याशु चिरकालानुबन्धिनीम् ॥ १६ ॥ पित्तग्रन्थिक्रमेणैव पित्तवृद्धिमुपाचरेत् ॥ जलौकाभिर्हरेद्रक्तं वृद्धौ पित्तसमुद्भवे ॥ १७ ॥ चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम् ॥ क्षीरपिष्टं प्रलेपेन दाहशोथरुजापहम् ॥ १८ ॥

अंडीका तेल और गूगल इनको मिलाकर गोमूत्रके साथ पीनेसे बहुत दिनोंकी पुरानी वातकी वृद्धि तत्काल नष्ट होजाती है । जो चिकित्सा पित्तग्रन्थिकी कही है वही चिकित्सा योग्यायोग्य विचारकर पित्तकी वृद्धिकी भी करनी चाहिये, इससे पित्तकी वृद्धि नष्ट होजाती है । जोंक लगाकर रुधिर निकलवानेसे पित्तसम्बन्धि वृद्धि नष्ट होजाती है । लालचन्दन, मुलेठी, कमल, खस और नीले कमल इनको दूधमें पीसकर लेप करनेसे पित्तकी वृद्धिकी सूजन तथा दाहकी पीडा शांत होजाती है ॥ १६–१८ ॥

त्रिकटुत्रिफलाक्वाथं सक्षारलवणं पिबेत् ॥ विरेचनमिदं श्रेष्ठं कफवृद्धिविनाशनम् ॥ १९ ॥

सोंठ, मिरच, पीपल, हरड, बहेडा और आमला इनका क्वाथ बनाकर उसमे जवाखार तथा सैंधानिमक डालकर पीनेसे कफकी वृद्धि दूर होती है । यह विरेचन कफकी वृद्धिको दूर करनेके लिये उत्तम है ॥ १९ ॥

लेपनाः कटुतीक्ष्णोष्णाः स्वेदनं सूक्ष्ममेव च ॥ परिषेकोपनाहौ च सर्वमुष्णमिहेष्यते ॥ २० ॥

तीखे, तीक्ष्ण तथा उष्णप्रलेप, सूक्ष्मस्वेदन, और संपूर्ण गरम सेचन और उष्ण बंधन, कफकी वृद्धिपर करने चाहिये ॥ २० ॥

मुहुर्मुहुर्जलौकाभिः शोणितं रक्तजे हरेत् ॥ पिबेद्विरेचनं वापि शर्कराक्षौद्रसंयुतम् ॥ २१ ॥

जो रुधिरकी अंडवृद्धि होय तो वारंवार जोंक लगवाकर रुधिर निकलवावे और खांड तथा सहत मिलाकर विरेचन पिये ॥ २१ ॥

शीतमालेपनं शस्तं सर्वं पित्तहरं तथा ॥ पित्तवृद्धिक्रमं कुर्यादामे पक्के च रक्तजे ॥ २२ ॥

रुधिरकी अंडवृद्धि कची होय अथवा पकी होय तो भी उसके ऊपर शीतल प्रलेप करे और पित्त नाशक संपूर्ण क्रिया करै । रुधिरकी वृद्धिमें पित्तकी वृद्धिकी जो चिकित्सा कही है वह सब करनी चाहिये ॥ २२ ॥

स्विन्नमेदःसमुत्थन्तु लेपयेत्सुरसादिना ॥ शिरोविरेचनद्रव्यैः सुखोष्णैर्मूत्रसंयुतैः ॥ ॥ २३ ॥ संस्वेद्य मूत्रप्रभवं वस्त्रपट्टेन वेष्टयेत् ॥ सीवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन वै ॥ २४ ॥ मुष्कको-

शमगच्छन्त्यामन्त्रवृद्धौ विचक्षणः ॥ वातवृद्धिक्रमं कुर्यात्स्वेदं तत्राग्निना हितम् ॥ २५ ॥

व्रीहिमुखेन शस्त्रविशेषेण। अगच्छन्त्याम् अस्रवन्त्याम् ॥

तैलमेरण्डजं पीत्वा बलासिद्धं यथोचितम् ॥ आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ २६ ॥ रास्नायष्ट्यमृतैरण्डबलारग्वधगोक्षुरैः ॥ पटोलेन वृषेणापि विधिना विहितं शृतम् ॥ रुबुतैलेन संयुक्तमन्त्रवृद्धिं व्यपोहति ॥ २७ ॥

मेदकी वृद्धिमें सेकादिक करके उसके ऊपर सुरसादि गणकी सम्पूर्ण औषधियोंका प्रलेप करे।

मूत्रसम्बन्धी वृद्धि होय तो शिरको खाली करनेवाली जो औषधि कही हैं उनमें गोमूत्र डालकर जरा गरम करके उनसे सेककरे. फिर वस्त्रकी पट्टीसे खूब बॉध देवे।

अन्त्रवृद्धि जो स्रवती न होय तो विचक्षण वैद्य सीवनीके पडलेके नीचेके भागमें व्रीहिमुख नामक शस्त्रसे वेध देवे और फिर वातसबन्धी वृद्धिकी समान चिकित्सा करै। अन्त्रवृद्धिपर अग्निसे सेककर स्वेदन करना हितकारीहै।

खिरैटीका चूर्ण डालकर पकाया हुआ अंडीका तेल यथारीतिसे पिये तो अफारे सहित तथा शूल सहित अन्त्रवृद्धि नष्ट हो जातीहै। रासना, मुलैठी, गिलोय, अंडकी जड, खिरैटी, अमलतास, गोखरू, कडवे परवल और अडूसा इनका विधिपूर्वक काथ बनाकर उसमें अंडीका तेल डालकर पान करनेसे अंत्रवृद्धि नष्ट होजातीहै। इसको रास्नादि काथ कहतेहैं ॥ २३–२७ ॥

गन्धर्वहस्ततैलेन क्षीरेण विहितं शृतम् ॥ विशालामूलजं चूर्णं वृद्धिं हन्ति न संशयः ॥ २८ ॥

विशाला इन्द्रवारुणी ॥

वचासर्षपकल्केन प्रलेपः शोथनाशनः ॥ शिग्रुत्वक्सर्षपैर्लेपाच्छोथश्लेष्मानिलापहः ॥ २९ ॥

अंडीका तेल, दूध और इन्द्रायनकी जडका चूर्ण इनका काथ बनाकर पीनेसे निःसन्देह अंडवृद्धि रोग नष्ट होताहै।

वच और सरसोंका कल्क बनाकर लेपकरनेसे वृद्धिकी सूजन दूर हो जाती है। सौंजिनेकी छाल और सरसो इनको एकत्र पसिकर लेप करनेसे वृद्धिकी सूजन कफ और वायु नष्ट होजातीहै ॥ २८ ॥ २९ ॥

## वृद्धिबाधिका वटिका।

शुद्धसूतं तथा गन्धं मृतान्येतानि योजयेत् ॥ लोहं रंगं तथा ताम्रं कांस्यश्चाथ विशोधितम् ॥ ३० ॥ तालकं तुत्थकश्चापि तथा शङ्खवराटकम् ॥ त्रिकटु त्रिफला चव्यं विडङ्गं वृद्धदारकम् ॥ ३१ ॥ कर्चूरं मागधीमूलं पाठां सहपुषां वचाम् ॥ एलाबीजं देवकाष्ठं तथा लवणपञ्चकम् ॥ ३२ ॥ एतानि समभागानि चूर्णयेदथ कारयेत् ॥ कषायेण हरीतक्या वटिकां टंकसंमिताम् ॥ ३३ ॥ एकां तां वटिकां यस्तु निर्गिलेद्वारिणा सह ॥ अण्डवृद्धिरसाध्यापि तथ्यं नश्यति सत्वरम् ॥ ३४ ॥

शुद्ध पारेकी भस्म, शुद्धगंधक, लोहेकी भस्म, रांगेकी भस्म, तांबेकी भस्म, कॉसीकी भस्म, शुद्ध हरितालकी भस्म, शुद्ध तूतिया, शखकी भस्म, कौडीकी भस्म, सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, चव्य, वायविडंग, विधारा, कचूर, पीपलामूल, पाढ, गंधपलाशी, वच, इलायचीके दाने, देवदारु और पाचोंनिमकइन सबको समान भाग लेकर चूर्ण बनाकर हरडके काथमे खरल करकै चौवीस २ रत्तिकी गोलियां बना लेवै। इन गोलियोंमेंसे एक गोली नित्य जलके साथ निगल जाय तो अंत्रसम्बन्धी असाध्य वृद्धिभी तत्काल नष्ट होजातीहै ॥ ३०–३४ ॥

## अथ ब्रध्न (बद) चिकित्सा।

भ्रष्टैश्चैरण्डतैलेन सम्यक्कल्कोऽभयाभवः ॥

कृष्णासैन्धवसंयुक्तो ब्रध्नरोगहरः परः ॥ ३५ ॥ अजाजी हपुषा कुष्ठं गोमेदवदरान्वितम् ॥ काञ्जिकेन तु संपिष्टं तल्लेपो ब्रध्नजित्परः ॥ ३६ ॥

गोमेदं पत्रकम्। तथा निघण्टौ धन्वन्तरिः-

पत्रं दलाह्वयं रासं गोमेदं वसनाह्वयमिति ॥ ३७ ॥

इति वृद्धिब्रध्नरोगनिदानचिकित्साधिकारः।

हरडका अच्छे प्रकारसे कल्क बनाकर उसको अंडीके तेलमें भूनकर पीपल तथा सैंधेनिमकका चूर्ण मिलाकर खाय तो ब्रध्न रोग अवश्य नष्ट होजाताहै।

जीरा, पलाशी, कूठ, तेजपात और बेर इनको कॉंजीमें पीसकर लेप करनेसे ब्रध्न रोग अवश्य नष्ट होजाताहै (मूल श्लोकमें जो गोमेद शब्द है उसका हमने यहां तेजपत्र ऐसा अर्थ किया है यह धन्वन्तरिनिघण्टुके अनुसार किया है, धन्वन्तरिनिघण्टुमें कहा है कि, पत्र, रास और गोमेद ये सब तेजपत्रके नाम हैं। जो जो नाम पत्रके अथवा वस्त्रके हैं वे सब तेजपत्रके जानने ) ॥ ३५-३७ ॥

इति वृद्धिब्रध्नाधिकारः संपूर्णः।

---

# अथ गलगंडगंडमालाग्रंथ्यर्बुदाधिकारः।

## तत्र गलगंडलक्षणम्।

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ॥ महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥ १ ॥

निबद्धः दृढः अचलो वा। मुष्कवदण्डवत्। गले इति हनुमन्ययोरुपलक्षणम्। तथा च भोजः-

महान्तं शोथमल्पं वा हनुमन्यागलाश्रयम्। मुष्कवल्लम्बमानन्तु गलगण्डं विनिर्दिशेत् ॥ २ ॥

गलेमें बडी अथवा छोटी, दृढ, और अचल सूजन अडकोपकी समान लटकती होय उसको गलगंड कहतेहैं। 'गलेमें जो सूजन लटकती हो' ऐसा कहना तो उपलक्षणमात्र है इसकारण ऐसा जानना कि ठोडी, डाढी और नाडमें जो ऐसी सूजन लटकती होय तो उसको भी गलगड कहतेहैं. भोज कहताहै कि "बडी अथवा छोटी सूजन डाढीमें अथवा ठोडीमें, नाडमें और गलेमें अडकोपकी समान लटकती होय उसको भी गलगड कहतेहैं" ॥ १ ॥ २ ॥

## अथ गलगंडसम्प्राप्तिः।

वातः कफश्चापि गले प्रदुष्टो मन्ये तु संश्रित्य तथैव मेदः ॥ कुर्वन्ति गण्डं क्रमशः स्वलिंगैः समाचितं तं गलगण्डमाहुः ॥ ३ ॥

स्वलिंगैः वातकफमेदोलक्षणैः ॥

गलेमें दुष्ट हुए वायु, कफ और मेद ये सब गलेके मध्यमें प्राप्त होकर अनुक्रमसे अपने अपने लक्षणोंवाली सूजन करतेहैं वह रोग गलगड कहाजाताहै ॥ ३ ॥

## अथ वातजगलगंडलक्षणम्।

तोदान्वितः कृष्णशिरावनद्धः श्यावारुणो वा पवनात्मकस्तु॥ पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित् ॥ वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ॥ ४ ॥

चिरवृद्ध्यपाकः चिरेण वृद्धिः अपाकश्च यस्य सः ॥

जो गलगंड तोदने सरीखी पीडायुक्त हो, काली शिराओंसे व्याप्त हो, कालापन तथा लाली लिये हो, उसको वातका जानना। यह गलगड कठिन होताहै, बहुत दिनोंमें बढताहै, पकता नहीं है और किसीसमय अपनी इच्छासे पकभी जाताहै, तथा उस रोगीका मुख नीरस रहताहै और तालु तथा गला सूखा रहताहै ॥ ४ ॥

## अथ कफगलगंडलक्षणम्।

स्थिरः सवर्णो गुरुरुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु ॥ चिराच्च वृद्धिं भजतेऽचिराद्वा प्रपच्यते मन्दरुजः कदाचित् ॥ माधुर्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः ॥ ५ ॥

कदाचित्प्रपच्यते वा पाकोऽपि चिराद्भवति। प्रलेपः श्लेष्मणा ॥

जो गलगण्ड स्थिर होय, जिस स्थानमें उत्पन्न हो उसी स्थानकी त्वचाके वर्णकी समान हो, भारी हो, तीक्ष्ण खुजली हो, शीतल हो और बडा हो उसको कफजन्य गलगण्ड जानना। यह गलगंड बहुत दिनोंमें बढताहै, बहुत दिनोंमे किसी समय पकजाताहै और मन्द पीडा होतीहै और उस रोगीके मुखका स्वाद स्निग्ध और मधुर रहताहै सदैव गलेसे शब्द होताहै और तालू तथा गला कफसे लिप्त रहताहै ॥ ५ ॥

### अथ मेदोजन्यगलगण्डलक्षणम्।

स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोऽन्वितः कण्डुयुतोऽरुजश्च ॥ प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ॥ ६ ॥ स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेऽनुशब्दं कुरुते च नित्यम् ॥ ७ ॥

जो गलगण्ड नरम, पाडुवर्ण, दुर्गन्धित, खुजलीयुक्त, पीडारहित, तोम्बीकी समान लटकता हो, अल्प जडवाला हो और शरीरके बढनेसे बढता हो तथा शरीरके क्षीण होनेसे क्षीण होता हो, उस गलगंडको मेदसम्बन्धी जानना। यह गलगंड जिस मनुष्यके उत्पन्न होताहै उस मनुष्यका मुख स्निग्ध रहताहै और सदैव गलेमेंसे शब्द होतारहताहै ॥ ६ ॥ ७ ॥

### अथासाध्यगलगण्डलक्षणम्।

कृच्छ्राच्छ्वसन्तं मृदु सर्वगात्रं संवत्सरातीतमरोचकार्तम् ॥ क्षीणश्च वैद्यो गलगण्डयुक्तं भिन्नस्वरं नैव नरं चिकित्सेत् ॥ ८ ॥

जिस गलगंडमें बडे कष्टसे धीरे धीरे श्वास लेसके, संपूर्ण शरीर नरम पड गया हो, अरुचि तथा क्षीणता होगई हो, स्वर बैठगया हो, तथा जिसको उत्पन्न हुए एक वर्ष बीतगया हो ऐसे गलगंडकी वैद्य चिकित्सा न करै ॥ ८ ॥

### अथ गण्डमालालक्षणम्।

कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवंक्षणेषु ॥ मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गंडैः॥९॥

कर्कन्धुः क्षुद्रबदरम्। कोलं बृहद्बदरम्। चिरमन्दपाकैः चिरेण मन्दोऽल्पः पाको येषां तैः ॥

कोखमें, कन्धोंमें, अथवा खवोंमें, नाडके पीछे मन्या नाडीमें, गलेमे, तथा वंक्षण स्थानमे मेद और कफसे छोटे बेरकी समान अथवा बडे बेरकी समान आमलेकी समान बहुतसी गड (गाठें) उत्पन्न होंयँ उसको गंडमाला कहतेहैं। ये गंड बहुत दिनोंमे थोडे थोडे पकतेहैं ॥ ९ ॥

### अथापचीलक्षणम्।

ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये ॥ कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति केचित् ॥ १० ॥

ते ग्रन्थयः गण्डमालाया एव गण्डाः केचिदवाप्तपाकाः सन्तः स्रवन्ति। केचिन्नश्यन्ति संरोहन्ति। अन्ये भवन्ति च कालानुबन्धं चिरमादधाति सा गलगण्डमाला चिरं तिष्ठति सैवापचीति केचिद्वदन्ति ॥

उस गडमालाकी कोई कोई गड पककर स्रवने लगतीहैं, कोई कोई नष्ट होजातीहैं, और कोई कोई नवीन उत्पन्न होजातीहैं उन गडोंकी ऐसी स्थिति बहुत दिनोंतक रहतीहै, बहुत वैद्य इस गडमालाकोही 'अपची' कहतेहैं ॥ १० ॥

### अथापचीसाध्यासाध्यता।

साध्या स्मृता पीनसपार्श्वशूलकासज्वरच्छर्दियुता त्वसाध्या ॥ ११ ॥

विना उपद्रवकी अपची साध्य है किन्तु जो पीनस, पार्श्वशूल, खासी, ज्वर तथा वमनयुक्त होय तो असाध्य है ॥ ११ ॥

### अथ ग्रन्थिलक्षणम्।

वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च तथा शिराश्च ॥ वृत्तोन्नतं विग्रथितन्तु शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ १२ ॥

विग्रथितं ग्रन्थिरूपम् अत एव ग्रन्थिः स पञ्चधा वातिकः पैत्तिकः श्लैष्मिको मेदोजः शिराजश्च इति ॥

वात, पित्त, कफ, मेद और शिरा ये मांस तथा रुधिरको दूषितकरके ऊँची तथा गोलाकार गांठ रूप सूजनको उत्पन्न करैहैं उन गाठोंको ग्रंथि कहतेहैं । वातज, पित्तज, कफज, मेदोज, और शिरासम्बन्धी इस प्रकार ग्रन्थिके पाच भेद है ॥ १२ ॥

## अथ वातजग्रन्थिलक्षणम् ।

आयम्यते वृश्चति तुद्यते च प्रभ्रंशते मथ्यति भिद्यते च ॥ कृष्णो मृदुर्बस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ १३ ॥

आयम्यते आकृष्य दीर्घ क्रियत इव । वृश्चति आश्रयं छिनत्ति इव । प्रभ्रंशते स्खलतीव । भिद्यते विदार्यत इव । आततः विस्तारित इव । मृदुः न तु अत्यन्तकठिनः । अस्रम् रुधिरम् । अच्छम् प्रकृतं स्रवेदित्यर्थः ॥

जो ग्रंथि मानो खींचकर वढाई गई हो ऐसी मालूम हो, अपने स्थलको छेदती हो, गिरीसी पडे, सुई चुभोने सरीखी पीडा हो, मथनेकी समान, चीरने सरीखी पीडा हो और स्वरकी समान फैल जाय, तथा काले रगकी, अत्यन्त कठिन न होय, भेदने सरीखी पीडा हो और स्वाभाविक स्वच्छ रुधिर उसमेंसे स्रवता हो उसको वायुसंबंधी ग्रंथि जानना ॥ १३ ॥

## अथ पित्तजग्रन्थिलक्षणम् ।

दन्दह्यते धूप्यति चूप्यते च पापच्यते प्रज्वलतीव चापि ॥ रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्टमतीव चास्रम् ॥ १४ ॥

दन्दह्यते भृशं दाहं करोति सकलशरीरे । धूप्यति अन्तस्तापं करोति । चूप्यते शृंगेण इव । पापच्यते भृशं पाकं करोति । प्रज्वलति इव अग्निरिव ज्वालायुक्त इव भवति ग्रन्थिः । अस्रम् रुधिरम् । अतीव दुष्टं कृष्णतादियुक्तम् ॥

जो ग्रंथि शरीरमे अग्निकी समान अत्यन्त दाह करतीहो, अत्यन्त सताप देती हो, अत्यन्त पकतीहो, लाल अथवा पीली हो, जब वह फूटे तब उसमेंसे मज्जासहित दुष्ट और काला रुधिर निकले, उसमें चूसने सरीखी पीडा होय अर्थात् सींगी लगाकर चूसते हैं ऐसी पीडा हो, तथा अग्निकी समान ज्वालासे युक्त हो उसको पित्तकी ग्रन्थि जानना ॥ १४ ॥

## अथ कफजग्रन्थिलक्षणम् ।

शीतोऽविवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत्संहननोपपन्नः ॥ चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नं स्रवेच्छुक्लघनञ्च पूयम् ॥ १५ ॥

अविवर्णः प्रकृतिवर्णः । पाषाणवत् संहननोपपन्नः संहततायुक्तः ॥

जो ग्रंथि शीतल हो, स्वाभाविक वर्णवाली हो, थोडी पीडावाली हो, अत्यन्त खुजलीयुक्त हो, पत्थरकी समान अत्यन्त कठिन हो, बहुत दिनोंमे वृद्धिको प्राप्त हो, जब वह फूटे तब उसमेंसे सुफेद तथा गाढी राध निकले उसको कफकी ग्रन्थि कहते है ॥ १५ ॥

## अथ मेदोजग्रन्थिलक्षणम् ।

शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महान् कंडुयुतोऽरुजश्च ॥ मेदः कृते गच्छति चात्र भिन्ने पिण्याकसर्पिःप्रतिमन्तु मेदः ॥ १६ ॥

तिलसदृशं घृतसदृशं वा मेदः गच्छति स्रवतीत्यर्थः ॥

जो ग्रंथि शरीरके वढनेसे वढे, शरीरके क्षीण होनेसे क्षीण होती हो, स्निग्ध हो, वडी हो, खुजलीयुक्त हो, पीडारहित और फूटते समय खलकी समान अथवा घीकी समान उसमेंसे मेद स्रवे उस ग्रन्थिको मेदसबधी जानना ॥ १६ ॥

## अथ शिराजन्यग्रन्थिलक्षणम् ।

व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुश्च शिराप्रतानम् ॥ संकोच्य सम्पीड्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम् ॥ १७ ॥

निर्बल मनुष्य बलवान्के साथ युद्ध आदि परिश्रम करे तो उससे कुपित हुई वायु शिराओंके समूहको चलायमान करके दबाकर, सचय करकै और सुखाकर तत्काल ऊँची तथा गोल आकारवाली ग्रथिको उत्पन्न करतीहै, इस ग्रथिको शिरासम्बधी जानना ॥ १७ ॥

### अथ ग्रन्थिकष्टसाध्यासाध्यता ।

**ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च ॥ अरुक्स एवाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः ॥ १८ ॥**

तैस्तैर्बलवद्विग्रहादिभिः । आक्षिप्य चालयित्वा । सम्पीड्य संहतीकृत्य । अरुजत्वादियुक्ता अन्येऽपि ग्रन्थयोऽसाध्याः ॥

**पञ्चैतानरुजो ग्रन्थीन्मर्मजानचलांस्त्यजेत् ॥ कपोलगलमन्यासु दुश्चिकित्स्या हि सन्धिषु ॥ १९ ॥**

जो शिराजन्य ग्रथि पीडासहित हो और चचल होय तो कष्टसाध्य है, जो शिरासम्बन्धी ग्रथि पीडारहित हो, अचल हो, बडी हो और मर्मस्थलमें उत्पन्न हुई होय तो असाध्य है इसकारण इसकी चिकित्सा नहीं करनी चाहिये। दूसरी ग्रथिभी जो पीडारहित, अचल, बडी और मर्मस्थलमे उत्पन्न हुई होय तो उसको भी असाध्य जानना क्योंकि भोजने भी कहा है कि "पांचप्रकारकी ग्रथियोंमें जो ग्रथी पीडारहित होय, मर्मस्थलमें उत्पन्न हुई हो और अचल हो उसकी चिकित्सा नहीं करनी चाहिये" । गाल ( कपोल ),नाड और संधियोंमे उत्पन्न हुई ग्रथियोंकी चिकित्सा करनी बहुत कठिन है ॥ १८ ॥ १९ ॥

### अथार्बुदस्य सम्प्राप्तिपूर्वक-सामान्यलक्षणम् ।

**गात्रप्रदेशे क्वचिदेव दोषा संमूर्च्छिता मांसमसृक्प्रदूष्य ॥ २० ॥ वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥ कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति ॥ २१ ॥**

महान्तं ग्रन्थ्यपेक्षया । चिरेण वृद्धिः यस्य तत् चिरवृद्धि । अपाकम् इति ग्रन्थेः सकाशादस्य भेदज्ञापकम् । अत्यगाधं दूरानुप्रविष्टम् ॥

कोपको प्राप्त हुए दोष शरीरके किसी प्रदेशमेभी मांसको तथा रुधिरको दूषित करकै गोल आकारवाली, स्थिर, अल्प पीडावाली, ग्रथिकी अपेक्षा बडी, बहुत उठी हुई, बडी जडवाली, बहुत समयमे बढनेवाली और बहुत दिनोंमें भी नहीं पकनेवाली मासकी ऊचाईको उत्पन्न करे है । शास्त्रवेत्ता इस मासकी ऊंचाईको अर्बुद कहतेहैं, देशभाषामें इसको रसोली कहतेहैं । ग्रथी पकती है और अर्बुद नहीं पकताहै ॥ २० ॥ २१ ॥

### अथार्बुदनिदानपूर्वकविशिष्टलक्षणम् ।

**वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च॥ तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति ॥२२॥**

ग्रन्थेः समानानि वातिकपैत्तिकश्लैष्मिकमेदोजानाम् अर्बुदानां लक्षणानि तुल्यानि भवन्ति ॥

यह अर्बुद–वात, पित्त,कफ, रुधिर, मास और मेदसे उत्पन्न होताहै, और इसमें वात, पित्त, कफ तथा मेदके अर्बुदके लक्षण सर्वदा ग्रथियोके लक्षणोकी समान होतेहैं ॥ २२ ॥

### अथ रुधिरजन्यार्बुदनिदानसम्प्राप्तिलक्षणानि ।

**दोषःप्रदुष्टो रुधिरं शिराश्च संकोच्य सम्पीड्य ततस्त्वपाकम् ॥ सास्रावमुन्नह्यति मांसपिण्डं मांसांकुरैरावृतमाशु वृद्धिम् ॥ ॥ २३ ॥ स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं तु ॥ रक्तक्षयोपद्रवपीडितत्वात्पाण्डुर्भवेदर्बुदपीडितस्तु ॥२४॥**

दोषोऽत्र पित्तम् । रुधिरं शिराश्च संकोच्य सम्पीड्य संहतीकृत्य मांसासृजोः सर्वेषु अर्बुदेषु दूष्यत्वम् । रक्तजे तु

विशेषतो रक्तदुष्टिः। एवं मांसार्बुदे विशेषतो मांसदुष्टिर्बोद्धव्या । ततः मांसपिण्डम् उन्नह्यति उद्वृत्तं करोति । अपाकम् ईषत्पाकं यथा स्यादेवमिति क्रियाविशेषणम्। ईषत्पाकश्चैकदेशपाकेन । रक्तक्षयोपद्रवाः सुश्रुतोक्ताः तैः पीडितत्वात्। अर्बुदपीडितः रक्तार्बुदपीडितः ॥

दुष्ट हुआ पित्त रुधिरको तथा शिराओंको संकुचित करकै तथा जिससे एकत्रित होजाय ऐसी रीतिसे दवाकर, स्रावयुक्त, मासके अंकुरोंसे व्याप्त, और तत्काल वढनेवाले तथा यत्किंचित् पकनेवाले मांसके पिंडको उत्पन्न करते हैं और उसमेंसे दूपित रुधिर नित्य स्रवताहै इसको रुधिरजन्य अर्बुद कहतेहैं। यह अर्बुद असाध्य है । इस अर्बुदसे पीडित मनुष्य सुश्रुतमें कहे हुए रुधिरके क्षयके उपद्रवोंसे पीडित होकर पाडुवर्ण होजाताहै। सर्वप्रकारके अर्बुदोंमें मास तथा रुधिर दूपित होताहै और रुधिरसे उत्पन्न हुए अर्बुदमें तो विशेप करकै रुधिर दूपित होताहै तथा मासके अर्बुदमें विशेप करकै मास दूपित होताहै ॥ ॥ २३ ॥ २४ ॥

## अथ मांसार्बुदसम्प्राप्तिः।

मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं समुपैति शोथम् ॥ अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् ॥ २५ ॥

मांसं प्रदुष्टं वातेन। अवेदनम् वेदनारहितमीषद्वेदनं वा। अपाकं पाकरहितमीषत्पाकं वा ॥

मुष्टि आदिके प्रहारसे अग पीडित होकर उस अगके पीडित होनेसे वात कुपित होकर मासमें वेदनारहित, अथवा अल्पवेदनासहित स्निग्ध, अभिन्न वर्णवाली, वा नहीं पकनेवाली, अथवा कुछेक पकनेवाली, पत्थरकी समान और अचल ऐसी सूजनको उत्पन्न करैहै ॥ २५ ॥

## अथ मांसजन्यार्बुदनिदानम्।

प्रदुष्टमांसस्य नरस्य गाढमेतद्भवेन्मांसपरायणस्य ॥ २६ ॥

मांसाशनाभ्यासेन यः प्रदुष्टमांसस्तस्य एतद्भवतीत्यर्थः ॥

मासको भक्षण करनेके अभ्याससे जिसका मांस दुष्ट हो जाताहै उसके यह दृढ अर्बुद उत्पन्न होताहै ॥ २६ ॥

## अथासाध्यार्बुदलक्षणम्।

मांसार्बुदं त्वेतदसाध्यमाहुः साध्येष्वपीमानि विवर्जयेच्च ॥ संप्रस्रुतं मर्मसु यच्च जातं स्रोतःसु वा यत्तु भवेदचाल्यम्॥२७॥

साध्येष्वपि वातजादिष्वपि इमानि वक्ष्यमाणानि विवर्जयेच्च सम्प्रस्रुतादीनि ॥

माससे उत्पन्न हुआ अर्बुद असाध्य है ऐसा वैद्योंने कहा है, वातादिसे जो उत्पन्न हुये अर्बुद वे साध्य हैं, उनमें भी जो अर्बुद स्रावयुक्त, मर्मस्थलमें उत्पन्न हुआ, स्रोतोंमें उत्पन्न हुआ और अचल होय उसकी भी चिकित्सा नहीं करनी चाहिये ॥ २७ ॥

## अथार्बुदापाके कारणम्।

यज्जायतेऽन्यत्खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ॥ यद्द्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥ २८ ॥

प्रथम उत्पन्न हुये अर्बुदमें जो दूसरा अर्बुद उत्पन्न हो जाय तो उसका नाम अध्यर्बुद, कहा जाताहै। यह अध्यर्बुद एकही समय अथवा अनुक्रमसे उत्पन्न हुआ होय और दो दोपोंसे उत्पन्न हुआ हो तो असाध्य है॥२८॥

न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु ॥ दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥ २९ ॥

ग्रथनाद्ग्रन्थिरूपत्वात्। ननु अपच्यां कफमेदसोराधिक्येऽपि पाको दृश्यते, तथा अत्र कथं न पाक इत्याह। निसर्गतः स्वभावात् ॥

सर्व प्रकारके अर्बुद कफकी तथा मेदकी अधिकतावाले और विशेप करकै दोपोंकी स्थिरतावाले तथा गाठरूप होयँ वेभी नहीं पकते हैं।

शंका—अपचीमें कफ तथा मेद अधिक होताहै,

तो भी अपचीका पाक होताहै। फिर अर्बुदका पाक क्यो नही होता।

समाधान—अर्बुदका स्वभाव ही ऐसा है कि जिससे पाक बहुत कालतक नही होता और होय तो बहुत थोडा पकताहै॥ २९॥

## अथ गलगंडचिकित्सा।

**सर्षपाञ्छिग्रुबीजानि शणबीजातसीयवान्॥ मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत्॥३०॥ गलगण्डो गण्डमाला ग्रन्थयश्चैव दारुणाः॥ प्रलेपादेव नश्यन्ति विलयं यान्ति सत्वरम्॥३१॥ रक्षोघ्नतैलयुक्तेन जलकुम्भीकभस्मना॥ लपनं गलगण्डस्य चिरोत्थस्यापि शस्यते॥३२॥**

**रक्षोघ्नः सर्षपः॥**

**श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः॥ सर्पिषा नियताहारो गलगण्डप्रशान्तये॥॥ ३३॥ तिक्तालाबूफले पक्के सप्ताहमुषितं जलम्॥ सद्यः स्याद्गलगण्डघ्नं पानात्पथ्यान्नसेविनाम्॥ ३४॥ तैलं पिबेद्वाऽमृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः॥ सिद्धं बलाभ्यां सह देवदारुणा हिताय नित्यं गलगण्डरोगिणः॥३५॥**

**वृक्षकोऽत्र तुणिः। उक्तश्च निघण्टौ धन्वन्तरिणा—**

**तुणिस्तूणीकशीतश्च नन्दिवृक्षश्च वृक्षकः ३६ बलाभ्यां बलातिबलाभ्याम्॥**

सरसों, सैंजिनेके बीज, सनके बीज, अलसी, जौ और मूलीके बीज इनको खट्टे मट्ठेमें पीसकर गाढा लेपकरे, इससे गलगड, गडमाला और दारुण ग्रंथि तत्काल नष्ट होजाती और गलजातीहै।

खिवारकी भस्म बनाकर उसको सरसोंके तेलमें पकाकर लेपकरै तो बहुत दिनोका गलगण्डभी शांत होजाताहै

श्वेत अपराजिता (कोइली) की जडको पीसकर प्रातःकाल घीके साथ पिये और इसपर पथ्य आहार करै तो गलगण्ड शांत होजाता है।

कडवी तोम्बीके पके हुए फलमे पानीको भरकर सात दिनतक रख देवे, फिर उसको पीवे और पथ्य आहार सेवन करे तो उससे गलगड तत्काल नष्ट होजाताहै।

गिलोय, नीम, हिंस्रकवृक्ष, हरड, वेलियापीपल, पीपल, दोनोंप्रकारकी खिरैटी और देवदारु इनके कल्कसे पकाया हुआ तेल नित्य पिये तो गलगड रोग अवश्य नष्ट होजाता है। इसको अमृतादि तैल कहते हैं॥ ३०–३६॥

**यवमुद्गपटोलादिकटुरूक्षान्नभोजनम्॥ वमनं रक्तमोक्षश्च गलगण्डे प्रयोजयेत्॥॥ ३७॥ दापयेत्प्रच्छनान्यत्र गण्डगोपालिकोद्भवः॥ प्रलेपस्त्वनुभूतोऽयं बहुधा बहुभिर्जनैः॥ ३८॥**

**प्रच्छनानि पच्छना इति लोके। गण्डगोपालिका गण्डगुयालीति च प्रसिद्धा। आम्रवाटिकायां सुलभः कीटविशेषो भवति॥ लवणं जलकुम्भश्च कणाचूर्णेन संयुतम्॥ प्रभाते नित्यमश्नीयाद्गलगण्डप्रशान्तये॥ ३९॥**

गलगड रोगमें जौ, मूँग, कडवे परवल, तीक्ष्ण तथा रूक्ष पदार्थ भोजन करने चाहियें, वमन करनी, और रुधिर निकलवाना चाहिये।

गलगडपर पछने लगावे और उसपर गडगोपाल नामक कीडेका लेप करे इससे गलगण्ड नष्ट होजाताहै यह प्रयोग बहुतसे मनुष्योंने बहुतही वार अनुभव किया है।

सियारकी भस्म बनाकर उसमें पीपलका चूर्ण डालकर नित्य प्रात.काल पिये तो गलगण्ड नष्ट होजाताहै॥ ३७–३९॥

## अथ गण्डमालाचिकित्सा।

**काञ्चनारत्वचः क्काथः शुण्ठीचूर्णेन संयुतः॥ माक्षिकाढ्यः सकृत्पीतः क्काथो**

वरुणमूलजः ॥ ४० ॥ गण्डमालां हरत्याशु चिरकालानुबन्धिनीम् ॥ ४१ ॥ पलमर्द्धपलश्चापि पिष्टां तण्डुलवारिणा ॥ काञ्चनारत्वचं पीत्वा गण्डमलां व्यपोहति ॥ ४२ ॥

कचनारकी छालका क्काथ बनाकर उसमे सोठका चूर्ण डालकर पिये तो एकही वारमें गण्डमाला नष्ट होजाती है।

वरनाकी जडका क्काथ बनाकर उसमे सहत डालकर पिये तो एकही वारमें तत्काल बहुत दिनोकी पुरानी गण्डमाला नष्ट होजाती है।

दो तोले अथवा चार तोले कचनारकी छाल लेकर उसको चावलोंके पानीमें पीसकर पिये तो गण्डमाला नष्ट होतीहै ॥ ४०–४२ ॥

## अथ कांचनारगुग्गुलुः ।

कांचनारस्य गृह्णीयात्त्वचं पंचपलोन्मिताम् ॥ नागरस्य कणायाश्च मरिचस्य पलं पलम् ॥ ४३ ॥ पथ्याविभीतधात्रीणां पलमर्द्ध पृथक्पृथक् ॥ वरुणस्याक्षमेकं च पत्रकैलात्वचं पुनः ॥ ४४ ॥ टंकंटंकं समादाय सर्वाण्येकत्र चूर्णयेत्॥ यावच्चूर्णमिदं सर्वं तावानेवात्र गुग्गुलुः ॥ ४५ ॥ संकुट्य सर्वमेकत्र पिण्डं कृत्वा विधारयेत् ॥ गुटिकाः शाणिकाः कृत्वा प्रभाते भक्षयेन्नरः ॥ ४६ ॥ गलगण्डं जयत्युग्रमपचीमर्बुदानि च ॥ ग्रन्थीन्व्रणानि गुल्मांश्च कुष्ठानि च भगन्दरम् ॥ ॥ ४७ ॥ प्रदेयश्चानुपानार्थं क्काथो मुण्डितिकाभवः ॥ क्काथः खदिरसारस्य क्काथः कोष्णोऽभयाभवः ॥ ४८ ॥

कचनारकी छाल २० तोले, सोंठ ४ तोले, पीपल ४ तोले, मिर्च ४ तोले, हरड २ तोले, बहेडे २ तोले, आंवले २ तोले, वरना १ तोला, तेजपात २४ रत्ती, इलायची २४ रत्ती और दालचीनी २४ रत्ती लेवे, इन सबको एकत्र करके बारीक चूर्ण बनावे, फिर इस सब चूर्णकी बराबर गूगल मिलाकर उत्तम विधिसे कूटकर गोली बनालेवे। इसको कांचनार गूगल कहतेहैं। इस गूगलकी चौवीस चौवीस रत्तीकी गोलिया बनावे। प्रातः-काल एक गोली नित्य खाय तो महाउग्र गलगड, अपची, अर्बुद, ग्रथि, व्रण, गुल्म, कोढ तथा भगन्दर यह सब नष्ट होजातेहैं। इन गोलियोंपर अनुपानके लिये कुछ कुछ गरम गोरखमुण्डीका अथवा खैरसारका वा हरडक क्काथ पिये ॥ ४३–४८ ॥

## अथ चक्रमर्दतैलम् ।

चक्रमर्दकमूलस्य पले कल्के विपाचयेत् ॥ केशरागरसे तैलं कटुकं मृदुनाग्निना ॥ ॥ ४९ ॥ पादांशिकं विनिक्षिप्य सिन्दूरमवतारयेत् ॥ एतत्तैलं निहन्त्याशु गंडमालां सुदारुणाम् ॥ ५० ॥ केशरागो भृंगराजः ॥

पमारकी जडका कल्क चार तोले डालकर भांगरेके रसमें सरसोंके तेलको मद मद अग्निसे पकावे जब पकजाय तब उसमे चौथाई भाग सिन्दूर डालकर उतार लेवे तो चक्रमर्दतैल सिद्ध होताहै इस तेलकी मालिस करनेसे तत्काल महादारुण गडमाला नष्ट होजातीहै ॥४९॥५०॥

## अथ गुञ्जातैलम् ।

गुञ्जामूलफलैस्तैलं विपकं द्विगुणाम्भसा ॥ हरेदभ्यंगनस्याभ्यां गण्डमालां सुदारुणाम् ॥ ५१ ॥

चौटलीकी जड तथा चौटलीके बीज इनका कल्क डालकर दुगुने जलसे तेलको पकावे तो यह 'गुजातैल सिद्ध होताहै। इस तेलका अभ्यग और नस्य लेनेसे महादारुण गडमाला नष्ट होजातीहै ॥ ५१ ॥

## अथापचीचिकित्सा ।

### तत्र चन्दनादितैलम् ।

चन्दनं साभया लाक्षा वचा कटुकरोहिणी ॥ एतत्तैलं शृतं पीत्वा समूलामपचीं हरेत् ॥ ५२ ॥

लालचदन, हरड, लाख, वच और कुटकी, इनके काथमें पकाया हुआ तेल 'चदनादितैल' कहाजाता है इस तेलको पीनेसे जडसहित अपची नष्ट होजातीहै ॥ ५२ ॥

## अथ व्योषादितैलम्।

**व्योषं विडंगमधुकं सैन्धवं देवदारु च॥ तैलमेभिः शृतं नस्यात्सकृच्छ्रामपचीं हरेत् ॥ ५३ ॥**

सोंठ, मिरच, पीपल, वायविडग, मुलैठी, सैंधानिमक और देवदारु इनके काथमें पकायाहुआ तेल 'व्योषादितैल' कहाजाताहै। इस तेलका नास देनसे दारुण अपची नष्ट होजातीहै ॥ ५३ ॥

## अथ ग्रंथ्यर्बुदचिकित्सा।

**स्वर्जिकामूलकक्षारःशङ्खचूर्णसमन्वितः॥ एतेन विहितो लेपो हन्ति ग्रन्थिं तथार्बुदम् ॥५४॥ ग्रन्थिर्न यो नश्यति भेषजेन निष्कास्य तं शस्त्रचिकित्सितेन ॥जात्यादिपकेन घृतेन वैद्यो व्रणेन चान्येन च संचिकित्सेत् ॥ ५५ ॥ ग्रन्थिमुद्धृत्य तत्रापि व्रणोक्तं क्रममाचरेत् ॥ शिराग्रन्थिं विहायान्ये शेषे शस्त्रं प्रयुञ्जते ॥ ५६ ॥**

सज्जी, मूलीका खार और शंखका चूर्ण इनको पीसकर लेप करनेसे ग्रंथि तथा अर्बुद नष्ट होजाताहै ॥

जिस ग्रंथिमें औषधिसे आराम न होय तो उसको वैद्य शस्त्रचिकित्सासे निकाल देवे फिर व्रणकी समान जात्यादिघृत अथवा अन्यान्य व्रणमे हितकारक औषधियोंको उपयोग करे ॥

गाठको निकालकर फिर व्रणकी समान चिकित्सा करनी चाहिये केवल शिराजन्य ग्रंथिको छोडकर बाकी सर्वप्रकारकी ग्रथियोंकी शस्त्रसे चिकित्सा करनी चाहिये ॥ ५४-५६ ॥

**ग्रन्थ्यर्बुदानां न यतो विशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः ॥ अतश्चिकित्सेद्भिषगर्बुदानि विधानविद्ग्रन्थिचिकित्सितेन ॥ ५७ ॥**

अन्य आचार्य ऐसा कहतेहैं कि, ग्रंथि और अर्बुदोके प्रदेशोंमे, निदानोमें, आकारोंमे, दोषोंमे और दूष्योंमें कुछभी अन्तर नही है। इस कारण शस्त्रचिकित्साको जाननेवाले वैद्य अर्बुदपरभी ग्रथिकी समान चिकित्सा करें ॥ ५७ ॥

**हरिद्रालोध्रपत्राङ्गगृहधूममनःशिलाः ॥ मधुप्रगाढलेपोऽयं मेदोऽर्बुदहरः परः ॥ ॥ ५८ ॥ मूलकस्य कृतः क्षारो हरिद्रायास्तथैव च ॥ शंखचूर्णेन संयुक्तो लेपः सिद्धोऽर्बुदापहः ॥ ५९ ॥**

हलदी, लोध, पतंग, घरका धुँआँसा और मैनशिल इनको सहतमे मिलाकर लेप करनेसे मेदसम्बन्धी अर्बुद नष्ट होजाताहै ॥

मूलीकी भस्म, हलदीकी भस्म और शंखका चूर्ण इन सबको एकत्र पीसकर लेप करनेसे अर्बुद नष्ट होजाताहै। अर्बुद दूर करनेका यह सिद्ध उपाय है ॥ ५८ ॥ ५९ ॥

**वटदुग्धकुष्ठरोमकलिप्तं बद्धं वटस्य पत्रेण॥ अध्यस्थि सप्तरात्रान्महदप्युपशान्तिमर्बुदं गच्छेत् ॥ ६० ॥**

बडका दूध, कूठ और सांभरनिमक इनका अर्बुदके ऊपर लेप करे और ऊपरसे बडके पत्ते बाँध देवे तो हड्डीके ऊपर उत्पन्न हुआ भी अर्बुद नष्ट होजाताहै॥ ६० ॥

**शिग्रुमूलकयोर्बीजं रक्षोघ्नं सुरसा यवम् ॥ तक्रेणाश्वरिपोः पिष्ट्वा लिम्पेदर्बुदशान्तये ॥ ६१ ॥**

**रक्षोघ्नं सर्षपम्। सुरसा तुलसी। यवम् इन्द्रयवम्। अश्वरिपुर्महिषी।**

इति गलगण्डगण्डमालाग्रन्थ्यर्बुदनिदानचिकित्साधिकारः।

सैंजिनेके बीज, मूलीके बीज, सरसों, तुलसी और इन्द्रजौ इनको भैंसके तक्रमे पीसकर लेप करनेसे अर्बुद नष्ट होजाताहै ॥ ६१ ॥

इति गलगडगंडमालाग्रथ्यर्बुदाधिकारः सम्पूर्णः।

---

# अथ श्लीपदाधिकारः।

## तत्र श्लीपदसामान्यकारणम्।

पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः॥ ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः॥ १॥

विशेषत इति वचनेन अन्यत्रापि श्लीपदं भवतीति बोध्यते॥

जिस देशमें मेहका जल बहुत दिनोंतक भरा रहताहै और सब ऋतुओंमें जिसमें शीतलता रहतीहै उस देशमें श्लीपद रोग विशेष करके उत्पन्न होताहै॥

"विशेष करके" ऐसा कहनेसे यह समझना चाहिये कि अन्य देशोंमें भी श्लीपद रोग उत्पन्न होताहै॥ १॥

## अथ श्लीपदसामान्यलक्षणम्।

यः सज्वरो वङ्क्षणजो भृशार्तिः शोथो नृणां पादगतः क्रमेण॥ तच्छ्लीपदं स्यात्करकर्णनेत्रशिश्नोष्ठनासास्वपि केचिदाहुः॥ २॥

तत्त्रिविधम्। वातिकं पैत्तिकं श्लैष्मिकञ्चेति॥

मनुष्योंकी साथलोंकी जडमें जो सूजन ज्वरसहित और अत्यत पीडायुक्त अनुक्रमसे धीरे धीरे पावमें पहुचे उस सूजनको श्लीपद कहतेहैं। कितनेक आचार्य कहतेहैं कि हाथ, कान, नेत्र, लिंग, होठ और नाक इनमेंभी श्लीपद होताहै॥

वातिक, पैत्तिक और कफज ऐसे श्लीपद रोग तीन प्रकारका है॥ २॥

## अथ त्रिविधश्लीपदसामान्यलक्षणम्।

वातजं कृष्णरूक्षं हि स्फुटितं तीव्रवेदनम्॥ अनिमित्तरुजश्चास्य बहुशो ज्वर एव च॥ ३॥ पित्तजं पीतसंकाशं दाहज्वरयुतं भृशम्॥ श्लैष्मिकन्तु भवेत्स्निग्धं तथा पाण्डुरमस्थिरम्॥ ४॥

वातिक श्लीपद काला, रूखा, फटाहुआ, तीव्र पीडायुक्त होताहै उसमें अकस्मात् वेदना होतीहै तथा वारवार ज्वर आताहै।

पैत्तिक श्लीपद पीले रंगका, अत्यत दाह और ज्वरयुक्त होताहै। कफका श्लीपद स्निग्ध, पाण्डुवर्ण और अल्प पीडायुक्त होताहै॥ ३॥ ४॥

त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात्॥ गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात्॥ ५॥

यह तीनों प्रकारके श्लीपद कफके उत्कर्षसे होतेहैं क्योंकि कफके विना भारीपन और महत्पन नहीं होसक्ता॥ ५॥

## अथ श्लीपदासाध्यता।

वल्मीकमिव सञ्जातं कण्टकैरुपचीयते॥ अब्दात्मकं महत्तत्तु वर्जनीयं विशेषतः॥ ॥ ६॥ यच्छ्लैष्मिकाहारविहारजातैर्जातं तथा भूरिकफस्य पुंसः॥ सास्रावमत्युन्नतसर्वलिंगं सकण्डुरं श्लेष्मयुतं विवर्ज्यं॥ ७॥

जो श्लीपद साँपकी बॉंबीकी समान, अनेक काँटो युक्त बडा हो और जिसको उत्पन्न हुये एक साल वीत गया हो उस श्लीपदकी चिकित्सा नहीं करनी चाहिये। जो श्लीपद कफजन्य आहार विहारोंसे उत्पन्न हुआ हो, अधिक कफवाले मनुष्यके उत्पन्न हुआ हो, स्रवता हो, अत्यंत ऊंचा हो, तीनों दोषोंके लक्षणोंयुक्त हो और खुजलीयुक्त हो, उसकी भी चिकित्सा नहीं करनी चाहिये॥ ६॥ ७॥

## अथ श्लीपदचिकित्सा।

लंघनालेपनस्वेदरेचनै रक्तमोक्षणैः॥ प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत्॥ ८॥ सिद्धार्थशोभाञ्जनदेवदारुविश्वौषधैर्मूत्रयुतैः प्रलिम्पेत्॥ पुनर्नवानागरसर्षपाणां कल्केन वा काञ्जिकमिश्रितेन॥ ९॥

श्लीपदमिति शेषः॥

लंघन, लेपन, स्वेदन, विरेचन, रक्तमोक्षण और विशेष करके कफको हरनेवाली गरम औषधियोंसे श्लीपदकी चिकित्सा करनी चाहिये।

सरसों, सैंजिना, देवदारु और सोंठ इन सबको गोमूत्रमें पीसकर श्लीपदके ऊपर लेप करनेसे श्लीपद नष्ट होजाताहै।

अच्छे प्रकार उपदंशको नष्ट करे है । इस तेलसे व्रण शुद्ध होजाताहै और भरकर सूखजाताहै ॥ ४० ॥

### अथ गोजिह्वातैलम् ।

गोजीविडङ्गयष्टीभिः सर्वगन्धैश्च संयुतम् ॥ एतत्सर्वोपदंशेषु तैलं रोपणमिष्यते ॥ ४१ ॥

गोजिह्वा ( गोभी ), वायविडंग, मुलैठी और चंदनादिक समस्त सुगंधित पदार्थ इनसे पकाया हुआ तेल सर्व प्रकारके उपदंशोको भरदेताहै ॥ ४१ ॥

### अथ जम्ब्वाद्यतैलम् ।

जम्बूवेतसपत्राणि धात्रीपत्रं तथैव च ॥ नक्तमालस्य पत्राणि तद्वत्पद्मोत्पलानि च ॥ ४२ ॥ एला चातिविषाम्रास्थि मधुकश्च प्रियङ्गवः ॥ लाक्षा कालीयकं लोध्रं चन्दनं त्रिवृताह्वया ॥४३ ॥ एतान्येकीकृतान्येव बस्तमूत्रेण पेषयेत्॥अक्षमात्रैरिमैर्द्रव्यैस्तैलप्रस्थं विपाचयेत्॥४४ सर्वव्रणहरं तैलमेतत्सिद्धं विपाचयेत् ॥ उपदंशहरं श्रेष्ठं मुनिभिः परिकीर्तितम् ॥ ४५ ॥

जामुनके पत्ते, वेतके पत्ते, आमलोंके पत्ते, करजके पत्ते, सफेद कमल, लाल कमल, इलायची, अतीस, आमकी गुटली, मुलैठी, फूलप्रियगू, लाख, कलम्बक, लोध, सफेद चंदन और निसोत इन प्रत्येक औषधियोंको एक एक तोलाभर लेकर सबको एकत्र बकरेके मूत्रमें पीसकर चौंसठ तोलेभर तेलमे पकावे । यह तेल सर्वप्रकारके व्रणोंको तथा उपदंशको नष्ट करे हैं ऐसा मुनियोंने कहाहै ॥ ४२–४५ ॥

### अथ कोशातकीतैलम् ।

यस्य लिङ्गस्य मांसं तु शीर्यते मुष्कशेषतः ॥ तिक्तकोशातकीलम्बाबीजं नागरसाधितम् ॥ तैलं हन्त्यविशेषेण व्रणं दुष्टमनेकधा ॥ ४६ ॥

कडवी तारेईके बीज, कडवी तोम्बीके बीज और सोंठ इनके कल्कसे पकाया हुआ तेल अनेक प्रकारके दुष्ट व्रणोंको अच्छे प्रकारसे नष्ट करदेताहै । जो लिंगका मास गलगया हो केवल अण्डकोषही बाकी रहगया हो तो भी वह उपदंश इस तेलसे शांत होजाताहै ॥ ४६ ॥

### अथोपदंशे पथ्यम् ।

सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च ॥ अर्शसां च्छिन्नदग्धानां क्रियां चात्र प्रयोजयेत् ॥ ४७ ॥

इत्युपदंशनिदानचिकित्साधिकारः ।

उपदंशरोगी नित्य जौंका भोजन और कुएका जल सेवन करे । तथा बवासीर और छिन्न तथा दग्धव्रणमे जो चिकित्सा कही है वह सब प्रयोग करनी चाहिये ॥४७॥

इति उपदंशाधिकारः संपूर्णः ।

---

## अथ लिंगार्शोऽधिकारः ।

### तत्र लिंगार्शोलक्षणम् ।

अंकुरैरिव संजातैरुपर्युपरि संस्थितैः ॥ क्रमेण जायते वर्तिस्ताम्रचूडशिखोपमा ॥ १ ॥ कोशस्याभ्यन्तरे सन्धौ पर्वसन्धिगतापि वा ॥ लिंगवर्तिरिति ख्याता लिंगार्श इति चापरे ॥ सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा ॥ २ ॥

धान्यके अंकुरकी समान एक दूसरेके ऊपर बारीक बारीक अनुक्रमसे बट बढकर लिंगमें, सन्धियोंमें अथवा लिंगकी सुपारीके नीचे, मुरगेकी कलगीकी समान जो उत्पन्न होती है उसको लिंगवर्ति कहते है । कितने एक वैद्य इस लिंगवर्तिको लिंगार्शभी कहते हैं ॥ १ ॥ २ ॥

### अथ लिंगार्शश्चिकित्सा ।

क्षारेण प्रदहेच्छित्त्वा लिङ्गवर्तिमशेषतः ॥ व्रणवच्चाचरेत्सम्यग्लेपचूर्णैरुपद्रवान् ॥ ३ ॥ स्वर्जिका तुत्थशैलेयमंजनं सरसांजनम् ॥ मनःशिलाले च समं चर्ण मांसांकुरापहम् ॥ ४ ॥ हरति वृतकुमारीपत्रमावेष्टनेन ग्रथनविधिविशेषांश्चर्मकीलांस्तृतीये ॥ अहनि गुरुतरानप्यंगलब्धप्रतिष्ठान्विधिरिव विपरीतः पौरु-

षस्य प्रकारान् ॥ ५॥ शुभे तु चारटीमूलं वृषमूत्रेण पेषयेत् ॥ चर्मकीलान्निहन्त्याशु लेपो लिंगसमुद्भवान् ॥ ६ ॥

इति लिगार्शोधिकारः।

इस लिगके अर्शको अच्छे प्रकारसे शस्त्रसे काटकर क्षारसे दग्ध करे। और व्रणकी समान ही लेप चूर्ण आदि उपचार अच्छे प्रकारसे करे।

सज्जी, नीलाथोथा, शिलाजीत, रसौत, अजन(सुरमा), मैनशिल और हरिताल इन सबको समान भाग लेकर बनाया हुआ चूर्ण लिगार्शको नष्ट करदेताहै।

जिस प्रकार विपरीत हुआ दैव पुरुषार्थको प्रबलरीतिसे नष्ट करदेताहै उसी प्रकार बॉधा हुआ धीक्वारका पत्ता अत्यत प्रबल, अगमे जमाहुआ और एक जातिका गांठकी समान चर्मकील (लिगार्श) को भी तीन दिनमे नष्ट करेहै ॥

शुभ दिनमे कटेरीकी जडको लेकर बैलके मूत्रमे पीसकर लेप करनेसे लिगार्श तत्काल नष्ट होजाताहै ॥ ३–६ ॥

इति लिगार्शोविकारः सम्पूर्णः।

---

# अथ शूकदोषाधिकारः।

## तत्र शूकदोषनिदानम्।

अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः॥ व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ॥ १ ॥

अक्रमादनुचितवृद्धिक्रमात्। अनुचिता च वृद्धिः भूरिविकारजनकस्य योगेन। शूकजाः शूको जलशूकः सविषो जलजन्तुविशेषः स तु जलमलोद्भवः अल्पडुण्डुभ इत्यादिकः। तथा शूकप्रधानो लिंगवृद्धिकरो वात्स्यायनाद्युक्तो योगः शूक उच्यते यथा–

भल्लातकास्थिजलशूकमथाब्जपत्रमन्तर्विदाह्य मतिमान्सह सैन्धवेन ॥ एतद्विरूढबृहतीफलतोयपिष्टमालेपितं महिषविड्विमलीकृतेंऽगे ॥ २ ॥ स्थलं महद्वरतुरंगमलिंगतुल्यं शेफः करोत्यभिमतं न हि संशयोऽत्र ॥ ३ ॥

यत्तु जलशूकरहितमश्वगन्धादितैलं तदुचितमेव लिंगवर्द्धनम् ॥

जो मूर्ख मनुष्य अयोग्य उपायसे लिगको बढानेका यत्न करतेहैं उनके शूकदोषसे उत्पन्न हुई अठारह प्रकारकी व्याधि उत्पन्न होतीह ॥

जिसमें इस शूक नामक कीडेकी भस्मका मुख्य उपयोग है ऐसा वात्स्यायन आदि आचार्योंके कहे हुए लिंगको बढानेवाले जो उपाय हैं, उनमे शूकके मुख्य होनेसे शूक कहेजातेहैं। वात्स्यायन ऋषिने कहा है कि "भिलावेकी गुठली, शूकनामकजलका कीडा और कमलके पत्ते इनको वर्तनके भीतर जलाकर भस्मकर लेवे उस भस्मको सैंधे निमकमें मिलाकर बडीकटेरीके फलके रसमें मिलाकर पीस लेवे, फिर लिगको भैसके गोवरसे धोकर उसके ऊपर इस भस्मका लेप करे तो लिग मन माना और उत्तम घोडेकी लिगकी समान होजाताहै इसमे सशय नहीं" इत्यादि।

इससे अत्यन्त हानि होतीहै. परन्तु जिसमे कीडेभस्मका उपयोग नहीं होता ऐसा लिग बढानेवाले 'अश्वगन्धादि तैल' के जो उपाय कहे हैं वह ठीक हैं ॥ १–३ ॥

## अथाश्वगधादितैलम्।

अश्वगन्धावरीकुष्ठं मांसीसिंहीफलान्वितम् ॥ चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ॥ तत्तैलं मेढ्वक्षोजकर्णपालिविवर्द्धनम् ॥ ४ ॥

असगंध, सतावर, कूठ, बालछड और कटेरीके डोडे इनका कल्क डालकर तेलसे चौगुने दूधमे पकाया हुआ तिलका तेल अश्वगंधादि तेल कहाजाताहै। यह तेल–लिंग, स्तन और कानकी पालीको बढाताहै ॥ ४ ॥

अथ शूकदोषस्याष्टादशभेदाः ।

तत्र सर्षपिकालक्षणम् ।

गौरसर्षपसंस्थाना शूकदुर्भगहेतुका ॥ पिडका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका तु सा ॥ ५ ॥

शूकदुर्भगहेतुका शूकदुष्टयोनिनिमित्ता च ।

शूकसे अथवा दुष्टयोनिमें मैथुन करनेसे उत्पन्न हुई सफेद सरसोंकी समान जो फुंसी उत्पन्न होतीहै वह सर्षपिका कही जातीहै, कफ तथा वायु इनसे उत्पन्न होतीहै ॥ ५ ॥

अथाऽष्ठीलिकालक्षणम् ।

कठिना विषमैर्भुग्नैर्वायुनाऽष्ठीलिका भवेत् ६॥

अष्ठीला लौहकारस्य भाण्डविशेषः निहार इति लोके । ततः कठिनेत्यष्ठीलिका विषमैर्भुग्नैरिति वक्ष्यमाणशूकविशेषणम् । विषमैर्ह्रस्वदीर्घैः भुग्नैः वक्रैः ॥

बडे, छोटे और टेढे कांटोंवाली और कठिन ऐसी जो फुंसी होय उसको अष्ठीलिका कहतेहैं 'अष्ठीलिका' इस नामका एक लुहारका औजार होताहै जिसको देशमें निहार अथवा निहाई कहतेहैं उसीके समान यह फुंसी कठिन होतीहै, इसकारण इसको अष्ठीलिका कहतेहैं, इस फुंसीका मुख्य निदान वायु है ॥ ६ ॥

अथ ग्रथितलक्षणम् ।

शूकैर्यत्पूरितं शश्वद्ग्रथितं नाम तत्कफात् ॥ ७ ॥

यल्लिङ्गं सदा शूकैः पूरितं तद्ग्रथितत्वात् ग्रथितम् ॥

लिंग जोंकी अनीकी समान कांटोंसे निरतर व्याप्त रहे उसको ग्रथित कहतेहैं इस ग्रथितका मुख्य निदान कफ है ॥ ७ ॥

अथ कुम्भिकालक्षणम् ।

कुम्भिका रक्तपित्तात्स्याज्जाम्बवास्थिनिभा सिता ॥ ८ ॥

कुम्भिका कुम्भीफलतुल्यत्वात् ॥

जामुनकी गुठलीकी समान जो सफेद फुन्सी उत्पन्न होय उसको कुम्भिका कहतेहैं, इस फुन्सीका मुख्य निदान रुधिर तथा पित्त है । यह फुन्सी कुम्भीफल ( कायफल ) की समान होतीहै इसलिये इसको कुंभिका कहतेहैं ॥ ८ ॥

अथाऽलजीलक्षणम् ।

अलजी स्यात्तथा याद्दक्प्रमेहपिडका तथा ॥ सा च रक्ताऽसिता स्फोटैश्चिता च कथिता बुधैः ॥ ९ ॥

एषा रक्तपित्तनिमित्ता ज्ञेया ।

अलजी नामक प्रमेह सम्बन्धी पिडका जो लाल और काली फुन्सी होय तथा अन्य फुंसियोंसे व्याप्त होय ऐसी इस प्रमेह पिडकाकी समान लिंगपर उत्पन्न होय उसको अलजी कहतेहैं । इस फुन्सीका मुख्य रुधिर तथा पित्त है ॥ ९ ॥

अथ मृदितलक्षणम् ।

मृदितं पीडितं यत्तु संरब्धं वातकोपतः ॥ १० ॥

शूकदोषे जाते पीडितं सत् यत् संरब्धं सशोथं भवति तल्लिंगं मृदितमुच्यते ॥

शूकदोषके उत्पन्न होनेपर लिंगके दबानेसे जो सूजन उत्पन्न होय उसको मृदित कहतेहैं ॥ १० ॥

अथ संमूढपिडकालक्षणम् ।

पाणिभ्यां भृशसंमूढे संमूढपिडका भवेत् ॥ ११ ॥

शूकदोषे जाते पाणिभ्यां भृशसंमूढे पिशते लिंगे । अत्रापि वातकोपत इत्यनुवर्तते ॥

शूक होनेपर दोनों हाथोंसे बहुत मर्दन करनेसे लिंगके ऊपर जो पिडका होतीहैं उनको संमूढपिडका कहतेहैं ॥ ११ ॥

अथावमन्थलक्षणम्।

**दीर्घा बह्वयश्च पिडका दीर्यन्ते मध्यतस्तु याः॥ सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत्॥ १२॥**

दीर्घा दीर्घाङ्कुराः॥

लंबी और लंबे अंकुरवाली जो फुन्सियें बीचमें फूटी हुई, वेदनायुक्त और रोमाचसहित होयँ उनको अवमन्थ कहतेहैं। ये फुन्सी कफ तथा रुधिरके कोपसे होतीहैं॥१२॥

अथ पुष्करिकालक्षणम्।

**पिडका पिडकाव्याप्ता पित्तशोणितसंभवा॥ पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिकेति सा॥ १३॥**

पिडकाव्याप्ता पार्श्वतः क्षुद्रपिडकाव्याप्ता अत एव पद्मकर्णिकसंस्थाना॥

जो फुन्सी अन्य फुन्सियोंसे व्याप्त और कमलकर्णिकाकी समान आकारवाली उत्पन्न होय उसको पुष्करिका कहते हैं। यह फुसी पित्तके तथा रुधिरके कोपसे होतीहै॥१३॥

अथ स्पर्शहानिलक्षणम्।

**स्पर्शहानिन्तु जनयेच्छोणितं शूकदूषितम्॥ १४॥**

अत्र स्पर्शासहत्वमेव लक्षणम्॥

जो फुसी स्पर्शको सह न सके उसको स्पर्शहानि कहतेहैं, यह फुसी शूकदोषसे कुपित हुए रुधिरसे उत्पन्न होतीहै॥ १४॥

अथोत्तमालक्षणम्।

**मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा च या॥ एषोत्तमाख्या पिडिका शूकाजीर्णसमुद्भवा॥ १५॥**

शूकदोषसे उत्पन्न हुई, अजीर्णसे उत्पन्न हुई, मूग तथा उडदके समान जो लाल फुंसी उत्पन्न होतीहै वह उत्तमा कहीजातीहै। इस फुन्सीका मुख्य निदान रुधिर तथा पित्त है॥ १५॥

अथ शतपोनकलक्षणम्।

**छिद्रैरणुमुखैर्लिंगं चिरं यस्य समन्ततः॥ वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः॥ १६॥**

**शतपोनकश्चालनी तत्तुल्यत्वाच्छतपोनकः॥**

लिंग बारीक छिद्रोंकरके चारों ओरसे व्याप्त होकर शतपोनक ( चलनी ) की समान होजाय उस रोगको शतपोनक कहतेहैं। इसका मुख्य निदान वात तथा कफ है॥ १६॥

अथ त्वक्पाकलक्षणम्।

**वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहकृत्॥ १७॥**

ज्वर तथा दाहको उत्पन्न करनेवाला लिंगके चर्मका जो पाक होताहै वह त्वक्पाक कहाजाताहै, इसका मुख्य निदान रुधिर तथा पित्त है॥ १७॥

अथ शोणितार्बुदलक्षणम्।

**कृष्णैः स्फोटैः सरक्ताभिः पिडकाभिनपीडितम्॥ लिंगं वास्तुरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम्॥ १८॥**

**वास्तुरुजः स्फोटपिडकाधिष्ठानवेदनाः॥**

काली फुसियोंसे और लाल फुसियोसे लिंग पीडित होय और उन फुसियोंमें तथा फुसियोंके स्थानमे उग्र पीडा होय उसको शोणितार्बुद कहतेहैं॥ १८॥

अथ मांसार्बुदलक्षणम्।

**मांसदुष्टं विजानीयादर्बुदं मांससम्भवम्॥ १९॥**

मासकी दुष्टतासे लिंगपर मासका अर्बुद ( रसौली ) उत्पन्न होय उसको मासार्बुद कहतेहैं॥ १९॥

अथ मांसपाकलक्षणम्।

**शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः॥ विद्यात्तं मांसपाकं तु सर्वदोषकृतं भिषक्॥ २०॥**

**शीर्यन्ते गलन्ति। सर्वाश्च वेदनाः वातपित्तकफजाः॥**

लिंगका मांस गलकर गिरजाता हो और सर्वप्रकारकी ( वात पित्त कफ जनित ) वेदना होती हो उसको वैद्य मासपाक हुआ जाने, यह मासपाक त्रिदोषके कोपसे होताहै॥ २०॥

अथ विद्रधिलक्षणम्।

विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥ २१ ॥

उक्तं सान्निपातिकविद्रधितुल्यं कथयेत् ॥

प्रमेहसम्बन्धी विद्रधियोंमे जो त्रिदोषजन्य विद्रधि कही है उसीके लक्षणोंवाली फुंसी जो लिंगमें उत्पन्न होय उसको वैद्य विद्रधि जाने, यह विद्रधि भी त्रिदोषके प्रकोपसे होतीहै ॥ २१ ॥

अथ तिलकालकलक्षणम्।

कृष्णानि चित्राण्यथवा शूकानि सविषाणि तु ॥ पातितानि पचत्याशु मेढ्रं निरवशेषतः ॥ २२ ॥ कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः ॥ सन्निपातसमुत्थांश्च तान्विद्यात्तिलकालकान् ॥ २३ ॥

चित्राणि शुक्लपीतनीलादिनानावर्णानि। सविषाणीति शूकानांसविषत्वेऽपि विशेषार्थमुक्तम्। शीर्यन्ते गलन्ति। कालानीति कृष्णानि, कृष्णतिलतुल्यत्वात्तिलकालकसंज्ञा ॥

काले रंगके अथवा अनेक प्रकारके चित्र विचित्रित सफेद पीले नीले आदि रंगके शूकनामक विषैले कीडेकी भस्मसे उत्पन्न होनेके कारण विषैला मांस लिंगमेंसे गिरजाय, सर्वप्रकारसे लिंगको पका देवे और कालाकाला होकर गलजाय उसको तिलकालक कहते हैं। इस रोगमें मांस काले तिलकी समान होजाताहै, इसकारण इसको 'तिलकालक' कहतेहैं। यह रोग त्रिदोषके प्रकोपसे होताहै ॥ २२ ॥ २३ ॥

अथ शूकदोषासाध्यलक्षणम्।

तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः ॥ विद्रधिश्च न सिध्यंति ये च स्युस्तिलकालकाः ॥ २४ ॥

अठारह प्रकारके उपरोक्त शूक दोषोंमें मांसार्बुद, मांसपाक, विद्रधि और तिलकालक ये चार असाध्य हैं॥२४॥

अथ शूकदोषचिकित्सा।

शूकदोषेषु सर्वेषु विषघ्नीं कारयेत्क्रियाम् ॥ जलौकाभिर्हरेद्रक्तं रेचनं लघु भोजयेत् ॥ २५ ॥ गुग्गुलुं पाययेच्चापि त्रिफलाक्वाथसंयुतम् ॥ क्षीरेण लेपसेकांश्च शीतेनैव हि कारयेत् ॥ २६ ॥

वैद्य सर्वप्रकारके शूकदोषोंमें विषनाशक क्रिया करे, जौंक लगाकर विष निकलवावे, विरेचन देवे, हलका भोजन करे, त्रिफलेके क्वाथके साथ गूगल पिये, शीतल दूधका लेप और शीतल दूधसे सेचन करावे ॥२५॥२६॥

अथ दार्वीतैलम्।

दार्वीसुरसयष्ट्याह्वैर्गृहधूमनिशायुतैः ॥ सम्पक्वं तैलमभ्यङ्गान्मेढ्ररोगं हि नाशयेत् ॥ २७ ॥

दारुहलदी, तुलसी, मुलेठी, घरका धुआँसा और हलदी इनके कल्कसे पकाया हुआ तैल 'दार्वीतैल' कहाजाताहै। इस तेलका लेप करनेसे लिङ्गके समस्त रोग नष्ट होजातेहैं ॥ २७ ॥

अथ रसांजनलेपः।

रसाञ्जनं साह्वयमेकमेव प्रलेपमात्रेण नयेत्प्रशान्तिम् ॥ सपूतिपूयव्रणशोथकण्डूशूलान्वितं सर्वमनङ्गरोगम् ॥ २८ ॥

साह्वयमिति अनङ्गरोगस्य विशेषणम्। अनंगरोगस्य नाम अपि दूरीकरोति इत्यर्थः॥

इति शूकदोषनिदानचिकित्साधिकारः।

इकले रसौतकाही लेप करनेसे सर्वप्रकारके लिंगसंबधी रोग नष्ट होजातेहैं कि फिर उनका कदापि नामतक भी नही रहता तथा दुर्गंधित राधका निकलना, व्रण, सूजन, खुजली और शूल ये सब नष्ट होजातेहैं ॥ २८ ॥

इति शूकदोषाधिकारः संपूर्ण.।

---

## अथ कुष्ठरोगाधिकारः।

तत्र कुष्ठस्य निदानं संख्या च।

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ॥ भजतामागतांश्छर्दिवेगांश्चान्या-

न्प्रतिघ्नताम् ॥ १ ॥ व्यायाममभिता-पश्चाप्यतिभुक्त्वा निषेविणाम् ॥ शीतोष्ण-लंघनाहारान्क्रमं मुक्त्वा निषेविणाम्॥ २॥ घर्माश्रमभयार्तानां द्रुतं शीताम्बुसेविनाम्॥ अजीर्णाध्यशिनां चापि पञ्चकर्मापचा-रिणाम् ॥ ३ ॥ नवान्नदधिमत्स्यादिल-वणाम्लनिषेविणाम् ॥ माषमूलकपिष्टा-न्नतिलक्षीरगुडाशिनाम् ॥ ४ ॥ व्यवायं चाप्यजीर्णेऽन्ने दिवानिद्रां निषेविणाम् ॥ विप्रान्गुरून्धर्षयतां पापं कर्म च कुर्व-ताम् ॥ ५ ॥ वातादयस्त्रयो दोषास्त्व-ग्रक्तं मांसमम्बु च ॥ दूषयन्ति सकुष्ठानां सप्तको द्रव्यसंग्रहः ॥अतः कुष्ठानि जाय-न्ते सप्त चैकादशैव च ॥ ६ ॥

विरोधीनि अन्नपानानि क्षीरमत्स्यादीनि दधिदुग्धादीनि। व्यायाममित्यादि अति-भुक्त्वा व्यायामम्, अग्निसन्तापम् अग्निरुप-लक्षणं सूर्यादिसन्तापश्च। निषेविणामिति कृदन्तस्य योगे षष्ठी प्राप्ता। द्वितीया तु मुनि-वचनात्। एवमग्रेऽपि। शीतोष्णलंघनाहारा-नित्यादिषु अपि द्वितीया। अत्र क्रमं विधिम्। घर्मेत्यादि घर्मार्तत्वे सति द्रुतमविश्रम्य पाने स्नाने शीताम्बुसेविनाम्। अजीर्णाध्य-शिनां भुक्तेऽजीर्णे भुक्तानाम्। पञ्चकर्मा-पचारिणां पञ्चकर्माणि वमनविरेकनस्यनि-रूहानुवासनानि तेषु कृतेषु अपचारिणाम्। नवान्नदधिमत्स्याद्याहारादि सेविनाम्।व्यवा-यमित्यादि। अन्ने अजीर्णे विदग्धादिरूपे सति व्यवायं मैथुनं निषेविणाम्। दिवा-निद्रां निषेविणामिति भिन्नो हेतुः।धर्षयताम् अभिभवताम्। दोषदूष्यसंग्रहार्थमाह-वाता-दय इत्यादिशब्देन। त्रिष्वपि प्रतीतेषु त्रय इति पदं सर्वेषु कुष्ठेषु त्रयाणामपि वाता-दीनां दुष्टत्वबोधनार्थम्। त्वग्रसः अम्बू-लसीका। अथ संख्यामाह-अतः कुष्ठानी-त्यादि। अतः पूर्वोक्तदोषदूष्यसमुदायात्। सप्तधैकादशधेति संख्याविच्छेदपाठेन स-प्तानां महाकुष्ठत्वमेकादशानां क्षुद्रकुष्ठत्वं बोधयति ॥

दूध तथा मछली आदि परस्परविरुद्ध पदार्थोंको भक्षण करनेसे, दही तथा दूध आदि परस्पर विरुद्ध खान-पानोंके सेवन करनेसे, पतले, चिकने तथा भारी पदार्थोंके सेवन करनेसे, आती हुई वमनके वेगको रोकनेसे, अन्यान्य मलमूत्रादिके वेगोंको रोकनेसे, बहुत भोजन करके कसरत करनेसे, बहुत भोजन करके सूर्यका तथा अग्निका सन्ताप सेवन करनेसे, शीत, उष्ण, लघन और आहार इनको कुविधिसे सेवन करनेसे, पसीना, श्रम, तथा भयसे पीडित होनेपर तत्काल शीतल जलमें स्नान करनेसे अथवा शीत-लजल पीनेसे, अजीर्णमें भोजन करनेसे अथवा भोजनपर भोजन करनेसे, वमन, विरेचन, नस्य, निरूह और अनु-वासनवस्ति इनके बिगड जानेसे, नवीन अन्नके भक्षण करनेसे, दहीके सेवनसे, मछली आदिके खानेसे, खारी पदार्थोंके सेवन करनेसे, खट्टे पदार्थोंके सेवन करनेसे, उडदको सेवन करनेसे मूलीको सेवन करनेसे, पक्वान्न अथवा मिष्टान्नके सेवन करनेसे, तिलके सेवन करनेसे, दूध तथा गुडको विशेष खानेसे, विदग्ध आदिके अजीर्ण होनेपर मैथुन करनेसे, दिनमें सोनेसे, ब्राह्मणोंका और गुरुजनोंका अपमान करनेसे और पापकर्म करनेसे कोढ उत्पन्न होतेहैं। वात पित्त और कफ यह तीनोदोष रस, रुधिर, मांस, तथा जलको दूषित करकै कोढको उत्पन्न करतेहैं। वात, पित्त, कफ, रस, रुधिर, मांस तथा लसीका इन सातोंके बिगडनेसे कोढ उत्पन्न होताहै। वात, पित्त और कफ यह तीनों दोष और रस, रुधिर, मांस तथा लसीका यह चार दूष्य कोढके कारण हैं। सर्व प्रकारके कोढोंमें वातादि तीनोंदोष दुष्ट होते हैं ऐसा जानना। ऊपर कहेहुए सातो पदार्थोंके समुदायसे सात प्रकारका और ग्यारह प्रकारका कोढ उत्पन्न होताहै। 'अठारह' ऐसा नहीं कहा क्योंकि सात और ग्यारह अलग अलग संख्या कही वह ऊपरसे जाननी। सात बड़े कोढ और ग्यारह क्षुद्र कोढ हैं ॥ १-६ ॥

अथ सप्तमहाकुष्ठनामानि।

पूर्वत्रिकं तथा सिध्मं ततः काकणकं तथा॥ पुण्डरीकर्क्षजिह्वाके महाकुष्ठानि सप्त च॥ ७॥

पूर्वत्रिकं कपालौदुम्बरमण्डलाख्यम्। सिध्मशब्दोऽकारान्तो नपुंसकः। ननु कथं सिध्मस्य महाकुष्ठेषु गणना? सुश्रुतेन क्षुद्रकुष्ठेषु उक्तत्वात्। "धातुप्रविष्टं सिध्मं तु स्यान्महाकुष्ठमेव च॥" एवंविधस्य सिध्मस्य चरकेण महाकुष्ठेषु दर्शितत्वात्। एषां महाकुष्ठत्वञ्च शीघ्रमुत्तरोत्तरधात्ववगाहनात्, उल्वणदोषजन्यत्वाच्चिकित्साबाहुल्याच्च॥

कपाल, औदुम्बर, मण्डल, सिध्म, काकणक, पुण्डरीक और ऋक्षजिह्वक यह सात बडे कोढ हैं।

शंका–सुश्रुतमें सिध्मको क्षुद्र कोढोंमें गिना है फिर आपने यहां सिध्मको बडे कोढोंमें कैसे लिखा है?

समाधान–जो सिध्म धातुओंमें प्राप्त होगया हो वह महाकुष्ठ कहा जाता है। क्योंकि चरकऋषि ऐसे सिध्मको बडे कोढोंमें गिनता है।

ऊपर जो सात कोढ बडे कहे हैं उनका कारण यह है कि, उत्तरोत्तर धातुओंमें शीघ्र प्रवेश करतेहैं, उल्वण दोषसे उत्पन्न होतेहैं और उनकी चिकित्सा भी अनेक हैं॥ ७॥

अथैकादश क्षुद्रकुष्ठनामानि।

एककुष्ठं स्मृतं पूर्वं गजचर्म ततः स्मृतम्॥ ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका॥ ८॥ विपादिकाभिधा सैव पामा कच्छूस्ततः परम्॥ दद्रूविस्फोटकिटिभालसकानि च वेष्टितम्॥ क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः॥ ९॥

ननु दद्रूरोगस्य कथं क्षुद्रकुष्ठेषु गणना? सुश्रुतेन महाकुष्ठेषु उक्तत्वात्। उच्यते–असिता अवगाढमूला दद्रूः सुश्रुतेन महाकुष्ठेषु उक्ता। असितेतरा अनवगाढमूला दद्रूः क्षुद्रकुष्ठमेव। एवंविधा दद्रूश्चरकेण क्षुद्रकुष्ठेषु दर्शितत्वात्॥

एककुष्ठ, गजचर्म, चर्मदल, विचर्चिका, विपादिका, पामा, कच्छू, दद्रु, विस्फोट, किटिभ, अलसक और शतारु इनको उत्तम वैद्य क्षुद्रकुष्ठ कहतेहैं। विचर्चिका नामक कुष्ठ जो पांवमें होय तो वह विपादिका कहाजाताहै, इस कारण क्षुद्र कोढोंकी सख्या यह ग्यारहही रहती है।

शंका–सुश्रुत दद्रूको बडे कोढोंमें मानताहै फिर आपने इसको क्षुद्रकोढोंमें कैसे गिना है?

समाधान–काले दृढ जडवाले दद्रूको सुश्रुतने बडे कोढोंमें गिनाहै, जो दद्रू कालेके सिवाय दूसरा होय और दृढ जडवाला न होय तो वह क्षुद्र कोढही जानना। चरक भी इसप्रकारके दद्रूको क्षुद्रकुष्ठोंमें मानता है॥ ८॥ ९॥

अथ कुष्ठानां त्रिदोषजत्वेनैकस्याऽपि दोषस्य उल्वणतया सप्तधात्वमाह।

कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः॥ सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः॥ १०॥

सर्वेषु अपि त्रिदोषेषु व्यपदेशः कापालादिसंज्ञास्तेषामष्टादशरूपं यदधिकत्वं ततः कुष्ठानि सप्तधा। कैः दोषैः कथम्भूतैः पृथग्द्वन्द्वैः समागतैः संगतैः सम्मिलितैरिति यावत्। अस्य अयमर्थः। किमपि कुष्ठं वातोल्वणं किमपि पित्तोल्वणं किमपि कफोल्वणं किमपि वातश्लेष्मोल्वणं किमपि पित्तश्लेष्मोल्वणम् किमपि वातपित्तोल्वणं किमपि त्रिदोषोल्वणमिति॥

यद्यपि तीनों दोषोंसे उत्पन्न हुए कपाल आदि नाम हैं तथापि वे नाम अठारह होनेके कारण उन उन दोषोंकी उल्वणताके अनुसार कोढ सात प्रकारके माने हैं, जैसे कि कोई कोढ वायुकी उल्वणतावाला होता है, कोई कोढ पित्तकी उल्वणतावाला होताहै, कोई

कोढ कफकी उल्वणतावाला होताहै, कोई कोढ वात तथा कफकी उल्वणतावाला होताहै, कोई कोढ पित्त तथा कफकी उल्वणतावाला होताहै, कोई कोढ वायुकी तथा पित्तकी उल्वणतावाला होताहै, और कोई कोढ तीनो दोषोंकी उल्वणतावाला होताहै ॥ १० ॥

## अथ कुष्ठपूर्वरूपम् ।

अतिश्लक्ष्णः खरस्पर्शः स्वेदास्वेदविवर्णता॥ दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः क्लमः ॥ ११ ॥ व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ॥ रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् ॥ रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ॥१२॥

अतिश्लक्ष्णः अतिमृदुः । अथवा घर्मादिप्रसंगेऽपि स्वेदाभावः । त्वचि स्वापस्पर्शाज्ञता । शीघ्रोत्पत्तिः व्रणानाम्

दूषयन्ति श्लथीकृत्य निश्चलत्वादितस्ततः॥ त्वचः कुर्वन्ति वैवर्ण्यं दोषाः कुष्ठमुशन्ति तत् ॥ १३ ॥

जिस स्थानमे कोढ होनेको हो उस जगह छूनेसे कोमल या चिकना, अत्यत खरखरा-मालूम होय, पसीना आवे, अथवा धूप आदि पसीनेके कारण होनेपर भी पसीना नहीं आवे, दाह, खुजली, चमडेका स्पर्श नहीं मालूम हो, भोकनेसरीखी पीडा, विषैल मक्खीके काटने सरीखे चकत्ते हो, ग्लानि, शूलकी अधिकता, व्रणोंका तत्काल उत्पन्न होना, व्रणोका बहुत दिनोंतक रहना, व्रणोंके भरनेपर अत्यत रूखापन हो, अल्पकारणोसे व्रणोका कोप हो, रोमांचोका हो आना और रुधिर काला होजाय, ये कोढके पूर्व लक्षण जानने। दोषोंके स्थिर होनेसे चमडेको शिथिल करकै चारों ओरसे त्वचाके रगको बदल देताहै उसको कोढ कहते हैं ॥ ११-१३ ॥

## अथ दोषोल्वणतया कुष्ठोत्पत्तिनामानि ।

पातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात्॥ मण्डलाख्यं विचर्ची च ऋक्षाख्यं वातपित्ततः ॥ १४ ॥ चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः ॥ वातश्लेष्मोद्भवाः पित्तकफाद्दद्रूशतारुषी ॥ १५ ॥ पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा॥ सर्वैरेवोल्वणैर्दोषैराहुः काकणकं बुधाः ॥ १६ ॥

विचर्ची च कफादित्यन्वयः । पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा पित्तकफादित्यन्वयः ॥

वातकी उल्वणतासे कपाल कोढ उत्पन्न होताहै, पित्तकी उल्वणतासे औदुम्बर मडल और विचर्चिका कोढ उत्पन्न होताहै, वायु तथा कफकी उल्यणतासे ऋक्षजिह्व कोढ उत्पन्न होताहै, वात तथा कफकी उल्वणतासे गजचर्म, एककुष्ठ, किटिभ, सिध्म, अलसक और विपादिका कोढ उत्पन्न होताहै, पित्तकी तथा कफकी उल्वणतासे दद्रू, शतारु, पुडरीक, विस्फोट, पामा तथा चर्मदल कोढ उत्पन्न होताहै और तीनों दोषोंकी उल्वणतासे काकणक कोढ उत्पन्न होताहै ॥ १४-१६ ॥

## अथ महाकुष्ठेषु प्रथमं कापालकुष्ठलक्षणम् ।

कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ॥ कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् १७

किञ्चित् कृष्णाः किञ्चित् अरुणाः ये कपालाः स्फुटितमृत्पात्रखण्डाः खपरा इति यावत् तद्वर्णं परुषं खरस्पर्शम् । तनु तनुत्वक्कापालं कपालसंज्ञं,विषमं दुश्चिकित्स्यम् ॥

कुछेक काला तथा कुछेक लाल, मट्टीके खीपडेकी समान, रूखा, स्पर्शमें खरदरा, पतली त्वचावाला और अत्यंत व्यथा युक्त जो कोढ उत्पन्न होताहै उसको कपालकुष्ठ कहते हैं। यह कोढ विषम है इसकी चिकित्सा कठिन है ॥ १७ ॥

अथोदुम्बरकुष्ठलक्षणम् ।

उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ॥ रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् ॥ १८ ॥

औदुम्बरफलाकारम् ॥

जो कोढ गूलरके फलकी समान, पीले रोमयुक्त और व्यथासे, दाहसे, लालीसे और खुजलीसे व्याप्त होय उसको औदुम्बर कोढ कहते हैं ॥ १८ ॥

अथ मंडलकुष्ठलक्षणम् ।

श्वेतरक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ॥ कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥ १९ ॥

श्वेतरक्तं किञ्चिच्छ्वेतं किञ्चिद्रक्तम् । स्थिरं चिकित्सां विना अविनाशि । स्त्यानमार्द्रम् । स्निग्धं सस्वेदम् । उत्सन्नमण्डलम् उद्गतमण्डलम् । कृच्छ्रं कष्टसाध्यम् । अन्योन्यसंसक्तं परस्परमिलितम् ॥

जो कोढ कुछेक सफेद तथा कुछेक लाल हो, चिकित्साके विना नष्ट न हो, गीला हो, पसीने युक्त हो, मडलकी समान आकारवाला हो और परस्पर मिला हो, उसको मडल कोढ कहते हैं यह कोढ कष्टसाध्य है ॥ १९ ॥

अथ सिध्मकुष्ठलक्षणम् ।

श्वेतताम्रञ्च तनु यद्रजो घृष्टं विमुञ्चति ॥ प्रायेणोरसि तत्सिध्ममलाबुकुसुमोपमम् ॥ २० ॥

श्वेतताम्रं श्वेतं ताम्रम् । तनु त्वक् । प्रायेणोरसि प्रायःशब्दादन्यत्रापि बोद्धव्यम् ॥

जो कोढ सफेदी लिये लाल रगका हो, पतली त्वचावाला हो, घिसनेसे या रगडनेसे उसमेसे धूलकी समान छोटे छोटे परमाणु गिरे और तोम्बीके फूलकी समान होय उसको सिध्म कहते हैं । यह कोढ विशेष करके छातीमें होता है और किसी समय अन्य अगोंमें भी होताहै॥२०॥

अथ काकणकुष्ठलक्षणम् ।

यत्काकणन्तिकावर्णमपाकं तीव्रवेदनम् ॥ त्रिदोषलिंगं तत्कुष्ठं काकणं नैव सिध्यति ॥ २१ ॥

काकणन्ती गुञ्जा गुञ्जावर्णत्वेन मध्ये कृष्णमन्ते रक्तम् । अथवा मध्ये रक्तं अन्ते कृष्णम् अपाकः स्वभावात् । त्रिदोषलिंगम् सर्वेषां कुष्ठानां त्रिदोषजत्वेऽपि उल्वणदोषत्रयलिंगम् ॥

जो कोढ चौंटलीकी समान वर्णवाला अर्थात् बीचमें काला और अतमें लाल हो, स्वाभाविक रीतिसे नहीं पकनेवाला, तीव्रवेदनायुक्त और त्रिदोषोंकी उल्वणताके लक्षणोंवाला हो उसको काकण कहते हैं ॥ २१ ॥

अथ पुण्डरीककुष्ठलक्षणम् ।

तच्छ्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् ॥ सरागञ्चैव सोत्सेधं पुण्डरीकं कफोल्वणम् ॥ २२ ॥

पुण्डरीकदलोपमं पुण्डरीकं श्वेतकमलं तत्पत्रोपमम् । सरागञ्चैव । अत एव श्वेतं रक्तपर्यन्तम् अन्ते रक्तम्। सरागमिति अन्तलौहित्याधिक्यबोधनार्थम्।सोत्सेधम् उद्गतम्॥

जो कोढ सफेद कमलके पत्रकी समान सफेद, अतमें अत्यन्त लाल, ऊचा और कफकी उल्वणतावाला हो उसको पुंडरीक कहते हैं ॥ २२ ॥

अथर्क्षजिह्वकुष्ठलक्षणम् ।

कर्कशं रक्तपर्यन्तमन्तःश्यावं सवेदनम् ॥ यदृक्षजिह्वासंस्थानमृक्षजिह्वं तदुच्यते २३॥

रक्तपर्यन्तम् अन्ते रक्तम् । अन्तः श्यावं मध्ये धूम्रवर्णम् । ऋक्षजिह्वासंस्थानम् । ऋक्षो भल्लूकस्तस्य जिह्वाकृतिः ॥

जो कोढ कठिन, अंतमें लाल, मध्यमें धुयेकी रगकी समान, वेदनायुक्त और रीछकी जीभकी समान वर्णवाला हो उसको ऋक्षजिह्वक कहते हैं ॥ २३ ॥

अथैककुष्ठगजचर्मनामकयोः क्षुद्रकुष्ठयोर्लक्षणम् ।

अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ॥ तदेककुष्ठं चर्माख्यं बहलं गजचर्मवत् ॥ २४ ॥

महावास्तु महास्थानम् । मत्स्यशकलोपमम् । अत्र शकलशब्देन लक्षणया त्वगुच्यते । तेन चक्राकारमभ्रकपत्रसदृशं भवति । एककुष्ठमिति क्षुद्रकुष्ठेषु गणितत्वात् चर्माख्यं गजचर्माख्यम् बहलं स्थूलम् । गजचर्मवद्रूक्षं कृष्णं च ॥

जो कोढ पसीनारहित, बडे घेरदार और मछली की त्वचाकी समान हो, चक्राकार हो और अभ्रकके पतरोंकी समान हो उसको एककुष्ठ कहतेहैं । यह कोढ क्षुद्र कोढोंमे मुख्य होनेसे एककुष्ठ कहाजाताहै । जो कोढ गाढा और हाथीकी त्वचाकी समान रूखा तथा काला हो उसको गजचर्म कहतेहैं ॥ २४ ॥

अथ चर्मदलनामकक्षुद्रकुष्ठलक्षणम् ।

रक्तं सशूलं कण्डूमत्सस्फोटं दलयत्यपि॥ तच्चर्मदलमाख्यातं स्पर्शस्यासहनश्च यत् ॥ २५ ॥

दलयत्यपि विदारयत्यपि चर्मेति शेषः ।

जो कोढ लाल, शूलयुक्त तथा फोडोंसे व्याप्त, स्पर्शको नहीं सहसके और चमडीको फाडनेवाला होय उसको चर्मदल कहतेहैं ॥ २५ ॥

अथ विचर्चिकानामकक्षुद्रकुष्ठलक्षणम् ।

सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका ॥ २६ ॥

पिडका क्षुद्रपिडका । ननु क्षुद्रकुष्ठानां कथमेकादशत्वं विपादिकाया द्वादशत्वसम्भवात् । उच्यते—विचर्चिकेव पादयोर्भवति विपादिका तेन न संख्यातिरेकः । अत एवाह भोजः—

दोषाः प्रदूष्य त्वङ्मांसं पाणिपादसमाश्रिताः ॥ पिडकां जनयन्त्याशु दाहकण्डुसमन्विताम् ॥ दाल्यते त्वक् खरा रूक्षा पाण्योर्ज्ञेया विचर्चिका ॥ पादे विपादिका ज्ञेया स्थानान्यत्वाद्विचर्चिका ॥ २७ ॥

दाल्यते विदार्यते । केचिद्विचर्चिकातो विपादिकां भिन्नामाहुः ॥

खुजलीयुक्त, कलौंस लिये और बहुत स्राववाली जो छोटी छोटी फुंसी होय उसको विचर्चिका कहतेहैं ॥

गिनती करनेसे क्षुद्रकोढ बारहवां होताहै फिर आपने यहां क्षुद्रकोढ ग्यारहवां क्यो गिना है ॥

पावमे उत्पन्न हुई विचर्चिका ही विपादिका कही-जातीहै इसकारण सख्या नही बढती । यहांपर भोज कहताहै "रूखे होनेपर हाथोंकी खाल फटजातीहै, उसको विचर्चिका कहतेहैं और पावकी जो त्वचा फटजाती है वह विपादिका कहीजाती है" ॥

विचर्चिका और विपादिका इनके स्थानोमें भेद है किंतु स्वरूपमे कुछ भेद नहीहै । कितनेक आचार्य तो विपादिकाको विचर्चिकासे भिन्न कहतेहैं ॥२६॥ २७ ॥

अथ विपादिकानामकक्षुद्रकुष्ठलक्षणम् ।

वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥ २८ ॥

पाणिपादस्फुटनं पाण्योः पादयोश्च स्फुटनं विदारणं येन तत् ॥

हाथ तथा पाव फटजायँ तथा तीव्र वेदना होय उसको विपादिका कहतेहैं ॥ २८ ॥

अथ पामालक्षणम् ।

सूक्ष्मा बह्वयः पिडकाः स्राववन्त्यः पामेत्युक्ताः कण्डुमत्यः सदाहाः ॥ २९ ॥

पिडकाः पीडयन्तीति पिडका इति क्षिपकादित्वान्निपात्यते ॥

स्रावयुक्त, भयकर दाहयुक्त, छोटी छोटी और खुजलीयुक्त बाहरकी फुसी होय उसको पामा कहते है फुसी पीडा जो करती है इस कारण इनको पिडका कहतेहैं ॥ २९ ॥

अथ कच्छुनामकक्षुद्रकुष्ठलक्षणम् ।

सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रा स्फिजोश्च ॥ ३० ॥

सैव पामा । स्फोटैः महद्भिः । स्फिजोः प्रोथयोः ।

जो पामा ही तीव्रदाह युक्त फोडोंसे व्याप्त होय, हाथोंमें तथा कूलेमें उत्पन्न होय और उग्र होय उसको कच्छू कहतेहैं ॥ ३० ॥

अथ दद्रुनामकक्षुद्रकुष्ठलक्षणम् ।

सकण्डूरागपिडकं दद्रूमण्डलमुद्गतम् ॥ ३१ ॥

दद्रूमण्डलरूपेण उत्पतितः उद्गतम् उच्छूनम् ॥

खुजलीसहित, लाल फुंसियोंयुक्त और उत्पन्न होतेही ऊंचा होजाय, मडलकी समान गोल होय उसको दद्रू कहते हैं ॥ ३१ ॥

अथ विस्फोटनामकक्षुद्रलक्षणम् ।

स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ॥ ३२ ॥

कलौंस लिये लाल और पतलीत्वचावाले जो फोडे उत्पन्न होतेहैं उनको विस्फोटक कहतेहैं ॥ ३२ ॥

अथ किटिभकुष्ठलक्षणम् ।

श्यामं किणखरस्पर्शं परुषं किटिभं स्मृतम् ॥ ३३ ॥

किणखरस्पर्शम् किणः शुष्कव्रणस्थानं तद्वत्कर्कशस्पर्शम् । परुषं रूक्षम् ।

किटिभकोढ काला, सूखाहुआ, व्रणके स्थानकी समान, छूनेमें खरदरा और रूखा होता है ॥ ३३ ॥

अथालसकनामकक्षुद्रकुष्ठलक्षणम् ।

कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ॥ ३४ ॥

गण्डैः महापिडकाभिः चितं वेष्टितम् ॥

खुजलीयुक्त तथा लालगंडोंसे ( बडी फुंसियोंसे ) व्याप्त जो होय वह अलसक कहाजाताहै ॥ ३४ ॥

अथ शतारुकुष्ठलक्षणम् ।

रक्तश्यावं सदाहार्ति शतारुः स्याद्बहुव्रणम् ॥ ३५ ॥

लाली लिये कालापन हो, दाहकी पीडायुक्त और बहुत व्रणोंयुक्त जो होय उसको शतारु कहतेहैं ॥ ३५ ॥

अथ सप्तधातुगतकुष्ठलक्षणम् ।

तत्र रसगतकुष्ठलक्षणम् ।

त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते ॥ त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्तनम् ॥ ३६ ॥

त्वक्छब्देन अत्र रस उच्यते । धातुप्रस्तावात् त्वक्स्थत्वाच्च त्वक्स्वापः स्पर्शाज्ञत्वम् । त्वक्स्वाप इत्यादिकं केचिद्रक्तगतस्य लिंगं मन्यन्ते ॥

जो कोढ रसमें प्राप्त होय तो अंगोमें विवर्णता और रूक्षता होतीहै, त्वचाका स्पर्शज्ञान नहीं रहता, रोमाञ्च होआतेहैं और पसीना बहुत आने लगताहै । कितने एक वैद्य तो ऐसा मानतेहैं कि त्वचाके स्पर्शका ज्ञान नहीं रहना रोमांचोंका खडा होना और पसीनेका बहुत आना यह रुधिरमें प्राप्तहुए कुष्ठके लक्षण हैं ॥ ३६ ॥

रुधिरगतकुष्ठलक्षणम् ।

कण्डूर्विपूयकश्चैव कुष्ठे शोणितसम्भवे ॥ ३७ ॥

विपूयकः विशेषेण पूयः ॥

जो कोढ रुधिरमें प्राप्त होय तो खुजली और राध अधिक होतीहै ॥ ३७ ॥

अथ मांसगतकुष्ठलक्षणम् ।

बाहुल्यं वक्रशोषश्च कार्कश्यं पिडकोद्गमः ॥ तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते ॥ ३८ ॥

बाहुल्यं कुष्ठस्य पुष्टिः । पिडकोद्गमः क्षुद्रपिडकोद्गमः । स्फोटः बृहत्पिडका । स्थिरत्वमसञ्चारित्वम् ॥

जो कोढ मांसमें प्राप्त होय तो मास पुष्ट दीखताहै, मुखमें शोष, शरीरमें कर्कशता, फुंडियोंका निकलना, सुई चुभोनेसरीखी पीडा, बडे २ फोडोंका होना और स्थिरता ये लक्षण होतेहैं ॥ ३८ ॥

अथ मेदोगतकुष्ठलक्षणम् ।

कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम् ॥ मेदःस्थानगते लिंगं प्रागुक्तानि तथैव च ॥ ३९ ॥

कौण्यं हस्तनाशः । अंगानां सम्भेदः

गभंगः । क्षतसर्पणं क्षतप्रसरणम् । पूर्वो-
ानि रक्तमांसगतलिंगानि ।

जो कोढ मेदमें प्राप्त होताहै तो वह मनुष्य लूला जाताहै, चलनेकी शक्ति नष्ट होजातीहै, अंग ग होजाते हैं, घाव फैल जातेहैं, और रुधिरमें तथा ंसमे प्राप्त हुए कोढोंके जो लक्षण ऊपर कहे है वे सब तेहै ॥ ३९ ॥

अथास्थिमज्जगतकुष्ठलक्षणम् ।

नासाभंगोऽक्षिरागश्च क्षतेषु क्रिमिसम्भवः ॥ स्वरोपघातः पीडा च भवेत्कुष्ठेऽस्थिमज्जगे ॥ ४० ॥

जो कोढ, अस्थियोंमे और मज्जामे प्राप्त होताहै नाक बैठजातीहै, आंखै लाल होजातीहै, घावमे ोडे पडजातेहै, गला बैठजाताहै और पीडा तीहै ॥ ४० ॥

अथ शुक्रगतकुष्ठलक्षणम् ।

दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः ॥ यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ ४१ ॥

ननु शुद्धशोणितशुक्रयोरेव दम्पत्योर्गर्भसम्भवः । दुष्टशोणितशुक्रयोः कथम् अपत्योत्पत्तिः यत आह सुश्रुतः–

कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः ॥
गर्भः सञ्जायते नार्याः स जातो बाल उच्यते ॥ ४२ ॥

अथ अन्यच्च । वातादिदुष्टरेतसोऽपत्योत्पादनेऽसमर्था इति । उच्यते गर्भोऽत्र शुद्धो बोद्धव्यः । अशुद्धगर्भोऽपि दुष्टशोणितशुक्रयोरपि भवति । अन्धबधिरादीनां सम्भवात् । शोणितम् आर्तवम् । कुष्ठितं कुष्ठं सञ्जातमस्येति तारकादित्वादितच् । शुक्रार्तवगतं कुष्ठमपत्येन व्यज्यते इति तात्पर्यम् ।

कुष्ठकी बाहुल्यतासे जिनका रज और वीर्य दूषित हुआ होय ऐसे स्त्रीपुरुषोंके समागमसे जो सन्तान होताहै वह कोढी होतीहै ॥

शंका–जिनका रज और वीर्य शुद्ध होताहै ऐसी स्त्रीपुरुषोसे गर्भका रहना सम्भव है, जिनका रज और वीर्य दूषित होता है उनके सन्तान नही होती, सुश्रुतनेभी कहा है कि " कामदेवके वेगसे स्त्री पुरुषोके संयोग होनेपर स्त्रीके शुद्धरजसे और पुरुषके शुद्धवीर्यसे गर्भ उत्पन्न होताहै और वह गर्भ जन्मके पश्चात् बालक कहाजाताहै । "

समाधान–सुश्रुतके वचनमें तथा अन्यान्य वचनोमें जो गर्भ कहा है वह शुद्ध गर्भ जानना । अशुद्ध रज और अशुद्ध वीर्यसे अशुद्ध गर्भ रहताहै किन्तु गर्भ सम्भव न होना ऐसा नही होता । क्योंकि बहरे, अन्धे, नकटे आदि गर्भकी उत्पत्ति देखी जातीहै । तात्पर्य यह है कि " वीर्यमे तथा रजमें प्राप्तहुआ कुष्ठ सन्तानको कुष्ठी करताहै " ॥ ४१ ॥ ४२ ॥

अथ कुष्ठे वातादिदोषोल्वणताचिह्नम् ।

खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम् ॥ पित्तात्प्रकुपितं दाहरागस्रावान्वितं मतम् ॥ ४३ ॥ कफात्क्लेदं घनं स्निग्धं सकण्डूशैत्यगौरवम् । द्विलिंगं द्वन्द्वजं कुष्ठं त्रिलिंगं सान्निपातिकम् ॥ ४४ ॥

खरं कर्कशम् । श्यावारुणं श्यावं वा अरुणं वा । प्रकुपितं पूतिक्लेदबहुलम् । क्लेदम् आर्द्रतायुक्तम् । घनं पुष्टम् ॥

वातकी उल्वणतावाला कोढ, खरखरा, श्याम अथवा लाल, रूखा और वेदनायुक्त होताहै । पित्तकी उल्वणतावाला कोढ, दुर्गन्धित, अत्यन्त गीला और दाह, लाली तथा स्रावसे सयुक्त होताहै । कफकी उल्वणतावाला कोढ गीलापनयुक्त, पुष्ट, स्निग्ध, खुजलीसहित, शीतलता लिये और भारीपन लिये होता है । जो उपरोक्त लक्षणोंमेंसे दो प्रकारके लक्षणोसे युक्त हो उसको दो दोषोकी उल्वणतावाला जानना । जो तीनप्रकारके लक्षणो युक्त होय उस कुष्ठको तीनों दोषोंकी उल्वणतावाला जानना ॥ ४३ ॥ ४४ ॥

अथ कुष्ठसाध्यासाध्यता ।

साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकश्च

यत् ॥ मेदोगं द्वन्द्वजं याप्यं वर्ज्यं मज्जास्थिसंश्रितम्॥कृमितृड्दाहमन्दाग्निसंयुक्तं यत्त्रिदोषजम् ॥ ४५ ॥

वातश्लेष्माधिकञ्च यदेतेन सिध्मैककुष्ठगजचर्मविपादिकाकिटिभालसकानि साध्यानि। मज्जागतं शुक्रगतमपि असाध्यम् । कृमिर्बाह्योऽपि वर्ज्य इत्यन्वयः ॥

रसमें, रुधिरमें और मांसमें प्राप्त हुआ और वायु तथा कफकी उल्वणतावाला कोढ साध्य है । मेदमें प्राप्त हुआ अथवा दो दोषोंकी उल्वणतावाला कोढ याप्य है। मज्जामें और अस्थियोंमें प्राप्त हुआ, दाह युक्त, मद अग्निवाला और त्रिदोषकी उल्वणतावाला कोढ असाध्य है, इस कारण वैद्य इसकी चिकित्सा न करे । कृमियोंको उत्पन्न करने वाला बाहरका कोढ़ भी असाध्य है । वायु तथा कफकी उल्वणतावाला कोढ भी साध्य है यह जो कहा सो ऊपरसेभी सिद्ध होताहै कि सिध्म, एककुष्ठ, गजचर्म, विपादिका, किटिभ और अलसक यह वायु तथा कफकी उल्वणतावाले होनेसे साध्य हैं । मज्जामें प्राप्त हुआ और वीर्यमें प्राप्त हुआ भी कोढ असाध्य है ॥ ४५ ॥

## अथ कुष्ठारिष्टम् ।

प्रभिन्नं प्रस्रुतांगञ्च रक्तनेत्रं हतस्वरम् ॥
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥ ४६ ॥

प्रभिन्नं विदीर्णम् । हतस्वरं घर्घरस्वरम् । पञ्चकर्मगुणातीतमसञ्जातवमनादिपञ्चकर्मगुणम् ॥

फटेहुए अंगवाला, टपकता हुआ, लाल नेत्रोंवाला, जिसका स्वरभंग हो ( आवाज मरगई हो ) और जिसके वमन विरेचनादि पचकर्म कुछ भी गुण न करें उसको कुष्ठ नष्ट करदेताहै ॥ ४६ ॥

## अथ कुष्ठनिदानसंभूतस्य श्वित्रस्य भेदं किलासमाह ।

कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं भवेत् ॥ निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥ ४७ ॥

कुष्ठैकसम्भवं कुष्ठेन सम्भवो निदानं यस्य तत् । अथ श्वित्रस्य भेदमाह—किलासं चारुणं भवेच्छ्वित्रमेव रक्तमांसाश्रयात्किलासमरुणञ्च भवेदित्यर्थः । ननु कुष्ठस्य श्वित्रस्य च को भेद इत्यत आह निर्दिष्टमपरिस्रावीति । श्वित्रमपरिस्रावि भवति कुष्ठन्तु स्रावि । अथ च त्रिधातूद्भवसंश्रयमिति श्वित्रम् । त्रयो धातवो वातपित्तकफास्तेभ्यः पृथग्भूतेभ्य उद्भवो यस्य तत् । अथ त्रयो धातवो रक्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत् । कुष्ठन्तु सान्निपातिकं सर्वधातुगतं भवतीति भेदः ॥

जो निदान कोढका कहा है वही निदान श्वित्र कोढ का भी जानना । श्वित्रज रुधिरके आश्रयसे किलास कहाजाताहै और मासके आश्रयसे अरुण कहाजाताहै इसकारण किलास और अरुण भी श्वित्रका भेद है। कोढ टपकताहै और श्वित्र नही टपकताहै, कोढ वात पित्त और कफ इन तीनो दोषोंके प्रकोपसे होताहै और श्वित्र एकदोषसे होताहै। कोढ रसादि सम्पूर्ण धातुओंमें रहताहै और श्वित्र रुधिर मास तथा मेदामें रहताहै । इतनाही श्वित्रमें और कोढमे अन्तरहै ॥ ४७ ॥

## अथ दोषभेदेन लक्षणभेदः ।

वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ॥ सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ ४८ ॥ सकण्डूक क्रमाद्रक्तमांसमेदःसु चादिशेत् ॥ वर्णनैवेदृगुभयं कुष्ठं तच्चोत्तरोत्तरम् ॥ ४९ ॥

अरुणमीषल्लोहितम् । कमलपत्रवदित्यनेन मध्ये श्वेतमन्ते लोहितं बोधयति । घनं पुष्टम् । क्रमाद्रक्तमांसमेदःसु च आदिशेत् । तथा च चरकः—

अरुणं रक्तगे वाते ताम्रं पित्ते पलं गते ।
श्वेतं श्लेष्मणि मेदःस्थे श्वित्रं कुष्ठं परापरमिति ॥ ५० ॥

उभयं द्विविधमपि श्वित्रं वर्णेन ईदृगेव। अरुणं ताम्रं श्वेतश्च दोषभेदात्। द्विविधं दोषजं व्रणजञ्च। तथा च भोजः—"श्वित्रं तु द्विविधं विद्याद्दोषजं व्रणजं तथा।" इति॥

जो वातसे श्वित्र होय तो उसमें रूक्षता तथा कुछेक लाली होतीहै तथा रुधिरमे रहताहै। जो पित्तसे उत्पन्न हुआ होय तो कमलके पत्रकी समान बीचमें सफेद तथा अन्तमें लाल होताहै। दाहयुक्त, रोगोको नष्ट करताहै और मांसमे रहताहै। जो कफसे उत्पन्न हुआ होय तो सफेद होताहै, पुष्ट, भारी, खुजली सहित और मेदमें रहताहै। श्वित्र दोषसे उत्पन्न होय अथवा व्रणसे उत्पन्न हुआ होय तो भी दोषोंके भेदानुसार उसका वर्ण ऊपरहीकी माफिक होताहै। वातजनित श्वित्रसे पित्तजश्वित्र विशेष भारी होताहै और पित्तजनित श्वित्रसे कफजनित श्वित्र विशेष भारी होताहै। चरकभी कहता है कि "वायुसे उत्पन्न हुआ श्वित्र कुछेक लाल होताहै और रुधिरमे रहताहै। पित्तसे उत्पन्न हुआ श्वित्र अन्तमे लाल और मांसमें रहताहै। कफसे उत्पन्न हुआ श्वित्र सफेद होताहै और मेदमें रहताहै। वातजनित श्वित्रसे पित्तजनित श्वित्र और पित्तजनित श्वित्रसे कफजनित श्वित्र विशेषभारी है।" भोज भी कहताहै कि "दोषसे उत्पन्न हुआ और व्रणसे उत्पन्न हुआ ऐसे श्वित्र दो प्रकारका है" ॥ ४८–५० ॥

### अथ श्वित्रस्य साध्यासाध्यता।

अशुक्लरोमाबहलमसृग्युक्तमथो नवम् ॥
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ ५१ ॥

अबहलं तनु। अन्यच्च—

गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ॥
वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥ ५२ ॥

गुह्यं मेहनम्भगश्च। तलमत्र पदतलम्। जातं सुश्रुतेनान्ते जातमिति सामान्यतो निर्दिष्टत्वात्। अपि अचिरन्तनम्। नवमपि॥

जो श्वित्र काले रोमोंका हो, पतला हो, रुधिर युक्त हो, तत्कालका नवीन हो और अग्निदग्ध न होय वह साध्य है। इसके सिवाय अन्य श्वित्र असाध्य जानना। अन्यत्र भी कहा है कि, जो श्वित्र लिंगमें योनिमें हाथके पावके तलुओंमे और होठमे उत्पन्न हुआ यदि नवीन भी होय तो भी सिद्धिकी इच्छा करनेवाला वैद्य विशेष करके उसकी चिकित्सा न करे ॥ ५१ ॥ ५२ ॥

### अथ कुष्ठादिरोगाणां संसर्गजत्वम्।

प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् ॥ एकशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥ ५३ ॥ कण्डूकुष्ठोपदंशाश्च भूतोन्मादव्रणज्वराः ॥ औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ ५४ ॥

प्रसंगो मैथुनम् ॥

म्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत्॥
अतो निन्दितरोगोऽयं कुष्ठं कष्टं प्रकीर्तितम् ॥ ५५ ॥

एतावता कुष्ठिना कुष्ठं सर्वथा प्रतिकरणीयं न तु उपेक्षणीयम् ॥

मैथुनादिससर्गसे, शरीरके स्पर्शसे, श्वासके मिलनेसे, एक शय्यापर सोनेसे, एक साथ भोजन करनेसे, रोगीके वस्त्र, रोगीकी धारणकी हुई पुष्पमाला इत्यादि और रोगीके लगाये चन्दनादिके अनुलेपन करनेसे, खुजली, कोढ, उपदंश, भूतोन्माद, व्रण, ज्वर और इसके समान अन्यान्य रोगभी एक मनुष्यसे दूसरे मनुष्यके शरीरमे प्राप्त होतेहैं।

जो मनुष्य कुष्ठ रोगमे मरजाताहै फिर उसके दूसरे जन्ममेभी कोढ उत्पन्न होताहै, अत एव यह कुष्ठ अत्यन्त निन्दित रोग है, इस कारण यह कष्टरूप कहाजाताहै। इसके कहनेका प्रयोजन यह है कि "कुष्ठरोगियोंके कोढकी सर्वथा बहुत कालतक चिकित्सा करनी चाहिये, उपेक्षा नहीं करनी चाहिये" ॥ ५३–५५ ॥

### अथ कुष्ठचिकित्सा।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ॥

पित्तोत्तरेषु लेपः सेको रक्तस्य मोचनं श्रेष्ठम् ॥ ५६ ॥

वातके उल्वणतावाले कुष्ठमें घृतका उपयोग करे, कफकी उल्वणतावाले कुष्ठमें वमन करावे और पित्तकी उल्वणतावाले कुष्ठमें लेप करावे, सेचन कराना तथा रुधिर निकलवाना ये उत्तम हैं ॥ ५६ ॥

अथ पथ्यादिलेपः।

पथ्याकरंजसिद्धार्थनिशावल्गुजसैन्धवैः ॥ विडंगसहितैः पिष्टैर्लेपो मूत्रेण कुष्ठनुत् ॥ ५७ ॥

अवल्गुजः वाकुचीति लोके ॥

हरड, करज, सरसों, हलदी, वावची, सैंधानिमक और वायविडग इनको गोमूत्रमें पीसकर लेप करनेसे कुष्ठ नष्ट होजाताहै ॥ ५७ ॥

अथ सोमराज्युद्वर्त्तनम्।

सोमराजीभवं चूर्णं शृंगवेरसमन्वितम् ॥ उद्वर्तनमिदं हन्ति कुष्ठमुग्रं कृतास्पदम्॥५८॥

सोमराजी वाकुचीति लोके ॥

वाकुचीके चूर्णको अदरखके रसमें मिलाकर शरीरपर लेप करनेसे उग्र और जमाहुआ कोढ भी नष्ट होजाता है ॥ ५८ ॥

अथ पंचनिम्बकावलेहः।

रसायनं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ॥ मार्कण्डेयप्रभृतिभिर्यत्प्राशुक्तं महर्षिभिः ॥ ५९ ॥ पुष्पकाले तु पुष्पाणि फलकाले फलानि च ॥ संगृह्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ॥ ६० ॥ द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ॥ त्रिफला त्र्यूषणं ब्राह्मी श्वदंष्ट्रारुष्करामयः ॥ ६१ ॥ विडंगसारवाराहीलोहचूर्णं स्मृताः समाः ॥ निशाद्वयावल्गुजकं व्याधिघातः सशर्करः ॥ ६२ ॥ कुष्ठमिन्द्रयवा पाठा चूर्णमेषां तु संयुतम् ॥ खदिरासननिम्बानां घनकाथेन भावयेत् ॥ ६३ ॥ सप्तधा पञ्चनिम्बं तु मार्कवस्य रसेन च ॥ स्निग्धः शुद्धतनुर्धीमान्योजयेत्तच्छुभे दिने ॥ ६४ ॥ मधुना तिक्तहविषा खदिरासनवारिणा ॥ लेह्यमुष्णाम्भसा वापि कोलवृद्ध्या पलं भवेत् ॥ जीर्णे तस्मिन्समश्नीयात्स्निग्धं लघु हितञ्च यत् ॥ ६५ ॥ विचर्चिकोदुम्बरपुण्डरीककपालदद्रूकिटिभालसादिकम् ॥ शतारुविस्फोटविसर्पमालाः कफप्रकोपं त्रिविधं किलासम् ॥ ६६ ॥ भगन्दरश्लीपदवातरक्तजडान्धनाडीव्रणशीर्षरोगान् ॥ सर्वान्प्रमेहान्प्रदरांश्च सर्वान्दंष्ट्राविषं मूलविषं निहन्ति ॥ ६७ ॥ स्थूलोदरः सिंहकृशोदरः स्यात्सुश्लिष्टसन्धिर्मधुनोपयोगात् ॥ सदोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु ॥ जीवेच्चिरं व्याधिजराविमुक्तः शुभेतरश्चन्द्रसमानकान्तिः ॥ ६८ ॥

अस्य अयमर्थः। निम्बस्य पुष्पफलत्वक्पत्रमूलानि सर्वाणि समुदितानि द्विगुणानि चूर्णितानि भृंगराजस्य रसेन सप्तवारान्भावयेत्। त्रिफलादीनि पाठान्तानि समुदितानि एकभागानि चूर्णितानि खदिरासननिम्बक्काथेन भावयेत् ॥ ततः सर्वमेकीकृत्य मध्वादिनाऽवलिह्यात् ॥

ब्रह्माकी कही हुई रसायनको कहताहू कि जिससे अनेक रोगोंका नाश होताहै, मार्कण्डेय आदि बडे बडे ऋषियोंने इसी रसायनको सेवन कियाथा। नीमके फल, फूल, छाल और पत्ते प्रत्येक दो दो तोले लेकर वारिक चूर्ण बनाकर उस चूर्णको भागरेके रसमें सातबार भावना देवे ( फूलके समय फूल ले रखने चाहिये और फलके समय फल ले रखने चाहिये ) हरड, बहेडा, आमला, सोंठ, मिरच, पीपल, ब्राह्मी, गोखुरू, भिलावे, चीता, वायविडगका सार, वाराही कन्द, लोहेका चूर्ण, हलदी, दारुहलदी, वापची, अमलतास, मिश्री, कूट, इन्द्रजौ और पाढ ये सब समान भाग लेकर चूर्ण बनाकर उस चूर्णको खैर, विजयसार

और नीम इनके गाढे क्वाथकी भावना देवे। पश्चात् भांगरेके रसकी क्रमानुसार सात भावना देवे। फिर इस हरड आदिके चूर्णका एक भाग और पूर्वोक्त पञ्चनिम्बका चूर्ण दो भाग लेकर इनको एकत्र करके सहतमें अथवा पंचतिक्त नामक घृतमें, वा खैरमें तथा विजयसारके क्वाथमें अथवा गरम जलके साथ शुभदिनमें चाटे, नित्य नित्य अडतालीस अडतालीस रत्ती बढाकर चार तोलेतक इस अवलेहको बढाना चाहिये। प्रथम विरेचन आदिसे शरीरको शुद्ध करके पश्चात् स्नेहनक्रियासे स्निग्ध करके फिर बुद्धिमान् पुरुष इस अवलेहका उपयोग करे। इस अवलेहके पचनेपर स्निग्ध, हलका और हितकारक अन्न भोजन करना चाहिये इस अवलेहसे विचर्चिका, औदुम्बर, पुंडरीक, कपाल, दद्रू, किटिभ, अलसक आदि, शतारु, विस्फोटक, विसर्प, गंडमाला, कफका प्रकोप, तीन प्रकारका श्वित्र, भगन्दर, श्लीपद, वातरक्त, जडता, अंधता, नाडीव्रण, मस्तककी पीडा, सर्वप्रकारके प्रमेह, सर्वप्रकारके प्रदर सर्वप्रकारके जंगम और स्थावर विष, ये सब नष्ट होजातेहैं। इस अवलेहको सहतमें मिलाकर चाटनेसे बडे २ मोटे पेटवाले मनुष्य भी सिंहकी समान पतले पेटवाले होजातेहैं। और दृढ सन्धियोंवाले होजातेहैं। इस अवलेहको सेवन करनेवालेको जो सर्पादि जन्तु काटें तो वह सर्पादि तत्काल मरजातेहैं। इस अवलेहके उपयोग करनेसे बहुत कालतक जीतारहताहै। रोग तथा जरा उत्पन्न नही होती और चंद्रमाकी समान शरीरकी शोभा बढतीहै ॥ ५९–६८ ॥

## अथ स्वायंभुवगुग्गुलुः।

**शशिलेखा पञ्चपलं तावद्गिरिजस्य गुग्गुलोस्तु दश ॥ ताप्यस्य पलं त्रितयं द्वे लोहस्रावणीकयोश्च पले ॥ ६९ ॥ त्रिफलाकरञ्जपल्लवखदिरगुडूचीत्रिवृद्दन्त्यः ॥ मुस्ताविडङ्गरजनीकुटजत्वङ्निम्बवह्निसम्पाकाः ॥ ७० ॥ एतै रचिता वटिका मधुसंमिश्रा गिलेत्प्रातः ॥ गोमूत्रेण च कुष्ठं नुदत्यसृग्वातमचिरेण ॥ ७१ ॥ श्वित्राणि पाण्डुरोगं विषमानुदरप्रमेहगुल्मांश्च ॥ नाशयति वलीपलितं योगः स्वायम्भुवो नाम्ना ॥ ७२ ॥**

**शशिलेखा सोमराजी। गिरिजस्य शिलाजतुनः। ताप्यस्य सुवर्णमाक्षिकस्य। स्रावणीका मुण्डी इति लोके॥**

वापची २० तोले, शिलाजीत ३० तोले, गूगल ४० तोले, सोनामाखी १२ तोले, लोहेका चूर्ण २ तोले, गोरखमुडी २ तोले, नागरमोथा २ तोले, वायविडंग २ तोले, हरड २ तोले, बहेडा २ तोले, आमले २ तोले, करजके पत्ते २ तोले, खैर २ तोले, गिलोय २ तोले, निसोत २ तोले, जमालगोटे २ तोले, मोथा २ तोले, हलदी २ तोले, कुडेकी छाल २ तोले, नीमकी छाल २ तोले, चीता २ तोले, और अमलतास २ तोले इन सबको एकत्र पीसकर सहतमें गोलियां बनालेवे। प्रातःकाल गोमूत्रके साथ यह गोली खाय तो कोढ और वातरक्त तत्काल नष्ट होताहै। इस स्वायंभुवनामक गूगलसे वली, पलित, श्वित्र, पांडु, उदरके विषम रोग, प्रमेह और गुल्म, भी नष्ट होजाताहै ॥ ६९–७२ ॥

## अथैकविंशतिको गुग्गुलुः।

**चित्रकं त्रिफला व्योषमजाजी कारवी वचा ॥ सैन्धवातिविषा कुष्ठं चव्यैला च यवासकम् ॥ ७३ ॥ विडङ्गान्यजमोदा च मुस्ता चामरदारु च ॥ यावन्त्येतानि सर्वाणि तावन्मानन्तु गुग्गुलोः ॥ ७४ ॥ संकुट्य सर्पिषा सार्द्धं गुटिकां कारयेद्भिषक् ॥ प्रातर्भोजनकाले च खादेदग्निबलं यथा ॥ ७५ ॥ हन्त्यष्टादश कुष्ठानि क्रिमिदुष्टव्रणानि च ॥ ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥ ७६ ॥ गृध्रसीमथ भग्नञ्च गुल्मं चापि नियच्छति ॥ व्याधीन्कोष्ठगतांश्चापि जयेद्विष्णुरिवासुरान् ॥ ७७ ॥**

चीता, हरड, बहेडा, आमला, सोंठ, मिरच, पीपल, जीरा, कलौंजी, वच, सैंधानिमक, अतीस, कूट, चव्य, इलायची, जवासा, वायविडंग, अजमोद, नागरमोथा और

देवदारु ये सब समान भाग और सबकी बराबर गूगल लेवे सबको एकत्र घीमें खब कूटकर गोलिया बनालेवे । यह गोली प्रातःकाल भोजनके वख्त अग्निके बलानुसार खाय तो अठारह प्रकारके कोढ, कृमि, दुष्टव्रण, संग्रहणी, अर्शके विकार, मुखकी पीडा, गलग्रह, गृध्रसी, भग्न और गुल्म ये सब नष्ट होजातेहैं । जिस प्रकार विष्णु असुरको जीततेहैं उसी प्रकार यह गूगल ऊपर कहे रोगोको और कोटेमे प्राप्त हुए रोगोको तत्काल जीतताहै ॥७३–७७॥

## अथ कैशोरगुग्गुलुः ।

वातरक्ताधिकारोक्तः पुरः कैशोरकाभिधः ॥ कुष्ठानां वातरक्तानां नाशनं परमौषधम् ॥ ७८ ॥

वातरक्तके अधिकारमें जो कैशोरक गूगल कहा है उसको भक्षण करनेसे भी कोढ और वातरक्त नष्ट होजाताहै॥७८॥

## अथामृतभल्लातकावलेहः ।

भल्लातकप्रस्थयुगं छित्वा द्रोणजले क्षिपेत् ॥ प्रस्थद्वयं गुडूच्याश्च क्षुण्णं तत्राम्भसि क्षिपेत् ॥ ७९ ॥ चतुर्थांशावशेषं तु कषायमवतारयेत् ॥ वस्त्रपूते कषाये तु वक्ष्यमाणं विनिक्षिपेत् ॥ ८० ॥ शरावमात्रकं सर्पिर्दुग्धं स्यादाढकं तथा॥ सितां प्रस्थमितां दद्यात्प्रस्थार्द्धं माक्षिकं क्षिपेत् ॥ ८१ ॥ सर्वाण्येकत्र भाण्डे तु पचेन्मृद्वग्निना शनैः ॥ सर्वद्रवे घनीभूते पावकादवतारयेत् ॥ ८२ ॥ तत्र क्षेप्याणि चूर्णानि ब्रूमो बिल्वविषामृताः ॥ वाकुची चाथ दद्रूघ्नः पिचुमर्दो हरीतकी ॥ ८३ ॥ अक्षो धात्री च मंजिष्ठा मरिचं नागरं कणा ॥ यवानी सैन्धवं मुस्तं त्वगेला नागकेसरम् ॥ ८४ ॥ पर्पटं पत्रकं वालमुशीरं चन्दनं तथा ॥ गोक्षुरस्य च बीजानि कर्चूरो रक्तचन्दनम् ॥ ८५ ॥ पृथक्पलार्द्धमानानां चूर्णमेषामिह क्षिपेत् ॥ पलमात्रमिदं प्रातः समश्नीयाज्जलेन हि ॥ ८६ ॥ नाशयेदवलेहोऽयं पथ्यान्यन्नानि खादतः ॥ कुष्ठानि वातरक्तानि सर्वाण्यर्शांसि सेवितः ॥ ८७ ॥ व्यायाममातपं वह्निमम्लं मांसं दधि स्त्रियम् ॥ तैलाभ्यंगं तथाऽध्वानं नरो भल्लातकी त्यजेत्॥८८॥

भिलावे १२८ एकसे अठाईस तोले लेकर एक हजार चौबीस तोले जलमे पकावे, फिर उसमे १२८ तोले गिलोयको कूटकर उसी जलमे डालकर पकावे, जब पकते पकते यह जल चौथाई भाग बाकी रहजाय तब इसको उतार लेवे, इस क्वाथको वस्त्रमे छानकर उसमे ३२ तोले घी २५६ तोले दूध, मिश्री ६४ तोले और सहत ३२ तोले डालकर एक उत्तम पात्रमें मंद मंद अग्निसे धीरे धीरे पकावे जब यह पकते पकते गाढा होजाय तब अग्निपरसे उतारकर उसमें बेलगिरी, अतीस, गिलोय,बापची, पमार, नीम, हरड, बहेडा, आमला, मजीठ, सोंठ, मिरच, पीपल अजवायन, सैंधानमक, नागरमोथा, दालचीनी, इलायची, नागकेसर, पित्तपापडा, तेजपत्र, सुगंधवाला, खस, चंदन, गोखुरूके बीज, कचूर और लाल चंदन ये प्रत्येक औषधि दो दो तोले लेकर चूर्ण पीसकर मिलादेवे तो अमृतभल्लातकावलेह सिद्ध होताहै । इस अवलेहको नित्य प्रातःकाल चार तोले जलके साथ सेवन करे और पथ्य भोजन करै तो कोढ, वातरक्त और सब प्रकारकी बवासीर नष्ट होजातीहैं, इस भिलावेको सेवन करनेवाला मनुष्य कसरत, धूप, अग्नि, खट्टे पदार्थ, मास, दही, मैथुन, तेलकी मालिस और मार्गका चलना त्याग करदेवे ॥ ७९–८८ ॥

## अथ महाभल्लातकावलेहः ।

निम्बवर्गोपारुणाः कट्वी त्रायन्ती त्रिफला घनम् ॥ पर्पटावल्गुजानन्तावचाखदिरचन्दनम् ॥ ८९ ॥ पाठाशुण्ठीशटीभार्ङ्गी वासाभूनिम्बवत्सकम् ॥ श्यामेन्द्रवारुणी मूर्वा विडंगेन्द्रयवानलम् ॥ ९० ॥

हस्तिकर्णामृताद्रेकापटोलरजनीद्वयम् ॥ कणारग्वधसप्ताह्वत्रिवृद्धेत्रोच्चटाफलम् ॥ ॥९१॥ मञ्जिष्ठालांगलीरास्नानक्तमालपुनर्नवाः ॥ दन्तीबीजकसारश्च भृंगराजं कुरण्टकम् ॥ ९२ ॥ अङ्कोटकश्च शाखोटं द्विपलांशं पृथक्पृथक् ॥ गृह्णीयात्तानि सर्वाणि जलद्रोणे पचेच्छनैः ॥ ९३ ॥ अष्टमांशावशेषन्तु कषायमवतारयेत् ॥ विधाय वाससा पूतं स्थापयेद्भाजने दृढम्॥ ॥ ९४ ॥ भल्लातकसहस्राणि च्छित्त्वा तु त्र्यर्मणाम्भसि ॥ पचेदष्टावशेषं तत्कषायमवतारयेत्॥ ९५ ॥ तत्र वस्त्रेण संशोध्य द्वौ कषायौ विमिश्रयेत् ॥ गुडं शतपलं दत्त्वा लेहवत्तत्पचेच्छनैः॥९६॥ भल्लातकसहस्रस्य मज्जान्नं तत्र निक्षिपेत् ॥ त्रिकटु त्रिफला मुस्तं विडङ्गं चित्रकं तथा ॥९७॥ सैन्धवं चन्दनं कुष्ठं दीप्यकश्च पलं पृथक्॥ सौगंध्यार्थं क्षिपेत्तत्र चातुर्जातं पलंपलम् ॥ ९८ ॥ महाभल्लातको ह्येष महादेवेन भाषितः ॥ प्राणिनां हितकामेन जयेच्छीघ्रं प्रयोजितः ॥९९ ॥ श्वित्रमौदुम्बरं दद्रूमृक्षजिह्वन्तु काकणम् ॥ पुण्डरीकं सचर्माख्यं विस्फोटं रक्तमण्डलम् ॥१००॥ कण्डूं कापालकं कुष्ठं पामानश्च विपादिकाम् ॥ वातरक्तं षडर्शांसि पाण्डुरोगव्रणान्क्रिमीन्॥ १०१ ॥ रक्तपित्तमुदावर्तं कासं श्वासं भगन्दरम् ॥ सदाभ्यासेन पलितमामवातं सुदुस्तरम् ॥१०२॥ निर्यन्त्रणस्तु कथितो विहाराहारमैथुने ॥ कुरुते परमः कान्तिं प्रदीप्तं जठरानलम् ॥ ॥ १०३ ॥ अनुपानं प्रयोक्तव्यं छिन्नातोयं पयोऽथवा ॥ भोजने तु सदा त्याज्यमुष्णमम्लं विशेषतः ॥ १०४ ॥

गोपा श्वेतसारिवा इति लोके । अरुणा अतिविषा । अवल्गुजः सोमराजी बाकुची। अनन्ता दुरालभा । चन्दनं श्वेतम् । भार्ङ्ग्या अलाभे कण्टकारीमूलं गृह्णीयात् । श्यामा कृष्णसारिवा । हस्तिकर्णः हस्तिकन्दः । सप्ताह्वा छतिम् । द्रेका बकाइन इति लोके । वेत्रं कृष्णवेत्रं जलवेतसश्च । उच्चटाफलं श्वेतगुञ्जाफलम् । कुरण्टकः पीतझिण्टी । अंकोटकः ओल इति लोके । शाखोटं साओडा इति लोके । दीप्यकं यवानी॥

नीम, सफेद सारिवा, अतीस, बापची, कुटकी, त्रायमान, हरड, बहेडा, आमला, नागरमोथा, पित्तपापडा, धमासा, वच, खैर, सफेद चदन, पाढ, सोंठ, कचूर, भारंगी ( अगर भारगी न मिले तो कटेरीकी जड लेवे ) अडूसा, चिरायता, इन्द्रजौ, अनन्तमूल, इन्द्रायन, चुरनहार, वायविडंग, कुडेकी छाल, चीता, हस्तीकंद, गिलोय, बकायन, कडवे परवल, हलदी, दारुहलदी, पीपल, अमलतास, सतौना, निसोत, वेत, सफेदचौंटलीके फल, मजठि, गजपीपल, रायसन, करज, पुनर्नवा, जमालगोटा, विजयसार, भागरा, पियावॉसा, अंकोल और सिहोडा ये प्रत्येक पदार्थ अलग अलग आठ आठ तोले लेकर सबको १००० एकहजार २४ चौबीस तोले जलमे धीरे धीरे मंद मद अग्निसे पकावे, जब पकते पकते जल चौथाई भाग बाकी रहजाय तब उसको उतारकर उत्तम वस्त्रमें छान मजबूत बासनमें भरकर रखदेवे। फिर १००० एक हजार भिलावोंको छीलकर ३०७२ तोले जलमें पकावे जब पकते २ आठवां भाग जल बाकी रहजाय तब उस क्काथको वस्त्रमे छानकर पहिले क्काथमें मिला देवे, फिर इस क्काथमें ४०० चारसौ तोले गुड डालकर धीरे धीरे मद मद अग्निसे सीरेकी समान पकावै फिर इसमें १००० एक हजार भिलावोंकी मींग डाले तथा सोंठ, मिरच, पीपल, हरड, बहेडा, आमला, नागरमोथा, वायविडग, चीता, सैंधानिमक, चदन, कूठ और अजवायन प्रत्येक पदार्थ चारचार तोले पीसकर मिला देवे सुगधित करनेके लिये दालचीनी, तेजपत्र, इलायची और नागकेसर प्रत्येकका चूर्ण चार चार तोले डाल देवै

तो ये महाभल्लातकावलेह सिद्ध होताहै । यह महादेवजीने पूर्वकालमें प्राणियोंके हितकी इच्छासे कहाथा । इस अवलेहको सेवन करनेसे श्वित्र, औदुम्बर, दाद, ऋक्षजिह्व, काकणक, पुंडरीक, चर्मदल, गजचर्म, विस्फोट, रक्तमंडल, खुजली, कपालकुष्ठ, पामा, विपादिका वातरक्त, छे प्रकारकी बवासीर; पांडुरोग, व्रण, कृमि, रक्तपित्त, उदावर्त, खाँसी, श्वास, और भगन्दर ये सब रोग तत्काल नष्ट होजातेहैं । इस अवलेहका नित्य अभ्यास करनेसे सफेदबाल नष्ट होकर काले निकलते हैं और दुस्तर आमवात भी नष्ट होजाता है । इस अवलेहको सेवन करनेवाले मनुष्यको आहार विहार और मैथुन विशेष परहेज रखनेकी कुछ आवश्यकता नहीं है । यह अवलेह कांतिको उत्तम करे है और जठराग्निको दीपन करता है । इस अवलेहको सेवन करनेके पश्चात् गिलोयके जलका अथवा दूधका अनुपान करे और भोजनमें विशेष करकै गरम खटाईका त्यागकर देवे॥ ८९–१०४

## अथ लघुमंजिष्ठादिक्काथः ।

मञ्जिष्ठा त्रिफला तिक्ता वचा दारुनिशामयाः ॥ निम्बश्चैषां कृतः क्वाथः सर्वकुष्ठं विनाशयेत् ॥ १०५ ॥ वातरक्तं तथा कण्डूं पामानं रक्तमण्डलम् ॥ दद्रूं विसर्पं विस्फोटं पानाभ्यासेन नाशयेत् ॥ १०६॥

मजीठ, हरड, बहेडा, आमला, कुटकी, वच, देवदारु, हलदी, कूठ और नीम इनका क्वाथ बनाकर नित्य पीनेसे सर्वप्रकारके कोढ नष्ट होजातेहैं । इस क्वाथका अभ्यास करनेसे वातरक्त, खुजली, पामा, रक्तमंडल, दाद, विसर्प और विस्फोटक इन सबका नाश होता है॥ १०५॥ १०६॥

## अथ मध्य मंजिष्ठादिक्काथः ।

मञ्जिष्ठा वाकुची चक्रमर्दश्च पिचुमर्दकः॥ हरीतकी हरिद्रा च धात्री वासा शतावरी ॥ १०७ ॥ वला नागवला यष्टी मधुकं क्षुरकोऽपि च ॥ पटोलस्य लतोशीरं गुडूची रक्तचन्दनम् ॥ १०८ ॥ मञ्जिष्ठादिरयं क्वाथः कुष्ठानां नाशनः परः ॥ वातरक्तस्य संहर्ता कण्डूमण्डलनाशनः ॥ १०९ ॥

मजीठ, बावची, चकवड, नीम, हरड, हलदी, आमले, अडूसा, सतावर, खिरैटी, गंगेरन, मुलैठी, गोखरू, परवलकी बेल, खस, गिलोय और लालचंदन इनका क्वाथ बनाकर पीनेसे कोढ, वातरक्त, खुजली और मंडलका नाश होजाताहै ॥ १०७–१०९ ॥

## अथ बृहन्मञ्जिष्ठादिक्काथः ।

मञ्जिष्ठाकुटजामृताघनवचाशुण्ठीहरिद्राद्वयं क्षुद्रारिष्टपटोलतिक्तकटुकाभार्ङ्गीविडंगाग्निकम् ॥ मूर्वादारुकलिंगभृंगमगधात्रायन्तिपाठावरीगायत्रीत्रिफलाकिरातकमहानिम्बासनारग्वधाः ॥ ११० ॥ श्यामावल्गुजचन्दनं वरुणकं दन्तीकशाखोटकं वासा पर्पटसारिवा प्रतिविषाऽनन्ता विशाला जलम् ॥ मञ्जिष्ठा प्रथमं कषायमिति यः संसेवते तस्य तु त्वग्दोषाः सुचिरेण यान्ति विलयं कुष्ठानि चाष्टादश॥ १११॥ नाशं गच्छति वातरक्तमखिलं नश्यन्ति रक्तामया वीसर्पस्त्वचि शून्यता नयनजा रोगाः प्रशाम्यन्ति च ॥ ११२ ॥

अरिष्टः निम्बः । कलिंगः इन्द्रयवः । भृंगः भंगरीया इति । वरी शतावरी । गायत्री खदिरः। असनं विजयसारः । श्यामा प्रियंगुः । चन्दनमत्र रक्तं ग्राह्यम् । सारिवा [साइ] । अनन्ता दुरालभा । विशाला इन्द्रवारुणी । जलम् [नेत्रवाला] ॥

मजीठ, कुडेकी छाल, गिलोय, नागरमोथा, वच, सोंठ, हलदी, दारुहलदी, कटेरीका पचांग, नीम, परवल, कुटकी, भारङ्गी, वायविडग, चित्रक, चुरनहार, देवदारु, भाँगरा, पीपल, त्रायमान, पाढ, सतावर, खैर, हरड, बहेडा, आमला, चिरायता, बकायन, विजयसार, अमलतास, फूलप्रियंगु, बावची,

लाल चन्दन, वरुना, जमालगोटा, सिहोडा, पित्तपापडा, सारिवा, अतीस, धमासा, इन्द्रायन और सुगन्धवाला इनका क्वाथ बनाकर नित्य पीनेसे बहुत पुराने चर्मविकार, अठारह प्रकारके कोढ, वातरक्त, सम्पूर्ण रुधिरके रोग, विसर्प, त्वचाकी जडता और नेत्रके रोग नष्ट होजाते हैं ॥ ११०–११२ ॥

## अथ लघुमरिचादितैलम्

मरिचं त्रिवृता मुस्तं हरितालं मनःशिला॥ देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥११३॥ विशाला करवीरश्च क्षीरमर्कसमुद्भवम् ॥ गोमयस्य रसं कुर्यात्प्रत्येकं कर्षसम्मितम् ॥ ११४ ॥ विषस्यार्द्धपलं देयं तैलं प्रस्थमितं कटु ॥ पचेच्चतुर्गुणे नीरे गोमूत्रे द्विगुणे तथा ॥ ॥ ११५ ॥ मरिचाद्यमिदं तैलमभ्यङ्गात्कुष्ठनाशनम् ॥ एतस्याभ्यंगतः श्वित्रं विवर्णं तत्क्षणाद्भवेत् ॥ ११६ ॥ तैलमेतज्जयेत्कण्डूं पामां सिध्म विचर्चिकाम्॥ पुण्डरीकं तथा दद्रूं शून्यतां नित्यसेविनाम् ॥ ११७ ॥

कालीमिरच, निसोत, नागरमोथा, हरिताल, मैनशिल, देवदारु, हलदी, दारुहलदी, बालछड, चन्दन, इन्द्रायन, कनेर, आकका दूध और गायके गोबरका रस ये प्रत्येक पदार्थ एक एक तोला लेवे, वत्सनाभ विष दो तोले लेवे और सरसोंका तेल ६४ तोलेभर लेवे, इन सबको चौगुने जलमे तथा दुगुने गोमूत्रमें पकावे तो यह 'लघुमरिचाद्य' तैल सिद्ध होताहै । इस तेलकी मालिस करनेसे कोढ नष्ट होजाताहै । इस तेलके अभ्यगसे तत्काल श्वित्रकुष्ठका रग बदलजाताहै । इसको नित्य सेवन करनेसे खुजली, पामा, सिध्म, विचर्चिका, पुडरीक, दाद, और शून्यता नष्ट होतीहै ॥ ११३–११७ ॥

## अथ महामरिचाद्यतैलम् ।

मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः ॥ देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥ ११८ ॥ विशाला करवीरश्च हरितालं मनःशिला ॥ चित्रकं लांगली मुस्तं विडंगं चक्रमर्दकः॥ ११९ ॥ शिरीषः कुटजो निम्बः सप्तपर्णोऽमृता स्नुही ॥ श्यामाको नक्तमालश्च खदिरो बाकुची वचा ॥ १२० ॥ ज्योतिष्मती च पलिका विषं द्विपलिकं भवेत् ॥ आढकं कटुतैलस्य गोमूत्रश्च चतुर्गुणम् ॥ १२१ ॥ मृत्पात्रे लोहपात्रे च शनैर्मृद्वग्निना पचेत् ॥ मरिचाद्यमिदं तैलं महन्मुनिभिरीरितम् ॥१२२ ॥ भिषगेतेन तैलेन म्रक्षयेत्कौष्ठिकान्व्रणान् ॥ पामाविचर्चिकादद्रूकण्डूविस्फोटकानि च ॥१२३॥ वलयः पलितं छाया नीलं व्यंगं तथैव च ॥ अभ्यंगेन प्रणश्यन्ति सौकुमार्यञ्च जायते ॥ १२४॥ प्रथमे वयसि स्त्रीणां यासां नस्यं प्रदीयते ॥ तासामपि जरां प्राप्य न स्यातां स्खलितौ स्तनौ ॥१२५॥ बलीवर्दस्तुरङ्गो वा गजो वायुप्रपीडितः॥ त्रिभिरभ्यञ्जनैरस्य भवेन्मारुतविक्रमः ॥ १२६ ॥

ज्योतिष्मती मालकांगुनीति लोके ॥

कालीमिरच, निसोत, जमालगोटा, आकका दूध, गोबरका रस, देवदारु, हलदी, दारुहलदी, बालछड, कूठ, चन्दन, इन्द्रायन, कनेर, हरिताल, मैनशिल, चीता, कलिहारी, नागरमोथा, वायविडग, चकवड, सिरस, इन्द्रजौ, नीम, सतौना, गिलोय, थूहर, श्यामाक, करज, खैर, बाकुची, वच और मालकांगुनी प्रत्येक चार चार तोले लेवे, वत्सनाभ आठ तोले लेवे, सरसोंका तेल दोसौ छप्पन्न २५६ तोले लेवे और गोमूत्र इससे चौगुना लेवे. इन सब पदार्थोंको लोहेके पात्रमें अथवा मट्टीके पात्रमें मन्द मन्द अग्निमे धीरे धीरे पकावे तो यह महामरिचाद्यतैल सिद्ध होताहै । इस मुनियोंके कहेहुए तेलसे वैद्य कोढके व्रणोपर मालिस करावे । इस तेलके अभ्यगसे पामा, विचर्चिका, दाद, काण्डु, और विस्फोटक ये सब नष्ट होतेहैं । तथा शरीरमें वलियोंका पडना, बिना समयही बालोका सफेद होजाना,

छाया, नीलिका, व्यग ( झाई ) ये सब नष्ट होकर सुकुमारता उत्पन्न होतीहै । इस तैलका स्त्रियोंको जो पहिली अवस्थामें नास दिया जाय तो उनके वृद्ध अवस्थामें भी स्तन नहीं गिरतेहैं । बैल, घोडा और हाथी जो वायुसे पीडित होयँ तो उनको इस तेलका अभ्यजन किया जाय तो वे पवनके वेगकी समान वेगवाले होजातेहैं ॥ ११८–१२६ ॥

### अथ तालकेश्वररसः ।

**तालताप्यशिलासूतटंकणाः सिन्धुसंयुताः ॥ गन्धको द्विगुणः सूताच्छङ्खचूर्णश्च तत्समम् ॥ १२७ ॥ जम्बीराद्भिर्दिनं घृष्ट्वा त्रिंशदंशं विषं क्षिपेत् ॥ अस्य माषद्वयं खादेन्महिषीघृतसंयुतम् ॥१२८॥ मध्वाज्यैर्वाकुचीबीजकर्षं लिह्या ततः परम् ॥ तालकेश्वरनामायं सर्वकुष्ठहरो रसः ॥ १२९ ॥**

हरिताल, सोनामाखी, मैनशिल, पारा, सुहागा, सेंधानिमक, पारेसे दूना गन्धक और गन्धककी बराबर शंखका चूर्ण इनको एक दिनतक नीबूके रसमें खरल करके और उसमें तीसभाग वत्सनाभ मिलावे तो यह तालकेश्वर रस सिद्ध होताहै । इस रसको भैंसके घीके साथ बारहरत्ती प्रमाण खाय और इसके ऊपर सहत तथा घीके साथ एक तोला बाकुचीके बीजोंका चूर्ण खाय तो सर्व प्रकारके कुष्ठ नष्ट होजातेहैं ॥ १२७–१२९ ॥

### अथ गलितकुष्ठारिरसः ।

**रसो बलिस्ताम्रमयः पुरोऽग्निः शिलाजतु स्याद्विषतिन्दुकश्च ॥ वरा च तुल्यं गगनञ्च सर्वैः करञ्जबीजं सचतुष्टयञ्च ॥ ॥ १३० ॥ संमर्द्य सर्वं मधुना घृतेन घृतस्य पात्रे निहितं प्रयत्नात् ॥ कर्षं भजेत्प्रत्यहमस्य पथ्यं शाल्योदनं दुग्धमधुत्रयञ्च ॥ १३१ ॥ विशीर्णकर्णांगुलिनासिकोऽपि भवेदनेन स्मरतुल्यमूर्तिः ॥ दारापरित्याग इह प्रदिष्टो जलौदनं तत्र निबद्धमूले ॥ १३२ ॥**

**पुरो गुग्गुलुः । अग्निश्चित्रकम् । विषति न्दुकः[कुचिला] । वरा त्रिफला । रसादित्रि फलान्तं सर्वं तुल्यम् । गगनमभ्रकम् । क ञ्जबीजञ्च पृथक् चतुर्गुणं रसात् । तत्र कु बद्धमूले सति जलौदनमेव पथ्यम् ॥**

पारा, गधक, तॉबेकी भस्म, लोहेकी भस्म, गूग चीता, शिलाजीत, कुचिला, हरड, बहेडा और आम यह सब समान भाग लेवे, अभ्रक और करंजके बी पारेसे चौगुने लेवे इन सब पदार्थोको एकत्र करके स और घीमें खरल करके घीके चिकने बासनमे भर रखदेवे तो यह 'गलितकुष्ठारि' रस सिद्ध होता है । इ रसको नित्य एक तोलाभर खाय और इसके ऊपर ल शालि चावलोंका भात, दूध और सहत इन तीनों पद थोंका पथ्य देवे । जिसके कान, अगुलि और नाक ग गई होयँ वह मनुष्य भी इसके प्रभावसे कामदेव समान शरीरवाला होजाताहै । इस रसको सेवन कर वाले मनुष्यको मैथुनका त्याग करना चाहिये । जो के दृढ जडवाला होगया होय तो इस रसके ऊपर जल तथा भातका पथ्य देवे ॥ १३०–१३२ ॥

### अथ सिध्मचिकित्सा ।

**कुष्ठं मूलकबीजं प्रियंगवः सर्षपास्तथा रजनी ॥ एतत्केसरषष्ठं निहन्ति चिरकालजं सिध्म ॥ १३३॥**

कूठ, मूलीके बीज, फूलप्रियगू, सरसों, हलदी अ नागकेसर इन छे पदार्थोका लेप करनेसे बहुत दिनो भी सिध्म नष्ट होजाताहै ॥ १३३ ॥

**शिखरीरसे न पिष्टं मूलकबीजं प्रलेपतः सिध्म॥ क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥ १३४ ॥**

इस लेपको 'केशरषट्क' ऐसा कहतेहैं । चि चिटेके रससे अथवा हलदीको मिलाकर मूली बीजोंको पीसकर लेप करनेसे सिध्म नष्ट होजात है ॥ १३४ ॥

**दार्वीमूलकबीजानि तालकं सुरदारु च ॥ ताम्बूलपत्रं सर्वाणि कार्षिकाणि पृथक्पृथक्**

॥ १३५ ॥ शङ्खचूर्णन्तु शाणं स्यात्सर्वाण्येकत्र वारिणा ॥ प्रलेपयेत्प्रलेपोऽयं सिध्मनाशन उत्तमः ॥ १३६ ॥

दारुहलदी, मूलीके बीज, हरिताल, देवदारु और नागरवेलके पान ये प्रत्येक पदार्थ एक एक तोला लेवे और शंखका चूर्ण चौवीस रत्ती प्रमाण लेवे। इन सबको एकत्रित करकै जलमें पीसकर लेप करनेसे सिध्म नष्ट होजाताहै। यह प्रलेप सिध्मनाश करनेके लिये उत्तम है ॥ १३५ ॥ १३६ ॥

### अथ चर्मदलचिकित्सा ।

सलिले चाम्रपेशी तु किञ्चित्सैन्धवसंयुता॥ ताम्रपात्रे विनिर्घृष्टा लेपाच्चर्मदलापहा ॥ १३७ ॥

आम्रपेशी आमचूर इति लोके ।

सलिलेन तु शुष्काणि घृष्ट्वा धात्रीफलानि च ॥ कराभ्यां सुखमाप्नोति नरश्चर्मदलान्वितः ॥ १३८ ॥

आमचूरको ताम्रेके बासनमें घिसकर उसमें कुछेक सैंधानिमक डालकर लेप करनेसे चर्मदल नष्ट होजाताहै। सुखेहुए आमलोंको जलमें घिसकर लेप करनेसे चर्मदलवाले रोगियोको सुख प्राप्तहोताहै ॥ १३७ ॥ १३८ ॥

### अथ पामाचिकित्सा ।

जीरकस्य पलं पिष्टं सिन्दूरार्द्धपलं तथा ॥ कटुतैलं पचेदाभ्यां सर्वपामाहरं परम् १३९

चार तोले जीरकाचतैल और उसमें दो तोले सिंदूर सरसोंके तेलमें पकावे। उस तेलको मलनेसे सर्वप्रकारकी पामा अच्छे प्रकारसे नष्ट होजाती है ॥ १३९ ॥

### अथादित्यपाकतैलम् ।

मञ्जिष्ठात्रिफलालाक्षालाङ्गलीरात्रिगन्धकैः ॥ चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् ॥ १४० ॥

मजीठ, हरड, बहेडा, आमले, लाख, कलिहारी, हलदी और गधक इनके कल्कसे पकाया हुआ तेल 'आदित्यपाक' कहाजाताहै इससे पामा अच्छे प्रकारसे नष्ट होजातीहै ॥ १४० ॥

### अथ सधवादिलेपः ।

सैन्धवं चक्रमर्दश्च सर्षपाः पिप्पली तथा॥ आरनालेन संपिष्टाः पामाकण्डूहराः पराः ॥ १४१ ॥

सैंधानमक, चकवड, सरसों और पीपल इनको आरनालनामक काजीमे पीसकर लेप करनेसे छाजन और खुजली सब प्रकारकी नष्ट होजाती हैं ॥ १४१ ॥

## अथ कच्छूचिकित्सा ।

### तत्रार्कतैलम् ।

अर्कपत्ररसे पक्कं हरिद्राकल्कसंयुतम् ॥ नाशयेत्सार्षपं तैलं पामाकच्छूविचर्चिकाः ॥ १४२ ॥

हलदीका कल्क डालकर आकके पत्तोंके रसमें पकाया हुआ सरसोका तेल, पामा, कच्छू और विचर्चिकाको नष्ट करे है ॥ १४२ ॥

### अथ कच्छूराक्षसतैलम् ।

मनः शिलालं कासीसं गन्धाश्म सिन्धुजन्म च ॥ स्वर्णक्षीरी शिलाभेदी शुण्ठी कुष्ठश्च मागधी ॥ १४३ ॥ लांगली करवीरश्च तद्भूघ्नः क्रिमिहानलः ॥ दन्ती निम्बदलं चैभिः पृथक्कर्षमितैर्भिषक् ॥ ॥ १४४ ॥ कल्कीकृत्य पचेत्तैलं कटु प्रस्थद्वयोन्मितम् ॥ अर्कसेहुण्डदुग्धेन पृथक्पलमितेन च ॥ १४५ ॥ गोमूत्रस्याढकेनापि शनैर्मृद्वग्निना पचेत् ॥ अभ्यङ्गेन हरेदेतत्कृच्छ्रदुःसाध्यतामपि॥ ॥ १४६ ॥ पामानश्च तथा कण्डूं त्वग्व्याधिरुधिरामयान् ॥ कच्छूराक्षसनामेदं तैलं हारीतभाषितम् ॥ १४७ ॥

मैनशिल, हरिताल, हीराकसीस, गधक, सैंधानिमक, चोक, पाखानभेद, सोठ, कूठ, पीपल, कलिहारी, कनेर, चकवड, वायविडग, चीता, जमालगोटा, और नीमके पत्ते ये प्रत्येक पदार्थ एक २ तोला लेकर इनके कल्कसे १२८

पकती अठाईस तोले भर सरसोंका तेल पकावे फिर चार तोले आकका दूध, चार तोले थूहरका दूध और दोसौछप्पन तोले गोमूत्रसे इसको कोमल अग्निमें धीरे धीरे पकावे तो यह कच्छूराक्षस नामक तैल सिद्ध होताहै, इस तेलकी मालिश करनेसे असाध्य कच्छूभी नष्ट होजाती है। हारीतमुनिका कहा हुआ यह तेल पामा, खुजली, चर्मके रोग और रुधिरके विकारोंको दूर करे है ॥१४३–१४७॥

## अथ कृतमालादिकल्कः।

कृतमालस्य पत्राणि नक्तमालदलानि च ॥ द्रोणपुष्पीपलाशानि सर्षपा राजिका निशा ॥ १४८ ॥ कुटजो मधुकं मुस्तं नागरं रक्तचन्दनम् ॥ धात्री यवानिका दारु कल्क एष प्रकल्पितः ॥ १४९ ॥ उद्वर्तनादयं कल्कः कटुतैलसमन्वितः ॥ कण्डूं पामां हरत्येव शीतपित्तादिकामयान् ॥ १५० ॥

अमलतासके पत्ते, करजके पत्ते, पमारके पत्ते, सरसो, राई, हलदी, इन्द्रजौ, मुलैठी, नागरमोथा, सोंठ, लाल चंदन, आमले, अजवायन और देवदारु इनका कल्क बनाकर सरसोंके तेलमें पकाकर अच्छे प्रकार लगावे तो खुजली, पामा और शीतपित्त आदि रोग अवश्य नष्ट होजाते हैं ॥ १४८–१५० ॥

## अथ दद्रूचिकित्सा।

कुष्ठं क्रिमिघ्नो दद्रूघ्नो निशासैन्धवसर्षपाः॥ अम्लपिष्टः प्रलेपोऽयं दद्रूकुष्ठनिषूदनः ॥१५१॥ दूर्वाभयासैन्धवचक्रमर्दकुठेरकाः काञ्जिकतक्रपिष्टाः ॥ त्रिभिः प्रलेपैरपि बद्धमूलां दद्रूश्च कुष्टश्च विनाशयन्ति १५२॥

कठेरकः बाबुइ तुलसी इति लोके ॥

गण्डिलकाख्यं तृणमपि सिद्धार्थकश्च स्नुहीपत्रम् ॥ त्रयमपि समभागं स्याद्देषां द्विगुणस्तु दद्रूघ्नः ॥ १५३ ॥ अष्टगुणे गोतके तानि मक्तानि सन्दध्यात्॥ दिवसत्रितयादूर्ध्वं सम्यक्‌निष्पेपयेत्तानि॥ ॥ १५४ ॥ वन्योपलेन घृष्ट्वा च दद्रूमालेपयेत्तेन ॥ सप्ताहाल्लेपोऽयं दद्रूमचिराद्विनाशयति ॥ १५५ ॥

कूठ, वायविडंग, पमार, हलदी, सैंधानिमक और सरसों इनको नीबूके रसमें पीसकर लगानेसे दाद तथा कोढ नष्ट होजाताहै।

दूब, हरड, सैंधानिमक, पमारके बीज और बापची इनको कांजीमें तथा तक्रमें पीसकर तीन वार लेप करनेसे दृढ मूलवाले दाद तथा कोढ भी नष्ट होजाताहै।

गंडलिक घास, सरसों और थूहरके पत्ते इन सबको समान भाग लेवे और इनसे दुगुना चकवड लेवे, इन सबको अठगुनी छाछमे मिला देवे। फिर तीनदिनके बाद इनको अच्छे प्रकार पीसकर प्रथम दादको अरने उपलेनसे रगडकर उक्त औषधिका लेपकरे तो तत्काल सातदिनके भीतर दादका नाश होताहै ॥ १५१–१५५ ॥

## अथ श्वित्रकुष्ठचिकित्सा।

विभीतकत्वङ्मलपूजतानां क्वाथेन पीतं गुडसंयुतेन ॥ अवल्गुजं बीजमपाकरोति श्वित्राणि कृच्छ्राण्यपि पुण्डरीकम् ॥१५६॥

मलपूः काकोदुम्बरिका। अवल्गुजं सोमराजी ॥

कुडवमवल्गुजबीजं हरितालचतुर्थभागसम्मिश्रम् ॥ १५७ ॥ मनःशिला तोलकार्द्ध गुञ्जाफलमग्निमूलञ्च ॥ मूत्रेण गवां पिष्टं सवर्णताकारकं श्वित्रे ॥ १५८ ॥ श्वेतं कुष्ठं व्रजत्यस्तं पक्षार्द्धेनाधिकेन वा ॥ गिरिकर्ण्यास्तु कृष्णाया मूलेन परिलेपितम् ॥ १५९ ॥

गिरिकर्णी नीला अपराजिता ॥

क्वाथः सबाकुचीचूर्णो धात्रीखदिरसारयोः ॥ शंखेन्दुकुन्दधवलं श्वित्रं संसेवितो हरेत् ॥ १६० ॥ मथितेन पिबेच्चूर्णं काकोदुम्बर्यवल्गुजम् ॥ तैलाक्तो घर्मसेवी स्यात्तक्राशी श्वित्रहृद्भवेत् ॥ १६१ ॥

**मथितं निर्जलं विलोडितं दधि । तक्रं चतुर्थांशजलयुतं वस्त्रपूतं दधि ॥**

बहेडेकी छाल, कठूमरकी जड इनके क्काथमे गुड डालकरैं वापर्चीके कल्कके साथ पिवे तो अत्यंत कष्टदायक श्वित्र और पुंडरीक भी नष्ट होजाताहै ।

वापचीके बीज १६ तोले, हरिताल ४ तोले, ६ मासे मैनशिल, चौंटली और चीतेकी जड इन सबको गोमूत्रमें पीसकर लेप करनेसे श्वित्र नष्ट होकर त्वचाका रंग शरीरके वर्णकी समान होजाताहै । काली अपराजिताकी जडका कल्क बनाकर उसका लेप करनेसे आठ दिनमे वा कुछ अधिक दिनोंमे स्वेतकुष्ठ नष्ट होजाताहै ।

आमलेका तथा खैरसारका क्काथ बनाकर उसमे वापचीका चूर्ण डालकर नित्य पीनेसे शख, कुद और चंद्रमाकी समान स्वेत कुष्ठ नष्ट होजाताहै । कठूमर तथा वापचीका चूर्ण बनाकर विना पानी मिले दहीमे मिलाकर पीवे, तेलकी मालिसकरके धूपमे बैठा रहे और छाछको पीवे तो सफेद कोढ नष्ट होजाता है ॥ १५६–१६१ ॥

## अथ सोमराजीघृतम् ।

**चतुःपलं सोमराज्याः खदिरस्य पलं तथा ॥ पटोलमूल त्रिफला त्रायमाणा दुरालभा ॥ १६२ ॥ कल्कार्थं कटुकं चापि कार्षिकाःसूक्ष्मपेषितात् ॥ पलद्वयं कौशिकस्य शुद्धस्यात्र प्रदापयेत् ॥ १६३॥ सिद्धं सर्पिरिदं श्वित्रं हन्यादम्भ इवानलम् ॥ अष्टादशानां कुष्ठानां परमं चतदौषधम् ॥ १६४ ॥ सोमराजीघृतं नाम निर्मितं ब्रह्मणा पुरा ॥ लोकानामुपकाराय श्वित्रकुष्ठादिरोगिणाम् ॥ १६५ ॥**

इति कुष्ठनिदानचिकित्साधिकारः ।

वापर्ची १६ तोले, खैरसार ४ तोले, परवलकी जड, हरड, बहेडा, आमला, त्रायमान, धमासा और कुटकी प्रत्येक पदार्थ एक एक तोला लेकर बारीक पीसकर उसमें आठ तोले शुद्ध गूगल मिला देवे, फिर इस कल्कसे घृतको पकावे तो यह 'सोमराजीघृत' सिद्ध होताहै । जिसप्रकार जल अग्निको नष्ट करदेताहै उसीप्रकार यह घी श्वित्रको नष्ट करदेताहै । यह अठारह प्रकारके कोढोंकी उत्तम औषधि है । श्वित्र तथा कुष्ठआदि रोगोसे पीडित मनुष्योंके हितके लिये ब्रह्माने पूर्वकालमें इस सोमराजी घृतको बनायाथा ॥ १६२–१६५ ॥

इति कुष्ठाधिकारः सपूर्णः ।

---

# अथ शीतपित्तोदर्दकोठोत्कोठाऽधिकारः ।

## तत्र शीतपित्तादीनां सन्निकृष्टविप्रकृष्टनिदानं सम्प्राप्तिश्च ।

**शीतमारुतसम्पर्कात्प्रवृद्धौ कफमारुतौ ॥ पित्तेन सह सम्भूय बहिरन्तर्विसर्पतः ॥ ॥ १ ॥ पिपासाऽरुचिहृल्लासदेहसादाङ्गगौरवम् ॥ रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम् ॥ २ ॥**

**शीतमारुतसम्पर्कात् पित्तेन स्वहेतुदुष्टेन सम्भूय संगम्य बहिः त्वचि अन्तः रुधिरादौ विसर्पतः प्रसरतः ॥**

शीतल पवनके लगनेसे वृद्धिको प्राप्त हुए कफ और वायु अपने कारणोंसे दूषित हुए पित्तके साथ मिलकर त्वचा तथा रुधिर आदिमे फैलतेहैं उससे शीतपित्तादि रोग होतेह ॥ १ ॥ २ ॥

## अथ शीतपित्तपूर्वरूपम् ।

**पिपासारुचिहृल्लासदेहसादांगगौरवम् ॥ रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम् ॥ ३ ॥**

तृषा, अरुचि, उबकाई, शरीरमे ग्लानि, अगोमे भारीपन, और नेत्रोमे लाली यह शीतपित्तादिके पूर्व लक्षण है ॥ ३ ॥

## अथ शीतपित्तलक्षणम् ।

**वरटीदष्टसंस्थानः शोथः सञ्जायते बहिः॥ सकण्डूतोदबहुलश्छर्दिज्वरविदाहवान् ॥ उदर्दमिति तं विद्याच्छीतपित्तमथापरे ॥**

वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः ॥ ४ ॥

ततैयाके काटनेके समान, खुजलीयुक्त, बहुत पीडायुक्त, वमनसहित, ज्वरसयुक्त और दाहसहित जो त्वचामें चकत्ते पडजातेहैं वह शीतपित्त कहाजाताहै । और उसमें वायुकी अत्यत अधिकता होतीहै ॥ ४ ॥

## अथोददलक्षणम् ।

सोत्संगैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः ॥ शैशिरः श्लेष्मबहुल उदर्द इति कीर्तितः ॥ ५ ॥

सोत्संगैः मध्यनिम्नैः । शैशिरः शिशिरर्तुभवः ॥

बीचमें नीचा, लालीयुक्त, खुजलीवाले जो चकत्ते शिशिर ऋतुमें होतेहैं वे उदर्द कहेजातेहैं और उनमें कफकी अधिकता होतीहै ॥ ५ ॥

## कोठोत्कोठलक्षणम् ।

असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ॥ मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥ उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते ॥ ६ ॥

वमन बराबर ठीक खुलकर नहीं होनेसे, पित्त तथा कफ चढकर और ऊपरको उछलकर आयाहुआ अन्न रुककर खुजली और लालीयुक्त जो बहुतसे चकत्ते उत्पन्न होतेहैं वह कोठ कहेजातेहैं । एक चकत्ता नष्ट होकर दूसरा चकत्ता उत्पन्न होताहै इस कारण यह उत्कोठ और कोठ कहाजाताहै ॥ ६ ॥

## अथ शीतपित्तादिचिकित्सा ।

शीतपित्ते तु वमनं पटोलारिष्टवासकैः ॥ त्रिफलापुरकृष्णाभिर्विरेकश्च प्रशस्यते ॥ ॥ ७ ॥ अभ्यंगः कटुतैलेन सेकश्चोष्णेन वारिणा ॥ त्रिफलां क्षौद्रसंयुक्तां खादेच्च नवकार्षिकाम् ॥ ८ ॥ त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता ॥ गुटिका शीतपित्तार्शोभगन्दरवतां हिता ॥ ९ ॥ सिता त्रिकटुसंयुक्ता गुडमामलकैः सह ॥ यवानीं खादयेच्चापि सव्योषक्षारसंयुताम् ॥ १० ॥ आर्द्रकस्य रसः पेयः पुराणगुडसंयुतः ॥ शीतपित्तापहः श्रेष्ठो वह्निमान्द्यविनाशनः ॥ ११ ॥ सिद्धार्थरजनीकल्कैः प्रपुन्नाटतिलैः सह ॥ कटुतैलेन संमिश्रमेतदुद्वर्तनं हितम् ॥ १२ ॥ सगुडं दीप्यकं यस्तु खादेत्पथ्यान्नभुङ् नरः ॥ तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः ॥ १३ ॥ घृतं पीत्वा महातिक्तं शोणितं मोक्षयेत्तथा ॥ स्निग्धस्विन्नस्य संशुद्धिमादौ कोठे समाचरेत् ॥ उत्कोठे शुद्धदेहस्य कुष्ठघ्नीं कारयेत्क्रियाम् ॥ १४ ॥ निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राणि नरः प्रयुंज्यात् ॥ विस्फोटकण्डूक्रिमिशीतपितमुदर्दकोठौ च कफश्च हन्यात् ॥ १५ ॥

कडवे परवल, नीम और अडूसा इनसे वमन करावे और हरड, बहेडा, आमला, गूगल तथा पीपल इनसे विरेचन देवे, यह शीतपित्तपर हितकारी है । सरसोंके तेलकी मालिस करनेसे, गरम जलका सेचन करनेसे, सहतके साथ त्रिफलेको भक्षण करनेसे और नवकार्षिकनामक गूगल खानेसे शीतपित्त नष्ट होताहै ।

त्रिफला ३ भाग, गूगल ५ भाग और पीपल १ भाग, इनकी बनाई हुई गोली शीतपित्तवालेको, बवासीरवालेको तथा भगन्दर रोगियोंको हितकारी है । यह गोली ' नवकार्षिक गूगल ' इस नामसे कहीजातीहै ।

त्रिकुटेके साथ चीनी खानेसे, गुडके साथ आमलेको खानेसे और सोंठ, मिरच, पीपल तथा जवाखारके साथ अजवायनको खानेसे भी शीतपित्त नष्ट होजाताहै ।

अदरखके रसमें पुराना गुड मिलाकर पीनेसे शीतपित्त अच्छे प्रकारसे नष्ट होजाताहै । और मदाग्नि दीपन होतीहै ।

सरसों, हलदी, चकवड और तिल इनका कल्क बनाकर उसमें सरसोंका तेल मिला मालिसकरनेसे शीतपित्त नष्ट होजाताहै ।

जो मनुष्य गुडके साथ अजवायन खाय और पथ्य-भोजन करे तो सम्पूर्ण शरीरमे प्राप्त हुआ उदर्द सात दिनमे नष्ट होजाताहै।

महातिक्तक नामक घृतको पीकर रुधिर निकलवानेसे भी उदर्द नष्ट होजाता है। कोठ उत्पन्न हुआ होय तो प्रथम स्नेहन तथा स्वेदन क्रिया करके विरेचन आदिसे शोधन करे और उत्कोठ हुआ होय तो विरेचनादिसे शुद्ध करके पश्चात् कुष्ठ रोगोकी चिकित्सा करे।

नीमके पत्ते और आमलोंको एकत्र पीसकर घीमें मिलाकर नित्य खाय तो विस्फोटक, खुजली, कृमि, शीतपित्त, उदर्द, कोढ और कफ नष्ट होताहै॥ ७-१५॥

### अथार्द्रकखंडम्।

**आर्द्रकं प्रस्थमेकं स्याद्गोघृतं कुडवद्वयम्॥ गोदुग्धं प्रस्थयुगलं तदर्द्धा शर्करा मता॥ १६॥ पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम्॥ चित्रकश्च विडङ्गश्च मुस्तकं नागकेसरम्॥ १७॥ त्वगेलापत्रकर्चूरं प्रत्येकं पलमात्रकम्॥ विधाय पाकं विधिवत्खादेत्तत्पलसंमितम्॥ १८॥ इदमार्द्रकखण्डं हि प्रातर्भुक्तं व्यपोहति॥ शीतपित्तमुदर्दश्च कोठमुत्कोठमेव च॥ १९॥ यक्ष्माणं रक्तपित्तञ्च कासं श्वासमरोचकम्॥ वातगुल्ममुदावर्तं शोथं कण्डूं क्रिमीनपि॥ २०॥ दीपयेदुदरे वह्निं बलं वीर्यञ्च वर्द्धयेत्॥ वपुः पुष्टं प्रकुरुते तस्मात्सेव्यमिदं सदा॥ २१॥**

इति शीतपित्तोदर्दकोठोत्कोठाधिकारः।

अदरख ६४ तोले, गायका घी ३२ तोले, गायका दूध १२८ तोले और इससे आधी चीनी लेवे, पीपल, पीपलामूल, कालीमिरच, सोंठ, चीता, वायविडंग, नागरमोथा, नागकेसर, दालचीनी, इलायची, तेजपात और कचूर ये प्रत्येक पदार्थ चार चार तोले लेकर विधिपूर्वक पाक बनावे, यह आर्द्रकखड सिद्ध होताहै नित्य प्रातःकाल इसमेंसे चार तोले खाय तो इससे शीतपित्त, उदर्द, कोठ, उत्कोठ, क्षयरोग, रक्तपित्त, खाँसी, श्वास, अरुचि, वातगुल्म, उदावर्त, सूजन, खुजली और कृमि नष्ट होतेहैं। जठराग्नि दीपन होतीहै, बल तथा वीर्यकी वृद्धि होतीहै और शरीर पुष्ट होताहै इस कारण इस प्रयोगको सदैव सेवन करना चाहिये॥ १६-२१॥

इति शीतपित्तोदर्दकोठोत्कोठाऽधिकारः सपूर्णः।

---

## अथ विसर्पाधिकारः।

### तत्र विसर्पनिदानम्।

**लवणाम्लकटूष्णादिसेवनाद्दोषकोपतः॥ विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात्॥ १॥**

खारी, खट्टे, तीखे और गरम आदि पदार्थोंको सेवन करनेसे दोषोका कोप होकर विसर्प होताहै। यह विसर्प सात प्रकारका है और चारों ओर फैलजाताहै इस कारण यह विसर्प कहाजाताहै। हरे शाक और शिडाकी आदि पदार्थोंसे भी विसर्प होताहै ऐसा चरकाचार्य कहतेहैं॥१॥

### अथ विसर्पस्य सप्तधात्वम्।

**वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः॥ चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः॥ २॥**

वातज, पित्तज, कफज और सान्निपातिक ये चार और दो दो दोषोसे उत्पन्न हुए तीन इस प्रकार विसर्प सात प्रकारका जानना॥ २॥

**आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः॥ यस्तु कर्दमको घोरः स पित्तकफसम्भवः॥ ३॥**

वायुसे तथा पित्तसे उत्पन्न हुआ विसर्प आग्नेय कहाजाताहै, कफसे उत्पन्न हुआ विसर्प ग्रंथि कहाजाताहै और पित्तसे तथा कफसे उत्पन्न हुआ विसर्प कर्दमक कहाजाता है॥ ३॥

### अथ विसर्पस्य दोषदूष्ये।

**रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः॥ विसर्पाणां समुत्पत्तौ हेतवः सप्तधातवः॥ ४॥**

त्रयो मलाः वातपित्तकफाः दोषा दूषका इत्यर्थः। अन्यथा दोषा मला इत्यत्र पुनरुक्तिदोषो लगिष्यते ॥

रुधिर, लसीका, त्वचा और मांस यह दूषित होतेहैं और वे वात, पित्त तथा कफ इन तीनो दोषोंको दूषित करतेहैं इस लिये विसर्पकी उत्पत्तिमें ये सात धातु कारण रूप हैं ॥ ४ ॥

### अथ वातजविसर्पलक्षणम् ।

तत्र वातात्परीसर्पो वातज्वरसमव्यथः ॥ शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान् ॥ ५ ॥

परीसर्पो विसर्पः । वातज्वरसमव्यथः शिरोहृद्गात्रोदरशूलादियुक्तः । भेदः विदारणेनेव व्यथा । आयामः आकर्षणेनेव व्यथा ॥

वातके विसर्पमें वातज्वरकी समान मस्तकमें पीडा, हृदयमें गात्रोंमें तथा उदरमें शूल आदि होतेहैं, सूजन होतीहै, अंग फडकते हैं, सुई चुभोने सरीखी पीडा, चीरने सरीखी पीडा, आकर्षण ( खैंचने या चूसने ) की समान पीडा, और रोमांच होजातेहै ॥ ५ ॥

### अथ पित्तजविसर्पलक्षणम् ।

पित्ताद्रुतगतिः पित्तज्वरलिंगोऽतिलोहितः ॥ ६ ॥

द्रुतगतिः शीघ्रप्रसरणशीलः ॥

पित्तका विसर्प तत्काल फैलजाताहै, पित्तज्वरके सम्पूर्ण लक्षण होतेहैं और अत्यंत लाल होताहै ॥ ६ ॥

### अथ कफजविसर्पलक्षणम् ।

कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥ ७ ॥

कफका विसर्प खुजलीयुक्त, स्निग्ध और कफज्वरकी समान पीडा होतीहै ॥ ७ ॥

### अथ सान्निपातिकविसर्पलक्षणम् ।

सन्निपातसमुत्थश्च सर्वरूपसमन्वितः॥८॥

त्रिदोषज विसर्पमें ऊपर कहे तीनों दोषोंके लक्षण होते हैं ॥ ८ ॥

### अथ वातपित्तजाग्नेयाख्यविसर्पलक्षणम् ।

वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ॥ अस्थिभेदाग्निसदनतमकारोचकैर्युतः ॥ ९ ॥ करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ॥ यंयं देशं विसर्पश्च विसर्पति भवेत्ससः ॥ १० ॥ शान्ताङ्गाराऽसितो नीलो रक्तो वाशूपचीयते ॥ अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्रुतश्च सः ॥ ११ ॥ मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ॥ व्यथेताङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत् ॥ १२ ॥ हिध्माञ्च स गतोऽवस्थामीदृशीं लभते न ना ॥ क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ॥ १३ ॥ चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान ॥ दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निविसर्प उच्यते ॥ १४॥

स्फोटैः उपचीयत इति अन्वयः। मर्मानुसारी उदरहृदयानुसारी । हरेद्विसर्प इति अन्वयः । हिध्मां हिक्काम् ईरयेदुपर्युपरि प्रेरयेत् । निद्रां मरणरूपाम् । अश्नुते प्राप्नोति ॥

वात तथा पित्त इन दोषोंसे विसर्प उत्पन्न हुआ होय तो ज्वर, वमन, मूर्च्छा, अतीसार, तृषा, भ्रम, हडफूटन, अग्निकी मंदता, अंधकारदर्शन, अरुचि और सपूर्ण शरीर दहकते हुए अंगारोंकी समान व्याप्त हों, यह विसर्प शरीरके जिस जिस प्रदेशमे फैलताहै वही वही प्रदेश नीला वा लाल, अथवा बुझेहुए अंगारेकी समान काला होजाताहै और आगसे फूँकनेकी समान फफोले पडजाते हैं, यह विसर्प शीघ्रगतिवाला है, यह तत्काल उदर और हृदयमें गति करताहै इसकारण वायुकी प्रबलतावाला कहा जाताहै। यह विसर्प अंगको व्यथित करताहै, सज्ञाको नष्ट करदेताहै। निद्राको प्रेरणा करताहै, श्वासके वेगको और हिचकीको अधिक बढाताहै, इस अवस्थाको प्राप्तहुआ मनुष्य कहीं भी सुख नहीं पाता, पृथिवीमें, शयनमें, तथा

आसन आदिपर बैठनेमे कहीभी चैन नहीं मिलता, दिन रात तडफताहै, क्लेशको प्राप्त होताहै, मन तथा शरीरको क्लेश होनेसे उसके दुर्बोध निद्रा होतीहै, उस दुर्बोध निद्राके होनेसे मृत्यु होतीहै. इसको आग्नेय विसर्प कहतेहैं ॥ ९–१४ ॥

## अथ वातकफजग्रन्थिविसर्पलक्षणम् ।

कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ॥ रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम् ॥ १५ ॥ दूषयित्वा तु दीर्घाणां वृत्तस्थूलखरात्मनाम् ॥ ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ॥ ॥ १६ ॥ श्वासकासातिसारास्यशोषहिक्कावमिभ्रमैः ॥ मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ॥ इत्ययं ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपजः ॥ १७ ॥

कफेन स्वहेतुदुष्टेन । पवनोऽपि स्वहेतुदुष्टः । तेनायं वातश्लैष्मिकः । तं कफं बहुधा भित्त्वा रक्तं वा दूषयित्वा इति अन्वयः । त्वगादिकमिति रक्तस्य विशेषणम् ॥

अपने कारणोंसे कुपित हुए कफसे रुकी हुई और अपने कारणोंसे दूषित हुई वायु कफको अनेक प्रकारसे भेदकर बढेहुए रुधिरवाले मनुष्यके शरीरकी त्वचामें, शिराओंमें, स्नायुओंमें और मासमें प्राप्त हुए रुधिरको दूषित करके लम्बी, गोल, मोटी, लाल और खरखरी गाठोंकी पंक्तिको उत्पन्न करेहैं, इन गाठोंके होनेसे तीव्रवेदना, ज्वर, श्वास, खाँसी, अतिसार, शोष, हिचकी, वमन, भ्रम, मोह, विवर्णता, मूर्च्छा, अगोंका टूटना और जठराग्निकी मन्दता होतीहै. इन लक्षण और कारणोंसे यह ग्रन्थिवीसर्प वायु तथा कफके प्रकोपसे उत्पन्न हुआ कहा-जाताहै ॥ १५–१७ ॥

## अथ कफपित्तजकर्दमविसर्पलक्षणम् ।

कफपित्ताज्ज्वरस्तम्भौ निद्रातन्द्राशिरोरुजः ॥ अंगावसादविक्षेपप्रलापारोचकभ्रमाः ॥ १८ ॥ मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ॥ आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ १९ ॥ प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् ॥ पिडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ ॥ २० ॥ स्निग्धोऽसितो मेचकाभो मलिनः शोफवान्गुरुः ॥ गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ॥ २१ ॥ पंकवच्छीर्णमांसश्च स्पष्टस्नायुशिरागणः ॥ शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ २२ ॥

स च सर्पति एकदेशमिति अन्वयः । पिडकैः पीडाकारिभिः अवकीर्णः व्याप्तः । असितः कृष्णः । मेचकः रूक्षकृष्णः । प्राज्योष्मा प्रचुरोष्मा । स्पृष्टः क्लिन्नोऽवदीर्यते, स्पृष्टः सन्नार्द्रो भवति विदीर्यते च । पङ्कत्वक् कर्दमवर्णा त्वक् यत्र सः । शीर्णमांसः गलितमांसः अत एव स्पष्टस्नायुशिरागणः ॥

कफसे तथा पित्तसे उत्पन्न होनेवाला जब कर्दमक वीसर्प उत्पन्न होताहै तो उसमे ज्वर, जडता, निद्रा, तन्द्रा, मस्तकमे पीडा, अंगोमें ग्लानि, विक्षेप, ( हाथ पावोंको इधर उधर पटकना ) बकवाद, अरुचि, भ्रम, मूर्च्छा, अग्निकी मन्दता, हडफूटन, तृषा, इन्द्रियोंमें भारीपन, आमसहित दस्तका आना और मुखादि स्रोतोंमे कफ लिपटासा रहताहै । यह विसर्प एक प्रदेशको ग्रहण करताहै । विशेष करके आमाशयमे फैलजाताहै, इसमें विशेष पीडा नहीं होती । अत्यन्त पीली, लाल तथा सफेद, फुंसियोंसे व्याप्त हो, स्निग्ध, काला, रूखे काले रंगका, मलीन, सूजनयुक्त, भारी, गम्भीर पाकवाला, छूनेसे कालाहोजाय, फट जाय, कीचकी समान त्वचाका रग हो, मांसको गलाकर गिरा देवे, तथा स्नायु और शिराओंको स्पर्श करै और उसमे मुरदेकी समान वास आवे उसको कर्दमक विसर्प कहतेहैं ॥ १८–२२ ॥

## अथ सान्निपातिकविसर्पलक्षणम् ।

सन्निपातसमुत्थस्तु सर्वरूपसमन्वितः ॥ २३ ॥

सन्निपातसे उत्पन्न हुए विसर्पमें सब दोषोंके लक्षण होतेहैं ॥ २३ ॥

## अथ क्षतागंतुनिमित्तकाष्टमवीसर्पलक्षणम् ।

बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ॥ विसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितम् ॥ स्फोटैः शोथज्वररुजादाहाढ्यं श्यावशोणितम् ॥ २४ ॥

बाह्यहेतोः शस्त्रप्रहारव्यालदन्तनखाद्यागन्तुहेतोः । श्यावशोणितं कृष्णवर्णरक्तम् ॥

शस्त्र आदिके आघातसे, व्याघ्र सिंह आदि जानवरोंके दांत या नख आदिका लग जाना इत्यादि आगन्तुक कारणोंसे क्षत होकर प्रकोपको प्राप्त हुई वायु रुधिर और पित्तको प्रेरित करके विसर्पको उत्पन्न करेहै, यह विसर्प कुलथीके दानोंकी समान फुंसियोंसे व्याप्त होताहै, काले रुधिरयुक्त होता है और सूजन, ज्वर, वेदना तथा दाहसे अत्यन्त पीडित होताहै ॥ २४ ॥

## अथ विसर्पोपद्रवाः ।

ज्वरातिसारौ वमथुस्त्वङ्मांसदरणं क्लमः ॥ अरोचकाविपाकौ च विसर्पाणामुपद्रवाः ॥ २५ ॥

ज्वर, अतीसार, वमन, त्वचाका फटना, मांसका फटना, ग्लानि, अरुचि और पकना ये सब विसर्पोंके उपद्रव हैं ॥ २५ ॥

## अथ विसर्पस्य साध्यासाध्यता ।

सिद्ध्यन्ति वातकफपित्तकृता विसर्पाः सर्वात्मकः क्षतकृतश्च न सिद्धिमेति ॥ पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव ॥ २६ ॥

पित्तात्मकोऽञ्जनवपुः पित्तजः स च कज्जलवर्णः । सर्व एव साध्या अपि ॥

सान्निपातिक विसर्प और क्षतज विसर्प असाध्य हैं, पित्तसे उत्पन्नहुआ विसर्प जो काले रंगका होय तो असाध्य है, वातसे उत्पन्न हुआ विसर्प, कफसे उत्पन्न हुआ विसर्प और विना काले रंगका पित्तसे उत्पन्न हुआ विसर्प साध्य है, साध्य विसर्पभी जो मर्मस्थानोंमें उत्पन्न होयँ तो असाध्य जानने ॥ २६ ॥

## अथ विसर्पचिकित्सा ।

विरेकवमनालेपसेचनास्रविमोक्षणैः ॥ उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥ ॥ २७ ॥ रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला ॥ घृतक्षीरयुतो लेपो वातवीसर्पनाशनः ॥ २८ ॥

चन्दनमत्र रक्तं प्रयोज्यम् ॥

कशेरुशृङ्गाटकपद्मगुन्द्रैः सशैवलैः सोत्पलकर्दमैश्च ॥ वस्त्रान्तरैः पित्तकृते विसर्पे लेपो विधेयः सघृतः सुशीतः ॥ २९ ॥ त्रिफलापद्मकोशीरसमंगाकरवीरकम् ॥ नलमूलमनन्ता च लेपः श्लेष्मविसर्पके ॥ ३० ॥

समंगा लज्जालुः ॥

वातपित्तप्रशमनमग्निवीसर्पणे हितम् ॥ वातश्लेष्महरं कर्म ग्रन्थिवीसर्पणे हितम् ॥ ॥ ३१ ॥ पित्तश्लेष्मप्रशमनं हितं कर्दमसंज्ञके ॥ त्रिदोषजे क्रियां कुर्याद्विसर्पे त्रितयापहाम् ॥ ३२ ॥ शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठबालैः ॥ लेपो दशाङ्गः सघृतः प्रयोज्यो विसर्पकुष्ठज्वरशोथहारी ॥ ३३ ॥

नतं तगरम् । चन्दनं रक्तं ग्राह्यम् । इति दशांगो लेपः ॥

परिषेकाः प्रलेपाश्च शस्यन्ते पञ्चवल्कलैः ॥ पद्मकोशीरमधुकैश्चन्दनैर्वा विसर्पणे ॥ ३४ ॥ भूनिम्बवासाकटुकापटोलीफलत्रयीचन्दननिम्बसिद्धः ॥ विसर्पदाहज्वरशोथकण्डूविस्फोटतृष्णावमिहृत्कषायः ॥ ३५ ॥ कुष्ठेषु यानि सर्पींषि व्रणेषु विविधेषु च ॥

**विसर्पे तानि योज्यानि सेकालेपनभोजनैः ॥ ३६ ॥**

जिनसे दाह उत्पन्न न होय ऐसे विरेचन, वमन तथा लेपन, सेचन और रक्तमोक्षणसे विसर्पका उपचार करना चाहिये, और उपचार करते समय 'यह विसर्प किस दोषसे उत्पन्न हुआ है' ऐसा अवश्य ध्यान देना चाहिये।

रासना, नील कमल, देवदारु, लाल चन्दन, मुलैठी और खिरैटी इनको घी और दूधमें पीसकर लेप करनेसे वातका विसर्प नष्ट होजाताहै।

कसेरु, सिघाडे, पद्माख, गुन्द्रवटेर, सिवार, कमल और कींच इनको पीसकर घीमें मिलाकर वस्त्रमें रखकर शीतल लेप करनेसे पित्तका विसर्प नष्ट होजाताहै।

हरड, बहेडा, आमला, पद्माख, खस, लज्जावन्ती, कनेर, नरसलकी जड और लाल जवासा इनका लेप करनेसे कफका विसर्प नष्ट होताहै।

आग्नेय नामक विसर्प उत्पन्न होय तो वात तथा पित्तको शमन करना हितकारक है।

ग्रन्थि नामक विसर्प उत्पन्न हुआ होय तो वायुको तथा कफको शमन करना हितकारी है।

कर्दमक नामक विसर्प उत्पन्न हुआ होय तो पित्तको तथा कफको शमन करना हितकारी है।

सान्निपातिक जो विसर्प उत्पन्न होय तो त्रिदोषको शमन करनेवाली क्रिया करनी चाहिये।

सिरसकी छाल, मुलैठी, तगर, लालचन्दन, इलायची, बालछड, हलदी, दारुहलदी, कूट और सुगन्धवाला इन दश पदार्थोंको पीसकर, घीमें मिलाकर लेप करनेसे विसर्प, कोढ, ज्वर और सूजन नष्ट होजातीहै। इसको 'दशांग लेप' कहतेहैं।

पंचवल्कलोंका अथवा चन्दनका अथवा पद्माख, खस और मुलैठी इनके जलका सेचन करनेसे और गाढा अलेप करनेसे विसर्प नष्ट होजाताहै।

चिरायता, अडूसा, कुटकी, कडवे परवल, हरड, बहेडा, आमले, लाल चन्दन और नीम इनका क्वाथ बनाकर पीनेसे विसर्प, दाह, ज्वर, सूजन, खुजली, विस्फोटक, तृषा और वमन ये सब दूर होजातेहैं।

कुष्ठरोगमें तथा अनेक प्रकारके व्रणोपर जो जो घी कहेहैं उनका सेचन, लेपन और भोजनमें विसर्प रोगीको उपयोग करावे ॥ २७-३६ ॥

## अथ करंजतैलम्।

**करञ्जसप्तच्छदलांगलीकस्नुह्यर्कदुग्धानलभृंगराजैः ॥ तैलं निशामूत्रविषैर्विपक्वं विसर्पविस्फोटविचर्चिकाघ्नम् ॥ ३७ ॥**

करञ्ज, सतौना, कलिहारी, थूहरका दूध, आकका दूध, चीता, भागरा, हलदी, गोमूत्र और वत्सनाभ इनसे पकाये हुए तेलकी मालिस करनेसे विसर्प, विस्फोट और विचर्चिका नष्ट होजातीहै ॥ ३७ ॥

**कुष्ठामयस्फोटमसूरिकोक्तचिकित्सयाप्याशु हरेद्विसर्पान् ॥ सर्वान्विपक्वान्परिशोध्य धीमान्व्रणक्रमेणोपचरेद्यथोक्तम् ॥ ३८ ॥**

इति विसर्पचिकित्सा।

कुष्ठरोग, स्फोटरोग और मसूरिकारोगमें जो चिकित्सा कहीहै, उसी चिकित्सासे तत्काल विसर्पका हरण करै और बुद्धिमान् वैद्य पके हुए सब विसर्पोंका व्रणकी चिकित्सासे उपचार करै ॥ ३८ ॥

इति विसर्पाधिकारः सपूर्णः।

---

# अथ स्नायुरोगाधिकारः।

## तत्र स्नायुनिदानं लक्षणं च।

**शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ॥ भित्त्वैव तं क्षते तत्र सोष्ममांसं विशोष्य च ॥ १ ॥ कुर्यात्तन्तुनिभं सूत्रं तत्पिण्डैस्तक्रशक्तुजैः ॥ शनैःशनैः क्षताद्याति छेदात्तत्कोपमावहेत् ॥ ॥ २ ॥ तत्पाताच्छोथशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ॥ स स्नायुरिति विख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ३ ॥ बाह्वोर्यदि प्रमादेन त्रुटयते जंघयोरपि ॥ संकोचं खंजतां चापि छिन्नो नूनं करोत्यसौ ॥ ४ ॥**

हाथ, पाव, आदिशाखाओंमें कोपको-प्राप्त हुआ दोष विसर्पकी समान सूजनको उत्पन्न करैहै, उस सूजनको भेदकर उस क्षतके गरमही मासको सुखाकर तन्तुकी समान डोरेको उत्पन्न करैहै, उसको स्नायु रोग कहतेहैं और देशभाषामें उसका नाम नहरुवा है।

इस डोरेपर तक्रमे पिसे हुए सत्तुओकी लुपडी बांधनेसे धीरे धीरे क्षत ( घाव ) मेसे बाहर निकलताहै । यह डोरा जो टूट जाय तो भारी सूजनको उत्पन्न करे है । और संपूर्ण निकल जाय तो सूजन शांत होजाती है । यह रोग एक स्थानमें शांत होकर फिर दूसरे स्थानमें प्रकट होताहै । इस रोगकी चिकित्सा विसर्पकी समान करनी चाहिये । जो यह डोरा मोहसे बाहूमे अथवा पांवकी पिण्डलियोंमे टूट जाय तो हाथको टूँटा और पांवको लूला करदेताहै ॥ १–४ ॥

## अथ स्नायुरोगचिकित्सा ।

**स्नेहस्वेदप्रलेपादि कर्म कुर्याद्यथोचितम् ॥ रामठं शीततोयेन पीतं स्नायुकरोगनुत् ॥ ॥ ५ ॥ स्वेदात्स्नायुकमत्युग्रं भेकः कांजिकसाधितः ॥ तद्वद्बब्बूलजं बीजं पिष्टं हन्ति प्रलेपनात् ॥ ६ ॥ गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ॥ पिबेत्स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ ७ ॥ मूलं सुपव्या हिमवारिपिष्टं पानादिदं तन्तुकरोग्रमुग्रम् ॥ शान्ति नयेत्सव्रणमाशु पुंसां गन्धर्वगन्धेन घृतेन पीत्वा ॥ ८ ॥**

गन्धर्वगन्धेन गन्धर्वगन्धोऽस्यास्तीति स गंधर्वगंधः अश्वगन्धः तेन ॥

**अतिविषमुस्तकभार्ङ्गीविश्वौषधपिप्पलीविभीतक्यः ॥ चूर्णमिदं तन्तुघ्नं पुंसामुष्णेन वारिणा पीतम् ॥ ९ ॥ शिग्रुमूलदलैः पिष्टैः कांजिकेन ससैन्धवैः ॥ लेपनं स्नायुकव्याधेः शमनं परमं मतम् ॥ ॥ १० ॥ अहिंस्रमूलकल्केन तोयपिष्टेन यत्नतः ॥ लेपसम्बन्धनात्तन्तुर्निःसरेन्नैव संशयः ॥ ११ ॥**

इति स्नायुकस्य चिकित्सा ।

इस रोगपर स्नेहन, स्वेदन और प्रलेपादि योग्य चिकित्सा करनी चाहिये । हींगको पीसकर शीतल जलके साथ पीनेसे स्नायुरोग नष्ट होताहै ।

मैंढकको कांजीमें पकाकर उसका स्वेद देनेसे स्नायुकी उग्र पीडा शांत होतीहै ।

बबूरके बीजोंको पीसकर लेप करनेसे स्नायुकी पीडा शांत होतीहै ।

तीन दिनतक गायका घी पीकर पश्चात् तीन दिनतक निर्गुण्डीका स्वरस पीनेसे अत्यन्त उग्र स्नायुकी पीडा भी अवश्य नष्ट होजातीहै ।

कलौंजीकी जडको शीतल जलमे पीसकर पीनेसे स्नायुरोग ( नहरुआ ) अवश्य नष्ट होजाताहै । अथवा असगन्धसे पकाये हुए घृतको पीनेसे व्रणसहित उग्र स्नायुरोग नष्ट होताहै ।

अतीस, नागरमोथा, भारंगी, सोंठ, पीपल और बहेडा इनका चूर्ण करके गरमजलके साथ पीनेसे मनुष्योंका स्नायुरोग दूर होताहै ।

सैंजिनेकी जड और पत्तोको सैंधेनिमकके साथ कांजीमें पीसकर लगानेसे स्नायुरोग अवश्य नष्ट होजाताहै । अहिंस्रा ( हींस ) की जडको जलमे पीसकर लेप करनेसे स्नायु निकलजाताहै इसमें संशय नहीं ॥ ५–११ ॥

इति स्नायुरोगाधिकारः संपूर्णः ।

---

# अथ विस्फोटकाधिकारः ।

## तत्र विस्फोटकविप्रकृष्टसन्निकृष्टनिदानम् ।

**कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च ॥ तथर्तुदोषेण विपर्ययेण कुप्यन्ति दोषाः पवनादयस्तु ॥ १ ॥ त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च ॥ घोरान्कुर्वन्ति विस्फोटान्सर्वाञ्ज्वरपुरःसरान् ॥ २ ॥**

**ऋतुदोषेण ऋतुहेतुकशीतोष्णादीनामतियोगेन । विपर्ययेण ऋतूचिताहारविहारवैपरीत्येन त्वचमाश्रित्य त्वचि विस्फोटान्कुर्वन्ति इत्यर्थः । ज्वरपुरःसराञ्ज्वरपूर्वान् ॥**

तीखे ( चरपरे ), खट्टे, तीक्ष्ण, उष्ण, दाहकारक, रूक्ष, और खारी पदार्थोंसे, अजीर्णसे, भोजनपर भोजन करनेसे, धूपका सेवन करनेसे और ऋतुओंके फेरफारमे और उन ऋतुओंमे आहार-

विहारकी विपरीततासे कोपको प्राप्त हुए वातादिदोष रुधिर, मांस तथा अस्थियोंको दूषित करके ज्वरको उत्पन्न कर त्वचामें सब प्रकारके विस्फोटोंको उत्पन्न करें हैं ॥ १ ॥ २ ॥

## अथ विस्फोटसामान्यलक्षणम्।

**अग्निदग्धा इव स्फोटाः सज्वरा रक्तपित्तजाः ॥ क्वचित्सर्वत्र वा देहे विस्फोटा इति ते स्मृताः ॥ ३ ॥**

**रक्तपित्तजाः एतेन सर्वेषु विस्फोटकेषु रक्तपित्तयोः प्रधानकारणत्वम्। यथा शूलेषु वातस्य तथा वातानुगतिरपि बोद्धव्या। तथा च भोजः—**

**यदा रक्तश्च पित्तश्च वातेनानुगतं त्वचि ॥ अग्निदग्धनिभान्स्फोटान्कुरुतः सर्वदेहगान् ॥ ४ ॥**

ज्वरयुक्त रुधिर तथा पित्तसे उत्पन्न हुआ अग्निसे जलाये हुएकी समान ऐसा फोडा शरीरके किसी एक प्रदेशमें अथवा सम्पूर्ण शरीरमें उत्पन्न हो उसको विस्फोटक कहते हैं। जिस प्रकार सर्वप्रकारकी पीडाओंमें वायुका प्राधान्य है उसीप्रकार सर्वप्रकारके विस्फोटकोंमें रुधिर और पित्तको प्रधानता है, विस्फोटकोंको उत्पन्न करनेमें रुधिर तथा पित्तको वायुका सम्बन्ध भी होताहै ऐसा जानना। क्योंकि भोज कहताहै कि "जब रुधिर तथा पित्त वायुके सम्बन्धी होते हैं तब शरीरके एक प्रदेशमें अथवा सर्वदेहकी त्वचामें अग्निसे जले हुएकी समान फोडोंको उत्पन्न करे हैं" ॥ ३ ॥ ४ ॥

## अथ वातजविस्फोटलक्षणम्।

**शिरोरुक् शूलभूयिष्ठं ज्वरतृट्पर्वभेदनम् ॥ सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥ ५ ॥**

**शूलं तोदरूपम् ॥**

मस्तकमें सुई चुभोने सरीखी विशेष पीडा, ज्वर, तृषा, संधियोंका टूटना और कालापन यह वातज विस्फोटके लक्षण जानने ॥ ५ ॥

## अथ पित्तजविस्फोटकलक्षणम्।

**ज्वरदाहरुजापाकस्रावतृष्णासमन्वितम् ॥ पीतलोहितवर्णश्च पित्तविस्फोटलक्षणम् ॥ ६ ॥**

ज्वर, दाह, वेदना, पकना, स्राव, तृषा और पीला तथा लालीपन यह पित्तज विस्फोटकके लक्षण जानने ॥ ६ ॥

## अथ कफजविस्फोटकलक्षणम्।

**छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुताः ॥ यस्मिन्नरुक् चिरात्पाकः स विस्फोटः कफात्मकः ॥ ७ ॥**

**जाड्यम् जडत्वमंगानाम् ॥**

वमन, अरुचि, अंगोमें जडता, खुजली, कठिनता, पाडुवर्ण, पीडारहित, और बहुत समयमें पकना ये कफज विस्फोटकके लक्षण जानने ॥ ७ ॥

## अथ कफपित्तजविस्फोटकलक्षणम्।

**कण्डूर्दाहो ज्वरश्छर्दिरेतैश्च कफपैत्तिकः ॥ ८ ॥**

खुजली, दाह, ज्वर और वमन, यह कफ तथा पित्त सम्बन्धी विस्फोटकके लक्षण जानने ॥ ८ ॥

## अथ वातपित्तजविस्फोटकलक्षणम्।

**वातपित्तकृतो यस्तु तत्र स्यात्तीव्रवेदना ॥ ९ ॥**

वायु तथा पित्त इनसे उत्पन्न हुए विस्फोटकमें तीव्र वेदना होती है ॥ ९ ॥

## अथ वातकफजविस्फोटकलक्षणम्।

**कण्डूस्तैमित्यगुरुभिर्जानीयात्कफवातिकम् ॥ १० ॥**

खुजली, अंगोमें जडता और भारीपन इन लक्षणोंसे वायु तथा कफ दोनोंका विस्फोटक जानना ॥ १० ॥

## अथ त्रिदोषजविस्फोटकलक्षणम्।

**मध्यनिम्नोन्नतान्तश्च कठिनः स्वल्पपाकवान् ॥ दाहरागतृषामोहच्छर्दिमूर्च्छारु-**

जाज्वराः ॥ प्रलापो वेपथुर्मूर्च्छा सोऽसाध्यश्च त्रिदोषजः ॥ ११ ॥

मोहो विपरीतं ज्ञानम् । मूर्च्छा सर्वथा ज्ञानशून्यता ॥

वीचमें नीचा, चारों ओर ऊंचा, कठिन, थोडे पकनेवाला, दाह, लाली, तृषा, मोह, वमन, मूर्छा, वेदना, ज्वर, बकवाद कंप और अत्यन्त वेहोशी इनसे जानना कि तीनो दोषोंसे उत्पन्न हुआ है, यह विस्फोटक असाध्य है ॥ ११ ॥

## अथ रुधिरजन्यविस्फोटकलक्षणम् ।

वेदितव्याश्च रक्तेन पैत्तिकेन च हेतुना ॥ गुञ्जाफलसमा रक्ता रक्तस्रावा विदाहिनः॥ न ते सिद्धिं समायान्ति सिद्धैर्योगशतैरपि ॥ १२ ॥

पैत्तिकेन हेतुना पित्तस्य हेतुना कट्वादिना रक्तपित्तस्य तुल्यत्वात् । सिद्धैर्योगशतैरपि ते सिद्धिं न समायान्ति ॥

पित्तको कुपित करनेवाले जो कारण हैं उनही कारणोंसे रुधिर भी कुपित होताहै. इसप्रकार कुपित रुधिरसे उत्पन्न हुए विस्फोटक चौंटलीकी समान लाल, लाल स्राववाले और दाह करनेवाले होते हैं । यह विस्फोटक सैंकडो सिद्ध योगोंसे भी आराम नहीं होते । तीखे आदि जो पदार्थ पित्तको कुपित करनेके कारण हैं उनसेही रुधिर भी कुपित होना कहा है, उसका कारण यह है कि रुधिर और पित्त समान हैं ॥ १२ ॥

## अथ विस्फोटकभेदाः ।

एते चाष्टविधा बाह्या आन्तरोऽपि भवेदयम् ॥ तस्मिन्नन्तर्व्यथा तीव्रा ज्वरयुक्ताऽभिजायते ॥१३ ॥ यस्मिन्बहिर्गते स्वास्थ्यं न वा तस्य बहिर्गतिः ॥ तत्र वातिकविस्फोटक्रिया कार्या विजानता॥१४॥

बाहरके विस्फोटक आठ प्रकारके हैं, कि जिनका निरूपण ऊपर किया है । जिस प्रकार विस्फोटक बाहर होते हैं उसी प्रकार एक भीतर भी होताहैं । और वह नवमा है । भीतरका विस्फोटक होय तो भीतर तीव्रपीडा होती है, और ज्वरभी होताहै । यह विस्फोटक जो बाहर निकले तो स्वस्थता होती है परन्तु समयपर यह विस्फोटक बाहर नहीं निकलता। इस विस्फोटकमे समझकर वैद्य वातसम्बन्धी विस्फोटककी समान चिकित्सा करे ॥ १३ ॥ १४ ॥

## अथ विस्फोटकोपद्रवाः ।

तृट्श्वासमांससङ्कोचदाहहिक्कामदज्वराः ॥ विसर्पमर्मसंरोधास्तेषामुक्ता उपद्रवाः १५॥

मांससंकोचः मांसस्य शठितत्वम् । मर्मसंरोधो मर्मव्यथा । तेषां विस्फोटानाम् उपद्रवाणां लक्षणान्तरं केचित्पठन्ति ।

हिक्का श्वासोऽरुचिस्तृष्णा सांगमर्दो हृदि व्यथा । विसर्पज्वरहल्लासा विस्फोटानामुपद्रवाः ॥ १६ ॥

तृषा, श्वास, मासका सडना, दाह, हिचकी, मद, ज्वर, विसर्प, और मर्मोमे व्यथा ये विस्फोटकके उपद्रव जानने ।

कितनेक वैद्य विस्फोटकोंके उपद्रवोंको प्रकारान्तरसे कहते हैं । हिचकी, श्वास, अरुचि, तृषा, अगोंका टूटना, हृदयमे व्यथा, विसर्प, ज्वर और उबकाई यह विस्फोटकके उपद्रव हैं ॥ १५ ॥ १६ ॥

## अथ विस्फोटकस्य साध्यत्वं कष्टसाध्यासाध्यता च ।

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ॥ सर्वरूपान्वितो घोरो ह्यसाध्यो भूर्युपद्रवः ॥ १७ ॥

एक दोषसे उत्पन्न हुआ विस्फोटक साध्य है, दो दोषोंसे उत्पन्न हुआ विस्फोटक कष्टसाध्य है, सर्व दोषोंके लक्षणोंसे युक्त और अनेक उपद्रवयुक्त विस्फोटक भयकर है और असाध्य है ॥ १७ ॥

## अथ विस्फोटकचिकित्सा ।

विस्फोटे लंघनं कार्यं वमनं पथ्यभोजनम् ॥ यथादोषबलं वीक्ष्य युक्तमुक्तं विरेचनम् ॥ १८ ॥ जीर्णशालियवा मुद्गा

मसूराश्चाढकी तथा ॥ एतान्यन्नानि विस्फोटे हितानि मुनयोऽब्रुवन् ॥ १९ ॥ द्वे पञ्चमूल्यौ रास्ना च दार्व्युशीरं दुरालभा ॥ गुडूची धान्यकं मुस्तमेषां क्वाथं पिबेन्नरः ॥ विस्फोटान्नाशयत्याशु समीरणनिमित्तकान् ॥ २० ॥ द्राक्षाकाश्मर्यखर्जूरपटोलारिष्टवासकैः ॥ कटुकालाजदुःस्पर्शैः सितायुक्तं तु पैत्तिकम् ॥ २१ ॥ भूनिम्बसवचावासात्रिफलेन्द्रजवत्सकैः ॥ पिचुमर्दपटोलाभ्यां कफजे मधयुक्शृतम् ॥ २२ ॥ किराततिक्तकारिष्टयष्ट्याह्वाम्बुदवासकैः ॥ पटोलपर्पटोशीरत्रिफलाकौटजान्वितैः ॥ क्वथितैर्द्वादशांगन्तु सर्वविस्फोटनाशनम् ॥ २३ ॥ विस्फोटव्याधिनाशाय तण्डुलाम्बुप्रयोजितैः ॥ बीजैः कुटजवृक्षस्य लेपः कार्यो विजानता ॥ २४ ॥ छिन्नापटोलभूनिम्बवासकारिष्टपर्पटैः ॥ खदिराब्दयुतैः क्वाथो हन्ति विस्फोटकज्वरम् ॥ २५ ॥ चन्दनं नागपुष्पञ्च सारिवा तण्डुलीयकम् ॥ शिरीषवल्कलं जातीलेपः स्याद्दाहनाशनम् ॥ २६ ॥ उत्पलं चन्दनं लोध्रमुशीरं सारिवाद्वयम् ॥ जलपिष्टेन लेपेन स्फोटदाहार्तिनाशनम् ॥ २७ ॥ पुत्रजीवस्य मज्जानं जले पिष्ट्वा प्रलेपयेत् ॥ कालस्फोटं विषस्फोटं सद्यो हन्ति सवेदनम् ॥ २८ ॥ वक्षग्रन्थिं गलग्रथिं कर्णग्रन्थिश्च नाशयेत् ॥ हन्याच्च स्फोटकं ताम्रं पुत्रजीवो विनाशयेत् ॥ २९ ॥

इति विस्फोटस्य चिकित्सा।

दोषका बलाबल विचार कर लघन, वमन और पथ्यभोजन करावे तथा विरेचन देवे, यह विस्फोटकपर हितकारी है।

पुराने लाल चावल, जौ, मूग, मसूर और अडहर यह सब अन्न विस्फोटकरोगीको हितकारी हैं, ऐसामुनियोंने कहा है।

वृहत्पचमूल, लघुपंचमूल, रासना, दारुहलदी, खस, धमासा, गिलोय, धनियाँ और नागरमोथा इनका क्वाथ पीनेसे वातज विस्फोटक नष्ट होताहै।

दाख, कुम्भेर, खजूर, परवल, नीम, अडूसा, कुटकी, धानकी खीलें और धमासा इनका क्वाथ बनाकर मिश्री डालकर पीनेसे पित्तजन्य विस्फोटक नष्ट होताहै।

चिरायता, वच, अडूसा, हरड, बहेडा, आमला, इन्द्रजौ, कुडा, नीम और कडवे परवल इनका क्वाथ बनाकर सहत डालकर पीनेसे कफजन्य विस्फोटक नष्ट होजाताहै।

चिरायता, नीम, मुलैठी, नागरमोथा, अडूसा, कडवे परवल, पित्तपापडा, खस, हरड, बहेडा, आमले और इन्द्रजौ इन बारह औषधियोंका क्वाथ बनाकर पीनेसे सर्वप्रकारके विस्फोटक नाश होतेहैं। इसको द्वादशांग क्वाथ कहतेहैं।

इन्द्रजौको चावलोंके जलमें पीसकर पीनेसे विस्फोटक नष्ट होतेहैं।

गिलोय, कडवे परवल, चिरायता, अडूसा, नीम, पित्तपापडा, खैर और नागरमोथा इनका क्वाथ बनाकर पीनेसे विस्फोटक ज्वर नष्ट होताहै।

लालचदन, नागकेसर, सारिवा, चौंलाई, सिरसकी छाल और चमेली इनका लेप करनेसे विस्फोटकका दाह दूर होजाताहै।

कमल, लालचदन, लोध, खस और दोनो प्रकारकी सारिवा इनको जलमें पीसकर लेप करनेसे विस्फोटककी दाहकी पीडा शान्त होजाती है।

पतिजियाकी मींगको जलमें पीसकर लेप करनेसे काले फोडे, विषैले फोडे, और उनकी वेदना तत्काल शान्त होजाती है।

जियापोतेका लेप करनेसे कोखकी गांठ, गलेकी गांठ, कानकी गाठ और लाल फोडे तत्काल नष्ट होजाते है ॥ १८-२९ ॥

इति विस्फोटकाधिकारः सपूर्णः।

---

# अथ फिरंगरोगाधिकारः।

## तत्र फिरंगशब्दनिरुक्तिः।

फिरंगसंज्ञके देशे बाहुल्येनैव यद्भवेत् ॥

स्मात्फिरंग इत्युक्तो व्याधिर्व्याधिवि-शारदैः ॥ १ ॥

यह रोग फिरंग नामक देशमें विशेष करके होताहै, इस कारण व्याधियोंको जाननेवाले प्रवीण वैद्य इसको फिरंग रोग कहतेहैं ॥ १ ॥

## अथ फिरंगनिदानम् ।

गन्धरोगः फिरंगोऽयं जायते देहिनां ध्रुवम्॥ फिरंगिणोऽङ्गसंसर्गात्फिरंगिण्याः प्रसंगतः ॥ २ ॥ व्याधिरागन्तुजो ह्येष दोषाणामत्र संक्रमः ॥ भवेत्तल्लक्षयेद्देषां लक्षणैर्भिषजांवरः ॥ ३ ॥
फिरंगिण्याः प्रसंगत इति विशेषार्थम् ॥

यह गंधरोग अर्थात् गंधसे होनेवाला रोग है, यह फिरंगी मनुष्योंके संसर्गसे और फिरंगदेशकी स्त्रियोंके प्रसंगसे उत्पन्न होताहै ।

ऐसा होनेसे यह रोग आगन्तुक है और इसमें दोषोंका सम्बन्ध पीछे होता है । उत्तम वैद्य "कौनसे दोषकी बाहुल्यतासे यह रोग हुआ है" उन दोषोंके लक्षण अपनी बुद्धिके अनुसार जाने ।

फिरंगी देशकी स्त्रियोंके साथ प्रसंग करनेसे यह रोग विशेष करके होताहै इस सूचनानुसार प्रथम वचनसे समझानेपर भी ठीक रीतिसे कहाहै ॥ २ ॥ ३ ॥

## अथ फिरंगरोगपूर्वरूपम् ।

फिरंगस्त्रिविधो ज्ञेयो बाह्य आभ्यन्तरस्तथा ॥ बहिरन्तर्भवश्चापि तेषां लिंगानि च ब्रुवे ॥ ४ ॥ तत्र बाह्यः फिरंगः स्याद्विस्फोटसदृशोऽल्परुक् ॥ स्फुटितो व्रणवद्वेद्यः सुखसाध्योऽपि स स्मृतः ॥ ॥ ५ ॥ सन्धिष्वाभ्यन्तरः स स्यादामवात इव व्यथाम् ॥ शोथञ्च जनयेदेष कष्टसाध्यो बुधैः स्मृतः ॥ ६ ॥

बाहरका, भीतरका और बाहर तथा भीतर इस प्रकार यह रोग तीन प्रकारका है अब इनके लक्षण कहता हूँ । बाहरका फिरंग विस्फोटककी समान होताहै, थोडी पीडा होतीहै और व्रणकी समान फूटताहै इस बाहरके फिरंगरोगको वैद्य सुखसाध्य कहतेहैं । भीतरका फिरंग संधियोंमे होताहै, आमवातकी समान पीडा करताहै और सूजनको उत्पन्न करताहै । इस भीतरके फिरंगको वैद्य कष्टसाध्य कहतेहैं ( तीसरे प्रकारके फिरंगमें दोनों प्रकारके लक्षण होतेहैं ) ॥ ४–६ ॥

## अथ फिरंगस्योपद्रवाः ।

कार्श्यं बलक्षयो नासाभंगो वह्नेश्च मन्दता ॥ अस्थिशोषोऽस्थिवक्रत्वं फिरंगोपद्रवा अमी ॥ ७ ॥

कृशता, बलका नाश, नाकका बैठ जाना, अग्निकी मंदता, अस्थियोंमे शोष, और हड्डियोंका टेढा तिरछा होजाना, यह फिरंगके उपद्रव जानने ॥ ७ ॥

## अथ फिरंगस्य साध्यत्वं कष्टसाध्या साध्यता च ।

बहिर्भवो भवेत्साध्यो नवीनो निरुपद्रवः॥ आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः ॥ ८ ॥ बहिरन्तर्भवो जीर्णो क्षीणस्योपद्रवैर्युतः ॥ व्याप्तो व्याधिरसाध्योऽयमित्याहुर्मुनयः पुरा ॥ ९ ॥

बाहरका उत्पन्न हुआ नवीन और उपद्रव रहित फिरंग साध्य है । भीतरका फिरंग कष्टसाध्य है, बाहर तथा भीतर इन दोनों प्रकारसे उत्पन्न हुआ, क्षीण शरीरवाले मनुष्योंके उत्पन्न हुआ, पुराना, उपद्रवयुक्त और व्याप्त हुआ फिरंग रोग असाध्य है, ऐसा प्राचीन ऋषियोंने कहा है ॥ ८ ॥ ९ ॥

## अथ फिरंगचिकित्सा ।

### तत्र कर्पूररसः ।

फिरंगसंज्ञकं रोगं रसः कर्पूरसंज्ञकः ॥ अवश्यं नाशयेदेतद्रूचुः पूर्वचिकित्सकाः ॥ १० ॥ लिख्यते रसकर्पूरप्राशने विधिरुत्तमः ॥ अनेन विधिना खादेन्मुखे शोथं न विन्दति ॥ ११ ॥ गोधूमचूर्ण सन्नीय विदध्यात्सूक्ष्मकूपिकाम् ॥ तन्मध्ये निक्षिपेत्सूतं चतुर्गुंजामितं भिषक् ॥ १२ ॥ ततस्तु गुटिकां

कुर्याद्यथा न दृश्यते बहिः ॥ सूक्ष्मचूर्णे लवंगस्य तां वटीमवधूलयेत् ॥ १३ ॥ दन्तस्पर्शो यथा न स्यात्तथा तामम्भसा गिलेत् ॥ ताम्बूलं भक्षयेत्पश्चाच्छाकाम्ललवणांस्त्यजेत् ॥ श्रममातपमध्वानं विशेषात्स्त्रीनिषेवणम् ॥ १४ ॥

रसकपूरको खानेसे फिरंगरोग अवश्य नष्ट होजाताहै, ऐसा प्राचीन वैद्योंने कहा है। अब रसकपूर खानेकी विधि कहतेहैं कि जिस प्रकार खानेसे मुखमें छाले नहीं पडते। गेहूँके आटेको पानीमें सानकर उसकी छोटी २ कुलिये बनालेवे उनमें वैद्य चार २ रत्तीभर रसकपूर रखकर गोलियां बनालेवे जिससे कि पारा बाहर न दीखे फिर उन गोलियोंको लौंगके बारीक चूर्णमें लुटाकर ऐसी रीतिसे पानीके साथ निगलजावे कि जिससे दांत न लगे और इसके पश्चात् नागरवेलका पान खाय। रसकपूरको खानेवाला मनुष्य शाक, खारीपदार्थ, खट्टे पदार्थ, परिश्रम, धूप, मार्ग और मैथुनको त्यागदेवे ॥ १०–१४ ॥

## अथ सप्तशालिवटी।

पारदष्टङ्कमानः स्यात्खदिरष्टंकसंमितः ॥ आकारकरभश्चापि ग्राह्यष्टंकद्वयोन्मितः ॥ टंकत्रयोन्मितं क्षौद्रं खल्वे सर्वं विनिक्षिपेत् ॥ १५ ॥ संमर्द्य तस्य सर्वस्य कुर्यात्सप्तवटीर्भिषक् ॥ स रोगी भक्षयेत्प्रातरेकैकामम्बुना वटीम् ॥ वर्जयेदम्ललवणं फिरङ्गस्तस्य वश्यति ॥ १६ ॥

पारा २४ रत्ती, कत्था २४ रत्ती, अकरकरा ४८ रत्ती और सहत ७२ रत्ती, इन सबको खरलमें डालकर खूब पीसकर सात गोलिया बनालेवे, प्रातःकाल एक एक गोली जलके साथ खाय और खट्टे तथा खारी पदार्थोका त्यागकर देवे तो फिरंगरोग नष्ट होजाताहै। यह गोली सप्तशालिवटी इस नामसे कहीजातीहै ॥ १५ ॥ १६ ॥

## अथ धूमप्रयोगः।

पारदः कर्षमात्रः स्यात्तावानेव हि गन्धकः ॥ तण्डुलाश्चाक्षमात्राः स्युरेषां कुर्वीत कज्जलीम् ॥ १७ ॥ तस्याः सप्तवटीः कुर्यात्ताभिर्धूमं प्रयोजयेत् ॥ दिनानि सप्त तेन स्यात्फिरंगान्तो न संशयः ॥ १८ ॥

पारा १ तोला, गन्धक १ तोला और चावल १ तोला इनकी कज्जली बनाकर सात गोलियें बनालेवे सात दिनतक इन गोलियोका धुआँ पीनेसे फिरंगरोग नष्ट होजाताहै ॥ १७ ॥ १८ ॥

पीतपुष्पबलापत्ररसैष्टंकमितं रसम् ॥ हस्ताभ्यां मर्दयेत्तावद्यावत्सूतो न दृश्यते ॥ ततः संस्वेदयेद्धस्तावेवं वासरसप्तकम् ॥ ॥ १९ ॥ त्यजेल्लवणमम्लञ्च फिरङ्गस्तस्य नश्यति ॥ चूर्णयेन्निम्बपत्राणि पथ्यानिम्बाष्टमांशिकाः ॥ धात्री च तावती रात्री निम्बषोडशभागिका ॥ २० ॥ शाणमानमिदं चूर्णमश्नीयादम्भसा सह ॥ फिरंगं नाशयत्येव बाह्यमाभ्यन्तरं तथा ॥ २१ ॥

चौवीस रत्ती पारेको पीले फूलकी खिरैंटीके पत्तोंके रसमें मिलाकर हाथोंसे ऐसा मले कि पारा न दीखे। फिर दोनों हाथोंको अग्निसे सेके यह विधि सात दिनतक करे और खारी तथा खट्टे पदार्थोंको त्यागदेवे तो फिरंगरोग अवश्य नष्ट होजाताहै।

नीमके पत्तोंका चूर्णकर उसमें आठवेंभाग हरडका चूर्ण मिलावे, आठवां भाग आमलोका चूर्ण मिलावे और सोलहवा भाग हलदीका चूर्ण डाले। इसमेसे नित्य चौवीस रत्ती चूर्ण जलके साथ खाय तो बाहरका तथा भीतरका फिरंगरोग अवश्य नष्ट होजाताहै ॥ १९–२१ ॥

चोपचीनीभवं चूर्णं शाणमानं समाक्षिकम् ॥ फिरंगव्याधिनाशाय भक्षयेल्लवणं त्यजेत् ॥ २२ ॥ लवणं यदि वा त्यक्तुं न शक्नोति यदा जनः ॥ सैन्धवं स हि भुञ्जीत मधुरं परमं हितम् ॥ २३ ॥

चौवीस रत्ती चोबचीनीके चूर्णको सहतमें मिलाकर खावे और इसपर निमकका त्याग करदेवे तो फिरंगरोग नष्ट

होजाताहै। जो निमकका त्याग न करसके तो उसके अभावमें सैंधानिमक खाय कारण यह है कि सैंधानिमक स्वादिष्ठ और अत्यन्त हितकारी है ॥ २२ ॥ २३ ॥

पारदः कर्षमात्रः स्यात्तावन्मात्रं तु गन्धकम् ॥ तावन्मात्रस्तु खदिरस्तेषां कुर्याच्च कज्जलीम् ॥ रजनीकेसरत्रुटयो जीरयुग्मं यवानिका ॥ २४ ॥ चन्दनद्वितयं कृष्णा वांसी मांसी च पत्रकम् ॥ अर्द्धकर्षमितं सर्वं चूर्णयित्वा च निक्षिपेत् ॥ तत्सर्वं मधुसर्पिभ्यां द्विपलाभ्यां पृथक्पृथक् ॥ ॥ २५ ॥ मर्दयेदथ तत्खादेदर्द्धकर्षमितं नरः ॥ व्रणः फिरंगरोगोत्थस्तस्यावश्यं विनश्यति ॥ २६ ॥ अन्योऽपि चिरजातोऽपि प्रशाम्यति महाव्रणः ॥ एतद्भक्षयतः शोथो मुखस्यान्तर्न जायते ॥२७॥ वर्जयेदत्र लवणमेकविंशतिवासरान् ॥

इति फिरङ्गरोगाधिकार.।

पारा १ तोला, गन्धक एक तोला और पपरिया कत्था एक तोला लेकर कजली बनावे, फिर हलदी, नागकेसर, छोटी इलायची, बडी इलायची, जीरा, कालाजीरा, अजवायन, चन्दन, लालचन्दन, पीपल, वंशलोचन, बालछड और तेजपात इन सबको एकत्र पीसकर आधा-तोला चूर्ण उक्त कजलीमें मिलालेवे फिर इन सबको आठ-तोले सहतमें और आठ तोले घीमें मिलाकर इसमेंसे छे मासे नित्य खाय तो फिरंगरोग अवश्य नष्ट होजाताहै। अन्यान्य व्रण और बहुत दिनोंके पुराने व्रण भी इससे अवश्य नष्ट होजातेहैं। इस औषधिके खानेवालेके मुखमें सूजन नहीं होती। इस औषधिको इकीस दिनतक खाना चाहिये जबतक औषधिको तबतक निमक नहीं खाना चाहिये ॥ २४-२७ ॥

इति फिरंगरोगाधिकारः सम्पूर्णः।

---

## अथ मसूरिकाधिकारः।

### तत्र मसूरिकाया विप्रकृष्टसन्निकृष्ट-निदानं सम्प्राप्तिश्च।

कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः ॥ दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥ १ ॥ क्रूरग्रहेक्षणाच्चापि देशे दोषसमुद्भवाः ॥ जनयन्ति शरीरेऽस्मिन्दुष्टरक्तेन संगताः ॥ मसूराकृतिसंस्थानाः पिडकास्ता मसूरिकाः ॥ २ ॥

क्षारो यवक्षारादिः। विरुद्धाध्यशनाशनैः कट्वम्लादिविरुद्धान्नाशनैः। अथ च अध्यशनाशनम् अधिकमशनमध्यशनम्। दुष्टनिष्पावशाकाद्यैः दुष्टं निष्पावशाकम् आद्यशब्दान्मध्वालुकादिकैः। प्रदुष्टपवनोदकैः सविषकुसुमादिसंसर्गात्। क्रूरग्रहेक्षणाच्चापि देशे क्रूरग्रहा राहुशनैश्चरादयस्तेषामीक्षणाद्दृष्टेः यस्मिन्देशे क्रूरग्रहदृष्टिस्तत्रापि मसूरिकोत्पत्तिरित्यर्थः। मसूराकृतिसंस्थानाः मसूरस्य या आकृतिस्तद्वत्संस्थानमाकृतिर्यासां ताः ॥

तीखे ( चरपरे ), खट्टे, नमकके तथा जवाखारादि खारी और परस्पर विरुद्ध पदार्थ इनको खानेसे, अधिक भोजन करनेसे, निष्पाव लोबिया, उडद तथा मीठे, खट्टे आदि शाकोंको भक्षण करनेसे, विषैले पुष्पादिकके संसर्गसे दूषित हुई पवन और जलके योगसे और देशमें राहु तथा शनैश्चर आदि क्रूर ग्रहोंकी दृष्टि पडनेसे वातादि दोष कुपित होकर दूषित हुए रुधिरके साथ मिलकर मसूरकी समान आकारवाली फुंसिये उत्पन्न होतीहैं उनको मसूरिका कहते-हैं ॥ १ ॥ २ ॥

### अथ मसूरिकापूर्वरूपम्।

तासां पूर्वं ज्वरः कण्डूर्गात्रभंगोऽरतिर्भ्रमः ॥ त्वचि शोथः सवैवर्ण्यो नेत्ररागस्तथैव च ॥ ३ ॥

जब मसूरिका होनेको होतीहै तो प्रथम ज्वर आताहै, खुजली होतीहै, अंग टूटने लगतेहैं, किसी पदार्थ पर रुचि उत्पन्न नहीं होती, भ्रम होताहै, त्वचामें सूजन, वर्ण बदल जाताहै और नेत्रोंमें लाली होतीहै ॥ ३ ॥

### अथ वातजमसूरिकालक्षणम् ।

**स्फोटाः कृष्णारुणा रूक्षास्तीव्रवेदनयान्विताः ॥ कठिनाश्चिरपाकाश्च भवन्त्यनिलसम्भवाः ॥ ४ ॥**

काली, लाल, रूखी, तीव्र वेदनावाली, कठिन और बहुत समयमे पकनेवाली, ऐसी फुंसी उत्पन्न होयँ तो जानना कि वातसे मसूरिका उत्पन्न हुई हैं ॥ ४ ॥

### अथ पित्तजमसूरिकालक्षणम् ।

**सन्ध्यस्थिपर्वणां भेदः कासः कम्पोऽरतिर्भ्रमः ॥ शोषस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता ॥ ५ ॥ रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः ॥ भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ॥ ६ ॥**

पित्तके प्रकोपसे उत्पन्न हुई मसूरिकामें संधि, अस्थि और पर्वोंमे भेदन सरीखी पीडा होतीहै, खाँसी, कंप, किसी पदार्थमे इच्छा नहीं होती, भ्रम, तालु, होठ तथा जीभ सूखजातीहै, अरुचिके साथ तृषा बढतीहै और फुंसी लाल, पीली, सफेद, दाहयुक्त, तीव्र पीडायुक्त और तत्काल पकजातीहैं ॥ ५ ॥ ६ ॥

### अथ रुधिरजन्यमसूरिकालक्षणम् ।

**विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णारुचिस्तथा ॥ मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः ॥ रक्तजायां भवन्त्येते विकाराः पित्तलक्षणाः ॥ ७ ॥**

रुधिरके कुपित होनेसे जो मसूरिका होतीहै उसमें अतीसार ( दस्तोका आना ), अंगोका टूटना, दाह, तृषाका लगना तथा अरुचि, मुखमें पाक, आखोंका पकना और अत्यंत दारुण तीव्र ज्वर होताहै, यह सब पित्तके प्रकोप सम्बन्धी लक्षण जानने ॥ ७ ॥

### अथ कफजमसूरिकालक्षणम् ।

**श्वेताः स्निग्धा भृशं स्थूलाः कण्डूरा मन्दवेदनाः ॥ मसूरिकाः कफोद्भूताश्चिरपाकाः प्रकीर्तिताः ॥ ८ ॥**

कफके प्रकोपसे जो मसूरिका होतीहै वह सफेद-चिकनी, अत्यत मोटी, खुजली, मंदवेदनावाली और बहुत समयमे पकनेवाली ऐसी फुसी होतीहैं ॥ ८ ॥

### अथ त्रिदोषजमसूरिकालक्षणम् ।

**नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजः ॥ पूतिस्रावाश्चिरात्पाकाः प्रभूताः सर्वदोषजाः ॥ ९ ॥**

त्रिदोषसे उत्पन्न हुई मसूरिका नीली, चिपटी, विस्तारवाली, बीचमें नीची, अत्यंत वेदना युक्त, दुर्गंध, स्राववाली और बहुत देरमे पकनेवाली ऐसी फुसी होतीहैं ॥ ९ ॥

### अथ सप्तधातुगतमसूरिकाणां पृथक् पृथक् लक्षणानि ।

### तत्र रसगतमसूरिकालक्षणम् ।

**मसूरिकास्त्वचं प्राप्तास्तोयबुद्बुदसन्निभाः॥ स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥ १० ॥**

**त्वचं प्राप्ताः त्वक्छब्देनात्र रस उच्यते रसाश्रयत्वात् ॥**

रसमे होनेवाली मसूरिका अल्प दोषवाली होतीहैं, पानीके बबूलेकी समान और फोडनेसे जलका स्राव होताहै ॥ १० ॥

### अथ रक्तजमसूरिकालक्षणम् ।

**रक्तस्था लोहिताकाराः शीघ्रपाकास्तनुत्वचः ॥ साध्या नात्यथदुष्टास्तु भिन्ना रक्तं स्रवन्ति च ॥ ११ ॥**

**साध्या रक्तस्था इत्यर्थः । नात्यर्थदुष्टास्तु अत्यर्थं दुष्टशोणिताः पुनर्न साध्याः किन्तु कष्टसाध्याः ॥**

रुधिरमे रहनेवाली मसूरिका लाल आकारवाली, तत्काल पकनेवाली, पतलीत्वचावाली और फोडने पर उसमेसे रुधिर निकलताहै, रुधिरमें रहनेवाली मसूरिका जो अत्यत दुष्ट रुधिरवाली न होय तो साध्य है और अत्यत दुष्ट रुधिरवाली होय तो कष्टसाध्य है ॥ ११ ॥

अथ मांसगतमसूरिकालक्षणम्।

मांसस्थाः कठिनाः स्निग्धाश्चिरपाकास्तनुत्वचः॥ गात्रशूलाऽनिशंकण्डूमूर्च्छादाहतृषान्विताः॥ १२॥

मांसमें रहनेवाली मसूरिका कठिन, स्निग्ध, बहुत समयमें पकनेवाली, पतलीत्वचावाली और गात्रोंमें शूल, निरंतर खुजली, मूर्च्छा, दाह तथा तृषा यह लक्षण होते हैं॥ १२॥

अथ मेदोगतमसूरिकालक्षणम्।

मेदोजा मण्डलाकारा मृदवः किञ्चिदुन्नताः॥ घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः॥ संमोहाऽरतिसन्तापाः कश्चिदाभ्यो विनिस्तरेत्॥ १३॥

मेदमें होनेवाली मसूरिका मंडलाकारवाली होतीहैं, कोमल, कुछेक ऊंची, मोटी, चिकनी, वेदनायुक्त, भयंकर, ज्वरसे व्याप्त, और बेहोसी, व्याकुलता और संतापसे युक्त होतीहैं, इन मसूरिकाओंसे प्रायः कोईही बचता है॥ १३॥

अथास्थिमज्जागतमसूरिकालक्षणम्।

क्षुद्रा गात्रसमा रूक्षाश्चिपिटाः किञ्चिदुन्नताः॥ मज्जोत्था भृशसम्मोहा वेदनारतिसंयुताः॥ १४॥ भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वतः॥ छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति च॥ १५॥

गात्रसमाः गात्रतुल्यवर्णाः। चिपिटाः चिपिटाकाराः। मज्जाग्रहणेन अस्थ्नोऽपि ग्रहणं तदाधारत्वात्। अत एवाग्रे भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वत इति। मर्मधामानि मर्मस्थानानि॥

अस्थि तथा मज्जामें रहनेवाली मसूरिका क्षुद्र होती हैं शरीरके रङ्गकी समान वर्णवाली है, रूखी, चिपटी, कुछेक ऊंची, अत्यंतमोह, वेदना और व्याकुलतासे पीडित होतीहैं, भौंरा लकडियोंका जैसे छेद करते हैं उसी प्रकार हड्डियोंको छेदनेवाली हैं, जबतक मज्जा हड्डियोंमें रहती है तबहीतक हड्डियोंकी दृढता है। मर्मोंमें छिद्रकी समान छेदी चारोंओरसे होती हैं, मर्म स्थानोको छेदनकर देती हैं और प्राणोको तत्काल नष्ट करदेती हैं॥ १४॥ १५॥

अथ शुक्रगतमसूरिकालक्षणम्।

पक्काभाः पिडकाः स्निग्धाः श्लक्ष्णाश्चात्यर्थवेदनाः॥ स्तैमित्याऽरतिसंमोहदाहोन्मादसमन्विताः॥ १६॥ शुक्रजायां मसूर्यान्तु लक्षणानि भवन्ति हि॥ निर्दिष्टं केवलं चिह्नं जीवनं न तु दृश्यते॥ दोषमिश्रास्तु सप्तैता द्रष्टव्या दोषलक्षणैः॥ १७॥

पक्काभाः पक्काकारा न तु पक्काः॥ श्लक्ष्णाः कोमलाः। निर्दिष्टं केवलं चिह्नं न तु अस्याश्चिकित्सा युक्ता यतो जीवनं न दृश्यते। सप्ताप्येता दोषहेतुं विना न भवन्ति दोषमन्तरेण रसादिदुष्टेरसम्भवादत एवोक्तं दोषमिश्रा इत्यादिना॥

वीर्यमें रहनेवाली मसूरिका पकती नहीं, किंतु पकनेकी समान होती है, स्निग्ध, कोमल, अत्यंत वेदनावाली, तथा स्तब्धता ( जडता ) हो, बेचैनी, मोह, दाह तथा उन्माद होताहै यह वीर्यगत मसूरिका केवल लक्षण जाननेके लिये कही है किंतु इसकी चिकित्सा करनी योग्य नहीं है क्योंकि इस मसूरिकाके होनेसे कभी मनुष्य बचही नहीं सक्ता।

दोषके विना रसादिकका दुष्ट होना सम्भव नहीं इस कारण ये सातों प्रकारकी मसूरिका दोषोंके विना नहीं होती हैं इन सातोंप्रकारकी मसूरिकाओंमें उन उन दोषोंके लक्षण ऊपरके दोषोंके सम्बन्धसे जानने १६॥१७

अथ चर्मगतमसूरिकालक्षणम्।

कण्ठरोधोऽरुचिस्तन्द्रा प्रलापाऽरतिसंयुताः॥ दुश्चिकित्स्याः समुद्दिष्टाः पिडकाश्चर्मसंस्थिताः॥ १८॥

कंठ रुकजाय, अरुचि, तन्द्रा, प्रलाप और बेचैनी होय तो मसूरिका ओंको चर्मजा जाननी। ये चर्मगत मसूरिका कष्टसाध्य हैं॥ १८॥

अथ रोमगतमसूरिकालक्षणम्।

रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः ॥ कासारोचकसंयुक्ता रोमान्त्या ज्वरपूर्विकाः ॥ १९ ॥

जिसमें प्रथम ज्वर आवे, रोमांच हो आवे, रोमछिद्रोंकी बराबर ऊंची, लालवर्ण हो, खांसी, और अरुचि संयुक्त मसूरिका रोमतक पहुंच जाती हैं, ये मसूरिका कफ तथा पित्तसे होतीहै ॥ १९ ॥

अथ मसूरिकायाःसुखसाध्यता।

त्वग्गता रक्तगाश्चैव पित्तजाः श्लेष्मजास्तथा ॥ श्लेष्मपित्तकृताश्चैव सुखसाध्या मसूरिकाः ॥ एता विनापि क्रियया प्रशाम्यन्ति शरीरिणाम् ॥ २० ॥

त्वग्गता रसगताः ॥

रसमे प्राप्त हुई, रुधिरमे प्राप्त हुई, पित्तसे उत्पन्न हुई, कफसे उत्पन्न हुई और कफ तथा पित्त दोनोसे उत्पन्न हुई मसूरिका सुखसाध्य हैं। प्राणियोंके उत्पन्न हुई ये मसूरिका चिकित्साके विनाभी शांत होजातीहैं ॥ २० ॥

अथ मसूरिकायाः कष्टसाध्यता।

वातजा वातपित्तोत्था वातश्लेष्मकृताश्च याः ॥ कष्टसाध्या असाध्यास्तु यत्नादेता उपाचरेत् ॥ २१ ॥

वातज, वात और पित्त दोषोंसे उत्पन्न हुई और वायु तथा कफ इन दोषोसे उत्पन्न हुई मसूरिका कष्टसाध्य हैं इस कारण इनकी चिकित्सा यत्नपूर्वक करनी चाहिये २१

अथ मसूरिकाणामसाध्यता।

असाध्याः सन्निपातोत्थास्तासां वक्ष्यामि लक्षणम् ॥ प्रवालसदृशाः काश्चित्काश्चिज्जम्बूफलोपमाः ॥ २२ ॥ लोहजालसमाः काश्चिदतसीफलसन्निभाः ॥ आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥ २३ ॥

प्रवालसदृशा इत्यादि-आसां प्रवालजम्बूफललोहगुटिकातसीफलसादृश्यं वर्णेन। अनुक्तवर्णग्रहार्थमाह-आसां बहुविधा वर्णा इति ॥

सन्निपातसे (त्रिदोषसे) उत्पन्नहुई मसूरिका असाध्य है,इन मसूरिकाके लक्षण कहताहूं। इस मसूरिकाकी फुंसी कोई मूँगेकी समान लाल, कोई जामुनकी समान रंगवाली, कोई लोहेकी गोलीकी समान और कोई अलसीके फलकी समान रंगवाली होतीहै इसके सिवाय और भी अनेक प्रकारके वर्णवाली होतीहै ॥ २२ ॥ २३ ॥

कासो हिक्का प्रमेहश्च ज्वरस्तीव्रः सुदारुणः ॥ प्रलापारतिमूर्च्छाश्च तृष्णा दाहोऽतिघूर्णता ॥ २४ ॥

दाहस्थाने दौर्गन्ध्य इति च पाठः ॥

मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा ॥ कण्ठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थदारुणम् ॥ २५ ॥ मसूरिकाभिभूतस्य यस्यैतानि भिषग्वरैः ॥ लक्षणानीह दृश्यन्ते न देयं तस्य भेषजम् ॥ २६ ॥

अतिघूर्णता अतिनिद्रा ॥

प्रलाप, बेचैनी, मूर्च्छा, तृषा, हिचकी, प्रमेह, खाँसी, तीव्र और दारुण ज्वर, दाह, अत्यंत निद्रा, दुर्गंधता, मुख नाकमेंसे तथा नेत्रोंमेंसे रुधिरका स्राव, कंठमें घुरघुर शब्दका होना, और दारुण श्वास यह सब लक्षण होंय तो वैद्य उस मसूरिकारोगीको असाध्य समझकर औषधि नहीं देवे ॥ २४-२६ ॥

अथ मसूरिकारिष्टम्।

मसूरिकाभिभूतो यो भृशं घ्राणेन निश्वसेत् ॥ स भृशं त्यजति प्राणांस्तृष्णावान्वायुदूषितः ॥ २७ ॥

वायुदूषितः अपतानकादिवातव्याधिदूषितः ॥

मसूरिका रोगसे पीडित जो मनुष्य नाकमेंसे अत्यंत श्वास ले, अत्यंत तृषासे पीडित हो और अपतानक आदि वातव्याधिवाला होय तो वह रोगी तत्काल मरजाताहै ॥ २७ ॥

अथ मसूरिकायां शोथविशेषः ।

मसूरिकान्ते शोथः स्यात्कूर्परे मणिबन्धके ॥ तथांसफलके वापि दुश्चिकित्स्यः सुदारुणः ॥ २८ ॥

दुश्चिकित्स्यः सुदारुणः दुश्चिकित्स्यः कष्टसाध्यः । दुःशब्दोऽत्र निषेधार्थः तेन असाध्य इत्येके ॥

काश्चिद्विनापि यत्नेन सिध्यन्त्याशु मसूरिकाः ॥ दृष्टाः कृच्छ्रतराः काश्चित्काश्चित्सिद्ध्यन्ति वा न वा ॥ काश्चिन्नैव तु सिध्यन्ति साध्यमानाः प्रयत्नतः ॥२९॥

मसूरिकाके अंतमें हाथकी कोहनीके ऊपर, अथवा पहुंचेपर वा कन्धोंके ऊपर अत्यंत दारुण सूजन होय तो उसको कष्टसाध्य जानना, कितनेक वैद्य इसको असाध्य कहतेहैं ।

कितनी एक मसूरिका विनाही चिकित्साके तत्काल आराम होजातीहैं, कितनी एक मसूरिका अत्यन्त कष्टसाध्य भी दीखतीहैं, कितनी एक मसूरिका नष्टभी होजातीहैं अथवा नहीं भी नष्ट होतीं और कितनी एक मसूरिका यत्नपूर्वक चिकित्सा करनेसे भी आरोग्य नहीं होतीं ॥ ॥ २८ ॥ २९ ॥

अथ मसूरिकाचिकित्सा ।

मसूरिकायां कुष्ठेषु लेपनादिक्रिया हिता॥ पित्तश्लेष्मविसर्पोक्ता क्रिया चात्र प्रशस्यते ॥ ३० ॥ श्वेतचन्दनकल्कोत्थं हिलमोचीभवं द्रवम् ॥ पिबेन्मसूरिकारम्भे नव वा केवलं रसम् ॥ ३१ ॥

हिलमोचिका शाकविशेषः हुरहुरेति लोके ॥

द्वौ पञ्चमूल्यौ रास्ना च धान्युशीरं दुरालभा ॥ सामृता धान्यकं मुस्तं जयेद्वातमसूरिकाम् ॥ ३२ ॥ मञ्जिष्ठावट्टुपालक्षशिरीषोदुम्बरत्वचः॥वातजायां मसूर्यां स्यात्प्रलेपः सर्वतो हितः ॥ ३३ ॥

वट्टुपाद्वट्टः ॥

गुडूची मधुकं द्राक्षा मोरटं दाडिमैः सह ॥ पाककाले प्रदातव्यं भेषजं गुडसंयुतम् ॥ तेन कुप्यति नो वायुः पाकं यान्ति मसूरिकाः ॥ ३४ ॥

मोरटम् ऐक्षवं मूलम् ॥

मसूरिकासु भुञ्जीत शालीन्मुद्गमसूरिकान् ॥ रसं मधुरमेवाद्यात्सैन्धवं चाल्पमात्रकम् ॥ पटोलमूलं क्वथितं मोरटस्वरसं तथा ॥ ३५ ॥

पटोलमूलं क्वथितमित्यत्र पटोलं क्वथितं चैव वा पाठः ॥

आदावेव मसूर्यां तु पित्तजायां प्रयोजयेत् ॥ निम्बः पर्पटकः पाठा पटोलश्चन्दनद्वयम् ॥ ३६ ॥ उशीरं कटुका धात्री तथा वासा दुरालभा ॥ एषां पानं शृतं शीतमुत्तमं शर्करान्वितम् ॥ ३७ ॥ मसूर्यां पित्तजायान्तु प्रयोक्तव्यं विजानता ॥ दाहे ज्वरे विसर्पे च व्रणे पित्ताधिकेऽपि च ॥ ३८ ॥ मसूर्यो रक्तजा नाशं यान्ति शोणितमोक्षणैः ॥ वासामुस्तकभूनिम्बत्रिफलेन्द्रयवासकम् ॥ ३९ ॥ पटोलारिष्टकं चापि क्वाथयित्वा समाक्षिकम् ॥ पिबेत्तेन प्रशाम्यन्ति मसूर्यः कफसम्भवाः ॥ ४० ॥

इन्द्रः इन्द्रयवः ॥

शिरीषोदुम्बरत्वग्भ्यां खदिरारिष्टजैर्दलैः ॥ कफोत्थासु मसूरीषु लेपः पित्तोत्थितासु च ॥ ४१ ॥ निम्बः पर्पटकः पाठा पटोलः कटुरोहिणी ॥ चन्दन द्वे उशीरश्च धात्री वासा दुरालभा ॥ ४२ ॥ एष निम्बादिकः क्वाथः पीतः शर्करयाऽन्वितः॥ मसूरी सर्वजां हन्ति विसर्पज्वरसंयुताम् ॥ ४३ ॥ उत्थिता प्रविशेद्या च तां पुनर्बाह्यतो नयेत् ॥ काञ्चनारत्वचः क्वाथस्ताप्यचूर्णावचूर्णितः ॥ ४४ ॥

ताप्यं सुवर्णमाक्षिकम् ॥

धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥ मुखे कण्ठे व्रणे जाते गण्डूषार्थं प्रशस्यते॥ अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ॥ ४५ ॥

गवेधुर्गवेधुका गडगडिया इति लोके ॥

मधुकं त्रिफला मूर्वा दार्वी त्वङ्नीलमुत्पलम् ॥ उशीरलोधमञ्जिष्ठाः प्रलेपाश्च्योतने हिताः ॥ ४६ ॥ नश्यन्त्यनेन दृग्जाता मसूर्यो न भवन्ति च ॥ प्रलेपं चक्षुषोर्दद्यादुदुवारस्य वल्कलैः ॥ ४७ ॥ पञ्चवल्कलचूर्णेन क्लेदिनीमवधूलयेत् ॥ भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥ ॥ ४८ ॥ सुषवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम् ॥ रोमन्तीज्वरवीसर्पव्रणानां शान्तये पिबेत् ॥ ४९ ॥

इति मसूरिकाधिकारः ।

कुष्ठ रोगपर जो लेपन आदि चिकित्सा कही है वही चिकित्सा मसूरिकापर भी हितकारी है ।

कफ और पित्तसे उत्पन्न हुए विसर्पपर जो चिकित्सा कही है वही चिकित्सा मसूरिकापर भी करनी चाहिये ।

मसूरिकाके उत्पन्न होतेही हिल्मोचिका ( एक प्रकारकी नोनिया और हुरहुरनामसे भी प्रसिद्ध है ) के स्वरसमें सफेद चदनका कल्क डालकर पिये अथवा इकला हिलमोचिकाहीके स्वरसको पीवै ।

लघुपञ्चमूल, वृहत्पंचमूल, रासना, आमले, खस, धमासा, गिलोय, धनिया और नागरमोथा इनको पीसकर पीनेसे वातज, मसूरिका नष्ट होजातीहै ।

मजीठकी छाल, वडकी छाल, पिलखनकी छाल, सिरसकी छाल और गूलरकी छाल इनको एकत्र पीसकर चारों ओर लेप करनेसे वातकी मसूरिका नष्ट होजातीहै ।

मसूरिकाके पकनेके समय गिलोय, मुलैठी, दाख, ईखकी जड और अनार इनको एकत्र पीसकर गुड डालकर पीनेसे वायुका प्रकोप नहीं होता और मसूरिका पक जातीहै ।

मसूरिकाउत्पन्न हुई होय तो लाल चावल, मूँग, मसूर, मधुर रस और कुछेक, सेंधानमक इनका भोजन करे ।

पित्तकी मसूरिकामे प्रथम पटोलकी जडका क्वाथ अथवा पटोलपत्रका क्वाथ ईखकी जडके स्वरसके साथ पिये ।

नीम, पित्तपापडा, पाढ, परवल, सफेद चदन, लाल चदन, खस, कुटकी, आमले, अडूसा और धमासा इनको एकत्र पीसकर खांड मिलाकर इस शीतल पानकको पीनेसे पित्तकी मसूरिका नष्ट होजातीहै तथा दाह, पित्तज्वर, पित्तव्रण और पित्तविसर्प इनपर भी यह हितकारी है ।

रुधिरसे उत्पन्न हुई मसूरिका रुधिर निकलवानेसे नष्ट होजातीहै ।

अडूसा, नागरमोथा, चिरायता, हरड, वहेडा, आमले, इन्द्रजौ, जवासा, कडवे परवल और नीम इनका क्वाथ वनाकर पीनेसे कफकी मसूरिका शमन होजातीहै ।

सिरसकी छाल, गूलरकी छाल, खैरके पत्ते और नीमके पत्ते इनका लेप करनेसे कफसम्बन्धी और पित्तसम्बन्धी मसूरिका नष्ट होजातीहै ।

नीम, पित्तपापडा, पाढ, कडवे परवल, कुटकी, सफेद चंदन, लाल चंदन, खस, आमले, अडूसा और लाल धमासा इनका क्वाथ वनाकर खांड मिलाकर पीवे तो सर्व दोषोंसे उत्पन्न हुई और ज्वर तथा विसर्पवाली मसूरिका भी नष्ट होजातीहै ।

जो मसूरिका पहिले वाहर निकलकर फिर भीतर समाजाय तो कचनारकी छालका क्वाथ वनाकर उसमें सोनामाखीका चूर्ण डालकर पिये तो मसूरिका फिर वाहर निकल आतीहै । मुखमे अथवा गलेमें व्रण हुआ होय तो आमले और मुलैठी इनका क्वाथ वनाकर कुल्ले करावे यह हितकारी हैं ।

गवेधु, धान्य और मुलैठी इनके जलसे नेत्रोंमे सेचन करनेसे मसूरिकासे दूषित हुई आँखें आराम होजाती हैं ।

मुलैठी, वहेडा, आमला, मूर्वा, दारुहलदीकी छाल, नीलकमल, खस, लोध और मजीठ, इनका आँखोंपर लेप करनेसे अथवा इनको आँखोमे लगानेसे मसूरिका नष्ट होजातीहै और फिर कभी नही होती ।

आँखोंमें मसूरिकाकी पीडा होय तो लिसोडेकी छालको पीसकर अँ [illegible] गाढा लेप करे ।

मसूरिकामें जो क्लेद होय तो पचवल्कलका चूर्ण उसके ऊपर छिडके, कितने एक वैद्य कहतेहैं कि उसके ऊपर राख छिडके, और कितने एक वैद्य कहतेहैं कि उसके ऊपर सूखे गोबरका चूर्ण डालना चाहिये।

कलोंजीके पत्तोंका क्वाथ बनाकर उसमे हलदीका, चूर्ण डालकर पिये तो रोमतक पहुँची मसूरिका ज्वर विसर्प और व्रण शात होत होजातेहैं ॥ ३०–४९ ॥

इति मसूरिकाधिकारः सम्पूर्णः।

# अथ मसूरिकाभेदशीतलाधिकारः।

## तत्र शीतलायाः स्वरूपं भेदः स्तोत्रञ्च।

देव्या शीतलया क्रान्ता मसूर्यः शीतला बहिः ॥ ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥ १ ॥ सा च सप्तविधा ख्याता तासां भेदान्प्रचक्ष्महे ॥ ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥ २ ॥ सप्ताहान्निःसरत्येव सप्ताहात्पूर्णतां व्रजेत् ॥ ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥ ३ ॥ तासां मध्ये यदा काचित्पाकं गत्वा स्फुटेत्स्रवेत् ॥ तत्रावधूलनं कुर्याद्वनगोमयभस्मना ॥ ४ ॥ निम्बसत्पत्रशाखाभिर्मक्षिकामपसारयेत् ॥ जलञ्च शीतलं दद्याज्ज्वरेऽपि न तु तत्पचेत् ॥ ५ ॥ स्थापयेत्तं स्थले पूते रम्ये रहसि शीतले ॥ नाशुचिः संस्पृशेत्तन्तु न च तस्यान्तिकं व्रजेत् ॥ ६ ॥ बहवो भिषजो नात्र भेषजं योजयन्ति हि ॥ केचित्प्रयोजयन्त्येव मतं तेषामथ ब्रुवे ॥ ७ ॥

जो मसूरिकामे ही शीतलानामक देवीका आवेश हुआ होय तो वह शीतला कहीजातीहै। जिस प्रकार भौतिक विषमज्वर होताहै उसी प्रकार इस शीतलामें ज्वर होताहै, इस शीतलाके सात भेद हैं कि जिनको आगे कहेंगे। प्रथम ज्वर आकर पश्चात् बडी बडी फुन्सी शरीरमे उत्पन्न होयँ वह बडी शीतला कही जातीहै। यह शीतला प्रथम सात दिनमे निकलतीहै, फिर सात दिनमे भरजातीहै और तीसरे सप्ताहमें सूखजातीहै और अपने आप झडजातीहै। इनमें कोई शीतला पककर फूटे और स्रवे तो उसके ऊपर अरने उपलोंकी भस्म को बुरकावे और नीमके पत्तो समेत नीमकी टहनियोंसे मक्खियोंको उडावे। ज्वर होय तो भी शीतल जल पीनेको देवे किंतु गरम जल नहीं देवे, शीतला वाले रोगियोको पवित्र, रमणीक, एकात और शीतल स्थानमे रक्खे इस रोगीको कोई अपवित्र मनुष्य नहीं छुवावे और अपवित्र मनुष्यको उसके पास न जाना चाहिये बहुतसे वैद्य तो शीतलामें औषधि देतेही नहीं और कितनेक अवश्य देतेहैं। औषधिको देनेवाले वैद्यके सिद्धात अनुसार इस शीतलाकी चिकित्सा करनी चाहिये ॥ १–७ ॥

ये शीतलेन सलिलेन विपिष्य सम्यङ्निम्बाक्षबीजसहितां रजनीं पिबन्ति ॥ तेषां भवन्ति न कदाचिदपीह देहे पीडाकरा जगति शीतलिका विकाराः ॥ ८ ॥

जगत्में जो मनुष्य नीमके बीज बहेडेके बीज और हलदी इनको शीतल जलमें अच्छे प्रकारसे पीसकर पीताहै उसके शरीरमे पीडाकारक शीतलाका विकार कमी भी नही होता ॥ ८ ॥

मोचारसेन सहितं सितचन्दनेन वासारसेन मधुकं मधुकेन चाथ ॥ आदौ पिबन्ति सुमनास्वरसेन मिश्रं ते नाप्नुवन्ति भुवि शीतलिकान्विकारान् ॥ ९ ॥

मोचारसेन कदलीस्तम्भजलेन मधुकेन चाथ अथवा मधुना। आदौ पूर्वरूपे ज्वरागमनमात्रे सुमनास्वरसेन जातीपत्रस्वरसेन ॥

जब शीतलाके पूर्वरूपमें ज्वर आवे तो तत्कालही केलेके अर्कके साथ अथवा सफेद चदनके रसके साथ अथवा अडूसेके रसके साथ या मुलैठीके रसके साथ अथवा चमेलीके पत्तेके रसके साथ सहत पिवे तो शीतलाके विकार नष्ट होजातेहैं ॥ ९ ॥

शीतलासु क्रिया कार्या शीतला रक्षया सह ॥ बध्नीयान्निम्बपत्राणि परितो भवनान्तरे ॥ १० ॥ कदाचिदपि नो कार्यमुच्छिष्टस्य प्रवेशनम् ॥ स्फोटेष्वपि सदाहेषु रक्षारेणूत्करो हितः ॥ तेन ते शोषमायान्ति प्रपाकं न भजन्ति च ॥ ११ ॥ रक्षारेणूत्करः शुष्कगोमयभस्मचूर्णप्रक्षेपः ॥ चन्दनं वासको मुस्तं गुडूची द्राक्षया सह ॥ एषां शीतकषायस्तु शीतलाज्वरनाशनः ॥ १२ ॥

शीतलाके रोगमें सम्पूर्ण शीतल क्रिया करे, मंत्रादिकसे भूतादिकको दूर करनेके लिये रक्षा करे, घरके चारो ओर नीमके पत्ते बाँधे और उस घरमें कभी भी उच्छिष्ट ( जूठन ) को नहीं ले जावे ।

शीतलाकी फुसियोमे दाह होय तो उसमे सूखे गोबर की राख हितकारी है । भस्म डालनेसे सब फुंसी सूख जातीहैं और पकती भी नहीं हैं ।

लालचंदन, अडूसा, नागरमोथा, गिलोय और दाख इनका हिम बनाकर पीनेसे शीतलाका ज्वर नष्ट होजाताहै ॥ १०–१२ ॥

जपहोमोपहारैश्च दानस्वस्त्ययनार्चनैः ॥ विप्रगोशम्भुगौरीणां पूजनैस्तां शमं नयेत् ॥ १३ ॥ स्तोत्रञ्च शीतलादेव्याः पठेच्छीतलिकान्तिके ॥ ब्राह्मणः श्रद्धया युक्तस्तेन शाम्यन्ति शीतलाः ॥ १४ ॥

जप, होम, बलिदान, स्वस्तिवाचन, पूजन और ब्राह्मण, गाय, सदाशिव तथा जगदम्बा इनका अर्चन करनेसे शीतला शांत होजातीहै ।

जिस मनुष्यके शीतला निकली होय उसके पास ब्राह्मण श्रद्धा पूर्वक नीचे लिखा शीतलाके स्तोत्रको पढे, इसके पढनेसे शीतला शांत होजातीहै ॥ १३ ॥ १४ ॥

### अथ शीतलास्तोत्रम् ।

अस्य श्रीशीतलास्तोत्रस्य महादेव ऋषिः अनुष्टुप् छन्दः ॥ शीतला देवता शीतलोपद्रवशान्त्यर्थ जपे विनियोगः ॥ १५ ॥

### स्कन्द उवाच ।

भगवन्देवदेवेश शीतलायाः स्तवं शुभम् ॥ वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ॥ १६ ॥

### ईश्वर उवाच ।

वन्देऽहं शीतलां देवीं रासभस्थां दिगम्बराम् ॥ यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥ १७ ॥ शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः ॥ विस्फोटकभयं घोरं क्षिप्रं तस्य प्रणश्यति ॥ १८ ॥ यस्त्वामुदकमध्ये तु धृत्वा संपूजयेन्नरः ॥ विस्फोटकभयं घोरं कुले तस्य न जायते ॥ १९ ॥ शीतले ज्वरदग्धस्य पूतिगन्धगतस्य च ॥ प्रनष्टचक्षुषः पुंसस्त्वामाहुर्जीवितौषधम् ॥ २० ॥ नमामि शीतलां देवीं रासभस्थां दिगम्बराम् ॥ मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ २१ ॥ शीतले तनुजान्रोगान्नृणां हरसि दुस्तरान् ॥ विस्फोटकविशीर्णानां त्वमेकाऽमृतवर्षिणी ॥ २२ ॥ गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम् ॥ त्वदनुध्यानमात्रेण शीतले यान्ति ते क्षयम् ॥ २३ ॥ न मन्त्रो नौषधं किञ्चित्पापरोगस्य विद्यते ॥ त्वमेका शीतले धात्री नान्यां पश्यामि देवताम् ॥ २४ ॥ मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम् ॥ यस्त्वां सञ्चिन्तयेद्देवि तस्य मृत्युर्न जायते ॥ २५ ॥ अष्टकं शीतला देव्या यः पठेन्मानवः सदा ॥ विस्फोटकभयं घोरं कुले तस्य न जायते ॥ २६ ॥ श्रोतव्यं पठितव्यञ्च नरैर्भक्तिसमन्वितैः ॥ उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥ २७ ॥ शीतला-

ष्टकमेतद्धि न देयं यस्य कस्यचित् ॥ किन्तु तस्मै प्रदातव्यं भक्तिश्रद्धान्वितो हि यः ॥ २८ ॥

इति काशीखण्डे, शीतलाष्टकस्तोत्रं सम्पूर्णम् ।

स्वामिकार्त्तिकेय सदाशिवसे पूँछतेहैं कि हे महाराज! सम्पूर्ण देवोंके देव विस्फोटकके भयको हरनेवाली शीतलाका स्तोत्र मुझको अच्छे प्रकार कहिये ।

सदाशिव कहतेहैं कि-'गधेके ऊपर बैठी नग्न शीतला देवीको प्रणाम करताहूं, कि जिस शीतला की कृपासे विस्फोटकका बडा त्रास दूर होजाताहै, इस प्रकार प्रथम शीतलाका ध्यान करे, 'इस श्री शीतलाके स्तोत्रका सदाशिव कर्ता' अनुष्टुप् छंद और शीतला देवता है । शीतलाके उपद्रवोंको दूर करनेके लिये इस स्तोत्रका जप करताहूं' इस प्रकार कह कर पश्चात् स्तुति करे । दाहसे पीडित जो मनुष्य हे शीतले! इस प्रकार कहताहै उसके उत्पन्न फोडेका तीव्र भय तत्काल नष्ट होजाताहै ।

हे शीतले! जो मनुष्य तुमको जलमें स्थापनकर तुम्हारा पूजन करताहै उसके कुलमें कभी विस्फोटकका भय नहीं होता । हे शीतले! ज्वरसे व्याकुल दुर्गन्धयुक्त और जिसकी आंखें नष्ट होगई हैं ऐसे मनुष्यके जीवनरूप तूही एक उत्तम औषधि है ऐसा विद्वानोंने कहा है । गधेके ऊपर बैठी, नग्न, एक हाथमें मार्जनी (बुहारी) और दूसरे हाथमें कलशको धारण करनेवाली तथा शिरपर सूप (छाज) को धारण किये हुई शीतला देवीको प्रणाम करताहूं । हे शीतले! मनुष्योंके शरीरमें उत्पन्न हुए दुस्तर रोगोंको तुमने हरण किया है । विस्फोटकसे अत्यंत दुःखी मनुष्योंपर अमृतकी वर्षा करनेवाली तू एकही है । हे शीतले! मनुष्योंके शरीरमें गलगण्ड (गण्डमाला) तथा अन्यान्य जो दारुण रोग उत्पन्न होतेहैं वे सब तेरे ध्यान करनेमात्रसे क्षय होजातेहैं, इस दुष्ट रोगका अन्य कोई औषधि और मंत्रादिक नहीं हैं । हे शीतले! इस रोगसे बचानेवाली तू एकही है । तेरे बिना इस रोगसे बचानेवाला अन्य कोई देवता भी देखनेमें नहीं आता । हे देवि! कमलकी नालके भीतर ततुकी समान नाभि तथा हृदयमें स्थित तुझे जो मनुष्य हृदयमें चिंतवन करताहै उसका मरण नहीं होता । जो मनुष्य शीतला देवीके इन आठ श्लोकोंका सर्वदा पाठ करताहै उसके वंशमें कभी विस्फोटकका तीव्र भय उत्पन्न नहीं होता । यह शीतलाका स्तोत्र उत्तम और कल्याणकारक है । इसको मनुष्य दुःखको दूर करनेके लिये भक्तिभावसे पाठ करे और पठन श्रवणभी करे । यह शीतलाष्टकनामकस्तोत्र जिस तिसको नहीं देना चाहिये कि तु जो भक्तिसे और श्रद्धासे युक्त होय उसीको देना चाहिये, यह काशीखंडमें कहाहुआ शीतलास्तोत्र पूर्ण हुआ ॥ ॥ १५-२८ ॥

## अथ शीतलाया द्वितीयो भेदः ।

वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः ॥ तां कश्चित्प्राह पक्वेति सा तु पाकं न गच्छति ॥ २९ ॥ जलशूकवदंगानि सा विध्यति विशेषतः ॥ सप्ताहाद्वा दशाहाद्वा शान्तिं याति विनौषधम् ॥ ३० ॥ यदि वा भेषजं दद्यात्खदिराष्टकनिर्मितम् ॥ कषायं हि तदा दद्यात्कोद्रवायाः प्रशान्तये ॥ ३१ ॥

कोद्रवा कोदवा इति लोके ॥

वात और कफसे उत्पन्न हुई और कोदोंकी समान आकारवाली जो शीतला होतीहै उसको कोद्रवा कहते है । अनजान मनुष्य इस शीतलाको पकनेवाली कहतेहैं किंतु वास्तवमें यह शीतला पकती नहीं है । यह शीतला विशेषकरके जलके शूकनामक कीटेकी समान अंगोंको बेधन करती है और सातदिनमें द्वादशदिनमें औषधिके विनाही शात होजातीहै । जो इस कोद्रवानामक शीतला शात करनेके लिये औषधि देनी होय तो खदिराष्टकसे बनायाहुआ क्वाथ देना चाहिये ॥ २९-३१ ॥

## अथ शीतलायास्तृतीयो भेदः ।

ऊष्मणा तूष्मजारूपा सकण्डूः स्पर्शनप्रिया ॥ नाम्ना पाणिसहाख्याता सप्ताहाच्छुष्यति स्वयम् ॥ ३२ ॥

ऊष्मजारूपा पडूष्मजा राजिकाकृतिः । अभौरी इति लोके वदन्ति तद्रूपा । पाणिसहा पनिसहा इति लोके ॥

जो शीतला गरमीके कारण राईके समान आकारवाली खुजलीयुक्त और जिसके ऊपर हाथ आदिका स्पर्श प्रिय लगे वह पाणिसहा कहीजातीहै और वह शीतला सात दिनमे अपनेआप सूख जातीहै ॥ ३२ ॥

### अथ शीतलायाश्चतुर्थो भेदः ।

**चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ॥ नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥ ३३ ॥**

जो शीतला सरसोंकी समान आकारवाली और पीली सरसोंकी समान वर्णवाली होय वह सर्षपिका कहीजातीहै इस शीतलामे अभ्यगका त्याग करना चाहिये ॥ ३३ ॥

### अथ शीतलायाः पञ्चमो भेदः ।

**किञ्चिदूष्मनिमित्तेन जायते राजिकाकृतिः ॥ एषा भवति बालानां मुखं शुष्यति च स्वयम् ॥ ३४ ॥**

**एषा दुःखकोद्रवा इति लोके ख्याता ॥**

जो शीतला कुछेक गरमरूपी कारणोंसे बालकोंके मुखपर राईकी समान आकारवाली होय वह दुःखकोद्रवा कहीजातीहै और वह शीतला अपनेआप सूख जातीहै ॥ ३४ ॥

### अथ शीतलायाः षष्ठो भेदः ।

**कोष्ठवज्जायते षष्ठी लोहितोन्नतमण्डला ॥ ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम् ॥ ३५ ॥**

**एषा मगधदेशे हाम इति प्रसिद्धा ॥**

प्रथम ज्वर आकर जो शीतला कोढकी समान लाल तथा ऊँचे मडलवाली होतीहै और व्यथायुक्त होतीहै वह मगधदेशमे 'हाम' इस नामसे कहीजातीहै । इस शीतलाका ज्वर तीन दिनतक रहताहै, इस शीतलाकी फुसी मिलजानेसे अनेक फुसी दीखतीहैं ॥ ३५ ॥

### अथ शीतलायाः सप्तमो भेदः ।

**स्फोटानां मेलनादेषा बहुस्फोटाऽपि दृश्यते ॥ एकस्फोटे च कृष्णा च बोद्धव्या चर्मजाभिधा ॥ ३६ ॥**

**चमरगोटी इति लोके ॥**

जो शीतला एक स्फोटकमे काली होय तो चर्मनी कही जाती है ॥ ३६ ॥

### अथ शीतलायाः साध्यासाध्यता ।

**काश्चिद्विनापि यत्नेन सुखं सिद्ध्यन्ति शीतलाः ॥ दृष्टाः कष्टतराः काश्चित्काश्चित्सिध्यन्ति वा न वा ॥ काश्चिन्नैव तु सिध्यन्ति यत्नतोऽपि चिकित्सिताः ॥ ३७ ॥**

कितनी एक शीतला चिकित्साके विनाही सहजमें मिटजातीहैं । कितनी एक शीतला अत्यन्त कष्टसाध्य देखी जातीहैं । कितनी एक शीतला समयपर आराम होतीहैं तथा समयपर भी आराम नही होती । और कितनेक शीतला तो अनेक वडे २ यत्नोंसे चिकित्सा करनेपर भी आराम नहीं होतीं ॥ ३७ ॥

### अथ शीतलासप्तकस्य सामान्यचिकित्सा ।

**एताः सप्तापि बोद्धव्याः शीतलादेव्यधिष्ठिताः ॥ शीतलोचितमाचारमासु सर्वासु वा चरेत् ॥ ३८ ॥**

इति शीतलारोगाधिकारः ।

इन सातो प्रकारकी शीतलाओमे शीतलादेवीका सबध होताहै इन सर्वप्रकारकी शीतलाओमे तत्कालही पूर्वोक्त शीतलाकी समान चिकित्सा करनी चाहिये ॥ ३८ ॥

इति शीतलाधिकारः सपूर्णः ।

---

## अथ क्षुद्ररोगाधिकारः ।

### तत्र पलितरोगनिदानलक्षणम् ।

**क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ॥ पित्तञ्च केशान्पचति पलितं तेन जायते ॥ १ ॥**

**शरीरोष्मा देहाग्निः । पित्तञ्च भ्राजकाख्यं तच्च शिरोगतं क्रोधात्कुपितं पित्तं पचति । शोकेन श्रमेण च कुपितो वायुः शरीरोष्माणं शिरो नयति । 'एकः प्रकुपितो दोष इतरावपि कोपयेत्' इति वचनाद्वातपित्ताभ्यां श्लेष्मा च कोपितः, स एव केशानां शौ-**

क्षयं करोति । एवं त्रयोऽपि दोषाः पलितस्य हेतवः । पलितं केशस्य शुक्लता ॥

क्रोध, शोक तथा परिश्रम आदिसे कोपको प्राप्त हुई वायु शरीरकी गरमीको शिरमे लेजातीहै और मस्तकमें रहनेवाला भ्राजकनामक पित्त भी क्रोधसे प्रकुपित होताहै प्रकुपितहुआ एक दोष दूसरे दोषोंको भी प्रकुपित करता है इस वचनके अनुसार ऊपर कही रीतिसे कुपित हुई वायु और पित्त यह कफको भी कुपित करतेहैं और कोपको प्राप्त हुआ कफ बालोंको सफेद करताहै इस प्रकार यह तीनो दोष केशोंके सफेदपनेमे निदानभूत होतेहैं ॥ १ ॥

## अथ पलितचिकित्सा ।

लोहचूर्णस्य कर्ष तु दशार्द्धं चूतमज्जतः ॥ धात्रीपलद्वयं पथ्ये द्वे तथैकं विभीतकम् ॥ २ ॥ पिष्ट्वा लोहमये भाण्डे स्थापयेन्निशि वासयेत् ॥ लेपोऽयमचिराद्धन्ति पलितं नात्र संशयः ॥ ३ ॥

दशार्द्धं पञ्चकर्षाणि ॥

काश्मर्या मूलमादौ सहचरकुसुमं केतकस्यापि मूलं लौहं चूर्णं सभृंगं त्रिफलपलयुतं तैलमेभिः पचेद्यः ॥ कृत्वा लौहस्य भाण्डे क्षितितलनिहितं स्थापयेन्मासमेकं केशाः काशप्रकाशा अपि मधुपनिभा अस्य योगाद्भवन्ति ॥ ४ ॥ त्रिफला नीलिकापत्रं भृंगराजोऽयसो रजः ॥ अविमूत्रेण सम्पिष्टं लेपात्कृष्णीकरं परम् ॥ ५ ॥

लोहेका चूर्ण १ तोला, आमकी गुठली ५ तोले, आमले २ दो तोले, हरड २ तोले, और बहेडा एक १ तोला इनको एकत्र पीसकर लोहेके बरतनमें रातभर रहने देवे, फिर इसका लेप करनेसे थोडेही समयमें बालोंकी श्वेतताका नाश होताहै ।

कुम्भेरकी जड, पियाबासेके फूल या जड, केतकीकी जड, लोहेका चूरा, भांगरा और त्रिफला चार तोले इनके कल्कमें तेलको पकावे, उस तेलको लोहेके बासनमें करके पृथिवीमे एक महीनेतक गाड देवे । इस तेलके लगानेसे कासके फूलकी सदृश सफेद बाल भी भौंरेकी समान श्याम होजातेहैं ।

हरड, बहेडा, आमले, नीलके पत्ते, भांगरा और लोहेका चूरा इनको मेंडके मूत्रमें पीसकर लेप करनेसे सफेद बाल काले होजातेहैं ॥ २-५ ॥

## अथेन्द्रलुप्तसम्प्राप्तिलक्षणानि

रोमकूपानुगं रक्तं पित्तेन सह मूर्च्छितम् ॥ प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ ६ ॥ रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः ॥ तदिन्द्रलुप्तं खालित्यं रुज्येति च विभावयेत् ॥ ७ ॥

रोमोंकी जडमें स्थित रुधिर पित्तके साथ कुपित होकर रोमोंको गिरादेताहै पश्चात् रुधिरसहित कफ रोमकूपोंको रोक देताहै कि जिससे फिर रोम उत्पन्न नही होते । इस रोगको इन्द्रलुप्त, खालित्य और रुज्या कहतेहैं, देशमें गज वा टाक कहतेहैं ॥ ६ ॥ ७ ॥

## अथेन्द्रलुप्तचिकित्सा ।

तिक्तपटोलीपत्रस्वरसैर्घृष्ट्वा शमं याति ॥ चिरकालजापि रुज्या नियतं दिवसत्रयेणापि ॥ ८ ॥ गोक्षुरस्तिलपुष्पाणि तुल्ये च मधुसर्पिषी ॥ शिरः प्रलेपितं तेन केशैः समुपचीयते ॥ ९ ॥ हस्तिदन्तमषी कृत्वा छागीदुग्धं रसाञ्जनम् ॥ लोमान्येतेन जायन्ते लेपात्पाणितलेष्वपि ॥ १० ॥ यष्टीन्दीवरमृद्वीकातैलाज्यक्षीरलेपनैः ॥ इन्द्रलुप्तं शमं याति केशाः स्युश्च घना दृढाः ॥ ११ ॥ जातीकरञ्जवरुणकरवीराग्निपाचितम् ॥ तैलमभ्यञ्जनाद्धन्यादिन्द्रलुप्तं न संशयः ॥ १२ ॥

कडवे परवलोंके पत्तोंका स्वरस निकालकर उसके मसलनेमें बहुत दिनोंका इन्द्रलुप्तरोगभी तीनदिनमें आराम होजाताहै ।

गोखुरु, तिलके फूल और इनके बराबर घी तथा सहत

इनको एकत्र करके शिरपर लेप करनेसे शिर बालोंसे परिपूर्ण होजाताहै।

हाथीदाँतकी भस्म, बकरीका दूध और रसौत इनका लेप करनेसे हाथकी हथेलीमें भी बाल उपज आते हैं।

मुलैठी, नीले कमल, दाख, तेल, घी और दूध इनका लेप करनेसे इन्द्रलुप्त रोग अवश्य नष्ट होजाताहै और बाल सघन तथा दृढ होजाते हैं।

चमेली, करंज, वरना, कनेर और चीता इनके कल्कसे पकाया हुआ तेल लगानेसे निश्चय इन्द्रलुप्त नष्ट होजाताहै ॥ ८–१२ ॥

## अथ स्नुहीदुग्धादितैलम्।

स्नुहीपयः पयोऽर्कस्य लाङ्गली मार्कवो विषम् ॥ अजामूत्रं सगोमूत्रं रक्तिका सेन्द्रवारुणी ॥ १३ ॥ सिद्धार्थकस्तीक्ष्णगन्धा सम्यगेभिर्विपाचितम् ॥ तैलं भवति नियमात्खालित्यव्याधिनाशनम् ॥ १४ ॥

थूहरका दूध, आकका दूध, कलिहारी, भागरा, वत्सनाभ, बकरीका मूत्र, गायका मूत्र, चौटली, इन्द्रायन, सरसों और सफेदवच इनके कल्कसे पकायाहुआ तेल इस तेलकी मालिस करनेसे इन्द्रलुप्त रोग (गंज पाटाक) अवश्य दूर होताहै ॥ १३ ॥ १४ ॥

## अथ दारुणकलक्षणम्।

दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते ॥ मारुतश्लेष्मकोपेन विद्याद्दारुणकन्तु तत् ॥ १५ ॥

दारुणा कर्कशा दारुणकं लोके रुसीति ख्यातम् ॥

वात और कफके प्रकोपसे बालोंकी जमीन खरखरी, खुजलीयुक्त और रुखी होजाती है उसको दारुणक कहते हैं ॥ १५ ॥

## अथ दारुणकचिकित्सा।

कार्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः ॥ प्रियालबीजमधुककुष्ठमाषैः ससैन्धवैः ॥ ॥ १६ ॥ आम्रबीजं तथा पथ्याद्वयं स्यान्मात्रया समम् ॥ दुग्धेन पिष्टं तल्लेपो दारुणं हन्ति दारुणम् ॥ दुग्धेन खाखसं बीजं प्रलेपाद्दारुणं हरेत् ॥ १७ ॥

चिरौंजीके बीज, मुलैठी, कूठ, उडद और सैंधानिमक इनको एकत्र पीसकर सहतमे मिलाकर शिरमे गाढा लेप करनेसे दारुणक रोग नष्ट होजाताहै।

आमकी गुठली और हरड इनको समान भाग लेकर दूधमे पीसकर लेप करनेसे दारुणकरोग दारुण (उग्र) भी अवश्य नष्ट होजाताहै।

खसखसके बीजको दूधमे पीसकर लेप करनेसे दारुणक रोग अवश्य नष्ट होताहै ॥ १६ ॥ १७ ॥

## अथ गुंजादितैलम्।

गुञ्जाफलैः शृतं तैलम्भृङ्गराजरसेन च ॥ कंडूदारुणहृत्कुष्ठकपालव्याधिनाशनम् ॥ १८ ॥

चौटलीके कल्कसे और भागरेके रससे पकाहुआ तेल गुजादितैल कहाजाताहै। इस तेलसे खुजली, दारुणक, कोट और कपालके सम्पूर्णरोग नष्ट होते हैं ॥ १८ ॥

## अथारूंषिकालक्षणम्।

अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि। कफासृक्क्रिमिकोपेन तानि विद्यादरूंषिकाम् ॥ १९ ॥

कफके, रुधिरके और कृमियोंके प्रकोपसे मस्तकमें बहुत मुखवाले और अत्यंत क्लेदयुक्त व्रण होय उनको अरूंषिका कहते हैं ॥ १९ ॥

## अथारूंषिकाचिकित्सा।

नीलोत्पलस्य किञ्जल्को धात्रीफलसमन्वितः ॥ यष्टीमधुकयुक्तश्च लेपाद्धन्यादरूंषिकाम् ॥ २० ॥

नील कमलकी केसर, आमले और मुलैठी इनको एकत्र पीसकर लेप करनेसे अरूंषिका नष्ट होजाती है २०

## अथ त्रिफलाद्यतैलम्।

त्रिफलायोरजोयष्टीमार्कवोत्पलसारिवाः॥ सैन्धवं पक्कमेतैस्तु तैलं हन्यादरूंषिकाम् ॥ २१ ॥

हरड, बहेड़ा, आमला, लोहेका चूरा, मुलेठी, कमल, सारिवा और सैंधानिमक इनके कल्कसे पकाया हुआ तेल त्रिफलाद्यतैल कहाजाताहै यह तेल अरूंषिकाको नष्ट करदेताहै ॥ २१ ॥

### अथेरिवेल्लिकालक्षणम् ।

पिडकामुत्तमांगस्थां वृत्तामुग्ररुजाज्वराम् ॥ सर्वात्मिकां सर्वलिंगां जानीयादिरिवेल्लिकाम् ॥ २२ ॥

मस्तकमें गोल, उग्र पीडावाली, तीव्र ज्वरवाली, तीनों दोषोंसे उत्पन्न और त्रिदोषोंके लक्षणो युक्त जो पिडका उत्पन्न होती है वह इरिवेल्लिका कहीजाती है ॥ २२ ॥

### अथेरिवेल्लिकाचिकित्सा ।

पैत्तिकस्य विसर्पस्य या चिकित्सा प्रकीर्तिता ॥ तयैव भिषगेताञ्च चिकित्सेदिरिवेल्लिकाम् ॥ २३ ॥

पित्तज विसर्पकी जो चिकित्सा वैद्योंने कही है उसी चिकित्सासे इरिवेल्लिकाको दूर करना चाहिये ॥ २३ ॥

### अथ पनसिकालक्षणम् ।

कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम् ॥ स्थिरां पनसिकां तान्तु विद्याद्वातकफोत्थिताम् ॥ २४ ॥

कानके भीतर वायु तथा कफके प्रकोपसे उठी हुई, कठिन और उग्रवेदनावाली जो पिडका होती है उसको पनसिका कहते हैं ॥ २४ ॥

### अथ पनसिकाचिकित्सा ।

भिषक् पनसिकां पूर्वं स्वेदयेदथ लेपयेत् ॥ कल्कैर्मनःशिलाकुष्ठनिशातालकदारुभिः ॥ पक्कां विज्ञाय तां भित्त्वा व्रणवत्समुपाचरेत् ॥ २५ ॥

वैद्य प्रथम पनसिकाके ऊपर स्वेद देवे पश्चात् मैनशिल, कुट, हलदी, हरिताल और देवदारु इनका लेप करे, जब पकजाय तो उसकी व्रणकी समान चिकित्सा करे ॥२५॥

### अथ पाषाणगर्दभलक्षणम् ।

वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः ॥ स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः ॥ २६ ॥ स्थिरः कठिनः ॥

वात तथा कफके प्रकोपसे ठोडीकी सन्धिमें कठिन मन्द वेदनावाली और स्निग्ध सूजन होय तो उसको पाषाणगर्दभ कहते हैं ॥ २६ ॥

### अथ पाषाणगर्दभचिकित्सा ।

पाषाणगर्दभं पूर्वं स्वेदयेत्कुशलो भिषक् ॥ ततः पनसिकाप्रोक्तैः कल्कैरुष्णैः प्रलेपयेत् ॥ २७ ॥ वातश्लैष्मिकशोथघ्नैः कल्कैरन्यैश्च लेपयेत् ॥ परिपाकगतं भित्त्वा व्रणवत्तमुपाचरेत् ॥ २८ ॥ जलौकोभिर्हृते रक्ते स शाम्यति विनौषधम् ॥ एतत्स्थलेषु बहुषु प्रेक्षितं लिखितं ततः ॥ २९ ॥

प्रवीणवैद्य प्रथम पाषाणगर्दभके ऊपर स्वेद करावे पश्चात् पनसिकाकी चिकित्सामें कहेहुए उष्ण कल्कोसे प्रलेप करे ।

वात और कफकी सूजनको हरनेवाले अन्यान्य कल्कोका भी लेप करे ।

पाषाणगर्दभको पका जानकर उसको शस्त्रसे चीरकर व्रणकी समान उपचार करे ।

जोंक लगाकर रुधिर निकलवावे तो औषधिके विनाही पाषाणगर्दभ शांत होजाताहै । यह बहुतवार अजमाया हुआ है इस लिये यहां लिखा है ॥ २७–२९ ॥

### अथ युवानपिडकालक्षणम् ।

शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः ॥ युवानपिडका यूनां ज्ञेयास्ता मुखदूषिकाः ॥ ३० ॥

प्रख्याः सदृशाः । एता यूनामेव मुखे भवन्ति स्वभावात् ॥

युवा मनुष्योंके मुखपर सेमलके काँटोकी समान कफ, वायु तथा रुधिरसे उत्पन्न होनेवाली जो फुंसी होती वे युवानपिडका तथा मुखदूषिका ( मोहासे ) कही जाती हैं। ये फुंसी स्वाभाविक रत्यनुसार युवाओंके मुखपर होती हैं ॥ ३० ॥

## अथ युवानपिडकाचिकित्सा।

अंगुलस्य चतुर्थांशो मुखलेपो विधीयते ॥ मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धांगुलो भवेत् ॥ ३१ ॥ स्थितिकालोऽपि तस्योक्तो यावत्कल्को न शुष्यति ॥ शुष्कस्तु गुणहीनः स्यात्तथा दूषयति त्वचम् ॥ ३२ ॥

चौथाई अंगुल प्रमाण गाढा लेप करना कनिष्ठ मात्रा है। तिहाई अंगुल प्रमाण गाढा लेप करना मध्यम मात्रा है और आधा अगुल प्रमाण गाढा लेप करना उत्तम मात्रा है।

लेपकी हुई औषधि जबतक सूखे नही तबतक मुखपर रखना चाहिये, सूखनेके पश्चात् मुखपर नही रखना चाहिये। सूखा आ लेप रखनेसे गुणहीन होजाता है और त्वचाको दूषित करदेताहै ॥ ३१ ॥३२ ॥

लोध्रधान्यवचालेपस्तारुण्यपिडिकापहः॥ तद्वद्गोरोचनायुक्तं मरिचं मुखलेपितम् ॥ ॥ ३३ ॥ सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् ॥ वमनश्च निहन्त्याशु पिडकां यौवनोद्भवाम् ॥ ३४ ॥

लोध, धनिया और वच इनका लेप करनेसे युवा अवस्थाकी मुखकी फुसी ( मोहासे ) नष्ट होजातीहैं।

गोरोचनके साथ कालीमिरचोका लेप करनेसे तरुण अवस्थाके कारण उत्पन्न हुए मुहासे सब दूर होजातेहैं।

सरसो, वच, लोध और सैंधानिमक इनका लेप करनेसे मुखके मुहासे दूर होजातेहैं। वमन करनेसे तरुण अवस्थाके मुखके मुहासे दूर होजातेहैं ॥ ३३ ॥ ३४ ॥

## अथ मुखकान्तिकरो लेपः।

केवलाः पयसा पिष्टास्तीक्ष्णाः शाल्मलिकण्टकाः ॥ आलिप्तं त्र्यहमेतेन भवेत्पद्मोपमं मुखम् ॥ ३५ ॥

सेमलके तीक्ष्ण कांटोको दूधके साथ पीसकर तीन दिनतक लेप करनेसे मुहासे दूर होकर मुख कमलके समान सुन्दर होजाताहै ॥ ३५ ॥

## अथ व्यंगलक्षणम्।

क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः॥ मुखमागत्य सहसा मण्डलं प्रसृजत्यतः ॥ नीरुजं तनुकं श्यावं मुखे व्यंगं तदादिशेत् ॥ ३६ ॥

व्यंगम् झांई इति लोके।

क्रोधसे तथा परिश्रमसे प्रकोपको प्राप्त हुई पित्तके साथ वायु मुखमे आकर तत्काल मुखके ऊपर वेदना रहित, बहुत पतली और काली झाँई युक्त मंडल करेहै उसको व्यंग कहतेहैं ॥ ३६ ॥

## अथ नीलिकालक्षणम्।

कृष्णमेवंगुणं वक्रे गात्रे वा नीलिकां विदुः ॥ ३७ ॥

एवंगुणम्, नीरुजं तनुकं मण्डलम्।

मुखके ऊपर अथवा देहके ऊपर वेदनारहित, पतला तथा काला मडल होताहै, उसको नीलिका कहतेहैं ॥ ३७ ॥

## अथ व्यंगनीलिकयोश्चिकित्सा।

शिरावेधैः प्रलेपैश्च तथाभ्यंगैरुपाचरेत् ॥ व्यंगश्च नीलिकां वापि न्यच्छश्च तिलकालकम् ॥ ३८ ॥ वटांकुरा मसूराश्च प्रलेपाद्व्यङ्गनाशनम् ॥ व्यंगे मञ्जिष्ठया लेपः प्रशस्तो मधुयुक्तया ॥ ३९ ॥ अथवा लेपनं शस्तं शशस्य रुधिरेण च ॥ व्यंगहृद्वरुणत्वक्स्यादजामूत्रेण पेषिता ॥४०॥ जातीफलस्य लेपस्तु हरेद्व्यंगश्च नीलिकाम् ॥ अर्कक्षीरहरिद्राभ्यां मर्दयित्वा प्रलेपनात् ॥ ४१ ॥ मुखकार्श्यं शमं याति चिरकालोद्भवं ध्रुवम् ॥ मसूरैः क्षीरसम्पिष्टैर्लिप्तमास्यं घृतान्वितैः ॥ ४२ ॥ सप्तरात्राद्भवेत्सत्यं पुण्डरीकदलोपमम् ॥ वटस्य पाण्डुपत्राणि मालतीरक्तचन्दनम् ॥ ४३ ॥ कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत् ॥ युवास्यपिडिकानां तु

व्यंगानां तु विनाशनम् ॥ स्यादेतेन सुखश्चापि वर्जितं नीलिकादिभिः ॥ ४४ ॥

कालीयकं कदम्बक इति लोके । युवास्यपिडिका यूनामानने यत्पिडका पृषोदरादित्वान्नकारलोपः ॥

नसको खोलनेसे, प्रलेप करनेसे, तथा अभ्यंगसे व्यंगकी, नीलिकाकी, न्यच्छकी तथा तिलकालककी चिकित्सा करे ।

वडके अंकुर और मसूर इनका प्रलेप करनेसे व्यंगका नाश होताहै ।

मजीठको सहतमें पीसकर लेप करनेसे व्यंग नष्ट होताहै ।

खरगोशके रुधिरका लेप करनेसे व्यंग ( झांई ) नष्ट होजातीहै ।

वरनाकी छालको बकरीके मूत्रमें पीसकर लेप करनेसे व्यंग ( झांई ) नष्ट होतीहै ।

जायफलका लेप करनेसे झांई दूर होजातीहै और नीलिका भी दूर होजातीहै ।

आकका दूध और हलदी इनको पीसकर प्रलेप करनेसे बहुत दिनोंकी मुखकी कृष्णता दूर होजातीहै ।

मसूरको दूधमें पीसकर घीमें मिलाकर लेप करनेसे सात दिनमें मुखमण्डल कमलके समान होजाताहै ।

वडके पीले पत्ते, मालती, लालचंदन, कूठ, कदम्बक और लोध इनका लेप करनेसे युवा मनुष्योंके मुखके मुहासे तथा व्यंगका नाश होताहै ।

इस उपायसे मुखके दाद वगैरह भी दूर होजातीहै ॥ ३८–४४ ॥

## अथ कंकमाद्यतैलम् ।

कुंकुमं चन्दनं लोध्रं पतंगं रक्तचन्दनम् ॥ कालीयकमुशीरश्च मञ्जिष्ठा मधुयष्टिका ॥ ४५ ॥ पत्रकं पद्मकं पद्मं कुष्ठं गोरोचना निशा ॥ लाक्षा दारुहरिद्रा च गैरिकं नागकेसरम् ॥ ४६ ॥ पलाशकुसमश्चापि प्रियंगुश्च वटांकुराः ॥ मालती च मधुच्छिष्टं सर्षपाः सुरभिर्वचा ॥४७॥ चतुर्गुणपयःपिष्टैरेतैरक्षमितैः पृथक् ॥ पचेन्मन्दाग्निना वैद्यस्तैलं प्रस्थद्वयोन्मितम् ॥ ४८ ॥ वदनाभ्यञ्जनादेतद्व्यंगं नीलिकया सह ॥ तिलकं माषकं न्यच्छं नाशयेन्मुखदूषिकाम् ॥ ४९ ॥ पद्मिनीकण्टकश्चापि हरेज्जतुमणिं तथा ॥ विदध्याद्वदनं पूर्णचन्द्रमण्डलसुन्दरम् ॥ ५० ॥

पतंगं बकम इति लोके।कालीयकं कदम्बकम् । सुरभिर्वचा महाभरी इति लोके ॥

केसर, सफेद चदन, लोध, पतग, लाल चंदन, कदम्बक, खस, मजीठ, मुलेठी, तेजपात, पद्माख, कमल, कूठ, गोरोचन, हलदी, लाख, दारुहलदी, पीलागेरू, नागकेसर, ढाकके फूल, फूलप्रियंगू, बडके अंकुर, मालती, मोम, सरसों और महाभरी वच, यह प्रत्येक पदार्थ एक एक तोला लेकर चौगुने दूधमें पीसकर वैद्य इस कल्कसे १२८ एकसौ अठाईस तोले तेलको मदमंद अग्निसे पकावे इस कुंकुमाद्य तेलको मुखपर अभ्यंग करनेसे व्यंग, नीलिका, तिल, मशक, न्यच्छ, मुखदूषिका, पद्मिनीकंटक और जतुमणि ये सब रोग नष्ट होतेहैं और मुख पूर्ण चन्द्रमंडलकी समान सुंदर होजाताहै ॥ ४५–५० ॥

## अथ वल्मीकलक्षणम् ।

ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः ॥ ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैव गतः प्रवृद्धिम् ॥ ५१ ॥ मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः ॥ वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात् ॥ ५२ ॥

ग्रीवा कृकाटिका । अंसः स्कन्धः । कक्षा बाहुमूलम् । वल्मीकवदित्यनेन प्रचुरशिखरत्वमुच्चत्वमव्रणाढ्यमूलत्वञ्च सूच्यते । निष्प्रत्यनीकमुपचारायोग्यम् ॥

ग्रीवा, खवेमें वा कंधे, कोख, हाथ और पाव इन प्रदेशोंमे सधियोमे अथवा गलेमें वॉंबईकी समान अनेक सिखरोवाली, ऊची और दृढजडवाली ग्रंथि होतीहै। चिकीत्सा नही करनेवाले मनुष्योंके यह ग्रंथि अनुक्रमसे बढकर स्रावयुक्त व्यथायुक्त और आगेसे ऊची अनेक मुखोसे विसर्पकी समान फैल जातीहै, इस रोगको वैद्य वल्मीक कहतेहैं। यह रोग जो वहुत कालसे उत्पन्न हुआ होय तो विशेष करकै इसकी चिकित्सा निष्फल होती है ॥ ५१ ॥ ५२ ॥

## अथासाध्यवल्मीकलक्षणम्।

**वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुव्रणम् ॥ पाणिपादोपरिष्टात्तु छिद्रैर्वहुभिरावृतम् ॥ वल्मीकं यत्सशोफं स्याद्वर्ज्यं तद्धि विजानता ॥ ५३ ॥**

हाथ अथवा पावके ऊपर जो वल्मीक छिद्रोंसे व्याप्त होय और सूजनसे युक्त होय उसकी वैद्य समझकर चिरकित्सा करे ॥ ५३ ॥

## अथ वल्मीकचिकित्सा।

**शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ॥ विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत् ॥ ५४ ॥ वल्मीकं तु भवेद्यस्य नातिवृद्धममर्मजम् ॥ तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक् ॥ ५५ ॥ कुलत्थकानां मूलैश्च गुडूच्या लवणेन च ॥ आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ॥ ५६ ॥ श्यामामूलैः सपललैः सक्तुमिश्रैः प्रलेपयेत् ॥ सुस्निग्धैश्च सुखोष्णैश्च भिषक्तमुपनाहयेत् ॥ ५७ ॥ पक्वं तद्वा विजानीयाद्गतिः सर्वा यथाक्रमम् ॥ अभिज्ञाय गतिं छित्वा प्रदिह्यान्मतिमान्भिषक् ॥ ५८ ॥ संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत् ॥ व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान्भिषक् ॥ ५९ ॥**

वल्मीकको शस्त्रसे चीरकर क्षारसे तथा अग्निसे दूर करे। अर्बुदकी चिकित्साकी समान प्रथम शोधन कर पश्चात् भरे। वल्मीक जो अत्यंत वृद्धिको प्राप्त न हुई होय और मर्म स्थलमें न उत्पन्न होय तो वैद्य संशोधन करकै पश्चात् उसमेसे रुधिर निकलवावे।

कुलथीकी जड, गिलोय, सेंधानिमक, अमलतासकी जड, दतीकी जड, निसोतकी जड, मांस और उस इनको मिलाकर वल्मीकपर प्रलेप करे और अत्यत स्निग्ध पदार्थोंको कुछ कुछ गरम करके उसके ऊपर पट्टी बॉंधे। जब वल्मीक पकजाय तब उसको अनुक्रमसे रादकी गतिको विचारकर शस्त्रसे चीरकर बुद्धिमान् वैद्य लेपकर, दूषित मांसको साफ करकै पश्चात् क्षार डालकर प्रतिसारण करे, व्रणको साफ समझकर फिर बुद्धिमान् रोपण औषधियोंसे भरे ॥ ५४–५९ ॥

## अथ मनःशिलाद्यतैलम्।

**मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ॥ जातीपल्लवतर्कैश्च निम्बतैलं विपाचयेत् ॥ ६० ॥**

मैनशिल, हरिताल, भिलावे, छोटी इलायची, अगर, सफेद चदन, चमेलीके पत्ते और छाछ इनको नीमके तैलसे पकावे तो यह मनःशिलाद्यतैल सिद्ध होताहै। यह तैल—अनेक छिद्रोंवाले तथा अनेक व्रणोंवाले वल्मीकको नष्ट करेहै ॥ ६० ॥

## अथ कक्षागंधमालयोर्लक्षणम्।

**बाहुकक्षांसपार्श्वेषु कृष्णस्फोटां सवेदनाम् ॥ पित्तप्रकोपसम्भूतां कक्षां तामिति निर्दिशेत् ॥ ६१ ॥ एकान्तु तादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम् ॥ त्वग्जातां पित्तकोपेन गन्धमालां प्रचक्षते ॥ ६२ ॥ तादृशीं बाह्वादिषु कृष्णां सवेदनाञ्च ॥**

बाहुओमें, खवोंमे, कोखमें, और पसलियोंमे पित्तके प्रकोपसे वेदनायुक्त जो फोडे होतेहैं उसको कक्षा (कखहारी, कखलाई) कहतेहैं।

ऊपर कही हुई बाहु आदिके स्थानोकी त्वचामे पित्तके प्रकोपसे काली और वेदनावाली फुंसीकी समान जो एक फुंसी होतीहै उसको गधमाला कहतेहैं ॥ ६१ ॥ ६२ ॥

### अथ कक्षागंधमालयोश्चिकित्सा ।

कक्षाश्च गन्धमालाश्च चिकित्सेच्च चिकित्सकः ॥ पैत्तिकस्य विसर्पस्य क्रियया पूर्वमुक्तया ॥ ६३ ॥

पित्तज विसर्पकी जो चिकित्सा कही है वही चिकित्सा कक्षा और गधमालाकी करनी चाहिये ॥ ६३ ॥

### अथाग्निरोहिणीलक्षणम् ।

कक्षाभागेषु विस्फोटा जायन्ते मांसदारुणाः ॥ अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ ६४ ॥ सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ॥ तामग्निरोहिणीं विद्यादसाध्यां सान्निपातिकीम् ॥ ६५ ॥

सप्ताहादिति वातपित्तकफापेक्षया बोद्धव्यम् । घ्नन्तीत्यनुपक्रान्ता उपक्रान्तास्तु साध्या एव । चरकेण अग्निरोहिण्य चिकित्साया उक्तत्वात् ॥

कांखमें अत्यत दारुण, भीतर दाह करनेवाली और प्रदीप्त अग्निकी समान जो फोडे होतेहैं उनको अग्निरोहिणी कहतेहैं । जो इनमें वायुकी उल्बणता होय तो यह मनुष्यको सातदिनमें मारदेतीहै । पित्तकी उल्बणता होय तो दशदिनमें मारदेतीहै और कफकी उल्बणता होय तो पन्द्रह दिनमे मारदेतीहै तीनों दोषोंके प्रकोपसे उत्पन्न हुई यह अग्निरोहिणी असाध्य है ।

यहां ऐसा जानना कि जो इसकी चिकित्सा न की जाय तो अग्निरोहिणी असाध्य होजातीहै किंतु जो चिकित्सा कीजाय तो साध्य है क्योंकि चरकने अग्निरोहिणीकी चिकित्सा कही है ॥ ६४ ॥ ६५ ॥

### अथाग्निरोहिणीचिकित्सा ।

पित्तवीसर्पविधिना साधयेदग्निरोहिणीम् ॥ रोहिण्यां लंघनं कुर्याद्रक्तमोक्षणरूक्षणम् ॥ शरीरस्य च संशुद्धिं तान्तु वृद्धां परित्यजेत् ॥ ६६ ॥

पित्तजविसर्पोक्त चिकित्साके अनुसार वैद्य अग्निरोहिणीको भी दूर करे ॥

अग्निरोहिणीको दूर करनेके लिये वैद्य लघन करावे, रुधिर निकलवावे, और विरेचन आदिसे शरीरको सशोधन करे, परंतु जो अग्निरोहिणी अत्यत वृद्धिको प्राप्त होय तो उसकी चिकित्सा न करे ॥ ६६ ॥

### अथ विदारिकालक्षणं निदानं च ।

विदारीकन्दवद्वृत्तां कक्षावंक्षणसन्धिषु ॥ रक्तां विदारिकां विद्यात्सर्वजां सर्वलक्षणाम् ॥ ६७ ॥

अत्र पिडकामिति विशेष्यपदमध्याहारणीयम् ॥

कॉख अथवा वक्षण सधिमें विदारीकदकी समान गोल हुई, लाल, सम्पूर्ण दोषोंसे उत्पन्न होनेवाली और सम्पूर्ण दोषोंके लक्षणोंयुक्त जो फुसी होय तो वह विदारिका कहीजातीहै ॥ ६७ ॥

### अथ विदारिकाचिकित्सा ।

विदारिकायां प्रथमं जलौकायोजनं हितम् ॥ पाटनञ्च विपक्वायां ततो व्रणविधिः स्मृतः ॥ ६८ ॥

विदारिकापर प्रथम जौंक लगानी उत्तम है, और जो विदारिका पकगई होय तो उसको शस्त्रसे चीरना चाहिये और पश्चात् व्रणकी समान चिकित्सा करे ॥ ६८ ॥

### अथ चिप्यलक्षणम् ।

नखमांसमधिष्ठाय वातः पित्तश्च देहिनाम् ॥ करोति दाहपाकौ च तं व्याधिं चिप्यमादिशेत् ॥ ६९ ॥

चिप्यं वेडवा इति लोके ॥

वात और पित्त यह मनुष्योंके नखोके मांसमे रहकर नखका क्षय करदेतेहैं तथा पकादेतेहैं उसको चिप्यरोग कहतेहैं ॥ ६९ ॥

### अथ कुनखनिदानलक्षणम् ।

अभिघातात्प्रदुष्टो यो नखो रूक्षः सितः खरः ॥ भवेत्तं कुनखं विद्यात्कुलीरं वाऽभिधानतः ॥ ७० ॥

अभिधानतः नामतः ॥

काष्ट आदिके आघातसे दुष्ट हुआ नख रूखा, सफेद और खरखरा होजाताहै इसको कुनख अथवा कुलीर कहतेहैं ॥ ७० ॥

## अथ चिप्यकुनखचिकित्सा।

चिप्यं रुधिरमोक्षेण शोधनेनाप्युपाचरेत् ॥ गतोष्माणमथैनन्तु सेचयेदुष्णवारिणा ॥ ७१ ॥ शस्त्रेणापि यथायोग्यमुच्छिद्य स्रावयेत्ततः ॥ व्रणोक्तेन विधानेन रोपयेत्तं विचक्षणः ॥ ७२ ॥ स्वरसेन हरिद्रायाः पात्रे कृत्वायसेऽभयाम् ॥ घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्यं पुनःपुनः ॥ ॥ ७३ ॥ काश्मर्याः सप्तभिः पत्रैः कोमलैः परिवेष्टितः ॥ अंगुलीवेष्टकः पुंसां ध्रुवमाशु प्रशाम्यति ॥ ७४ ॥ श्लेष्मविद्रधिकल्केन कुनखं समुपाचरेत् ॥ नखकोटिप्रविष्टेन टंकणेन न शाम्यति ॥ कुनखश्चेत्तदा शैलः सलिले प्लवतेऽपि च ॥७५॥

चिप्य हुआ होय तो रुधिर निकलवावे और शोधनभी करना चाहिये इसमेंसे जो गरमी नही रही होय तो गरम जलसे सेचन करे।

विचक्षण वैद्य योग्य रीत्यनुसार उसको शस्त्रसे चीरकर स्राव करावे, पश्चात् व्रणकी चिकित्साके अनुसार शोधन रोपण करे।

लोहेके बासनमे हलदीका रस डालकरके उसमें हरड को घिसकर चिप्यपर बारंबार लेप करे।

कुम्भेरके कोमल सात पत्तोको अगुलिपर बांधनेसे चिप्य तत्काल शांत होजाताहै।

कफज विद्रधिकी जो चिकित्सा कही है वही चिकित्सा कुनखकी की जावे तो कुनख अवश्य नष्ट होजाताहै।

कुनखके भीतर सुहागा भरनेसे कुनख अवश्य आराम होजाताहै ॥ ७१–७५ ॥

## अथ परिवर्तिकानिदानलक्षणम्।

मर्दनात्पीडनाद्वापि तथैवाप्यभिघाततः ॥ मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥ ॥ ७६ ॥ तदा वातोपसृष्टन्तु तच्चर्म परिवर्तते ॥ सवेदनं सदाहं च पाकञ्च व्रजति कर्हिचित् ॥ ७७ ॥ मणेरधस्तात्कोषस्तु ग्रन्थिरूपेण लम्बते ॥ मारुतागन्तुसम्भूतां विद्यात्तां परिवर्तिकाम् ॥ सकण्डूः कठिना चापि सैव श्लेष्मसमन्विता ॥ ७८ ॥

अस्यां वातजायामपि पित्तानुबन्धो बोद्धव्यो दाहपाकभावात्। कोषः चर्मकोषः ॥

सम्पूर्ण शरीरमे विचरती हुई वायु लिंगको खुजानेसे, दबानेसे तथा चोटके लगनेसे लिंगकी त्वचामे आतीहै तब वह वायुसे दूषित त्वचा परिवर्तन कहीजातीहै। वेदनायुक्त, दाहसहित, और किसी समय पकजातीहै। इसप्रकार लिंगकी मणिके नीचे वह चमडी गांठकी समान लटकतीहै। वायु तथा अभिघात आदि आगन्तुक कारणोंसे उत्पन्न हुआ यह रोग परिवर्तिका कहाजाताहै इस रोगमे कफका भी सबंध होय तो त्वचा खुजलीवाली तथा कठिन होतीहै।

यद्यपि यह रोग वातसे उत्पन्न होय तो इसे दाह और पाक होनेसे पित्तका सम्बन्ध जानना ॥ ७६–७८ ॥

## अथ परिवर्तिकाचिकित्सा।

परिवर्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत् ॥ त्रिरात्रं पञ्चरात्रञ्च वातघ्नैः शाल्वलादिभिः ॥ ७९ ॥ ततोऽभ्यज्य शनैश्चर्म पाटयेत्पीडयेन्मणिम्॥प्रविष्टे चर्मणि मणौ स्वेदयेदुपनाहनैः ॥ दद्याद्वातहरान्वस्तीन्स्निग्धान्यन्नानि भोजयेत् ॥ ८० ॥

परिवर्तिकाको घी चुपडकर अच्छे प्रकारसे सेक देवे और तीन रात्रितक अथवा पाच रात्रितक वायुको हरनेवाले शाल्वणादि कल्कोंकी पट्टी बांधे, फिर त्वचाको घीसे चुपडकर धीरे धीरे बढाकर लिंगकी मणिको दबावे कि जिससे मणि त्वचाके भीतर चली जाय। मणिको त्वचामे प्रवेश कराकर पश्चात् उपनाह स्वेद कर वातनाशक पिचकारी लगवे तथा रोगीको स्निग्ध अन्न भोजनके लिये देवे ॥ ७९ ॥ ८० ॥

## अथावपाटिकानिदानलक्षणम्।

अल्पीयःखां यदा हर्षाद्बलाद्गच्छेत्स्त्रियं नरः ॥ हस्ताभिघातादथवा चर्मण्युद्वर्तिते

बलात् ॥ ८१ ॥ मर्दनात्पीडनाद्वापि शुक्रवेगाभिघाततः ॥ यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥ ८२ ॥ वातेन कर्कशा रूक्षा सूक्ष्मा कृष्णा रुगन्विता ॥ पित्तेन पीता रक्ता वा दाहतृष्णासमन्विता ॥ श्लेष्मणा कठिना स्निग्धा कण्डूमत्स्वल्पवेदना ॥ ८३ ॥

अल्पीयः अल्पतरं खं योनिच्छिद्रं यस्याः ताम् । अवपाट्यते विदीर्यते ॥

जिस स्त्रीकी योनिका छिद्र बहुत छोटा होय ऐसी योनिवाली स्त्रीके साथ कामातुर पुरुष बल सहित मैथुन करनेसे, अथवा हस्त मैथुनादि करनेसे, हाथकी चोटके लगनेसे जोरसे, त्वचाको उलटनेसे अथवा खुजानेसे वा दवानेसे, अथवा वीर्यके वेगके अभिघातसे लिंगकी त्वचा फटजातीहै, इसको अवपाटिका कहतेहैं । यह अवपाटिका जो वायु सम्बन्धवाली होय तो खरखरी, रूखी, सूक्ष्म, काली तथा वेदनावाली होतीहै । पित्तके सम्बन्धवाली होय तो पीली अथवा लाल और दाहसे तथा तृषासे संयुक्त होतीहै और जो कफके सम्बन्धवाली होय तो कठिन, स्निग्ध, खुजलीवाली और अल्प पीडा युक्त होती है ॥ ८१-८३ ॥

## अथावपाटिकाचिकित्सा ।

स्नेहस्वेदैरिमां वैद्यश्चिकित्सेदवपाटिकाम् ८४

वैद्य स्नेहों तथा स्वेदोंसे अवपाटिकाकी चिकित्सा करे ॥ ८४ ॥

## अथ निरुद्धप्रकशलक्षणम् ।

वातोपसृष्टे मेढ्रे तु चर्म संश्रयते मणिम् ॥ मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥ ॥ ८५ ॥ निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ॥ मूत्रं प्रवर्तते जन्तोर्मणिर्विव्रियते न च ॥ ८६ ॥ निरुद्धप्रकशं विद्यात्सरुजं वातसम्भवम् ॥ ८७ ॥

निरुद्धप्रकाशमित्यस्य स्थाने निरुद्धप्रकशपदमार्षत्वात् ॥

लिंगमें वातका प्रकोप होकर चमडी मणिके आगे आकर चिपट जातीहै इसप्रकार चमडीसे बढी हुई मणि मूत्रके प्रवाहको रोक देतीहै इसको निरुद्धप्रकश रोग कहतेहैं । इस रोगमे मूत्र मन्द मन्द धारसे तथा वेदनारहित निकलताहै और लिंगकी सुपारी खुलती नहीं, यह रोग वायुसे होताहै और इसमे वेदना भी होतीहै । व्याकरणके अनुसार 'निरुद्धप्रकाश' ऐसा होना चाहिये परन्तु 'निरुद्धप्रकश' यह आर्ष है । अत एव 'निरुद्धप्रकश' ही लिखा है ॥ ८५-८७ ॥

## अथ निरुद्धप्रकशचिकित्सा ।

निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीम् ॥ दारवीं वा जतुकृतां घृताक्तां सम्प्रवेशयेत् ॥ ८८ ॥ परिषिञ्चेद्वसामज्जां शिशुमारवराहयोः ॥ चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम् ॥ ८९ ॥ त्र्यहात्स्थूलतरां सम्यङ् नाडीं मार्गे प्रवेशयेत् ॥ स्रोतो विवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत् ॥ भित्त्वा वा सेवनीं मुक्त्वा सद्यः क्षतवदाचरेत् ॥ ९० ॥

निरुद्धप्रकशमे दोनो ओर मुखवाली घीसे चुपडी हुई लोहेकी, वा लकडीकी अथवा लाखकी बनी नली लिंगके छिद्रमें प्रवेश करे, पश्चात् उसके ऊपर शिशुमार ( सूस ) नामक जतुकी तथा सूअरकी चरवीका वा मज्जाका सेचन करे और वातनाशक पदार्थोंके साथ चक्रके तेलका भी सेचनकरे । तीन तीन दिनके पश्चात् क्रम क्रमसे बढाकर बडी नली उसमें अच्छे प्रकारसे प्रवेश करे कि जिससे मूत्रका मार्ग बढे । इस क्रियाके करते समय रोगीको स्निग्ध अन्न भोजनके लिये देवे ।

सीवनको छोडकर शस्त्रसे चीरे, तत्काल क्षतकी समान चिकित्सा करे तो इससे निरुद्धप्रकश नष्ट होजाताहै ॥ ८८-९० ॥

## अथ सन्निरुद्धगुदनिदानलक्षणम् ।

वेगसन्धारणाद्वायुर्विहतो गुदसंश्रितः ॥

निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च ॥ ९१ ॥ मार्गस्य सौक्ष्म्यात्कृच्छ्रेण पुरीषं तस्य गच्छति ॥ सन्निरुद्धगुदं व्याधिमेतं विद्यात्सुदुस्तरम् ॥ ९२ ॥

मलादिके वेगोंको रोकनेसे अभिघातको प्राप्त हुई गुदामे रहनेवाली वायु गुदाके बडे द्वारको रोककर छोटा करदेती है कि जिससे मार्ग सुकडकर विष्ठा थोडी थोडी निकलती है। यह सन्निरुद्धगुदनामक व्याधि कहीजाती है और यह अत्यत दुस्तर है ॥ ९१ ॥ ९२ ॥

## अथ सन्निरुद्धगुदचिकित्सा।

सन्निरुद्धगुदे तैलैः सेको वातहरैर्हितः ॥ तथा निरुद्धप्रकशक्रियापि कथिताऽथवा ॥ ९३ ॥

वातनाशक तैलोंसे सेचनकरे अथवा निरुद्धप्रकशकी जो चिकित्सा कही है वही चिकित्सा करनेसे सन्निरुद्धगुद नष्ट होजाताहै ॥ ९३ ॥

## अथ वृषणकच्छूनिदानलक्षणम्।

स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः ॥ प्रक्लिद्यते यदा स्वेदात्कण्डूं जनयते तदा ॥ ९४ ॥ ततः कण्डूयनात्क्षिप्रं स्फोटः स्रावश्च जायते ॥ प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ९५ ॥

उत्सादनम् उद्वर्तनं मलः मैलि इति लोके। प्रक्लिद्यते आर्द्रो भवति ॥

स्नान नहीं करनेसे तथा अंगोंको साफ नहीं करनेसे अथवा स्नान करते समय जो मनुष्य मैलको उबटन आदिसे नही साफ करता उसके वृषणोंके ऊपर स्थित मैल जब पसीनेके साथ मिलताहै तब खुजलीको उत्पन्न करे है उसको बारबार खुजानेसे तत्काल फोडा होजाताहै और वह स्राववाला होता है। यह रोग कफ तथा रुधिरके प्रकोपसे होताहै ॥ ९४ ॥ ९५ ॥

## अथ वृषणकच्छूचिकित्सा।

सर्जाह्वकुष्ठसैन्धवसितसिद्धार्थैः प्रकल्पितो योगः ॥ उद्वर्तनेन नियतं शमयति वृषणस्य कण्डूतिम् ॥ ९६ ॥ भिषग्वृषणकच्छूं तु चिकित्सेत्पामरोगवत् ॥ अहिपूतननिर्दिष्टक्रिययापि च तां हरेत् ॥ ९७ ॥

राल, कूठ, सैधानिमक और सफेद सरसो, इनको एकत्र करके वृषणोंके ऊपर मलनेसे वृषणकी खुजली अवश्य नष्ट होजाती है।

वैद्य वृषणकच्छूकी पामाकी समान चिकित्सा करे अथवा नीचे अहिपूतन नामक रोगकी जो चिकित्सा कही है वही चिकित्सा करनी चाहिये ॥ ९६ ॥ ९७ ॥

## अथाहिपूतननिदानलक्षणम्।

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ॥ स्विन्ने वाऽस्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥ ९८ ॥ कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ॥ एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ९९ ॥

मलमूत्रके त्यागके बाद बालककी गुदामे विष्ठा लगारहनेसे, उसको बराबर नही धोनेसे गुदामे खाज होजाती है और पसीनेके निकलनेपर उसको साफ न करनेसे अर्थात् पसीनेको वहीं भरनेदेनेसे रुधिर तथा कफके प्रकोपसे खुजली होती है और खुजवानेसे तत्काल फुसी तथा स्राव होताहै जिससे कि उत्पन्न हुए व्रण एकत्रित होकर भयकर होजाते हैं उसको अहिपूतन कहते हैं ॥ ९८ ॥ ९९ ॥

## अथाहिपूतनचिकित्सा।

तत्र संशोधनैः पूर्वं धात्रीस्तन्यं विशोधयेत् ॥ त्रिफलाखदिरक्वाथैर्व्रणानां क्षालनं हितम् ॥ शंखसौवीरयष्ट्याह्वैर्लेपः कार्योऽहिपूतने ॥ १०० ॥

अहिपूतनके उत्पन्नहोतेही प्रथम संशोधनसे माताके दूधको शुद्ध करे। हरड, बहेडा, आमले तथा खैरके क्वाथसे व्रणोको धोवे और शंखका चूर्ण सौवीरनामक कांजी और मुलेठी इनका लेप करे ॥ १०० ॥

## अथ गुदभ्रंशनिदानलक्षणम्।

प्रवाहिकातिसाराभ्यां निर्गच्छति गुदं बहिः ॥ रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत् ॥ १०१ ॥

जिसका शरीर रूखा और दुर्बल होय उसकी गुदा दस्त आनेके समय जोर करनेसे तथा अतिसारसे बाहर निकलआती है, उसको गुदभ्रंश कहते हैं । उसको काँच निकलना भी कहते हैं ॥ १०१ ॥

### अथ गुदभ्रंशचिकित्सा ।

**गुदभ्रंशे गुदं स्विन्नं स्नेहेनाक्तं प्रवेशयेत् ॥ प्रविष्टं रोधयेद्यत्नाद्गव्येनाच्छिद्रचर्मणा ॥ १०२ ॥ पद्मिन्याः कोमलं पत्रं यः खादेच्छर्करान्वितम् ॥ एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥ १०३ ॥ मूषकाणां वसाभिर्वा गुदभ्रंशे प्रलेपनम् ॥ सुस्विन्नं मूषिकामांसेनाथवा स्वेदयेद्गुदम् ॥ १०४ ॥ वृक्षाम्लानलचांगेरीबिल्वपाठायवाग्रजम् ॥ तक्रेण शीलयेत्पायुभ्रंशार्तोऽनलदीपनम् ॥ १०५ ॥**

गुदभ्रंश रोगमें गुदाको सेककर घीसे अथवा तेलसे काँचको भीतर प्रवेश करदेवे और प्रवेश करनेके पश्चात् विनाछिद्रवाले वैलके चमडेसे उसको यत्नपूर्वक रोकदेवे ।

जो मनुष्य कमलिनीके कोमल पत्तोंको खांडके साथ खाताहै उसकी काँच निकलनी बंद होजाती है ।

काँचके उपर चूहेकी चरवी चुपडनेसे अथवा मूषेके मांसका वफारा देनेसे काँच निकलनी बंद होजाती है तितिडीक, चित्रक, चूक, बेलगिरी, पाढ, इन्द्रजौ इनका चूर्ण बनाकर मट्ठेके साथ खानेसे गुदभ्रंश नष्ट होताहै और अग्नि दीप्त होती है ॥ १०२–१०५ ॥

### अथ मूषकतैलम् ।

**मूषका दशमूलानि गृह्णीयादुभयं समम् ॥ तयोः क्वाथेन कल्केन पचेत्तैलं यथोदितम् ॥ १०६ ॥ अभ्यंगात्तस्य तैलस्य गुदभ्रंशो विनश्यति ॥ विनश्यति तथानेन गुदशूलं भगन्दरम् ॥ १०७ ॥**

मूषा और दशमूल इनको समान भाग लेकर इनके क्वाथ और कल्कसे तेलको पकावे, इस तेलके लगानेसे गुदभ्रंश नष्ट होजाताहै और गुदशूल तथा भगन्दरभी नष्ट होजाताहै ॥ १०६ ॥ १०७ ॥

### अथ शूकरदंष्ट्रकलक्षणम् ।

**सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः ॥ कण्डूमाञ्ज्वरकारी च स स्याच्छूकरदंष्ट्रकः ॥ १०८ ॥**

**सः गुदभ्रंशः ॥**

जो गुदभ्रंश दाहयुक्त, लाल किनारेवाला, पकी चमडीवाला, तीव्रवेदनायुक्त, खुजलीसहित और ज्वर युक्त होय तो उसको शूकरदंष्ट्र कहते हैं ॥ १०८ ॥

### अथ शूकरदंष्ट्रकचिकित्सा ।

**भृंगराजकमूलस्य रजन्या सहितस्य च ॥ चूर्णन्तु सहसा लेपाद्वाराहद्विजनाशनम् ॥ १०९ ॥**

भांगरेकी जडके चूर्णको हलदीके साथ लेप करनेसे शूकरदंष्ट्र तत्काल नष्ट होजाताहै ॥ १०९ ॥

**राजीवमूलकल्कः पीतो गव्येन सर्पिषा प्रातः ॥ शमयति शूकरदंष्ट्रं दंष्ट्रोद्भूतं ज्वरं घोरम् ॥ ११० ॥ रजनी मार्कवं मूलं पिष्टं शीतेन वारिणा ॥ तल्लेपाद्धन्ति वीसर्पवाराहदशनाह्वयम् ॥ १११ ॥**

प्रातःकाल कमलकी जडके कल्कको गायके घीके साथ पीनेसे शूकरदंष्ट्र और उससे उत्पन्न हुआ घोर ज्वर तत्काल शांत होजाताहै ।

हलदी और भागरेकी जडको शीतल जलमें पीसकर लेप करनेसे विसर्प और शूकरदंष्ट्र अवश्य नष्ट होजाताहै ॥ ११० ॥ १११ ॥

### अथानुशयीलक्षणम् ।

**गम्भीरामल्पशोथां च सवर्णामुपरि स्थिताम् ॥ पादस्यानुशयीं तान्तु विद्यादन्तःप्रपाकिनीम् ॥ ११२ ॥**

**अत्र पिडकामिति विशेष्यपदमध्याहरणीयम् । गम्भीरा अन्तःपाकेन ॥**

भीतर पकनेवाली, गंभीर, थोडी सूजनयुक्त और पावके समान रंगवाली जो फुंसी पावपर होती है उसको अनुशयी कहते हैं ॥ ११२ ॥

### अथानुशयीचिकित्सा ।

**हरेदनुशयीं वैद्यः क्रियया श्लेष्मविद्रधेः ॥ ११३ ॥**

वैद्य कफविद्रधिकी समान अनुशयीकी चिकित्सा करे ॥ ११३ ॥

## अथालसलक्षणम् ।

**क्लिन्नांगुल्यन्तरौ पादौ कण्डूदाहसमन्वितौ॥ दुष्टकर्दमसंस्पर्शादलसं तं विभावयेत् ॥ ११४ ॥**

**अलसं कन्दई इति लोके ॥**

सडी हुई कींच आदिमे फिरनेसे पावोंकी अगुलियोंके बीचमे क्लेदयुक्त खुजली और दाह तथा गीलापन रहता है उसको अलस कहतेहै देशमे खारुआ कहतेहै॥११४॥

## अथालसचिकित्सा ।

**पादौ सिक्त्वारनालेन लेपनं त्वलसे हितम ॥ पटोलकुनटीनिम्बरोचनामरिचैस्तिलैः ॥ ११५ ॥ क्षुद्रास्वरससिद्धेन कटुतैलेन लेपयेत् ॥ ततः कासीसकुनटीतिलचूर्णैर्विचूर्णयेत् ॥ ११६ ॥**

**विचूर्णयेदवधूलयेत् ॥**

**करञ्जबीजं रजनी कासीसं पद्मकं मधु ॥ रोचना हरितालश्च लेपोऽयमलसे हितः ॥ ११७ ॥**

आरनालसे पावोंको सेचनकरके लेपकरनेसे खारुवे दूर होजाते हैं ।

कडवे परवल, मैनशिल, नीम, गोलोचन, काली मिरच, तिल और कटेरीका स्वरस इनसे पकाये हुए तेलका अलसके ऊपर लेपन करे, पश्चात् हीराकसीस, मैनशिल और तिल इनका चूर्ण बुरका देवे। करजके बीज, हलदी, हीराकसीस, पद्माख, सहत, गोलोचन और हरिताल इनका प्रलेप करनेसे अलस अवश्य नष्ट होजाताहै॥११५–११७

## अथ पाददारीलक्षणम् ।

**परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ॥ पादयोः कुरुते दारीं सरुजां तलसंश्रिताम् ॥ ११८ ॥**

**दारी बिवाई ॥**

जिसको पृथिवीपर फिरनेका बहुत अभ्यास होय तो उस मनुष्यके अत्यंत रूखे हुए पावोंके तलुओंमे वायु, वेदनासहित दारीको उत्पन्न कर देताहै इसको देश भाषामें बिवाई कहतेहैं ॥ ११८ ॥

## अथ पाददारीचिकित्सा ।

**पाददार्यां शिरां प्राज्ञो मोचयेत्तलशोधिनीम् ॥ स्नेहस्वेदोपपन्नौ तु पादौ वा लेपयेन्मुहुः ॥ मधूच्छिष्टवसामज्जाघृतैः क्षारविमिश्रितैः ॥ ११९ ॥**

**क्षारो यवक्षारः । वसा मज्जा च सामान्यतः छागादीनाम् । विशेषानभिधानतः । उक्तश्च–**

**मेदोमज्जावसा ज्ञेया ग्राम्यानूपौदकोद्भवा॥ स्नेहोऽस्थ्नः शुचिरेव स्यात्स मज्जा कथितो बुधैः ॥ १२० ॥**

**वसा शुद्धमांसभवः स्नेहः ।**

**सर्जाह्वसिन्धूद्भवयोश्चूर्णं घृतमधुप्लुतम्॥ निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जने ॥ १२१ ॥ मधुसिक्थकगैरिकधुतगुडमाहिषाक्षशालनिर्यासैः ॥ गैरिकसहितैर्लेपः पादस्फुटनापहः सिद्धः ॥ १२२ ॥**

**मधुसिक्थकं मोम इति लोके । प्रथमं गैरिकं शिलाजतु, द्वितीयं गैरिकं गेरू इति लोके । शालनिर्यासः राल इतिलोके ।**

पांवमें बिवाई हुई होय तो वैद्य तलुवेको शुद्ध करनेके लिये फस्तको खोलकर रुधिरको निकलवावे ।

पांवोंको स्नेहन तथा स्वेदन करके पश्चात् मोम, वसा, चरबी, मज्जा, घी और जवाखार इनको एकत्र मिलाकर वारवार लेप करे तो दारी ( बिवाई ) दूर होजातीहै यहां चरबी और मज्जा किसकी लेनी चाहिये यह कुछ नहीं लिखा इस कारण बकरा आदि जीवोंकी लेनी चाहिये । क्योंकि मदनपाल कहताहै कि "मेद, मज्जा तथा चरबी ग्राम्यपशुओंकी जलप्राय प्रदेशके जीवोंकी और जलचर प्राणियोंकी लेनी चाहिये । और हड्डीके भीतरका जो उत्तम स्नेह है वह मज्जा कहाजाताहै ।

राल तथा सैंधानिमक इनके चूर्णको घीमे तथा सहतमे मिलाकर मथै फिर उसमे सरसोंका तेल मिलाकर पावोंमे लगानेसे बिवाई दूर होजातीहै ।

मोम, शिलाजीत, घी, गुड, भैंसिया गूगल, राल और

से इनको मिलाकर लेप करनेसे पावोंका फटना बंद होजाताहै ॥ ११९-१२२ ॥

## अथोन्मत्ततैलम्।

**उन्मत्तकस्य बीजेन मानकक्षारवारिणा ॥ विपक्वं कटुतैलन्तु हन्यात्पादरीं न संशयः१२३**

धतूरेके बीज और मानकदकी भस्मके जलसे पकाया हुआ सरसोंका तेल पांवोंके फटनेके लिये उत्तम है यह निश्चय है ॥ १२३ ॥

## अथ कदरलक्षणम्।

**शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ॥ ग्रन्थिः कोलवदुत्सन्नो जायते कदरस्तु सः ॥ १२४ ॥**

**शर्करा अत्र वालुका । कोलवत्क्षुद्रबदरवत् । उत्सन्नः उद्गतः ॥**

पावमें कंकर पत्थर रेता आदिके लगनेसे अथवा कांटे आदिके छिद जानेसे पावमें छोटे बेरकी समान ऊंची गांठ उत्पन्न होतीहै उसको कदर कहतेहैं । देशमें टेक वा टेट कहतेहैं ॥ १२४ ॥

## अथ कदरचिकित्सा।

**दहेत्कदरमुद्धृत्य तैलेन दहनेन वा ॥१२५॥**

कदरको शस्त्रसे चीरकर गरम तेलका अथवा अग्निको दाग देनेसे कदर नष्ट होजाताहै ॥ १२५ ॥

## अथ तिलकालकलक्षणम्।

**कृष्णानि तिलमात्राणि नीरुजानि समानि च ॥ वातपित्तकफोद्रेकात्तान्विद्यात्तिलकालकान् ॥ १२६ ॥**

**समानि अनुद्गतानि । अयं तिल इति लोके ।**

वात, पित्त तथा कफके प्रकोपसे काले, तिलकी समान पीडारहित त्वचासे मिले जो दाग होतेहैं उनको तिलकालक ( तिल ) कहतेहैं ॥ १२६ ॥

## अथ मशकलक्षणम्।

**अवेदनं स्थिरञ्चैव यत्तु गात्रे प्रदृश्यते ॥ माषवत्कृष्णमुत्सन्नं मलिनं मशकं दिशेत् ॥ १२७ ॥**

**स्थिरमचलम् अवेदनं वेदनारहितं मशक इति लोके ॥**

शरीरमें उडदकी समान काले तथा ऊंचे, मलिन, वेदनारहित और स्थिर जो दाग होतेहैं उनको मशक कहतेहैं। देशमें मस्सा कहतेहैं ॥ १२७ ॥

## अथ श्यावपिडिकलक्षणम्।

**वितत्वचस्तनवः स्फोटाः सूक्ष्माग्राः श्यावपिण्डिकाः ॥ भवन्ति कफपित्ताभ्यां क्षिप्रं नाशं प्रयान्ति च ॥ १२८ ॥**

पतली त्वचावाले, सूक्ष्म अग्रभागवाले, शीघ्र नाशहोनेवाले जो कफवातसे उत्पन्न हुए स्फोट, उनको श्यावपिडिक कहतेहैं ॥ १२८ ॥

## अथ जतुमणिलक्षणम्।

**समसुत्सन्नमरुजं मण्डलं कफरक्तजम् ॥ सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिश्च सः ॥ १२९ ॥ कृष्णः स्निग्धो जतुमणिर्ज्ञेयो वातोत्तरैस्त्रिभिः ॥ अरुजं त्वपरे रक्तं लक्ष्मेत्याहुर्भिषग्वराः ॥ १३० ॥**

**समं समवर्णम् । उत्सन्नं किञ्चिदुत्सन्नम् । सहजं शरीरेण सह जातम् । एवंविधं यन्मण्डलं स जतुमणिर्लक्ष्यः लक्ष्म चैकेषामिति । एकेषामाचार्याणां मते तन्मण्डलं लक्ष्मसंज्ञश्च । लक्ष्म लशुन इति लोके । अपरैस्तु जतुमणिलक्ष्मणोर्भेदकं लक्षणमुक्तम् । कृष्ण इत्यादिना ॥**

शरीरकी समान वर्णवाला, कुछेक ऊंचा शरीरके साथ उत्पन्नहुआ और कफ तथा रुधिरके प्रकोपवाला जो गोल मण्डल होताहै उसको जतुमणि कहतेहैं, कितने एक आचार्य जतुमणिको लक्ष्म वा लक्ष्यक कहतेहैं देशमें लहसन या लहसा कहतेहैं।

कितने एक उत्तम वैद्योंका ऐसा मत भी है कि, वात पित्त और उल्वणतावाले कफसे भी काला और चिकना जो मण्डल होताहै वह जतुमणि कहाजाताहै और इसी प्रकार वेदनारहित जो लाल मण्डल होताहै वह लक्ष्म कहाजाताहै ॥ १२८-१३० ॥

## अथ तिलकालकमशकजतुमणिचिकित्सा।

**चर्मकीलं जतुमणिमशकांस्तिलकालकान्॥**

उत्कृत्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः ॥ १३१ ॥

चर्मकील नामक अर्शको, जतुमणिको, मस्सेको और तिलको शस्त्रसे चीरकर क्षारसे तथा अग्निसे सम्पूर्ण रीतिसे दागदेवे ॥ १३१ ॥

अथ न्यच्छलक्षणम्।

मण्डलं महदल्पं वा श्यावं वा यदि वा सितम् ॥ सहजं नीरुजं गात्रे न्यच्छं तदभिधीयते ॥ १३२ ॥

शरीरमें वडा अथवा छोटा, काला अथवा सफेद, शरीरके साथ उत्पन्नहुआ और वेदनारहित जो मंडल होताहै उसको न्यच्छ कहतेहैं ॥ १३२ ॥

अथ न्यच्छचिकित्सा।

शिरावेधैः प्रलेपैश्च तथाभ्यङ्गैरुपाचरेत् ॥ न्यच्छं लिम्पेत्पयःपिष्टैः कल्कैः क्षीरतरूद्भवैः ॥ १३३ ॥ त्रिभुवनविजयापत्रं मूलं स्थविरस्य शिंशिपा चैभिः ॥ उद्वर्तनं विरचितं न्यच्छव्यंगापहं सिद्धम् ॥ १३४ ॥

स्थविरस्य वृद्धदारस्य ॥

शिराको वेधन करनेसे, प्रलेप करनेसे और अभ्यगसे न्यच्छकी चिकित्सा करे।

क्षीरवृक्षोंकी छालको दूधमें पीसकर उस कल्कसे न्यच्छके ऊपर लेप करे तो न्यच्छ दूर होजाताहै।

भांगके पत्ते, विधारेकी जड और सशिम इनको पीसकर रगडकर मलनेसे न्यच्छ तथा व्यग अवश्य दूर होजाताहै ॥ १३३ ॥ १३४ ॥

अथ पद्मिनीकण्टकलक्षणम्।

कण्टकैराचितं वृत्तं कण्डुमत्पाण्डुमण्डलम् ॥ पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ १३५ ॥

आचितं व्याप्तम् ॥ पद्मिनीकण्टकप्रख्यैः पद्मिनीनालकण्टकसदृशैस्तदाख्यं पद्मिनीकण्टकनामैव ॥

कफ तथा वायुसे उत्पन्नहुई कमलनालके कांटोंकी समान कांटोंसे व्याप्त, खुजलीसहित, गोल और पीला जो मण्डल होताहै वह 'पद्मिनीकण्टक' कहाजाताहै ॥ १३५ ॥

अथ पद्मिनीकण्टकचिकित्सा।

पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा ॥ तेनैव सिद्धं सक्षौद्रं सर्पिः पातुं प्रदापयेत् ॥ १३६ ॥

पद्मिनीकण्टक नामक क्षुद्ररोग हुआ होय तो नीमके जलसे वमन करावे नीमके पानीसे पकाहुआ घी सहत डालकर पिये। नीम तथा अमलतासके कल्कसे वारंवार चुपडे तो पद्मिनीकण्टक अवश्य दूर होजाताहै ॥ १३६ ॥

अथ निम्बादिघृतम्।

निम्बारग्वधकल्कैर्वा मुहुरुद्वर्तनं हितम् ॥ चतुर्गुणेन निम्बोथपत्रक्वाथेन गोघृतम् ॥ ॥ १३७ ॥ पचेत्ततस्तु निम्बस्य कृतमालस्य पत्रजैः ॥ कल्कैर्भूयः पचेत्सिद्धं तत्पिबेत्पलसम्मितम् ॥ पद्मिनीकण्टकाद्रोगान्मुक्तो भवति नान्यथा ॥ १३८ ॥

चोगुने नीमके पत्तोंके क्वाथसे नीमके घीको पकाकर फिर उसी घीको नीमके पत्ते तथा अमलतासके पत्तोंके कल्कसे पकावे तो यह निम्बादिघृत सिद्ध होताहै। इस घीको चार चार तोले प्रमाण सेवन करनेसे पद्मिनीकण्टक नष्ट होजाताहै यह निश्चय है ॥ १३७ ॥ १३८ ॥

अथाजगल्लिकालक्षणम्।

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ॥ कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ १३९ ॥

ग्रथिता गुम्फितेव। मुद्गसन्निभा मुद्गाकृतिः॥

बालकोंके मूँगकी आकृतिवाली, स्निग्ध शरीरके वर्णकी माफिक, गुफित, वेदनारहित और कफसे तथा वायुसे जो फुसियें होतीहैं उनको अजगल्लिका कहतेहैं ॥ १३९ ॥

अथाजगल्लिकाचिकित्सा।

तत्राजगल्लिकां सामां जलौकोभिरुपाचरेत् ॥ शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेप-

येन्मुहुः ॥ कठिनां क्षारयोगेन द्रावयेदजगल्लिकाम् ॥ १४० ॥

जो अजगल्लिका अपक्व अर्थात् कची होय तो जोक लगाकर उसकी चिकित्सा करे । सीपकी भस्म तथा फटकरीकी खीलें इनको पीसकर वारवार उसके ऊपर लेप करे । जो अजगल्लिका कठिन होय तो क्षार लगाकर उसको द्रवीभूत करे ॥ १४० ॥

अथ यवप्रख्यालक्षणम् ।

यवाकारा प्रकठिना ग्रथिता मांससंश्रया ॥ पीडिका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ १४१ ॥

यवाकारा मध्ये स्थूला प्रान्ते कृशा ।

कफसे तथा वायुसे जौकी समान आकारवाली, अत्यन्त कठिन गुँथीहुई और मांसके आश्रयवाली जो फुडिया होतीहै वह यवप्रख्या कहीजातीहै । जौकी समान आकारवाली अर्थात् बीचमें मोटी और दोनों ओर पतली ॥ १४१ ॥

अथांत्रालजीलक्षणम् ।

घनामवक्त्रां पिडिकामुन्नतां परिमण्डलाम् ॥ अन्त्रालजीमल्पपूयां तां विद्यात्कफवातजाम् ॥ १४२ ॥

घनां कठिनाम् । परिमण्डलां वर्त्तुलाम् ॥

कठिन, समान अर्थात् टेढी नहीं, ऊची, गोल और थोडी राधवाली जो फुसी होतीहै वह अंत्रालजी कहीजातीहै, यह फुसी कफसे तथा वायुसे होतीहै ॥ १४२ ॥

अथ यवप्रख्यांत्रालजीचिकित्सा ।

अन्त्रालजीयवप्रख्ये पूर्वं स्वेदैरुपाचरेत् ॥ मनःशिलादेवदारुकुष्ठकल्कैः प्रलेपयेत् ॥ पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ १४३ ॥

यवप्रख्या और अंत्रालजीको प्रथम स्वेदन देकर पश्चात् मैनशिल देवदारु और कूठ इनका कल्क लगावै । पकनेपर व्रणकी समान चिकित्सा करे ॥ १४३ ॥

अथ विवृतालक्षणम् ।

विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम् ॥ विवृतामिति तां विद्यात्पित्तोत्थां परिमण्डलाम् ॥ १४४ ॥

परिमण्डलाम् परितः शोथवतीम् ॥

फटे हुए मुखवाली, अत्यन्त दाहयुक्त, पके गूलरकी समान और चारोंओर सूजनवाली जो फुंसी होतीहै वह 'विवृता' कहीजातीहै । यह फुसी पित्तसे निकलतीहै ॥ १४४ ॥

अथेन्द्रवृद्धालक्षणम् ।

पद्मकर्णिकवन्मध्ये पीडकां पीडकाचिताम् ॥ इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥ १४५ ॥

पद्मकर्णिकवत्-पद्मफलाधारोपमां पीडकाचितां किञ्जल्कवल्लघुपीडकाचिताम् ॥

बीचमें कमलकर्णिकाकी समान एक फुडिया और उसके चारो ओर बहुतसी छोटी छोटी फुंसी होंयँ उसको वैद्य इन्द्रवृद्धा कहतेहैं, यह वात तथा पित्तसे होतीहै ॥ १४५ ॥

अथ गर्दभिकालक्षणम् ।

मण्डलं वृत्तमुत्सन्नं सुरक्तं पीडकाचितम् ॥ रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥ १४६ ॥

गोल, ऊचा, अत्यन्त लाल, फुसियोंसे व्याप्त और वेदना करनेवाला जो मंडल होताहै उसको गर्दभिका कहतेहैं । यह गर्दभिका वायुसे तथा पित्तसे होतीहै ॥ १४६ ॥

अथ जालगर्दभलक्षणम् ।

विसर्पवत्सर्पति यः शोथस्तनुरपाकवान्॥ दाहज्वरकरः पित्तात्स ज्ञेयो जालगर्दभः ॥ १४७ ॥

अपाकवानीषत्पाकवान् पित्तकृतत्वेन सर्वथा पाकाभावस्य अयुक्तत्वात् । अयममिवात इति ख्यातः ॥

विसर्पकी समान फैलनेवाली, पतली, कम पकनेवाली और दाह तथा ज्वर उत्पन्न करनेवाली जो सूजन होतीहै वह जालगर्दभ कहीजातीहै । यह रोग पित्तसे उत्पन्न होताहै ॥

यद्यपि मूलमें 'अपाक' शब्द है तथापि 'कम पकनेवाली' ऐसा अर्थ किया है इसका कारण यह

है कि, पित्तसे उत्पन्न होनेके कारण सर्वथा नहीं पकना असम्भव है ॥ १४७ ॥

## अथ विवृतेन्द्रवृद्धागर्दभिकाजालगर्दभानां चिकित्सा।

**विवृतामिन्द्रवृद्धाश्च गर्दभीं जालगर्दभम्॥ पैत्तिकस्य विसर्पस्य क्रियया साधयेद्भिषक्॥ पाके तु रोपयेदाज्यैः पक्वैर्मधुरभेषजैः॥ १४८॥**

विवृताको, इन्द्रवृद्धाको, गर्दभिकाको और जालगर्दभको वैद्य पित्तज विसर्पोक्त चिकित्सासे दूर करे। यह जो पके तो इनको जीवनीय गणकी मधुर औषधियोंसे पकाये हुए घृतसे रोपण करे ॥ १४८ ॥

## अथ कच्छपिकालक्षणम्।

**ग्रथिताः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः॥ कफानिलाभ्यां पिडकाः सा स्मृता कच्छपी बुधैः॥ १४९॥**

**कच्छपोन्नता मध्ये प्रोन्नता प्रान्ते नता।**

कछुवेकी समान बीचमें ऊंची और चारों ओर नीची पांच वा छह जो दारुण फुडियें होतीहैं उनको कच्छपिका जानना। यह रोग कफ तथा वायुसे होताहै ॥ १४९ ॥

## अथ कच्छपिकाचिकित्सा।

**कच्छपीं स्वेदयेत्पूर्वं तत एव प्रलेपयेत्॥ कल्कीकृतैर्निशाकुष्ठसितातालकदारुभिः॥ तां पक्वां साधयेच्छीघ्रं भिषग्व्रणचिकित्सया॥ १५०॥**

कच्छपिकाको प्रथम स्वेदनकर पश्चात् उसके ऊपर हलदी, कूठ, मिश्री, हरिताल और देवदारु इनके कल्कका लेप करे, पकनेपर व्रणकी समान चिकित्सा करके दूर करे ॥ १५० ॥

## अथ शर्करार्बुदलक्षणम्।

**प्राप्य मांसशिरास्नायुमेदः श्लेष्मा तथानिलः॥ ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम्॥ १५१॥ स्रवति स्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः॥ मांसं विशोष्य ग्रथितां शर्करां जनयत्यतः॥ १५२॥ दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः॥ स्रवन्ति सहसा रक्तं तं विद्याच्छर्करार्बुदम्॥ १५३॥**

**शर्करा वालुकातुल्या॥**

कफ तथा वायु मांस, शिरा, स्नायु, और मेदमें प्राप्त होकर गांठको उत्पन्न करेहैं, यह गांठ फूटकर सहतकी समान, घीकी समान, तथा चरबीकी समान बहतीहै। इसमें वृद्धिको प्राप्त हुई वायु मांसको सुखाकर गुंथीसी गांठको उत्पन्न करतीहैं। यह गॉठ उत्पन्न होनेसे छोटी नसें दुर्गन्धि अत्यन्त क्लेदयुक्त और अनेक वर्णवाले रुधिरको सहसा बहातीहैं इसको शर्करार्बुद कहतेहैं यह गॉंठ रेतेकी समान होतीहै ॥ १५१-१५३ ॥

## अथ शर्करार्बुदचिकित्सा।

**मेदोऽर्बुदविधानेन साधयेच्छर्करार्बुदम्॥**

मेदसम्बन्धी अर्बुदकी जो चिकित्सा कही है उसी चिकित्सासे शर्करार्बुदको दूर करे।

## अथ कियदालस्यादिक्षुद्रविकाराणां लक्षणम्।

**शक्तस्य चाप्यनुत्साहः कर्मण्यालस्यमुच्यते॥ अस्वास्थ्यं चिन्तयात्यर्थमरतिः कथ्यते बुधैः॥ १५४॥**

शरीरमें सामर्थ्य होनेपर भी काम काज करनेमें उत्साह न होय उसको आलस्य कहतेहैं। चिंतासे जो अस्वस्थता होतीहै उसको अरति कहतेहैं ॥ १५४ ॥

**उत्क्लिश्यान्नञ्च निर्गच्छेत्प्रसेकः ष्ठीवनेरितम्॥ हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत्॥ १५५॥**

मुखमेंसे लारगिरे, थूकके साथ जो भोजन किया अन्न चित्तमें ग्लानि होनेके कारण निकले, और हृदयमें पीडा होय उसको उत्क्लेश कहतेहैं ॥ १५५ ॥

**वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः॥ न चान्नं रोचते यस्मै ग्लानिं तस्य विनिर्दिशेत्॥ १५६॥**

मुखमें मधुरता, तन्द्रा, हृदयका बधना, भ्रम और अन्नपर अरुचि यह लक्षण होंय तो उसको ग्लानि जानना ॥ १५६ ॥

ग्लानिरोजःक्षयाद्दुःखादजीर्णाच्च श्रमोद्भवात् ॥ उदानकोपादाहारसुस्थितत्वाच्च यद्भवेत ॥ पवनस्योर्द्धगमनं तमुद्गारं प्रचक्षते ॥ १५७ ॥

ओजके क्षयसे, दुःखसे, अजीर्णसे तथा परिश्रमसे ग्लानि होतीहै ।

उदानवायुके प्रकोपसे और आहारके यथावस्थित होनेसे पवनकी जो ऊंची गति होतीहै उसको उद्गार कहतेहैं ॥ १५७ ॥

आटोपो गुडगुडाशब्दः प्रोक्तो जठरसम्भवः ॥ तमःस्थस्येव यज्ज्ञानं तत्तमः कथ्यते बुधैः ॥ १५८ ॥

इति क्षुद्ररोगाधिकारः ।

पेटमें जो गुडगुड शब्द होताहै उसको आटोप कहतेहैं ।

अन्धकारमें स्थित होनेकासा जो ज्ञान होताहै उसको पंडितजन तम कहतेहैं ॥ १५८ ॥

इति क्षुद्ररोगाधिकार. संपूर्ण. ।

---

## अथ शिरोरोगाधिकारः ।

### तत्र शिरोरोगनिदानं संख्या च ।

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ॥ सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ १ ॥ सूर्यावर्तानन्तवातशङ्खकार्द्धावभेदकाः ॥ एकादशविधस्यास्य लक्षणानि प्रचक्षते ॥ २ ॥

शिरोरोगाः अत्र शिरोरोगजा शूलरूपा रुगभिधीयते । वातपित्तकफैस्त्रिभिः । ननु वातादिभिरेवोक्तैः सिद्धबोधः । किमर्थं त्रिभिरिति पदम् । उच्यते–सर्वेषां शिरोरोगाणां सन्निपातजन्यत्वनिरासनार्थम् । वातपित्तकफानां पृथक्कारणत्वं चोतयति । दोषेण रक्तादिसंग्रह ॥

[illegible]

और अर्द्धावभेदक इस प्रकार यह शिरोरोग ग्यारह ११ प्रकारका होताहै, इन सबके लक्षण नीचे लिखतेहैं ॥ १ ॥ २ ॥

### अथ वातजशिरोरोगलक्षणम् ।

यस्याऽनिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् ॥ बन्धोपतापैः प्रशमो भवेच्च शिरोऽभितापः स समीरणेन ॥ ३ ॥

भवेदिति शेषः । अनिमित्तमतर्कितविप्रकृष्टनिमित्तम् । निशि चातिमात्रं रात्रौ शैत्येन वायोराधिक्यात् । उपतापः स्वेदनम् । शिरोऽभितापः शिरःपीडा ॥

अकस्मात् दूरके कारणोसे जो मस्तकमें तीव्र पीडा होय, रात्रिमें शीतके कारण वायुकी अधिकतासे अधिक बढ जाय और मस्तकको बांधनेसे तथा सेकनेसे वह शांत होजाती होय उसको वातसे उत्पन्न हुआ शिरोरोग जानना ॥ ३ ॥

### अथ पित्तजशिरोरोगलक्षणम् ।

यस्योष्णमङ्गारचितं यथैव भवेच्छिरो दह्यति चाक्षिनासम् ॥ शीतेन रात्रौ च भवेच्छमश्च शिरोऽभितापः स तु पित्तकोपात् ॥ ४ ॥

दह्यति इत्यार्षत्वात् ॥

जिसका शिर तप्त अङ्गारोंकी समान गरम हो, नेत्र और नासिकामें दाह हो और रात्रिमें शीतके कारण वेदना शांत होजाय तो उसको पैत्तिक शिरोरोग जानना ॥ ४ ॥

### अथ कफजशिरोरोगलक्षणम् ।

शिरो भवेत्तस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च ॥ शूनाक्षिनासावदनश्च यस्य शिरोऽभितापः स कफप्रकोपात् ॥ ५ ॥

कफोपदिग्धमन्तःकफलिप्तम् । प्रतिष्टब्धं तन्न शिरः ॥

जिसका मस्तक कफसे लिहसाया हो, भारी हो, [illegible] हो, शीतल हो और आंखें नासिका और मुख सूजा हो [illegible] उसको कफज शिरोरोग जानना ॥ ५ ॥

अथ सन्निपातजशिरोरोगलक्षणम् ।

शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवंति ॥

शिरोरोगमें जो उपरोक्त तीनों दोषोंके लक्षण दीखते होयँ तो उसको त्रिदोषज शिरोरोग जानना ।

अथ रुधिरजन्यशिरोरोगलक्षणम् ।

रक्तात्मकः पित्तसमानलिंगः स्पर्शासहत्वं शिरसो भवेच्च ॥ ६ ॥

पैत्तिकाद्भेदमाह । शिरसः स्पर्शासहत्वमिति ॥

पित्तज शिरोरोगके सब लक्षण दीखते हों और मस्तक किसी पदार्थका स्पर्श नहीं सहन करसके तो उसको रुधिरजन्य शिरोरोग जानना । मस्तक किसीका स्पर्श नहीं करसके इतना ही पित्तज और रुधिरजनित शिरोरोगमें भेद है ॥ ६ ॥

अथ रसादिधातुक्षयजन्यशिरोरोगलक्षणम् ।

वसाबलासक्षतसम्भवानां शिरोगतानामतिसङ्क्षयेण ॥ क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥ संस्वेदनच्छर्दनधमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ७॥

क्षतसम्भवं रुधिरम् । कष्टः कष्टसाध्यः ॥ अङ्गं भ्रमति तुद्येत शिरोविभ्रान्तनेत्रता॥ मूर्च्छा गात्रावसादश्च शिरोरोगे क्षयात्मके ॥ ८ ॥

मस्तकमें अत्यन्त तीव्र पीडा हो, वह पीडा सेकनेसे, वमन करनेसे, धूमपानसे, नस्य देनेसे और रुधिरको निकलवानेसे वृद्धिको प्राप्त होय तो उसको जानना कि, शिरमें रहनेवाली चरबी, कफ और अत्यन्त रुधिरके क्षय होनेसे यह शिरोरोग हुआ है । यह शिरोरोग कष्टसाध्य है । क्षयज शिरोरोगमें शरीर घूमताहै, मस्तकमें सुई चुभोने सरीखी पीडा होतीहै, नेत्रोंकी पुतली वारंवार फिरतीहैं, मूर्च्छा और अंगोंमें ग्लानि होतीहै ॥ ७ ॥ ८ ॥

अथ कृमिजशिरोरोगलक्षणम् ।

निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्यमाणं स्फुरतीव चान्तः ॥ घ्राणाच्च गच्छेद्रुधिरं सपूयं शिरोऽभितापः क्रिमिभिः स घोरः ॥ ९ ॥

सम्भक्ष्यमाणम् । क्रिमिभिरिति शेषः ॥ घ्राणाच्चेति चकारेण क्रिमिनिर्गमोऽपि बोध्यते ।

मस्तकमें अत्यन्त तोडने सरीखी पीडा हो, कृमिके भक्षण करनेके कारण भीतरसे फडकता हो ऐसा मालूम हो और नाकमेंसे राध सहित रुधिर निकले, तथा कीडे भी निकले तो उसको जानना कि, यह भयकर शिरोरोग कृमियोंसे उत्पन्न हुआ है ॥ ९ ॥

अथ सूर्यावर्तलक्षणम् ।

सूर्योदयं या प्रतिमन्दमन्दमक्षिभ्रुवौ रुक् समुपैति गाढम् ॥ विवर्द्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च ॥ ॥ १० ॥ शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाद्वा ॥ सर्वात्मकं कष्टतमं विकारं सूर्यापवर्तं तमुदाहरन्ति ॥ ११ ॥

सूर्योदय इति लक्षीकृत्य आरभ्येति यावत्सूर्यस्य अपवृत्तौ सूर्यस्य अधोगतौ ॥

सूर्यके उदय होनेपर धीरे धीरे आंखें और भौंओंमें मन्द मन्द पीडा होती आवे, ज्यौं ज्यौं सूर्य आकाशमें अधिक चढताजाय त्यौं त्यौं यह पीडा अधिक होती जाय, जब दो प्रहरके बाद सूर्य पश्चिममें ज्यौं ज्यौं छिपताजाय त्यौं त्यौं यह पीडा शांत होतीजाय, किसी समय यह पीडा शीतसे शात होतीहै और किसीसमय उष्णतासे भी शान्त होती है इसको सूर्यावर्त कहतेहैं । यह रोग तीनो दोषोंके प्रकोपसे होताहै और अत्यन्त कष्टसाध्य है ॥ १० ॥ ११ ॥

अथानंतवातलक्षणम् ।

दोषास्तु दुष्टास्त्रय एव मन्यां सम्पीड्य गाढं स्वरुजां सुतीव्राम् ॥ कुर्वन्ति योऽक्षिण भ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु ॥ १२ ॥ गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजान्विका-

रान ॥ अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ॥ १३ ॥

एवशब्दोऽत्र अप्यर्थः । अव्ययानामनेकार्थत्वात् । स्वरुजां स्वस्वरूपां रुजां व्यथादाहगौरवादिरूपां दोषाः कुर्वन्ति । अयमनन्ते वातसमः अनन्तवातः । अक्ष्यादिषु स्थितिं करोति । विशेषतः गण्डपार्श्वे स्थितिं करोति । पीडायाः स्थितिं कृत्वा कम्पादींश्च करोति ॥

दूषित हुए वात पित्तादि तीनों दोष मन्या नाडीको अत्यन्त पकडकर अपने अपने स्वभावके अनुसार व्यथा, दाह तथा भारीपन आदि तीन वेदनाको उत्पन्न करतेहैं यह वेदना तत्काल आंखोमे, भौंओमे और कनपटियोमे स्थित होतीहै विशेष करके गण्डस्थलमें स्थित होतीहैं तथा यह स्थित होकर कंप, हनुग्रह तथा नेत्रकी पीडाको करै है, इसको अनन्तवात कहतेहैं, यह तीनो दोषोके प्रकोपसे होताहै ॥ १२ ॥ १३ ॥

अथ शंखकलक्षणम् ।

पित्तरक्तानिला दुष्टाः शंखदेशे विमूर्च्छिताः॥तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥ १४॥ स शिरो विषवद्वेगान्निरुध्याशु गलं तथा ॥ त्रिरात्राज्जीवितं हन्ति शंखको नाम नामतः ॥ त्र्यहं जीवति भैषज्यं प्रत्याख्यायास्य कारयेत् ॥ १५ ॥

पित्तरक्तानिलाः अत्र कफोऽपि योज्यः "कृतान्ततापः कफपित्तरक्तैः" इति सुश्रुतवचनात् । विमूर्च्छिताः प्रवृद्धाः । स शंखकः त्रिरात्रात् । त्रिरात्रिमध्ये मारयति इति यावत्॥

[illegible] ( कनपटी ) [illegible] वृद्धिको प्राप्त [illegible] [illegible] सूजन [illegible] पश्चात् औषधि करे । यद्यपि इस वचनमे सूजनको करनेवाला पित्त, रुधिर और वायु यह तीन ही कहेहै तो भी सुश्रुतके वचनमें कफके साथ गिना है । इससे यह समझना कि तीनोंके साथ कफका भी सम्बन्ध होताहै ॥ १४ ॥ १५ ॥

अथार्द्धावभेदकनिदानलक्षणम् ।

रूक्षाशनाद्यध्यशनावश्यप्राग्वातमैथुनैः ॥ वेगसन्धारणायासव्यायामैः कुपितोऽनिलः ॥ १६ ॥ केवलः स कफो वार्द्धं गृहीत्वा शिरसो बली ॥ मन्याभ्रूशंखकर्णाक्षिललाटार्द्धेषु वेदनाम् ॥ १७ ॥ शस्त्राशनिनिभां कुर्यात्तीव्रां सोऽर्द्धावभेदकः ॥ नयनं वाऽथ वा श्रोत्रमतिवृद्धो विनाशयेत् ॥ १८ ॥

अवश्यः अवश्यायः । आयासः अतिचलनभारोद्वहनादिः । व्यायामः मल्लश्रमः । शस्त्राशनिनिभां शस्त्रघातेन इव वज्रपातेन इव वेदनाम् ॥

रूक्ष भोजन आदि करनेसे, भोजनपर भोजन करनेसे, हिम ( बर्फ पाला ) को सेवन करनेसे, पूर्वकी पवनको सेवन करनेसे, मैथुनसे, मलमूत्रादिक वेगोंको रोकनेसे, अत्यन्त चलने तथा अत्यन्त बोझ ढोने आदि परिश्रम करनेसे और दंड कसरत आदि करनेसे प्रकोपको प्राप्त हुई बलवान् वायु अपने आप अकेली अथवा कफकी सहायता लेकर मस्तकके अर्द्धभागको पकडकर नाड, भौं, कनपटी, कान, आंख और कपालका आधा भाग इनमें शस्त्रघातकी समान और वज्रपातकी समान तीव्र पीडाको उत्पन्न करैहै इसको अर्द्धावभेदक कहतेहैं । यह रोग जब अधिक बढ जाताहै तो आंखको वा कानको नष्ट करदेताहै, देशमें इसको आधाशीशी कहतेहैं॥ १६-१८॥

अथ शिरोरोगचिकित्सा ।

वातजातशिरोरोगे स्नेहस्वेदं विरेचनम् ॥ पानाहारोपनाहांश्च कुर्याद्वातामयापहान्॥ ॥ १९ ॥ कुष्ठमेरण्डमूलञ्च नागरं

तक्रपेषितम् ॥ कटूष्णं शिरसः पीडां भाले लेपनतो हरेत् ॥ २० ॥ रसः श्वासकुठारो यस्तस्य नस्यविशेषतः ॥ शिरःशूलं हरत्येव विधेयो नात्र संशयः ॥ २१ ॥

जो शिरोरोग वातसे उत्पन्न हुआ होय तो स्नेहन करना, स्वेदन करना तथा मस्तकमें तेल आदि मलना चाहिये और वातनाशक पान, आहार तथा उपनाह स्वेद करे ॥ १९ ॥

कूठ, अंडकी जड और सोंठ इनको तक्रमें पीसकर कुछेक गरम करके कपालमें लेप करे तो वातजन्य शिरोरोग नष्ट होजाताहै ॥ २० ॥

श्वासकुठाररसका नास देनेसे मस्तकका शूल अवश्य नष्ट होजाताहै। इस वातजन्य शिरोरोगपर यह नस्य अवश्य देना चाहिये ॥ २१ ॥

## अथ शिरोवस्तिः।

आशिरो व्यायतं चर्म षोडशांगुलमुच्छ्रितम् ॥ तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥ २२ ॥ निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत् ॥ धारयेदारुजः शान्त्यै यामं यामार्द्धमेव वा ॥ २३ ॥ शिरोवस्तिर्हरत्येष शिरोरोगं मरुद्भवम् ॥ हनुमन्याक्षिकर्णार्तिमर्दितं मूर्द्धकम्पनम् ॥ २४ ॥ विना भोजनमेवैष शिरोवस्तिः प्रयुज्यते ॥ दिनानि पञ्च वा सप्त रुचितोऽग्रे ततोऽपि च ॥ २५ ॥ ततोऽपनीतस्नेहस्तु मोचयेद्वस्तिबन्धनम् ॥ शिरोललाटवदनं ग्रीवांसादीन्विमर्दयेत् ॥ २६ ॥ सुखोष्णेनाम्भसा गात्रं प्रक्षाल्याऽश्नाति यद्धितम् ॥ आमिषं जाङ्गलं पथ्यं तत्र शाल्यादयोऽपि च ॥ २७ ॥ मुद्गमाषान्कुलत्थांश्च खादेद्वा निशि केवलान् ॥ कटुकोष्णान्ससर्पिष्कानुष्णं क्षीरं पिबेत्तथा ॥ २८ ॥ पित्तात्मके शिरोरोगे शीतानां चन्दनाम्भसा ॥ कुमुदोत्पलपद्मानां स्पर्शाः सेव्याश्च मारुताः ॥ २९ ॥ सर्पिषः शतधौतस्य शिरसा धारणं हितम् ॥ रसः श्वासकुठारोऽल्पः कर्पूरः कुंकुमं नवम् ॥ ३० ॥ सिता छागीपयः सर्वं चन्दनेनानुघर्षयेत् ॥ तस्य नस्यं भिषग्दद्यात्पित्तजायां शिरोरुजि ॥ ३१ ॥ किन्तु मस्तकशूलेषु सर्वेष्वेवं हितं मतम् ॥ गुडनागरकल्कस्य नस्यं मस्तकशूलनुत् ॥ ३२ ॥ रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम् ॥ शीतोष्णयोश्च विन्यस्य विशेषो रक्तमोक्षणम् ॥ ॥ ३३ ॥ कफजे लंघनं स्वेदरूक्षोष्णैः पावकात्मकैः ॥ सन्निपातभवे कार्या सन्निपातहरी क्रिया ॥ पुराणसर्पिषः पानं विशेषेण दिशन्ति हि ॥ ३४ ॥

जो मस्तकपर पूरा आजाय ऐसा लम्बा और सोलह अंगुल ऊंचा चमडा लेकर उस चमडेसे मस्तकको बाँधे और उसके नीचेके जोडोंमें उडदका चून जलमें सानकर लगादेवे। फिर रोगीको निश्चल बैठालकर कुछेक गरम तेल मस्तकके ऊपर उस चमडेमे भरदेवे। पश्चात् जबतक पीडा शांत न होय तबतक अथवा एक प्रहरतक या चार घडीतक उसको ऐसाही बैठा रहने देवे। यह शिरोवस्ति वातज शिरोरोग, हनुग्रह, मन्यास्तम्भ, नेत्रकी पीडा, कानकी पीडा, अर्दित और मस्तककंपको दूर करेहै। यह वस्ति भोजनकरनेसे पहिले ही रोगीको देनी चाहिये। पाच दिनतक, सात दिनतक और जो अनुकूल होय तो इससे भी अधिक दिनतक यह क्रिया प्रयोग करनी चाहिये। वेदना शांत होनेपर अथवा एक प्रहरके पश्चात् अथवा चार घडीके पश्चात् सब तेलको निकालकर वस्तिके बंधनको अलग कर लेवे और मस्तक, कपाल, मुख, गरदन तथा खवा आदिको खूब मर्दन करे। पश्चात् सुहाते सुहाते गरम जलसे शरीरको धोकर पथ्य अन्न खानेको देवे। जागल पशुओंका मांस और लाल शालि चावल आदि भी इसपर हितकारी हैं। रात्रिमें मूँग, उडद और कुलथी अथवा इकली कुलथीको रांध कर उसमे घी

डालकर तथा तीक्ष्ण पदार्थ ( मिरची आदि ) डालकर गरम गरम खाय और उसके ऊपर गरम दूध पिये ॥

जो शिरोरोग पित्तसे उत्पन्न हुआ होय तो चदनके जलसे शीतल किये पत्तोंकी पवन, लाल कमल और सफेद कमल इनको धारण करे तथा शीतल हवाका सेवन करे॥

सौवार धुले हुए घीको मस्तकपर धारण करनेसे पित्तज शिररोग दूर होताहै ॥

कुछेक श्वासकुठारनामक रस, कपूर, नवीन केसर, मिश्री और बकरीका दूध इन सबको सफेद चदनके साथ जलमें विसकर नास देनेसे पित्तसे उत्पन्न हुआ शिरोरोग नष्ट होताहै ।

मस्तकके सम्पूर्ण शूलोंमें उपरोक्त प्रयोग हितकारी है ऐसा माना गया है ।

गुडका और सोंठके कल्कका नास देनेसे भी मस्तक शूल दूर होजाताहै ।

जो शिरोरोग रुधिरसे हुआ होय तो पित्तज शिरोरोगकी समान सम्पूर्ण भोजन, लेपन और सेचनसे चिकित्सा करे और विशेषकरके रक्तमोक्षण करे ।

जो शिरोरोग कफसे उत्पन्न हुआ होय तो वमन करावे तथा गरमीसे पूर्ण, रूक्ष और उष्ण पदार्थोंसे स्वेदन करे ।

जो शिरोरोग सन्निपातसे उत्पन्न हुआ होय तो सन्निपातको दूर करनेवाली चिकित्सा करे और विशेष करके पुराना घी पिलावे ऐसा वैद्यविद्याके विद्वानोंने कहा है ॥ ३२-३४ ॥

## अथ षड्बिन्दुतैलम् ।

**एरण्डमूलं तगरं शताह्वा जीवन्तिका रास्निकसैन्धवं च ॥ भृंगं विडंगं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ॥ ३५ ॥ अजापयस्तैलविमिश्रितश्च चतुर्गुणं भृंगरसे विपक्वम् ॥ षड्बिन्दवो नासिकया प्रदेयाः सर्वान्निहन्युः शिरसो विकारान् ॥ ३६ ॥ च्युतांश्च केशान्पतितांश्च केशान्निर्बन्धमूलान्सुदृढीकरोति॥ सुपर्णगृध्रप्रतिमश्च चक्षुः कुर्वन्ति बाह्वोरधिकं बलञ्च ॥ ३७ ॥**

### जीवन्तिकाश्च हरीतकी शाकविशेषश्च ।

अंडकी जड, तगर, सतावर, जीवन्ती ( जैनी ), रासना, सैंधानिमक, भांगरा, वायविडग, मुलैठी, सोंठ, काले तिलोंका तेल और बकरीका दूध इन सबको चौगुने भांगरेके रसमें पकावे तो यह 'षड्बिंदु' तैल सिद्ध होताहै इस तेलकी छः बूंद नाकमें डालनेसे सर्व प्रकारके शिरोरोग नष्ट होजातेहैं । तथा बालोंका गिरना और दांतोंका हिलना दूर होकर बाल और दांत अत्यन्त दृढ होजाते हैं । नेत्र गरुडकी समान और बलमें गीधकी समान तथा बाहुबली होताहै ॥ ३५-३७ ॥

**क्षयजे क्षयनाशाय कर्तव्यो बृंहणो विधिः ॥ पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥ ३८ ॥**

जो शिरोरोग क्षयसे उत्पन्न हुआ होय तो क्षयको नाश करनेके लिये पुष्टि कारक प्रयोग करे और वायुको नष्ट करनेवाले मधुर पदार्थोंसे पकाये हुए घृतको पिये तथा नासमें देवे ॥ ३८ ॥

**क्रिमिजे व्योषनक्ताह्वशिग्रुबीजैश्च नावनम् ॥ अजामूत्रयुतं नस्यं कर्तव्यं कृमिनुत्परम् ॥ ३९ ॥**

जो शिरोरोग कृमिजन्य होय तो सोंठ, मिरच, पीपल, करज और सैंजिनेके बीज इनको बकरीके मूत्रमें पीसकर नास देवे, इस नस्य देनेसे कृमि अवश्य नष्ट होजाते हैं ॥ ३९ ॥

**सूर्यावर्ते विधातव्यं नस्यकर्मादि भेषजम् ॥**

सूर्यावर्त नामक रोग हुआ होय तो नस्य आदि देकर चिकित्सा करे ।

## अथ कुमारीतैलम् ।

**कुमार्याः स्वरसप्रस्थे धत्तूरस्य रसे तथा॥ ॥ ४० ॥ भृंगराजस्य च रसे प्रस्थद्वयसमायुते ॥ चतुःप्रस्थमिते क्षीरे तैलप्रस्थं विपाचयेत् ॥ ४१ ॥ कल्कैर्मधुकहीबेरमंजिष्ठाभद्रमुस्तकैः ॥ नखकर्पूरभृंगैलाजीवन्तीपद्मकुष्ठकैः ॥ ४२ ॥ मार्कवास-**

कतालीससर्जनिर्यासपत्रकैः ॥ विडङ्गशतपुष्पाश्वगन्धागन्धर्वहस्तकैः ॥ ४३ ॥ तैले वटनालिकेलाभ्यां कर्षमानैर्विपाचिते ॥ उत्तार्य वस्त्रपूतं तु शुभे भांडे सुधूपिते ॥४४॥ त्रिरात्रमथ गुप्तश्च धारयेद्विधिवद्भिषक् ॥ ततस्तु तैलमभ्यंगे मूर्धि क्षेपे नियोजयेत् ॥ ४५ ॥ शमयेदर्दितं गाढमन्यास्तम्भशिरोगदान् ॥तालुनासाक्षिपातन्तु शोषमूर्च्छाहलीमकम्॥हनुग्रहगदार्तिं वा बाधिर्यं कर्णवेदनम् ॥ ४६ ॥

घीकारका स्वरस ६४ तोले, धतूरेका स्वरस ६४ तोले, भांगरेका स्वरस १२८ तोले और भागरेके रससे दुगुना दूध, इनमें मुलेठी, सुगन्धवाला, मजीठ, नागरमोथा, नखद्रव्य, कपूर, भागरा, इलायची, हरड, पद्माख, कूठ, कालाभांगरा, अडूसा, तालीसपत्र, राल, तेजपात, वायविडग, सोया, असगन्ध, अण्ड, वड और नारियल इनका एक एक तोला कल्क लेकर चौंसठ तोले तेलको पकावे, इस तेलको अग्निसे उतार कर अच्छे प्रकारसे वस्त्रसे छानकर उत्तम सुवासित किये हुए पात्रमें भरकर विधिपूर्वक वैद्य तीन दिनतक धरतीमें गाडदेवे । इस तेलका मालिस करे और शिरमें डाले तो अर्दित, मन्यास्तम्भ, शिरोरोग, तालुवेकी सूजन, नासिकाकी सूजन, आखोंकी सूजन, मूर्छा, हलीमक, हनुग्रह, बधिरता और कानकी पीडा शमन होतीहै ॥ ४०–४६ ॥

योजयेत्सगुडं सर्पिर्घृतपूपांश्च भक्षयेत् ॥ नावनं क्षीरसर्पिर्भ्यां पानञ्च क्षीरसर्पिषोः ॥४७॥ क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ भृंगराजरसश्छागक्षीरतुल्योऽर्कतापितः ॥ ४८ ॥ सूर्यावर्तं निहन्त्याशु नस्येनैव प्रयोगराट्॥ अर्द्धावभेदके पूर्वं स्नेहस्वेदौ हि भेषजम् ॥ ४९ ॥ विरेकः कायशुद्धिश्च धूपः स्निग्धोष्णभोजनम् ॥ विडंगानि तिलान्कृष्णान्समान्पिष्टान्विलेपयेत् ॥ ५० ॥ नस्यञ्चाप्याचरेत्तस्मादर्द्धभेदं व्यपोहति ॥पिबेत्सशर्करं क्षीरं नीरं वा नारिकेलजम् ॥ सुशीतं वापि पानीयं सर्पिर्वा नस्यतस्तयोः ॥ ५१ ॥

नस्यतः नासिकया पिबेदिति अन्वयः तयोः सूर्यावर्तार्द्धभेदयोः ॥

गुडके साथ घीको खाय, घीके मालपुये खाय, दूधका तथा घीका नास देवे, दूध और घी मिलाकर पिये, दूधमें पिसेहुए तिलोंसे तथा जीवनीय गणके पदार्थोंसे सेक करे तो सूर्यावर्त नष्ट होजाताहै ॥

भांगके रसको और बकरीके दूधको समान भाग लेकर दोनोंको एकत्र धूपमें गरम करके नास देवे तो सूर्यावर्त नष्ट होजाताहै, सूर्यावर्तके लिये यह प्रयोग उत्तम है ॥

अर्द्धावभेदक नामक जो शिरोरोग हुआ होय तो प्रथम स्नेहन, स्वेदन, विरेचन, अन्यप्रकारसे शरीरका सशोधन, धूप और स्निग्ध तथा उष्ण भोजन ये उपचार करे ॥

वायविडग और काले तिल इनको समान भाग लेकर दूधमें पीसकर लेप करे और इसीका नास देवे तो अर्द्धावभेदक नष्ट होजाताहै ॥

नासिकाके द्वारा मिश्री मिला दूध पिये तो अथवा नारियलका जल पिये, शीतल जल पिये अथवा घीको पिये तो सूर्यावर्त तथा अर्द्धावभेदक नष्ट होजाताहै॥ ४७–५१॥

अनन्तवाते कर्तव्यः सूर्यावर्तहितो विधिः॥ शिरोवेधश्च कर्तव्योऽनन्तवातप्रशान्तये ॥ ॥५२॥ आहारश्च प्रदातव्यो वातपित्तविनाशनः ॥ मधुमस्तकसंयावघृतपूपो विशेषतः ॥ ५३ ॥

संयावः पक्वान्नविशेषः पेरकिया इति लोके। स च मधुमस्तकः मधुनोपलिप्तः। घृतपूपः पूआ इति लोके।

अनतवातनामक रोग उत्पन्न हुआ होय तो सूर्यावर्तकी समान चिकित्सा करनी चाहिये। अनन्तवातको शांत करनेके लिये नसको वेधकर रुधिर निकलवावे और पित्त तथा वातनाशक आहार देवे ॥ ५२ ॥

घीसे चुचुहाते तथा सहतसे भरे हुए चूरमा और शीरा तथा मालपुये आदि इनका उपयोग करे ॥ ५३ ॥

### अथ पथ्यादिक्वाथः ।

**पथ्याक्षधात्रीरजनीगुडूचीभूनिम्बनिम्बैः सगुडः कषायः ॥ भ्रूशङ्खकर्णाक्षिशिरोऽर्द्धशूलं निहन्ति नासानिहितः क्षणेन ॥५४॥**

हरड, बहेडा, आमले, हलदी, गिलोय, चिरायता और नीम इनका क्वाथ बनाकर उसमें गुड डालकर उसका नास देवे तो क्षणमात्रमें भौं, कनपटी, कान, आख और मस्तकका अर्द्धशूल ये सब नष्ट होजातेहैं ॥ ५४ ॥

**दार्वी हरिद्रा मञ्जिष्ठा सनिम्बोशीरपद्मकम् ॥ एतत्प्रलेपनं कुर्याच्छंखकस्य प्रशान्तये ॥ ५५ ॥ शीततोयाभिषेकश्च शीतलं क्षीरसेवनम् ॥ कल्कैश्च क्षीरवृक्षाणां शंखके लेपनं हितम् ॥ ५६ ॥**

शखकनामक शिरोरोग होय तो दारुहलदी, हलदी, मजीठ, नीम, खस और पद्माख इनका लेप करे ॥

शीतल जलका सेचन, शीतल दूधका सेवन और क्षीरवाले वट आदि वृक्षोंका कल्क लेपन करनेसे शखकरोग नष्ट होताहै ॥ ५५ ॥ ५६ ॥

### अथ सर्वशिरोरोगाणां सामान्यचिकित्सा ।

**यष्टीमधुकमाषः स्याच्चतुर्थांशं तु विषं भवेत् ॥ तयोश्चूर्णं सुसूक्ष्मं स्यात्तच्चूर्णं सर्षपोन्मितम् ॥ ५७ ॥ नासिकाभ्यन्तरे न्यस्तं सर्वां शीर्षव्यथां हरेत् ॥ दृष्टप्रयोगो योगोऽयमनुभाविभिरादृतः ॥ ५८ ॥ आर्द्रयच्छुक्तिकाचूर्णं चूर्णितं नवसादरम् ॥ उभयं योजितं तस्य गन्धान्नश्यति शीर्षरुक् ॥ ५९ ॥**

इति शिरोरोगाधिकारः ।

मुलेठी ८ रत्ती और मुलेठीसे चौथाई भाग वत्सनाभ इनका अलग बारीक चूर्ण करे, नाकमें सरसोंकी बराबर चूर्ण दे। इसमें सर्वप्रकारकी मस्तककी पीडा नष्ट होजाती है, यह प्रयोग बडे बडे वैद्योंने अनुभव किया है और हमने भी परीक्षा की है ॥

सीपका बारीक चूर्ण और नवसादरका चूर्ण इनको एकत्र मिलाकर नास लेनेसे मस्तककी पीडा शांत होती है ॥ ५७–५९ ॥

इति शिरोरोगाधिकारः सपूर्णः ।

---

## अथ नेत्ररोगाधिकारः ।

### तत्र नेत्रप्रमाणम् ।

**विद्याद् द्व्यंगुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितम् ॥ द्व्यङ्गुलं सर्वतः सार्द्धं भिषङ् नयनमण्डलम् ॥ १ ॥**

**द्व्यंगुलबाहुल्यं द्व्यंगुलप्रमाणस्थौल्यं यस्य तत् । अंगुलीनां स्थौल्यस्य वैषम्यात्पुनराह–सांगुष्ठोदरसम्मितं द्व्यंगुलं सर्वतः सार्द्धं दैर्घ्येण ॥**

नेत्रका मण्डल दो अगुल मोटा और ढाई अगुल लम्बा है यहा अंगुलका प्रमाण अपने अपने हाथकी अगुलीके प्रमाणसे जानना क्योंकि अपने अपने हाथ की अंगुलीके प्रमाणसे नहीं कहनेसे अतर पडताहै ॥ १ ॥

### अथ नेत्रांगानि ।

**पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि तु ॥ अनुपूर्वन्तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् ॥ २ ॥**

**ते पक्ष्मादयो दृष्ट्यन्ताः अनुपूर्वं यथापूर्वं मध्याश्चत्वारः कृष्णादयः यथोत्तरमन्त्याः ।**

पलक, वर्त्म, श्वेत, कृष्ण, दृष्टियोंके मंडल ये आनुपूर्वी क्रमसे मध्यमे हैं और चार उत्तरोत्तर क्रमसे अतभागमें है ॥ २ ॥

### अथ नेत्रमंडलोत्पन्नाष्टसप्ततिः ( ७८ ) रोगाः ।

**द्वादश व्याधयो दृष्टौ तत्रैवान्यौ गदावुभौ ॥ कृष्णमार्गे तु चत्वारो दशैकः शुक्लभागजाः ॥ ३ ॥ वर्त्मन्येकोविंशतिश्च पक्ष्मजौ द्वौ प्रकीर्तितौ ॥ नव सन्धिषु सर्वस्मिन्नेत्रे सप्तदशोदिताः ॥ एवं नेत्रे समस्ताः स्युरष्टसप्ततिरामयाः ॥४॥**

तत्र दृष्टौ । अन्यौ चरकोक्तौ सुश्रुतोक्तषट्सप्ततिसंख्येभ्योऽधिकौ ॥

दृष्टिमे १२ बारह रोग है । सुश्रुतमें १२ रोगोंसे अधिक जो अन्य २ रोग चरकमें कहे हैं वह भी दृष्टिमें होतेहैं, । एव ४ कृष्ण भाग अर्थात् कालेघेरेमें चार रोग होतेहै सफेद भागमे ११ रोग होतेहैं । वर्त्ममें २१ रोग होतेहैं, नेत्रके पक्ष्ममे दो रोग, सधियोंमें ९ रोग और सम्पूर्ण नेत्रमे १७ रोग होतेहैं । इस प्रकार नेत्रमें सब ७८ अठत्तर रोग होतेहैं ॥ ३ ॥ ४ ॥

## अथ सुश्रुतोक्तषट्सप्तति-(७६) रोगाः ।

वाताद्दश तथा पित्तात्कफाच्चैव त्रयोदश ॥ रक्तात्षोडश विज्ञेयाः सर्वजाः पञ्चविंशतिः ॥ बाह्यौ पुनर्द्वौ नयने रोगाः षट्सप्ततिः स्मृताः ॥ ५ ॥

वातसे दश १० रोग होतेहैं, पित्तसे दश १० रोग होतेहैं, कफसे तेरह १३ रोग होतेहैं, रुधिरसे सोलह १६ रोग होतेहैं, तीनो दोषोसे २५ रोग होतेहैं और नेत्रके बाहर भागमें दो रोग होतेहैं इस प्रकार नेत्रोंमे सब ७६ रोग हैं ॥ ५ ॥

## अथ सामान्यरीत्या नेत्ररोगाणां सन्निकृष्टविप्रकृष्टनिदानम् ।

उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात्स्वप्नविपर्ययाच्च ॥ स्वेदाद्रजोधूमनिषेवणाच्च छर्देर्विघाताद्वमनातियोगात् ॥ ६ ॥ शुक्तारनालाम्बुकुलत्थमाषाद्विण्मूत्रवातागमनिग्रहाच्च ॥ प्रसक्तसंरोदनशोकतापाच्छिरोऽभिघातादतिशीघ्रयानात् ॥ ७ ॥ तथा ऋतूनाञ्च विपर्ययेण क्लेशाभितापादतिमैथुनाच्च ॥ बाष्पग्रहात्सूक्ष्मनिरीक्षणाच्च नेत्रे विकाराञ्जनयन्ति दोषाः ॥८॥

उष्णाभितप्तस्य जलप्रवेशादातपादिजनितोष्मणा सह बहिर्भूतस्य नयनतेजसो जलावगाहेन अभिभवाद्दूरेक्षणात् दूरस्थद्रव्यदर्शनात् । स्वेदात्स्विद्यतेऽनेनेति स्वेदोऽग्न्यादिस्तस्मात् । रजोधूमनिषेवणान्नेत्रेण । शोकतापात् शोकजनितात्सन्तापात् । शिरोऽभिघातात् शिरसि प्रहारात् । ऋतूनां विपर्ययेण ऋतूक्तचर्याविपरीताचरणेन । क्लेशाभितापात् क्लिश्यतेऽनेनेति क्लेशं कामक्रोधादिदुःखं तेनाभितापः पीडा ततः । बाष्पग्रहादश्रुवेगविघातात् ॥

धूप आदिसे अत्यंत संतापित होकर शीतल जलमें प्रवेश करनेसे, दूरके पदार्थोंको देखनेसे, समयपर निद्राको नहीं लेनेसे, अग्नि आदिको सेवन करनेसे, नेत्रोंमें धूल आदिके गिरनेसे, धुँएंके लगनेसे, वमनके वेगको रोकनेसे, अत्यंत वमनकरनेसे, शुक्तनामक कॉजीको सेवनकरनेसे, आरनालके सेवनसे, खट्टे रसोंके सेवनकरनेसे, कुलथीको सेवनकरनेसे, उडदोंको सेवनकरनेसे, मूत्र, विष्ठा और अधोवायुके वेगको रोकनेसे, बहुत दिनोंतक रोनेसे, शोकजन्य सतापसे, मस्तकमे चोट आदिके लगनेसे, अत्यंत वेगवाले वाहनपर बैठनेसे, ऋतुचर्यामे कहीहुई विधिको उल्लघन कर विपरीत आचरण करनेसे, काम और क्रोधादिजन्य दुःखोंसे उत्पन्न हुई पिडासे, अत्यंत मैथुन करनेसे, आंसुओके वेगको रोकनेसे और बारीक पदार्थोंको देखनेसे नेत्रोंमें विकार उत्पन्न होतेहैं ॥ ६–८ ॥

## अथ नेत्ररोगसम्प्राप्तिः ।

शिरानुसारिभिर्दोषैर्विगुणैरूर्द्ध्वमाश्रितैः ॥ जायन्ते नेत्रभागेषु रोगाः परमदारुणाः ॥ ९ ॥

नेत्रभागेषु नेत्रस्य दृष्ट्याद्यवयवेषु ।

शिराओंमे रहनेवाले वातादिदोष विगडकर ऊंचे भागोंमें जाकर नेत्रके अवयवोंमें अत्यत दारुण रोगोंको उत्पन्न करतेहैं ॥ ९ ॥

## अथ दृष्टिरोगलक्षणम् ।

मसूरदलमात्रां तु पञ्चभूतप्रसादजाम् ॥ खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः ॥ १० ॥ आवृतां पटलेनाक्ष्णो-

र्बाह्येन विवराकृतिम् ॥ शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः ॥ ११ ॥

मसूरदलमात्रां नेत्रगतकृष्णमण्डलमध्यस्थमसूरद्विदलप्रमाणां पञ्चभूतप्रसादजाम् प्रसन्नपञ्चभूतात्मिकाम् । खद्योतविस्फुलिङ्गाभां निमेषैः कदाचित्खद्योताभां खद्योतवन्निमेषाभावे विद्योतमानत्वाद्विस्फुलिंगवत् । अव्ययैश्चिरस्थायिभिस्तेजोभिः सिद्धामुत्पन्नाम् । विवराकृति सच्छिद्राम् । अक्ष्णोर्बाह्येन पटलेन रसरक्ताधारभूतेन आवृताम् ॥

नेत्रके काले डेलेके मंडलके बीचमें रहनेवाली, मसूरकी दालकी समान, स्वच्छ पंचभूतोंसे बनी हुई, क्षणमें पटबीजनेकी समान, क्षणमें अग्निके प्रकाशकी समान, चिरस्थायी तेजोंसे सिद्ध, छिद्रवाली, सदैव शीत आनुकूल्यवाली, बाहरसे रस रक्तसे मढी हुई है इसको नेत्रवैद्य दृष्टि कहतेहैं ॥ १० ॥ ११ ॥

## अथ नेत्रपटलचतुष्कम् ।

तेजोजलाश्रितं बाह्यं तेष्वन्यत्पिशिताश्रितम् ॥ मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् ॥ पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥ १२ ॥

तत्र तेजो रक्तम्, जलं रसः । तेन रसरक्ताधारमित्यर्थः । पटलं त्वक् । अपरं चतुर्थं दृष्टेः स्वांगुष्ठोदरस्थूलस्य नेत्रस्य पञ्चमांशसमं तेषां चतुर्णां पटलानां मिलितानां बाहुल्यं स्थौल्यमिष्यते ॥

नेत्रमें चार पटल हैं उनमें सबसे ऊपरका पहिला पटल [illegible] तथा रक्तके आश्रय रहताहै । दूसरा पटल मांसके आश्रय रहताहै । तीसरा पटल मेदके आश्रय रहताहै और चौथा पटल अस्थियोंके आश्रय रहताहै । इन चारों पटलोंकी मोटाई अपने अपने अंगुठेके मध्यभागकी समान [illegible] मानीगई है ॥ १२ ॥

## अथ प्रथमपटलगतदोषस्वभावः ।

प्रथमे पटले यस्य दोषो दृष्ट्यंवस्थितः ॥ अव्यक्तानि स्वरूपाणि कदाचिदथ पश्यति ॥ १३ ॥

प्रथमे पटले पूर्वाभ्यन्तरे न तु बाह्ये ॥ दृष्टेरभ्यन्तरे दोषाः पटले समधिष्ठिताः ॥ एकैकमनुपद्यन्ते पर्यायात्पटलान्तरम् ॥ १४ ॥ इति विदेहवचनात् । व्यवस्थितः स्थितः । अव्यक्तानि ईषद्व्यक्तानि । अथ कदाचित्पश्यति व्यक्तान्येवेति शेषः दोषाल्पतया ॥

जो पहिले पटलमें दोष स्थित होंय तो वह मनुष्य रूपोंको कुछ कुछ अन्तरसे देखताहै और जो दोष अल्प होय तो किसी समय स्पष्टभी देखताहै ।

यहां जो पहिला पटल कहा है वह सबसे भीतरका पटल जानना, बाहरका पटल नहीं समझना क्योंकि नेत्रके पटलके भीतरके रहनेवाले दोष अनुक्रमसे ऊपर ऊपरके पटलमें प्राप्त होतेहैं यह विदेहका मत है ॥ १३ ॥ १४ ॥

## अथ द्वितीयपटलगतदोषस्वभावः ।

दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ॥ मक्षिकामशकान्केशाञ्जालकानीव पश्यति ॥ १५ ॥ मण्डलानि पताकांश्च मरीचीन्कुण्डलानि च ॥ पारिप्लवांश्च विविधान्वर्षमभ्रं तमांसि च ॥ १६ ॥ दूरस्थानि च रूपाणि मन्यते च समीपतः ॥ समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥ यत्नवानपि चात्यर्थं सूचीछिद्रं न पश्यति ॥ १७ ॥

विह्वलति रूपं सम्यक् कृत्वा ग्रहीतुं न शक्नोति । विह्वलत्वमेव विवृणोति—मक्षिकादीन् जालकानीव लूतारचितजालानीव पश्यति । मण्डलादीनि असन्त्यपि सन्तीव पश्यति । कुण्डलानि कुण्डलानीव विद्योतमानानि किञ्चित्पश्यति । पारिप्लवांश्च विविधान्प्रतिच्छायादीनां सञ्चाराद्दूर्ध्वाधस्तिर्यग्गतान्नानाविधान्पश्यति । वर्षं वृष्टिम् अभ्रं मेघम् । वर्षादीनि असन्त्यपि सन्तीव पश्यति । गोचर-

भ्रमाद्गोचरोऽत्र रूपम्, तत्र भ्रमः अयथाग्रहणं तस्मात् ॥

जो दोष दूसरे पटलमें स्थित होय तो दृष्टि रूपोंको अच्छे प्रकारसे नही देख सक्ती, तथा मक्खी, मच्छर और केश आदि मकडीके जालेकी समान दीखतेहैं, मडल, पातका और किरणों न होंय तो भी होनेकी समान देखे और प्रकाशमान वस्तुओंको कुडलकी समान गोल देखे, परछाई आदिका सचार ऊचा, नीचा तथा टेढे आदि अनेक प्रकारसे देखे, वर्षा, बादल तथा अंधकारके न होने पर भी दीखे, रूपोंका यथार्थ रूप दृष्टिके भ्रमके कारण दूरके पदार्थ धोरे दीखे, और अत्यत यत्न करनेपर भी सुईके नकुये( छेद ) को नही देख सके ॥ १५–१७ ॥

## अथ तृतीयपटलगतदोषः ।

ऊर्द्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते॥ सुमहान्त्यपि रूपाणि छादितानीव चाम्बरैः ॥ १८ ॥ कर्णनासाक्षिरूपाणि विकृतानि च पश्यति ॥ यथादोषश्च रज्येत दृष्टिर्दोषे बलीयसि ॥ १९ ॥ अधःस्थे तु समीपस्थं दूरस्थं चोपरि स्थिते ॥ पार्श्वस्थिते पुनर्दोषे पार्श्वस्थानि न पश्यति ॥ २० ॥ समन्ततः स्थिते दोषे संकुलानीव पश्यति ॥ दृष्टिमध्यस्थिते दोषे महद्दुःखं च पश्यति ॥ २१ ॥ दोषे दृष्टिस्थिते तिर्यगेकं वा मन्यते द्विधा ॥ द्विधा स्थिते त्रिधा पश्येद्बहुधा चाऽनवस्थिते ॥ २२ ॥

ऊर्द्ध्वं पश्यति–ऊर्द्ध्वमपि यादृक् पश्यति तादृगाह–सुमहान्ति इत्यादि । अम्बरैः वस्त्रैः । अधःस्थे तु समीपस्थं न पश्यतीत्यन्वयः। तथा उपरि स्थिते दोषे दूरस्थं न पश्यति । समन्ततः उपर्यधःपार्श्वेषु संकुलानि भिन्नान्यपि रूपाणि मिश्रितानीव पश्यतिः।अनवस्थिते अनियतावस्थाने बहुधा बहूनि पश्येत् ॥

जो दोष तीसरे पटलमे स्थित होय तो ऊँचेको देख-सक्ताहै नीचेको नही देखता, ऊचेके जो पदार्थोंको देखताहै वह पदार्थ अत्यत बडे होयँ तो भी वस्त्रसे ढकेकी समान दीखतेहै । कान, नाक, और नेत्र आदि अवयवों को विकृत देखे, इनसे रहित शरीरको देखे, जो दोप बलवान् होय तो दृष्टिदोषके स्वभावानुसार वर्ण होजाताहै,जो दोप नीचेके भागमे स्थित होय तो समीपके पदार्थोंको नही देखसक्ता, और जो दोष ऊपरके भागमे स्थित होय तो दूरके पदार्थोंको नहीं देखसक्ता, जो दोष इधर उधर बगलमे स्थित होय तो बगलके पदार्थोंको नहीं देख-सक्ता । जो दोष चारो ओर स्थित होय तो ऊपर, नीचे तथा बगलके पदार्थ अलग २ होयँ तो भी मिले हुए दीखें । जो दोष दृष्टिके बीचमें स्थित होय तो बडे पदार्थोंको छोटा देखताहै; जो दोष दृष्टिमें टेढे स्थित होयँ तो एक पदार्थके दो पदार्थ देखताहै । जो दोप दृष्टिके दो भागोंमे स्थित होय तो एक पदार्थके तीन पदार्थ दीखतेहै और जो दोष अनियमित रीतिसे स्थित होयँ तो एक पदार्थके अनेक पदार्थ दीखतेहै ॥ १८–२२ ॥

## अथ चतुर्थपटलगतदोषः ।

तिमिराख्यः स यो दोषश्चतुर्थं पटलं गतः ॥ रुणद्धि सर्वतो दृष्टिं लिंगनाश इति क्वचित् ॥ २३ ॥ अस्मिन्नपि तमोभूते नातिरूढे महागदे ॥ चन्द्रादित्यौ सनक्षत्रौ अन्तरिक्षे च विद्युतः ॥ २४ ॥ निर्मलानि च तैजांसि भ्राजिष्णूनीव पश्यति॥ स एव लिंगनाशस्तु नीलिकाकाचसंज्ञितः ॥ २५ ॥

यो दोषोऽत्र रोगः चतुर्थं पटलं बाह्यं पटलं गतः स तिमिराख्यः तिमिरदर्शनेन तिमिरमस्यास्तीति तिमिरः अर्शादित्वादच्। तस्य लक्षणमाह रुणद्धि इत्यादि । सर्वतः सर्वत्र लिगनाशे इति क्वचित् । तन्त्रान्तरे लिंगनाशसंज्ञः । तस्य निरुक्तिश्च । लिंग्यते ज्ञायतेऽनेनेति लिंगं दृष्टितेजः तस्य नाशोऽ-

स्मिन्निति लिंगनाशः । अस्मिन्नपि तिमिरेऽपि तमोभूते तमस्तुल्ये । अत्र भूतशब्दस्तुल्यार्थः । "भूतं प्राण्यतीते समे त्रिषु" इत्यमरात् । नातिरूढे अप्रौढे नवे । चन्द्रादित्यौ नक्षत्राणि च पश्यति अन्तरिक्षे अन्तरिक्षस्य प्रकाशसमयत्वेन तमोऽभिभवात् । तेजांसि अग्न्यादेः भ्राजिष्णूनि रत्नसुवर्णादीन्यस्मिन् । प्रौढे चिरजे चन्द्रादीन्यपि न पश्यतीत्याशयः । नीलिकाकाचसंज्ञितः नीलिका काचेति नामान्तराभ्यां युक्तः ॥

जो दोष दृष्टिके चौथे पटलमें स्थित होय तो यह अंधकार दीखनेके कारण तिमिर कहाजाताहै और चारों ओर दृष्टिको रोकदेताहै, इस रोगको अन्य ग्रंथोंमें 'लिंगनाश, ऐसा कहाहै । अंधेरेकी समान यह बडा भयकर रोग नवीन होय तबतक मनुष्य आकाशमे चन्द्रमा, सूर्य, नक्षत्र और बिजलीको देखताहै क्योंकि आकाशके प्रकाशमय होनेसे अंधकारका बल नहीं चलता, अग्नि आदिके निर्मल तेजको देखताहै और रत्न तथा सुवर्ण आदि प्रकाशित पदार्थोंको भी देखताहै । यह रोग पुराना होजाय तो चन्द्र आदि भी नहीं दीखते यह तिमिर नामक रोग जैसे लिंगनाश इस नामसे कहाजाताहै उसी प्रकार नीलिका और कॉच ये नाम भी कहेजातेहैं । लिंग अर्थात् दृष्टिके तेजको जो नाश करताहै इस कारण यह लिंगनाश कहाजाताहै ॥ २३-२५ ॥

## अथ दृष्टिरोगनाम संख्या च ।

दृष्ट्याश्रयाः षट् च षडेव रोगाः षड् लिंगनाशा हि भवन्ति तत्र ॥ वातेन पित्तेन कफेन सर्वै रक्तात्परिम्लाय्यभिधश्च षष्ठः ॥ २६ ॥

दृष्ट्याश्रया रोगाः षट् षट् द्वादशेत्यर्थः । तत्र लिंगनाशाः षट् तान्विवृणोति वातेनेत्यादि ॥

दृष्टिके रोग १२ हैं ( चरकके मतके अनुसार १४ होते हैं ) इन १२ में ६ रोग लिंगनाश कहेजातेहैं । जैसे कि, वातज १, पित्तज २, कफजन्य ३, सान्निपातजन्य ४, रक्तजन्य ५, और परिम्लायी लिंगनाश ६, ॥ २६ ॥

तथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्वथ धूमदर्शी ॥ यो ह्रस्वजात्यो नकुलान्धसंज्ञो गम्भीरसंज्ञश्च तथैव दृष्टिः ॥ २७ ॥

पित्तविदग्धदृष्ट्यादयश्च षट् । एवं दृष्ट्याश्रया द्वादशरोगाः ।

पित्तविदग्धदृष्टि १, कफविदग्धदृष्टि २, धूमदर्शी ३, ह्रस्वजात्य ४, नकुलांध्य ५ और गम्भीरक ६, ॥ २७ ॥

तत्रैवान्यौ चरकोक्तगदौ सनिमित्तकाऽनिमित्तकौ । तत्र वातजलिंगनाशलक्षणमाह–

वातेन खलु रूपाणि भ्रमन्तीव च पश्यति ॥ आविलान्यरुणाभानि व्याविद्धानीव मानवः ॥ २८ ॥

आविलानि कलुषाणि।अरुणाभानि अव्यक्तलौहित्ययुक्तानि ॥

वातके लिंगनाशमें सम्पूर्ण रूप भ्रमण करते दीखैहैं, मलिन कुछ लाल गदलेसे और विकृत टेढे तिरछे ऐसे दीखतेहैं ॥ २८ ॥

## अथ पित्तजलिंगनाशलक्षणम् ।

पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् ॥ नृत्यतश्चैव शिखिनः सर्वं नीलञ्च पश्यति ॥ २९ ॥

आदित्यादीनां गुणान् रूपाणि ॥

सूर्य, पटबीजने, इन्द्रधनुष, बिजली, इनको मोरके पूछकी समान विचित्र नील और काले रँगके देखे तो जानना कि, पित्तजनित लिंगनाश हुआ है ॥ २९ ॥

## अथ कफजलिंगनाशलक्षणम् ।

कफेन पश्येद्रूपाणि स्निग्धानि च सिता-

नि च ॥ सलिलप्लावितानीव जालकानीव मानवः ॥ ३० ॥

कफके लिंगनाशमें पदार्थोंको चिकने, सफेद पानीमे डबोकर निकालेहुएकी समान और जालकी समान देखै तो जानना कि, कफजन्य लिंगनाश हुआ है ॥ ३० ॥

अथ सन्निपातजलिंगनाशलक्षणम्

सन्निपातेन चित्राणि विप्लुतानि च पश्यति ॥ बहुधापि द्विधा वापि सर्वाण्येव समन्ततः ॥ हीनाधिकांगान्यथ वा ज्योतींष्यपि च पश्यति ॥ ३१

चित्राणि नानावर्णानि । विप्लुतानि विपरीतानि वैपरीत्यं विवृणोति बहुधेत्यादि ॥

सन्निपातके लिंगनाशमे रूप चारो ओर विपरीत अर्थात् अनेक प्रकारके वा दो प्रकारके अथवा सर्व प्रकारके देखनेमें आवें अनेक वर्णवाले दीखें, अथवा अधिक और न्यून अंगोवाले दीखे अथवा तेजोमय दीखे तो जानना कि, सन्निपातजन्य लिंगनाश हुआ है ॥ ३१ ॥

अथ रक्तजन्यलिंगनाशलक्षणम् ।

पश्येद्रक्तेन रक्तानि तमांसि विविधानि च ॥ हरितान्यथ कृष्णानि पीतान्यपि च मानवः ॥ ३२ ॥

जो अनेक प्रकारका अन्धकार देखनेमें आवे और रूप लाल, हरे, काले तथा पीले दीखे तो जानना कि, रक्तजन्य लिंगनाश हुआ है ॥ ३२ ॥

अथ परिम्लायिलिंगनाशलक्षणम् ।

रक्तेन मूर्च्छितं पित्त परिम्लायिनमाचरेत् ॥ तेन पीता दिशः पश्येदुद्यन्तमिव भास्करम् ॥ विकीर्यमाणान्खद्योतैर्वृक्षांस्तेजोभिरेव हि ॥ ३३ ॥

विकीर्यमाणान् व्याप्यमानान् । तेजोभिः अग्न्यादिभिरिव ॥

रुधिरसे मूर्छित हुआ पित्त परिम्लायी नामक लिंगनाशको उत्पन्न करै है जिस लिंगनाशसे सम्पूर्ण दिशा पीली ही दीखतीहैं सूर्य उदय होतासा दीखताहै और वृक्ष पटबीजने तथा अग्निके तेजसे व्याप्त ऐसे दीखतेहैं ॥ ३३ ॥

अथ वातादिजनेत्रवर्णेन लिंगनाशस्य षड्विधत्वम् ।

वातादिजनितैर्नेत्रवर्णैरपि च षड्विधः ॥ लिंगनाशो निगदितो वर्णवातादिजो यथा ॥ ३४ ॥ रागोऽरुणो मारुतजः प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात् ॥ कफात्सितः शोणितजः सरक्तः समस्तदोषप्रभवो विचित्रः ॥ ३५ ॥

वातादिसे उत्पन्नहुए नेत्रोंके वर्णानुसार भी लिंगनाश छः प्रकारका होताहै । कौनसे दोषसे नेत्रका कौनसा रंग होताहै सो कहतेहैं । वातसे लिंगनाश होय तो नेत्रोंका रग लाल होजाताहै । पित्तजन्य परिम्लायी लिंगनाश होय तो नेत्रोका वर्ण नीला होजाताहै । कफजन्य लिंगनाश होय तो नेत्रोंका रग सफेद होजाताहै । रुधिरसे लिंगनाश होय तो नेत्रोका रग लाली लिये होताहै । और सन्निपातसे लिंगनाश हुआ होय तो नेत्रोका रग विचित्र होताहै ॥ ३४ ॥ ३५ ॥

अथ वातादिजनेत्रमंडलरूपम् ।

अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा ॥ पित्ततो मण्डलं नीलं कांस्याभं वा सपीतकम् ॥

श्वेतपीतं वा कथमेतत् ? व्याधिप्रभावात् ॥

श्लेष्मणा बहुलं स्निग्धं शंखकुन्देन्दुपाण्डुरम् ॥ ३७ ॥

बहुलं स्थूलम् ॥

चलत्पद्मपलाशस्थः शुक्लो बिन्दुरिवाम्भसः ॥ मृद्यमाने तु नयने मण्डलं तद्विसर्पति ॥ ३८ ॥ मण्डलं तु भवेच्चित्रं लिंगनाशे त्रिदोषजे ॥ प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ॥ ३९ ॥

चित्रं वातादिवर्णम् ॥

रक्तजं मण्डलं दृष्टौ स्थूलकाचारुणप्रभम् ॥ परिम्लायिनि रोगे स्यान्म्लानं नीलम-

थापि वा ॥ दोषक्षयात्स्वयं तत्र कदाचित्स्याच्च दर्शनम् ॥ ४० ॥

रक्तजं पित्तानुगामिरक्तजम्। स्थूलकाचारुणप्रभं स्थूलकाचस्य इव अरुणा प्रभा यस्य तत्। एतेन स्थौल्यमरुणत्वं च बोध्यते। दोषक्षयादित्यादि तत्र परिम्लायिनि कालान्तरेण दोषक्षयात्। कदाचित्स्वयमेव दर्शनं स्यात् ॥

वातसे लिंगनाश हुआ होय तो मण्डल लाल, चञ्चल तथा कठिन होताहै। पित्तसे लिंगनाश होय तो मंडल नीला काचकी समान, अथवा सफेद वा पीला होताहै (सफेद और पीला होना यह व्याधिके प्रभावसे होताहै)। कफसे लिंगनाश होय तो मंडल मोटा, स्निग्ध, शंखकी समान, कुंदकी और चन्द्रमाकी समान सफेद होताहै। और चंचल कमलके पत्तपर पडी हुई जलकी बिन्दुकी समान होताहै। आखको खूब मलनेसे यह मंडल पसर जाताहै। तीनों दोषोंसे लिंगनाश होय तो मंडल विचित्र अर्थात् वातादिजनित सम्पूर्ण वर्णोंवाला होताहै। रुधिरसे लिंगनाश हुआ होय तो मंडल प्रवालकी समान और कमलकी पत्तोंकी समान होता है। पित्तसम्बन्धी रुधिरजन्य लिंगनाश होय तो मंडल स्थूल और लाल कांचकी समान स्थूल और लाल होताहै। परिम्लायी लिंगनाश होय तो मंडल म्लानिको प्राप्त हुआ अथवा नीला होताहै और कालान्तरमें दोषोंके क्षय होनेसे किसी समय अपनी सदृश उत्तम होजाताहै ॥ ३९–४० ॥

अथ लिंगनाशेऽनुक्तदाहादिदोषलिंगम्।

यथास्वं दोषलिंगानि सर्वेष्वेव भवन्ति हि ॥ ४१ ॥

सम्पूर्णके लिंगनाशोंमें उन उन दोषोंके अपने अपने लक्षण भी प्रगट होतेहैं ॥ ४१ ॥

अथ पित्तविदग्धदृष्टिलक्षणम्।

पित्तेन दुष्टेन गतेन दृष्टिं पीता भवेद्यस्य नरस्य दृष्टिः ॥ पीतानि रूपाणि च तेन पश्येत्स वै नरः पित्तविदग्धदृष्टिः ॥ ४२ ॥

पित्तेन गतेन दृष्टिं दृष्टावपि प्रथमद्वितीयपटलगतेनेति बोद्धव्यम्। तेन व्याधिना।

तस्मिन्नेव पित्ते दृष्टौ तृतीयपटलं गते विशेषरूपमाह।

प्राप्ते तृतीयं पटलं तु दोषे दिवा न पश्येन्निशि वीक्षते सः ॥ रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावात्सकलानि पश्येत् ॥ ४३ ॥

दोषेऽत्र पित्ते।

दुष्ट हुआ पित्त दृष्टिके पहिले, दूसरे पटलमें प्राप्त होनेसे जो मनुष्यकी दृष्टि पीली हुई होय तो वह मनुष्य समस्त रूपोंको पीला देखताहै। यह रोग पित्तविदग्धदृष्टि कहाजाताहै। उसीप्रकार पित्त तीसरे पटलमें प्राप्त होय तो वह मनुष्य दिनमें नहीं देखता किंतु रात्रिमें शीतके कारण दृष्टिके अनुकूल होनेसे पित्तहीन होकर सम्पूर्ण पदार्थोंको देखसक्ताहै, इसप्रकार भी पित्तविदग्धदृष्टिमें अन्तर्भूतहै. इसकारण अलग नहीं गिना जाता ॥ ४२ ॥ ४३ ॥

अथ कफविदग्धदृष्टिलक्षणम्।

तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि हि मन्यते तु ॥ ४४ ॥

अत्रापि श्लेष्मणो दृष्टौ प्रथमद्वितीयपटलस्यैतल्लिंगं बोद्धव्यम्। स एव श्लेष्मा दृष्टौ पटलत्रयं गतो नक्तान्ध्यं करोतीत्याह।

त्रिषु स्थितो यः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य ॥ दिवा स सूर्यानुगृहीतदृष्टिः पश्येत्तु रूपाणि कफाल्पभावात् ॥ ४५ ॥

दोषोऽत्र कफस्तस्य उपक्रान्तत्वान्नक्तान्ध्यस्य श्लेष्मविदग्धदृष्टौ अन्तर्भूतत्वान्न पृथग्गणना ॥

दुष्ट हुआ कफ दृष्टिके पहिले दूसरे पटलमें प्राप्त होय तो मनुष्य रूपोंको सफेद देखताहै, यह रोग कफविदग्धदृष्टि कहाजाताहै।

येही कफ दृष्टिके तीनों पटलमें प्राप्त होय तो बलात्कारसे नक्तान्ध्य ( रात्रिमे अंधापन ) करताहै । दिनमे तो दृष्टिके ऊपर सूर्यके अनुग्रह होनेके कारण कफहीन होकर सम्पूर्ण पदार्थ दीखतेहैं, रात्रिमे अंधापन भी कफविदग्ध दृष्टिमे अन्तर्भूत होताहै इसकारण इसको अलग नहीं गिना ॥ ४४ ॥ ४५ ॥

## अथ धूमदर्शिलक्षणम् ।

**शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः ॥ धूमांस्तु यः पश्यति सर्वभावान्स धूमदर्शीति नरः प्रदिष्टः ॥ ४६ ॥**

**शिरोऽभितापः शिरसि घर्मादीनां सन्तापः । एतस्य पित्तदोषो बोद्धव्यः ॥**

शोकसे, ज्वरसे, परिश्रमसे और शिरमे धूप आदिके संतापसे दृष्टिका अभिघात होकर सम्पूर्ण पदार्थ धूमसे व्याप्त दीखतेहै। यह रोग धूमदर्शी कहाजाताहै,यह पित्तकी दुष्टतासे होताहै ॥ ४६ ॥

## अथ ह्रस्वजात्यलक्षणम् ।

**यो वासरे पश्यति कष्टतोऽथ रूपं महच्चापि निरीक्षतेऽल्पम् ॥ रात्रौ पुनर्यः प्रकृतानि पश्येत्स ह्रस्वजात्यो मुनिभिः प्रदिष्टः ॥ ४७ ॥**

दिनमे थोडा थोडा दीखे तथा बडे बडे पदार्थ भी छोटे दीखे और रात्रिमें सम्पूर्ण रूप जैसेके तैसे दीखे इस रोगको मुनि ह्रस्वजात्य कहतेहै ॥ ४७ ॥

## अथ नकुलान्ध्यलक्षणम् ।

**विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्॥ चित्राणि रूपाणि दिवा च पश्येत्स वै विकारो नकुलान्ध्यसंज्ञः ॥४८॥**

दृष्टि दोषसे व्याप्त होनेके कारण नौलेकी दृष्टिकी समान चमके और दिनमे रूपोंको विचित्र देखे। इस रोगको नकुलांध्य कहतेहै ॥ ४८ ॥

## अथ गंभीरिकालक्षणम् ।

**दृष्टिर्विरूपा श्वसनोपसृष्टा संकोचमभ्यन्तरतः प्रयाति ॥ रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति धीराः ॥ ४९ ॥**

**विरूपा विकृता । श्वसनोपसृष्टा वातोपहता । रुजावगाढा गम्भीरवेदनान्विता ॥**

वातसे उपहतदृष्टि विकृत होजाय, संकोचको प्राप्त होय, भीतरको चलीजाय और गम्भीरपीडासे युक्त होय इस रोगको विद्वान् वैद्य गम्भीरिका कहतेहै ॥ ४९ ॥

## अथ सनिमित्तलिंगनाशस्य निदानलक्षणम् ।

**बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च॥ निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनैः सः॥५०॥**

**बाह्यौ सुश्रुतोक्तद्वादशसंख्येभ्योऽधिकौ । तत्र तन्निमित्तमाह–शिरोऽभितापः शिरोऽभितप्यते येन विषकुसुमगन्धवहपवनस्पर्शेन शिरोऽभितापः तस्मादभिष्यन्दनिदर्शनैः रक्ताभिष्यन्दलिंगैरिति गदाधरः । सन्निपाताभिष्यन्दलिंगैरिति कार्तिकः ॥**

सुश्रुतने दृष्टिके जो बारह रोग कहे है उनसे अधिक अन्य दो रोग चरक आदि मुनियोंने कहेहै । वह एक तो सनिमित्त लिंगनाश और दूसरा अनिमित्त लिंगनाश ।

विषैले फूलोंकी गधवाली पवनके स्पर्शनरूपनिमित्तसे मस्तकमे अभिताप होकर जो लिंगनाश होताहै वह सनिमित्तक लिंगनाश कहाजाताहै । अभिष्यन्दके लक्षणोंसे इस रोगको जानना चाहिये ।

गदाधर वैद्य कहताहै कि "रक्ताभिष्यदके लक्षणोंसे इस रोगको जानना" और कार्तिक वैद्य कहताहै कि "त्रिदोषजनित अभिष्यन्दके लक्षणोंसे इस रोगको जानना चाहिये" ( रक्ताभिष्यन्द आदिके लक्षण आगे कहैंगे ) ॥ ५० ॥

## अथानिमित्तलिंगनाशनिदानलक्षणम् ।

**सुरर्षिगन्धर्वमहोरगाणां सन्दर्शनेनापि च भास्करस्य ॥ हन्येत दृष्टिर्मनुजस्य**

यस्य स लिंगनाशस्त्वनिमित्तसंज्ञः ॥५१॥ तत्राक्षि विस्पष्टमिवावभाति वैदूर्यवर्णा विमला च दृष्टिः ॥ ५२ ॥

अनुपलभ्यमानानां सुरादीनां निमित्तमप्यनिमित्तं मन्यते । विस्पष्टं ज्योतिर्युक्तम् । वैदूर्यवर्णा श्यामा । विमला निर्मला ॥

देव, ऋषि, गन्धर्व, बृहत्सर्प अथवा अन्यान्य प्रकाशमयपदार्थोंको देखनेसे दृष्टि उपहत होजातीहै यह अनिमित्त लिंगनाश कहाजाताहै । देवादिलोक विशेष करके सर्वजनोंको नहीं दीखते इस कारण उनके दर्शनरूप निमित्तसे उत्पन्न हुए लिंगनाशको अनिमित्त मानाहै ॥ ५१ ॥ अनिमित्त लिंगनाशमें नेत्र तेजवाले दीखतेहैं, दृष्टि श्याम और निर्मल होतीहै और उपघातके कारण दृष्टि फटजातीहै सकुचजाय अथवा कम होजातीहै ॥ ५२ ॥

## अथ कृष्णमंडलगतरोगः ।

यत्सव्रणं शुक्रमथाव्रणञ्च पाकात्ययश्चाप्यजका तथैव ॥ चत्वार एते नयनामयास्तु कृष्णप्रदेशे नियता भवन्ति ॥ ५३ ॥

सव्रणशुक्र, अव्रणशुक्र, पाकात्यय और अजका यह चार रोग नेत्रोंके काले मंडलमें रहतेहैं ॥ ५३ ॥

## अथ सव्रणशुक्रलक्षणम् ।

निमग्नरूपं तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै ॥ स्रावं स्रवेदुष्णमतीव चापि तत्सव्रणं शुक्रमुदाहरन्ति ॥ ५४ ॥

निमग्नरूपमिति शुक्रविशेषणम् । सूच्येव विद्धमिति शुक्रस्य वर्तुलत्वं व्यथायुक्तत्वञ्च बोधयति । स्रवेदित्यनेनैव स्रावो बोधितः स्रावपदान्निरन्तरं स्रावः ॥

जो कृष्ण नेत्रके काले भागमें गढाना दीखै, सुईसे छिदासा मालूम होय, गोल तथा व्यथा युक्त होय और उसमेंसे निरन्तर गरमजल बहताहै उसको सव्रणशुक्र कहतेहैं ॥ ५४ ॥

## अथ सव्रणशुक्रस्य साध्यासाध्यता ।

दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्यत् ॥ अवेदनं यन्न च युग्मशुक्रं तत्सिद्धिमायाति कदाचिदेव ॥ ५५ ॥

न चावगाढमेकत्वग्गतं न च संस्रवेदित्यर्थः । अवेदनमीषद्वेदनम् । न च युग्मशुक्रम् अयुग्मशुक्रमेकमित्यर्थः । एवंविधं कदाचित्सिध्यति एतद्विपरीतं न सिध्यति ॥

जो सव्रणशुक्र दृष्टिके समीपमें न होय एक त्वचामें होय, स्रवना न होय, वेदनारहित होय और एक होय तो किसी समय साध्य होताहै । किन्तु जो सव्रणशुक्र दृष्टिके समीपमें होय, दूसरी त्वचामें, वेदनावाला, स्रावयुक्त और एक स्थानमें युग्मरूप ऐसा कभी भी साध्य नहीं होता ॥ ५५ ॥

## अथाव्रणशुक्रलक्षणम् ।

स्यन्दात्मकं कृष्णगतन्तु शुक्रं शंखेन्दुकुन्दप्रतिमावभासम् ॥ वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति ॥५६॥

स्यन्दात्मकमभिष्यन्दहेतुकं सर्वेषामक्षिरोगाणामभिष्यन्दहेतुकत्वे अस्य नियमबोधनार्थं स्यन्दात्मकमिति । शंखेन्दुकुन्दप्रतिमावभासं शंखेन्दुकुन्दसदृशमवभासते । एतेन शुक्लत्वं बोध्यते । वैहायसाभ्रप्रतनुप्रकाशम् आकाशस्थमेघवत्तनु यथा स्यादेवं प्रकाशते यत् ॥

जो नेत्रोंके काले भागमें अभिष्यन्दसे उत्पन्नहुआ फूला आकाशमें स्थित मेघकी समान थोडा थोडा प्रकाशमान और शंख, चन्द्रमा तथा कुन्दके फूलकी समान श्वेत होय उसको अव्रणशुक्र कहतेहैं यह फूला अत्यन्त साध्य है । यद्यपि नेत्रके सम्पूर्ण रोग अभिष्यन्दसे होतेहैं तथापि यह फूला तो अभिष्यन्दसेही होताहै ऐसा

नियम जाननेके लिये 'अभिष्यन्दसे हुआ' यह विशेषण दिया है ॥ ५६ ॥

## अथाव्रणशुक्रस्य साध्यत्वेऽप्यवस्थान्तरेण कष्टसाध्यता ।

**गम्भीरजातं बहलञ्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् ॥ ५७ ॥**

**गम्भीरजातं द्वित्रित्वग्गतम्, बहलं पुष्टम् ।**

जो अव्रणशुक्र गम्भीर अर्थात् दो तीन पटलोंमें प्राप्त हुआ होय, पुष्ट होय और बहुत कालसे उत्पन्नहुआ होय तो कष्टसाध्य होता है ऐसा विद्वानोंने कहा है ॥ ५७ ॥

## अथाव्रणशुक्रस्याऽसाध्यलक्षणम् ।

**विच्छिन्नमध्यं पिशितावृतञ्च चलं शिरासूतमदृष्टिकृच्च ॥ द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्जनीयम् ॥ ५८ ॥**

**विच्छिन्नमध्यं विशीर्णमांसत्वान्निम्नमध्यं शिरासूतं शिरायां जातम् । अदृष्टिकृद्दर्शनाभावकृत्। द्वित्वग्गतं पटलद्वयगतम् । एतद्विच्छिन्नमध्यत्वादिलिंगसहितमसाध्यं न तु केवलं गम्भीरजातस्य कष्टसाध्यत्वाभिधानाद्देवं चिरोत्थितमपि ॥**

जो अव्रणशुक्रका मांस गिरजानेसे बीचमें नीचा हो, मांससे वेष्टित अर्थात् ऊंचा हो, चञ्चल हो शिराओंमें उत्पन्नहुआ हो, देखने नहीं देवे, दो त्वचा अर्थात् दो पटलोंमें पहुँचा होय । अन्तमें लाल हो और बहुत दिनोंसे उत्पन्न हुआ हो तो यह असाध्य है । इस कारण इसकी चिकित्सा नहीं करनी चाहिये । केवल दो पटलोंमें प्राप्त और,बहुत कालसे उत्पन्न हुआ होय तो कष्टसाध्य है किंतु दो पटलोंमें प्राप्त हुआ और बहुत कालसे उत्पन्न हुआ भी ऊपरके विशेषणोंवाला होय तो असाध्य है ॥ ५८ ॥

## अथाव्रणशुक्रस्यान्यासाध्यलक्षणम् ।

**उष्णाश्रुपातः पिडिका च नेत्रे यस्मिन्भवेन्मुद्गनिभञ्च शुक्रम् ॥ तदप्यसाध्यं प्रवदन्ति केचिदन्ये तु तत्तित्तिरिपक्षतुल्यम् ॥ ५९ ॥**

**मुद्गनिभञ्च शुक्रमाकारेण।तत् नेत्रम्।तित्तिरिपक्षतुल्यं त्तित्तिरिपक्षवच्छदनम् ॥**

जो नेत्रोमेसे गरम आंसू गिरते होयँ फुंसी उत्पन्न हो और अव्रण शुक्र मूँगकी समान आकारवाला होय तो असाध्य है । कितने एक कहते हैं कि " नेत्रके पलक तीतरके पखकी समान होगये होयँ तो अव्रणशुक्र असाध्य है " ॥ ५९ ॥

## अथ पाकात्ययलक्षणम् ।

**श्वेतः समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डले तु ॥ तमक्षिपाकात्ययमक्षिकोपं सर्वात्मकं वर्जयितव्यमाहुः ॥ ६० ॥**

**यः श्वेतः दोषेण कृत इति शेषः । तमक्षिपाकादक्षिपाकात्ययमाहुः। अत्र पाकोऽपि स्यादत एव सुश्रुतः " शोकाश्रुपाकार्तियुते च नेत्रे " इति ।**

दोषोंकरके नेत्रके काले भागमे चारोओर सफेदी फैल जाय तो इस आंखकी पीडाको पाकात्यय कहतेहैं, यह पाकात्यय तीनो दोषोंसे उत्पन्नहुआ होय तो उसको असाध्य समझकर उसकी चिकित्सा नहीं करे । इसमे पाक भी होताहै क्योंकि सुश्रुत कहता है कि " शोकाश्रुपाकार्तियुते च नेत्रे " ॥ ६० ॥

## अथाजकाजातलक्षणम् ।

**अजापुरीषप्रमितो रुजावानलोहितो लोहितपिच्छिलाश्रुः ॥ विगृह्य कृष्णं प्रचयोऽभ्युपैति तं चाजकाजातमिति व्यवस्येत् ॥ ६१ ॥**

**यः प्रचय उच्छ्रायः स च मेदसो बोद्धव्यो यत एतस्य उत्पत्तिर्विदेहेन तृतीयपटले कथिता । अलोहितः ईषल्लोहितः । विगृह्य**

कृष्णमभ्युपैति महत्त्वेन समस्तं कृष्णभागं ग्राहयित्वा आयाति। व्यवस्येज्जानीयात् ॥

बकरीकी मैंगनकी समान, पीडावाली, कुछेक कलौंस लिये और लाल तथा चिकने आसुओंवाली, जो ऊचाई अपने मोटेपनसे सम्पूर्ण काले भागमे प्राप्त होती है उसको अजकाजात कहते हैं।

यह ऊचाई मेदसे होती है ऐसा जानना। क्यो कि विदेहने इस ऊचाईकी उत्पत्ति तीसरे पटलमे कही है ॥ ६१ ॥

## अथ नेत्रश्वेतभागोत्पन्नरोगाणां नामानि।

प्रस्तारिशुक्लक्षतजाधिमांसस्नाय्वर्मसंज्ञाः खलु पञ्च रोगाः ॥ ६२ ॥ स्याच्छुक्तिकाचार्जुनपिष्टकौ च जालं शिराणां पिडकाश्च याः स्युः ॥ रोगा बलासग्रथितेन सार्द्धमेकादशाक्ष्णोः खलु शुक्लभागे ॥ ६३ ॥

नेत्रोंके श्वेतभागमें प्रस्तार्यर्म, शुक्लार्म, रक्तार्म, अधिमांसार्म, स्नाय्वर्म शुक्ति, अर्जुन, पिष्टक, शिराजाल, शिराजपिडका और बलासग्रथित यह ग्यारह ११ रोग उत्पन्न होते हैं ॥ ६२ ॥ ६३ ॥

## अथ प्रस्तार्यर्मलक्षणम्।

प्रस्तार्यर्म तनु स्तीर्णं श्यावं रक्तनिभं सितम् ॥ ६४ ॥

तनु पत्तलम्, स्तीर्णं विस्तीर्णम्, श्यावं रक्तनिभमित्यत्र विकल्पो बोद्धव्यः ॥

नेत्रके श्वेतभागमे पतला, विस्तीर्ण कलौंस लिये अथवा लालीलिये जो सफेद चिह्न होय तो उसको प्रस्तार्यर्म कहते हैं ॥ ६४ ॥

## अथ शुक्लार्मलक्षणम्।

सुश्वेतं मृदु शुक्लार्म शुक्ले तद्वर्द्धतेऽचिरात् ॥ ६५ ॥

सफेद भागमें बहुत सफेद और कोमल जो चिह्न होय तो उसको शुक्लार्म कहते है यह शुक्लार्मरूप मास बहुत दिनोंमें बढताहै ॥ ६५ ॥

## अथ रक्तार्मलक्षणम्।

पद्माभं मृदु रक्तार्म यन्मांसं चीयते सिते ॥ ६६ ॥

पद्माभं वर्णेन रक्तमित्यर्थः। चीयते उपचीयते।

सफेद भागमें लाल तथा कोमल जो मांस बढताजाय उसको रक्तार्म कहते हैं ॥ ६६ ॥

## अथाधिमांसार्मलक्षणम्।

पृथु मृद्वधिमांसार्म बहलञ्च यकृन्निभम् ॥ ६७ ॥

पृथु विस्तीर्णम्, बहलं पुष्टम्, यकृन्निभम् ईषत्कृष्णलोहितम् ॥

सफेद भागमें विस्तीर्ण, कोमल, गाढा और कुछेक कलौंस लिये जो मास बढता होय तो उसको अधिमांसार्म कहते हैं ॥ ६७ ॥

## अथ स्नाय्वर्मलक्षणम्।

स्थिरं प्रसारि मांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम् ॥ ६८ ॥

स्थिरं कठिनम्, शुष्कं स्रावरहितम् ॥

सफेद भागमे कठिन, फैलनेवाला, और स्रावरहित जो मास ऊंचा होताहै उसको स्नाय्वर्म कहते हैं ॥ ६८ ॥

## अथ शुक्तिलक्षणम्।

श्यावाः स्युः पिशितनिभाश्च बिन्दवो ये शुक्त्याभाः सितनिचिताः स शुक्तिसंज्ञः ॥ ६९ ॥

श्यावा इत्यादिवर्णत्रये विकल्पो बोद्धव्यः ॥

नेत्रके सफेद भागमें काले रगका और मांसकी समान बिन्दु होताहै अथवा सीपकी समान होताहै उसको शुक्ति कहते हैं ॥ ६९ ॥

## अथार्जुनलक्षणम्।

एको यः शशरुधिरप्रभस्तु बिन्दुः शुक्लस्थो भवति तमर्जुनं वदन्ति ॥ ७० ॥

सफेद भागमें खरगोशके रुधिरकी समान एक बिन्दु होताहै उसको अर्जुन कहते हैं ॥ ७० ॥

## अथ पिष्टकलक्षणम्।

श्लेष्ममारुतकोपेन शुक्ले मांसं समुन्नतम् ॥ पिष्टवत्पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥ ७१ ॥

पिष्टवत् श्वेतम् ।

सफेद भागमें कफ तथा वायुके प्रकोपसे चूनकी समान सफेद और मैलसे भरे दर्पणकी समान जो मांस ऊंचा होताहै उसको पिष्टक कहतेहैं ॥ ७१ ॥

## अथ शिराजाललक्षणम् ।

जालाभः कठिनशिरोऽरुणः शिराणां सन्तानो भवति शिरादिजालसंज्ञः ॥७२॥

सफेद भागमे जालेकी समान कठिन शिराओंसे व्याप्त और लाल शिराओका जो समूह होताहै उसको शिराजाल कहतेहैं ॥ ७२ ॥

## अथ शिराजपिडकालक्षणम् ।

शुक्लस्थाः सितपिडिकाः शिरावृता यास्ता विद्यादसितसमीपजाः शिराजाः ॥७३॥

सफेद भागमे कालेभागके निकट रहनेवाली और शिराओंसे व्याप्त जो सफेद फुंसियें उत्पन्न होतीहैं उनको शिराजपिडका कहतेहैं ॥ ७३ ॥

## अथ बलासग्रथितलक्षणम् ।

कांस्याभोऽमृदुरथ वारिबिन्दुकल्पो विज्ञेयो नयनसिते बलाससंज्ञः ॥ ७४ ॥

कांस्याभः श्वेत इत्यर्थः । अमृदुः कठिनः। वारिबिन्दुकल्पः एतेन मनाक् उन्नतत्वं बोध्यते । बलाससंज्ञः बलासग्रथितसंज्ञः । क्वचिदेकदेशेनापि समुदायावगमात् । यथा भीमो भीमसेन इति । अत एव सुश्रुते नामसंग्रहे बलासग्रथितपदं निर्दिष्टम् ॥

सफेद भागमे कांसेकी समान सफेद, कठिन और जलकी बूदकी समान कुछेक ऊंची जो बूंद होतीहैं उसको बलासग्रथित कहतेहैं ।

यद्यपि मूलश्लोकमें 'बलाससंज्ञ' ऐसा पद है तथापि उसका 'बलासग्रथित' ऐसा अर्थ किया है उसका कारण यह है कि भीमशब्दसे भीमसेनका ग्रहण करनेकी समान किसी स्थानमे नामके एकदेशसे सम्पूर्ण नामका ग्रहण होताहै । सुश्रुतमे नामोके संग्रहमे 'बलासग्रथित' येही पद कहाहै ॥ ७४ ॥

## अथैकविंशतिवर्त्मजरोगाः ।

उत्सङ्गिन्यथ कुम्भीका पोथकी वर्त्मशर्करा ॥ तथार्शोवर्त्म शुष्कार्शस्तथैवाञ्जनदूषिका ॥ ७५ ॥ बहलं वर्त्म यच्चापि तथान्यो वर्त्मबन्धकः ॥ क्लिष्टवर्त्म तथा वर्त्मकर्दमः श्याववर्त्म च ॥ ७६ ॥ प्रक्लिन्नवर्त्म चाक्लिन्नवर्त्म वातहतश्च तत् ॥ वर्त्मार्बुदं निमेषश्च शोणितार्शस्तथैव च ॥ ७७ ॥ लगणो विषवर्त्मापि कुञ्चनं नाम तत्परम् ॥ एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः ॥ ७८ ॥

नेत्रोंके वर्त्म ( पलक ) दो होतेहैं । उनमें उत्सगिनी[१], कुम्भिका[२], पोथकी[३], वर्त्मशर्करा[४], अर्शोवर्त्म[५], शुष्कार्श[६], अञ्जननामिका[७], बहलवर्त्म[८], वर्त्मबंधक[९], क्लिष्टवर्त्म[१०], वर्त्मकर्दम[११], श्याववर्त्म[१२], प्रक्लिन्नवर्त्म[१३] अक्लिन्नवर्त्म[१४], वातहतवर्त्म[१५], वर्त्मार्बुद[१६], निमेष[१७], शोणितार्श[१८], लगण[१९], विषवर्त्म[२०] और कुंचन[२१] ये इक्कीस रोग होतेहैं ॥ ७५–७८ ॥

## अथोत्संगिनीलक्षणम् ।

अभ्यन्तरमुखी ताम्रा बाह्यतो वर्त्मसंश्रया ॥ सोत्सङ्गोत्संगपिडिका रक्तजा स्थूलकण्डुरा ॥ ७९ ॥

अभ्यन्तरमुखी वर्त्मनोऽभ्यन्तरे मुखं यस्याः सा । वर्त्मनो बाह्यतस्ताम्रा । सोत्संगा अन्तःपूया । उत्संगपिडिका उत्संगे क्रोडे बह्व्यः पिडिका यस्याः सा ॥ स्थूलकण्डूरा स्थूला कण्डुरा चेति कर्मधारयः । एषा अधरवर्त्मजा बोद्धव्या । वर्त्मोत्संगेऽधरे जन्तोरिति विदेहवचनात् ॥

नेत्रके कोयेके भीतर मुखवाली, बाहरसे लाल, भीतर से राधयुक्त, अपनेआप अनेक फुडियोंयुक्त, स्थूल और खुजलीयुक्त जो फुडियाँ पलकमें रुधिरके प्रकोपसे होतीहैं उसको उत्संगिनी कहतेहैं ।

यह फुडिया नीचेके कोयेमें होतीहै ऐसा जानना,

कारण यह है कि, 'मनुष्यके नीचेके कोयेमें उत्संगिनी होतीहै' ऐसा विदेह कहताहै ॥ ७९ ॥

अथ कुम्भीकालक्षणम् ।

वर्त्मान्ते पीडिका ध्माता भिद्यन्ते च स्रवन्ति च॥ कुम्भीकाबीजसदृशाः कुम्भीकाः सन्निपातजाः ॥ ८० ॥

कुम्भीकाबीजसदृशाः कुम्भीका कठोरदेशे दाडिमाकारफला लता तद्बीजतुल्या ॥

पलकके अंतमें ऊंची और कुम्भिका नामक लताके बीजकी समान जो फुंसी सन्निपातसे होतीहैं और फूटती हैं तथा फूट फूटकर स्रवतीहैं वह फुंसी कुम्भिका कही जातीहै । कुम्भिका नामक लता कठोर देशमें होतीहै और उसके फल अनारकी समान होतेहैं ॥ ८० ॥

अथ पोथकीलक्षणम् ।

स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः ॥ रुजावत्यश्च पिडिकाः पोथक्य इति कीर्तिताः ॥ ८१ ॥

बहनेवाली, खुजलीयुक्त, भारी, लाल सरसोंकी समान, और पीडायुक्त जो फुंसी नेत्रके कोयेमें होतीहैं उसको पोथकी कहतेहैं ॥ ८१ ॥

अथ वर्त्मशर्करालक्षणम् ।

पिडिकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृताः॥पीडिका या खरा स्थूला वर्त्मस्था वर्त्मशर्करा ॥ ८२

बहुत छोटी छोटी सघन फुंसियोंसे चारों ओर भरी हुई, तीक्ष्ण और मोटी जो फुंसी पलकमें होतीहै उसको वर्त्मशर्करा कहतेहैं ॥ ८२ ॥

अथार्शोवर्त्मलक्षणम् ।

एर्वारुबीजप्रतिमाः पिडिका मन्दवेदनाः ॥ श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥ ८३ ॥

एर्वारुः कर्कटी । खराः तीक्ष्णाग्राः ॥

पलकमें ककडीके बीजकी समान, मंद पीडायुक्त, चिकनी, और तीक्ष्ण अनीवाली जो फुंसी होतीहै उसको अर्शोवर्त्म कहतेहैं ॥ ८३ ॥

अथ शुष्कार्शोलक्षणम् ।

दीर्घाङ्कुरः खरः स्तब्धो दारुणोऽभ्यन्तरोद्भवः ॥ व्याधिरेषोऽभिविख्यातः शुष्कार्शो नाम नामतः ॥ ८४ ॥

पलकके भीतर खरखरे, जकडेसे और दारुण जो बडे बडे अंकुर होतेहैं उसको शुष्कार्श कहतेहैं ॥ ८४ ॥

अथाञ्जननामिकालक्षणम् ।

दाहतोदवती ताम्रा पिडिका वर्त्मसम्भवा ॥ मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥ ८५ ॥

पलकमें दाहवाली, भौंकनेसरीखी पीडा युक्त, लाल, कोमल, और मंद वेदनावाली जो बारीक फुसियें होतीहैं वे अंजननामिका कही जातीहैं ॥ ८५ ॥

अथ बहलवर्त्मलक्षणम् ।

वर्त्मोपचीयते यस्य पिडिकाभिः समन्ततः ॥ सवर्णाभिः स्थिराभिश्च विद्याद्बहलवर्त्म तत् ॥ ८६ ॥

पलककी समान रंगवाली और कठिन जो फुंसी वर्त्मके चारों ओर फैल जायँ उसको बहलवर्त्म कहतेहैं ॥ ८६ ॥

अथ वर्त्मबंधकलक्षणम् ।

कण्डूरेणात्मतोदेन वर्त्मशोफेन मानवः ॥ असमं छादयेदक्षि यत्रासौ वर्त्मबन्धकः ॥ ८७ ॥

जलसे परिपूर्ण और खुजलीसहित पलक सूजकर नेत्र बराबर नहीं मिचते होयँ उसको वर्त्मबंधक कहतेहैं ॥ ८७ ॥

अथ क्लिष्टवर्त्मलक्षणम् ।

मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च ॥ अकस्माच्च स्रवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥ ८८ ॥

एतत्कफजुष्टरक्तजम् ॥

नेत्रके दोनों कोये नरम रहैं । उनमें थोडी पीडा हो । सर्वदा लाल रहैं और अकस्मात् लाल होजायँ उसको क्लिष्टवर्त्म कहतेहैं । यह रोग प्रथम कफके सम्बन्धसे होकर रुधिरसे होताहै ॥ ८८ ॥

### अथ वर्त्मकर्दमलक्षणम्।

**क्लिष्टं पुनः पित्तयुतं शोणितं विदहेद्यदा॥ तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम्॥ ८९॥**

**क्लिन्नत्वम् आर्द्रत्वम्॥**

ऊपर क्लिष्टवर्त्मके जो लक्षण कहे वे लक्षण होयँ तथा फिर पित्तसे सयुक्त रुधिर दाह करताहो और इस कारण पलक भीजजातेहोयँ उस रोगको वर्त्मकर्दम कहते हैं॥ ८९॥

### अथ श्याववर्त्मलक्षणम्।

**यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम्॥ सकण्डूकं परिक्लेदि श्याववर्त्मेति तन्मतम्॥ ९०॥**

नेत्रके पलक जो बाहर तथा भीतर काले होयँ, सूजन हो, वेदनायुक्त, खुजलीसहित और भीजे रहे तो उसको श्यावनर्त्म कहतेहै॥ ९०॥

### अथ प्रक्लिन्नवर्त्मलक्षणम्।

**अरुजं बाह्यतः शूनं वर्त्म यस्य नरस्य हि॥ प्रक्लिन्नवर्त्म तद्विद्यात्क्लिन्नमत्यर्थमन्ततः ९१**

**अरुजमीषद्व्यथम्॥**

कोये कुछेक पीडायुक्त, सूजे हुए और अधिक तर कीचड सहित भीजे होयँ उसको प्रक्लिन्नवर्त्म कहते-हैं॥ ९१॥

### अथाक्लिन्नवर्त्मलक्षणम्।

**यस्य धौतान्यधौतानि सम्बध्यन्ते पुनः पुनः॥ वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत्॥ ९२॥**

धोनेसे वा नहीं धोनेसे जो नेत्रके पलक वारवार चिपक कर मिलजायँ और पके नही अर्थात् कच्चे रहें उसको अक्लिन्नवर्त्म कहतेहै॥ ९२॥

### अथ वातहतवर्त्मलक्षणम्।

**विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते॥ एतद्वातहतं विद्यात्सरुजं यदि वारुजम्॥ ९३॥**

**विमुक्तसन्धि स्वस्थानच्युतसन्धि। निश्चेष्टम्। निमेषोन्मेषादिरहितम्॥**

जिसके पलककी संधि अलग अलग होजायँ पलक मिचे और खुले नहीं और वेदनासहित अथवा वेदनारहित तथा सकुचनेवाली इसको वातहतवर्त्म कहतेहै॥ ९३॥

### अथ वर्त्मार्बुदलक्षणम्।

**वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्॥ आचक्षीतार्बुदमिति सरक्तमवलम्बि च ९४॥**

**विषममवर्तुलं ग्रन्थिभूतं कठिनम्। अवेदनमीषद्वेदनम्, सरक्तमीषल्लोहितम्। अवलम्बि अवस्रस्तम्॥**

पलकोंके भीतर विषम अर्थात् गोल नहीं, थोडी पीडावाली कुछेक लाल और शीघ्र बढनेवाली कठिन गांठ होय उसको वर्त्मार्बुद कहतेहैं॥ ९४॥

### अथ निमेषलक्षणम्।

**निमेषिणीः शिरावायुः प्रविष्टो वर्त्मसंश्रयः॥ सञ्चालयति वर्त्मानि निमेषः स न सिध्यति॥ ९५॥**

पलकोंमें रहनेवाली वायु पलकोको खोलने बद करने वाली नसोंमे प्राप्त होकर पलकोंको चलायमान करे उसको निमेष कहतेहैं यह रोग असाध्य है॥ ९५॥

### अथ शोणितार्शोलक्षणम्।

**वर्त्मस्थो यो विवर्द्धेत लोहितो मृदुरंकुरः॥ तद्रक्तजं शोणितार्शश्छिन्नं वाऽपि विवर्द्धते॥ ९६॥**

पलकोंमें रहनेवाले कोमल अकुर बढें उसको शोणितार्श कहतेहैं यह रोग रुधिरसे होताहै। इसको जितना जितना काटा जाय उतनाही अधिक बढताहै॥ ९६॥

### अथ लगणलक्षणम्।

**अपाकी कठिनः स्थूलो ग्रन्थिर्वर्त्मभवो रुजः॥ सकण्डूः पिच्छिलः कोलप्रमाणो लगणः स्मृतः॥ ९७॥**

नही पकनेवाला, कठिन, स्थूल, अल्प पीडायुक्त, खुजलीसहित, चिकनी और बेरकी समान जो गांठ पलकमे उत्पन्न होय उसको लगण कहतेहैं॥ ९७॥

## अथ बिसवर्त्मलक्षणम् ।

त्रयो दोषा वहिः शोथं कुर्युश्छिद्राणि-वर्त्मनोः ॥ प्रस्रवत्यन्तरुदकं बिसवद्बिसवर्त्म तत् ॥ ९८ ॥

छिद्राणि अन्तश्छिद्राणि च कुर्युरित्यन्वयः । बिसवद्बहुच्छिद्रत्वात् ॥

तीनों दोष पलकोंमे बाहर सूजनको उत्पन्न करें भीतर छिद्रोंको उत्पन्न करें और उनमेंसे कमलकी नालकी समान जलका स्राव होय उसको बिसवर्त्म कहतेहैं ॥ ९८ ॥

## अथ कुंचनलक्षणम् ।

वाताद्या वर्त्मसंकोचं जनयन्ति मला यदा ॥ तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ॥ ९९ ॥

वातादि दोषोंके कारण पलक सकुच जाय और उससे देखनेको असमर्थ होजाय उसको कुंचन कहते-हैं ॥ ९९ ॥

## तत्र पक्ष्माणि अक्षिलोमानि तत्रत्ययो रोगयोर्नामनी आह ।

पक्ष्मकोपः पक्ष्मशातो रोगौ द्वौ पक्ष्मसंश्रयौ ॥ १०० ॥

पक्ष्मकोप और पक्ष्मशात ये दो रोग पलकोंके बालोंमें होतेहैं ॥ १०० ॥

## अथ पक्ष्मकोपलक्षणम् ।

प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ॥ घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च ॥ १०१ ॥ असिते सितभागे च मूलकोशात्पतन्त्यपि ॥ पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥ १०२ ॥

संरम्भं शोथम् ॥

वायुसे चलायमान पलकोंके बाल नेत्रोंमें प्रवेश करतेहैं, प्रवेश करके नेत्रोंको वारंवार घिसते हैं, घिस घिसकर काले अथवा सफेद भागमें सूजनको उत्पन्न करते हैं और उससे उखडकर गिरजायँ इस रोगको पक्ष्मकोप कहते हैं यह रोग अत्यंत दारुण है ॥ १०१ ॥ १०२ ॥

## अथान्यग्रन्थोक्तपक्ष्मकोपलक्षणम् ।

यत्पक्ष्मदेहलीमुक्त्वा वर्त्मनोऽन्तः प्रजायते ॥ घर्षेत्पक्ष्मासिते श्वेते पक्ष्मकोपः स उच्यते ॥ १०३ ॥

जहां बाल उत्पन्न होनेका स्थान है उस स्थानको छोड-कर बालोंके भीतर उत्पन्न होय और वह काले तथा सफेद भागमे घिसा करे उसको पक्ष्मकोप कहते हैं, इसको देशमें परवाल कहते हैं । सुश्रुतमें कहा है कि पलकोंके बालोंके स्थानमें रहनेवाले दोष तीक्ष्ण अनीवाले खरखरे रोमोंको उत्पन्न करे हैं, ये रोम नेत्रोंमें घिसनेसे नेत्र दुखते हैं यह रोग पक्ष्मकोप कहा जाताहै । इस रोगवाला मनुष्य पवन, धूप और अग्निपर द्वेष करताहै ॥ १०३ ॥

## अथ पक्ष्मशातलक्षणम् ।

वर्त्मपक्ष्माशयगतं पित्तं लोमानि शातयेत्॥ कण्डूं दाहञ्च कुरुते पक्ष्मशातं तदादिशेत् ॥ १०४ ॥

शातयेत् स्खलयेत् ॥

पक्ष्माशयमें रहनेवाला पित्त पलकके बालोंको गिरा-देताहै और खुजली तथा दाहको उत्पन्न करे है यह रोग पक्ष्मशात कहाताहै ॥ १०४ ॥

## अथ संधिजरोगाः ।

पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः ॥ शुक्लकृष्णगतश्चान्यः कृष्णदृष्टिगतोऽपि च ॥ मतः कनीनकगतः षष्ठश्चापाङ्गसंश्रितः ॥ १०५ ॥

पहिली सन्धि पलकोंके रोमोंमें और पलकोंमें है, दूसरी संधि पलकोंमें और सफेद भागमें है, तीसरी सन्धि सफेद भागमें और काले भागमें है और दृष्टिमें है, चौथी संधि काले भागमें और दृष्टिमें है, पांचवीं सन्धि दृष्टिमें है और छटी सन्धि नेत्रके अन्तमें है ॥ १०५ ॥

## अथ सन्धिजरोगाणां नामानि संख्याच ।

पूयालसः सोपनाहः स्रावाश्चत्वार एव

च ॥ पर्वणी कालजी जन्तुग्रन्थिः सन्धौ नवामयाः ॥ १०६ ॥

पूयालस, उपनाह, पित्तस्राव, कफस्राव, सन्निपातस्राव, रक्तस्राव, पर्वणी, अलजी और जंतुग्रन्थी यह नामवाले नौ रोग संधियोंमे होतेहैं ॥ १०६ ॥

अथ पूयालसलक्षणम् ।

पक्कः शोथः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूति पूयालसाख्यः ॥ १०७ ॥

सन्धिजः कनीनकसन्धिजो बोद्धव्यः । "पूयालसन्तु तं विद्यात्सन्धौ कानीनके नृणाम्" इति वचनात् ॥

संधियोंमे उत्पन्न और पकीहुई जो सूजन दुर्गंधित तथा गाढीराध जिसमे बहै उसको पूयालस कहतेहैं । संधियोमे उत्पन्न हुआ, अर्थात् दृष्टिकी संधियोंमें उत्पन्न हुआ ऐसा जानना, कारण यह है कि 'मनुष्योंकी दृष्टिकी संधियोमे पूयालस होताहै' ऐसा विदेह कहताहै ॥ १०७ ॥

अथोपनाहलक्षणम् ।

ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजश्चोपनाहः ॥ १०८ ॥

नाल्पः महान् । अपाकी ईषत्पाकी । नीरुजः ईषद्वेदनः । "अरुणं कठिनं ग्रन्थि जनयत्यल्पवेदनम्" । इति विदेहवचनात् ।

दृष्टिकी संधिमे बडी, कम पकनेवाली, बहुत खुजलीयुक्त, कठिन, लाल और अल्प वेदनावाली जो गाठ होयँ उसको उपनाह कहतेहैं ॥ १०८ ॥

अथ स्रावसम्प्राप्तिः ।

गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावाँल्लक्षणैः स्वैरुपेतान् ॥ तं हि स्रावं नेत्रनाडीति चैके तस्या लिंगं कीर्तयिष्ये चतुर्द्धा ॥ १०९ ॥

सन्धीनिति बहुवचनेन सर्वे एव सन्धयो गृह्यन्ते । एके वदन्तीति शेषः । वातिकस्रावो न भवति केवलेन वातेन तदसम्भवात् ॥

दोष सम्पूर्ण संधियोंमें जाकर आसुओंके मार्गसे अपने२ लक्षणोवाले स्रावोंको उत्पन्न करेहैं कितने एक आचार्य इस स्रावको 'नेत्रनाडी' नामसे कहतेहैं । स्राव चार प्रकारका होताहै उसके लक्षण कहतेहैं । वायुसम्बन्धीस्राव नहीं होता क्योंकि केवल वायुसे स्राव होना सम्भव नहीं ॥ १०९ ॥

अथ पित्तजस्रावलक्षणम् ।

हारिद्राभं पीतमुष्णं जलं वा पित्तस्रावः संस्रवेत्सन्धिमध्यात् ॥ ११० ॥

हारिद्राभं पीतरक्तम् । परतः पीतशब्दप्रयोगाज्जलं नेति । वाशब्दो हारिद्राभं पीतं वेत्यत्र सम्बध्यते । पित्तस्रावः पित्तात्स्राव एवं श्लेष्मस्रावादयः ॥

संधिके बीचमेंसे लाल तथा पीला मिलाहुआ अथवा केवल पीला गरम जलका स्राव होताहोय तो उसको जानना कि पित्तसम्बन्धी स्राव है ॥ ११० ॥

अथ कफजस्रावलक्षणम् ।

श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मस्रावोऽसौ विकारः प्रदिष्टः ॥ १११ ॥

सफेद, गाढा तथा चिकना स्राव होता होय तो जानना कि कफसम्बन्धी स्राव है ॥ १११ ॥

अथ सान्निपातस्रावलक्षणम् ।

शोथः सन्धौ संस्रवेद्यस्तु पक्कः पूयं स्रावः सर्वजः सम्मतः स्यात् ॥

संधियोंमें पकनेवाली सूजन राधको बहातीहोय तो उसको जानना कि सन्निपातस्राव है ।

अथ रुधिरजन्यस्रावलक्षणम् ।

रक्तास्रावः शोणिताद्यो विकारो गच्छेदुष्णं तत्र रक्तं प्रभूतम् ॥ ११२ ॥

स्राव गरम होय और उसमें विशेष रुधिर गिरता होय तो जानना कि रुधिरजन्य स्राव है ॥ ११२ ॥

अथ पर्वण्यलज्योर्लक्षणम् ।

ताम्रा तन्वी दाहपाकोपपन्ना रक्ताज्ज्ञेया पर्वणी वृत्तशोफा ॥ जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेव व्याहृता पूर्वलिंगैः ॥ ११३ ॥

रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ॥ ११४ ॥

अलजीमाह-अलजी स्यादित्यादि । तस्मिन्नेव कृष्णशुक्लयोरेव सन्धौ । भेदार्थमाह-पूर्वलिंगैः प्रमेहाधिकारलिखितैः ॥

काले भागकी तथा सफेदभागकी सन्धियोंमे गोल, सूजनवाली, लाल, बारीक और दाहयुक्त तथा पकनेवाली फुसी उत्पन्न होय तो जानना कि पर्वणी उत्पन्न हुई है । यह पर्वणी रुधिरके प्रकोपसे होतीहै ।

पहिले प्रमेहाधिकारमें लिखे अनुसार लाल, सफेद फुंसियोंसे व्याप्त और दारुण ऐसी फुसी सन्धिमे ( काले भाग तथा सफेद भागकी सन्धिमें ) होय तो उसको अलजी जानना ॥ ११३ ॥ ११४ ॥

### अथ जंतुग्रंथिलक्षणम् ।

जन्तुग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्युर्जन्तवः सन्धिजाताः ॥ नानारूपा वर्त्मशुक्लान्तसन्धौ गच्छन्त्यन्तर्लोचनं दूषयन्तः ॥ ११५ ॥

वर्त्मनः पक्ष्मणश्च सन्धिजाता इत्यन्वयः ॥

पलकके तथा पलकके रोमोंकी सन्धियोंमें उत्पन्न हुए, अनेक आकृतिवाले कृमि खुजलीको उत्पन्न करे और नेत्रको बिगाड बिगाडकर पलक तथा सफेद भागकी सन्धियोंमे जातेहैं उसको जन्तुग्रंथि कहतेहैं ॥ ११५ ॥

### अथ समस्तनेत्रजरोगगणना ।

स्यन्दाश्चतुष्का इह सम्प्रदिष्टाश्चत्वार एवेह तथाधिमन्थाः ॥ पाकः सशोथः स च शोथहीनो हताधिमन्थोऽनिलपर्ययश्च ॥ ११६ ॥ शुष्काक्षिपाकस्त्विह कीर्तितश्च तथान्यतोवात उदीरितश्च ॥ दृष्टिस्तथाऽम्लाध्युषिता शिराणामुत्पातहर्षौ च समस्तनेत्रे ॥ ११७ ॥ एवं समस्तनेत्रे स्युरामया दश सप्त च ॥ तेषामिह पृथग्वक्ष्ये यथावल्लक्षणान्यपि ११८॥

चार अभिष्यन्द चार अधिमंथ, सशोथपाक, अशोथपाक, हताधिमंथ, वातपर्यय, शुष्काक्षिपाक, अन्यतोवात, अम्लाध्युषित[15], शिरोत्पात[16] और शिरोहर्ष[17] यह सतरह रोग समस्त नेत्रमे होतेहै, अब इनके पृथक् पृथक् लक्षण कहताहू ॥ ११६–११८ ॥

### अथ चत्वार्य्यभिष्यन्दनामानि ।

वातात्पित्तात्कफाद्रक्तादभिष्यन्दश्चतुर्विधः ॥ प्रायेण जायते घोरः सर्वनेत्रभयंकरः ॥ ११९ ॥

प्राणियोंके वाताभिष्यन्द, पित्ताभिष्यन्द, कफाभिष्यन्द और रक्ताभिष्यन्द इसप्रकार सर्व नेत्रमें पीडा करनेवाला चार प्रकारका भयकर अभिष्यन्द रोग होता है ॥ ११९ ॥

### अथ वाताभिष्यन्दलक्षणम् ।

निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोऽभितापाः ॥ विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥ १२० ॥

संघर्षः करकटीका । शिरोऽभितापः शिरसो व्यथा । विशुष्कभावः दूषिकाराहित्यम् । वाताभिपन्ने वातेन उपद्रुते ॥

तोडने भोंकने सरीखी पीडा, स्तब्धता ( जडता ), रोमाञ्चोंका होना, खुजली, नेत्रोमें रूक्षता, मस्तकमें पीडा, चिपकना नहीं और आसुओंका शीतल होना, यह सब लक्षण होयँ तो जानना कि नेत्रमें वायुके प्रकोपसे अभिष्यन्द हुआ है ॥ १२० ॥

### अथ पित्ताभिष्यन्दलक्षणम् ।

दाहप्रपाकः शिशिराभिनन्दा धूमायनं बाष्पसमुद्भवश्च ॥ उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति॥ १२१॥

शिशिराभिनन्दा शीतलेच्छा । धूमायनं नेत्राद्धूमोद्गम इव । बाष्पसमुद्भवः अस्रुस्रावः॥

दाह, पकना, शीतल पदार्थोंकी इच्छा, नेत्रमेसे धुँवेसा निकलता प्रतीत हो, आसुओंका स्राव, आंसुओंमे उष्णता और नेत्रका पीलापन यह लक्षण होयँ तो जानना कि पित्तके प्रकोपसे अभिष्यन्द हुआ है ॥ १२१ ॥

## अथ कफाभिष्यन्दलक्षणम् ।

उष्णाभिनन्दा गुरुताक्षिशोथः कण्डूपदेहावतिशीतता च ॥ स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥ १२२ ॥

उपदेहः दूषिकया लिप्तता ॥

गरम पदार्थोंकी इच्छा, भारीपन, नेत्रोंमें सूजन, खुजली, कीचड अधिक आवे और चिपके, अत्यन्त शीतलता और वारवार चिकना स्राव, यह लक्षण होंयें तो जानना कि कफके प्रकोपसे नेत्र दुखने आये है ॥ १२२ ॥

## अथ रक्ताभिष्यन्दलक्षणम् ।

ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च ॥ पित्तस्य लिंगानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥ १२३ ॥

पित्तलिंगानि पित्ताभिष्यन्दलिंगानि ॥

आसुओंमें लाली, नेत्रोंमें लाली, चारोओर नेत्रोंमे अत्यन्त लाल रेखा और अन्यभी पित्ताभिष्यन्दके लक्षण होयँ तो जानना कि रुधिरके प्रकोपसे अभिष्यन्द हुआ है ॥ १२३ ॥

## अथ चतुर्विधाभिष्यन्दोपेक्षया चत्वारोऽधिमन्थाः ।

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ॥ तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदना ॥ १२४ ॥

जो मनुष्य अभिष्यन्द रोगोंपर औषधादिक उपचार नहीं करते उनके यह वृद्धिको प्राप्त होकर नेत्रोंमें तीव्र पीडावाले चार अधिमन्थ होते हैं ( वाताभिष्यन्दजन्य अधिमन्थ, पित्ताभिष्यन्दजन्य अधिमन्थ, कफाभिष्यन्दजन्य अधिमन्थ, और रक्ताभिष्यन्दजन्य अधिमन्थ इस प्रकार अधिमन्थ चार हैं ) ॥ १२४ ॥

## अथाधिमन्थलक्षणम् ।

उत्पाट्यत इवात्यर्थं तथा निर्मथ्यतेऽपि च ॥ शिरसोऽर्द्धं तु तं विद्यादधिमन्थं स्वलक्षणैः ॥ १२५ ॥

स्वलक्षणैः यथोक्तवातादिकृताभिष्यन्दलक्षणैरधिमन्थं विद्यात् । अभिष्यन्देभ्योऽधिमन्थानां भेदार्थमाह—शिरसोऽर्द्धमुत्पाट्यत इव तथा निर्मथ्यतेऽपि चेति । चतुर्ष्वधिमन्थेषु बोद्धव्यम् । शिरसोऽर्द्धवेदना व्याधिप्रभावात् । स च अधिमन्थो यदात्मको यावता कालेन मिथ्याचाराद्दृष्टिं हन्ति तमाह—

हन्याद्दृष्टिं श्लैष्मिकः सप्तरात्राद्योऽधीमन्थो रक्तजः पञ्चरात्रात् ॥ षड्रात्राद्वा वातिको वै निहन्यान्मिथ्याचारात्पैत्तिकः सद्य एव ॥ १२६ ॥

अत्र सद्यःशब्देन त्रिरात्रमुच्यते तन्त्रान्तरे त्रिरात्रवचनात् ॥

जो अधिमन्थ जिस अभिष्यन्दसे उत्पन्नहुआ होय उस अधिमन्थमें उसी अभिष्यन्दके सम्पूर्ण लक्षण होनेके सिवाय आधा माथा उखाडासा मालूम होय तथा अत्यन्त मथनेकीसी पीडा होतीहै ।

मस्तकके आधे भागको उखाडता मालूम होय तथा मथता होय ऐसी पीडा होनेसे अर्थात् यही अभिष्यन्दोंसे अधिमन्थोंमें अन्तर है । यह अलग वेदनारूप लक्षण चारो अधिमन्थोंमें समान हैं। मस्तके अर्द्धभागमें वेदना व्याधिके प्रभावसे होतीहै ऐसा जानना ।

जो अधिमन्थ कफाभिष्यन्दसे हुआ होय तो सात रात्रिके भीतर दृष्टिको नष्ट करदेताहै । रक्ताभिष्यन्दसे हुआ होय तो पांच रात्रिके भीतर दृष्टिको नष्ट करदेता है, वाताभिष्यन्दसे उत्पन्न हुआ होय तो छः रात्रिके भीतर दृष्टिको नष्ट करदेताहै और पित्ताभिष्यन्दसे उत्पन्न हुआ होय तो तत्कालही तीन रात्रिके भीतर दृष्टिको नष्ट करदेताहै । जो अयोग्य उपचार आदि करनेमें आवे तब अधिमन्थ दृष्टिको नष्ट करदेताहै ऐसा जानना ॥ १२५ ॥ १२६ ॥

## अथ सशोथपाकाशोथपाकनेत्रयोर्लक्षणम् ।

कण्डूपदेहाश्रुयुतः पक्कोदुम्बरसन्निभः ॥ संरम्भी पच्यते यस्तु नेत्रपाकः सशोथकः ॥ १२७ ॥ शोथहीनानि लिंगानि नेत्रपाके त्वशोथके ॥ १२८ ॥

पक्कोदुम्बरसन्निभः लोहितत्वात् ॥

जो नेत्र खुजली सहित होय, त्रिपके, आंसुओंसे परिपूर्ण होय, पकेहुए गूलरके फलकी समान लाल होय, सूजनयुक्त और पके तो जानना कि सशोथपाक हुआ है ॥ १२७ ॥

ऊपर कहे सशोथपाकके सम्पूर्ण लक्षण होंय और केवल सूजनही नहीं होय तो जानना कि अशोथपाक हुआ है ॥ १२८ ॥

### अथ हताधिमन्थलक्षणम् ।

**उपेक्षणादक्षि यदाधिमन्थो वाताधिकः शोषयति प्रसह्य ॥ रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः ॥ १२९ ॥**

शोषयति शोषयित्वा नाशयति । अत एवाह विदेहः—"तत्पद्ममिव संशुष्कमवसीदति लोचनम् ॥" इति ॥

वाताभिष्यन्दसे उत्पन्नहुआ अधिमन्थ योग्य उपचारकी उपेक्षा करनेसे जब उग्र वेदनाको उत्पन्न करके आंखको बलात्कारसे सुखाकर नष्ट करदेताहै तब यही अधिमन्थ हताधिमन्थ कहाजाताहै, यह हताधिमन्थ असाध्य है । यद्यपि मूलमें 'सुखाताहै' येही लिखा है तथापि 'सुखाकर नष्टकर देताहै, ऐसा हमने लिखा है इसका यह कारण है कि "अत्यन्त सुखाये हुए नेत्र अत्यन्त सूखे कमलकी समान नष्ट हो जातेहैं" ऐसा विदेहका मत है ॥ १२९ ॥

### अथ वातपर्ययलक्षणम् ।

**वारंवारञ्च पर्येति भ्रुवौ नेत्रे च मारुतः ॥ रुजश्च विविधास्तीव्राः स ज्ञेयो वातपर्ययः ॥ १३० ॥**

पर्येति पर्यायेण याति, कदाचिद्भ्रुवौ कदाचिन्नेत्रे ॥

वायु किसी समय भौंओंमें, और किसी समय नेत्रोंमें इस प्रकार वारवार फिरे और अनेक प्रकारकी तीव्र वेदना होय तो वह वातपर्यय कहाजाताहै ॥ १३० ॥

### अथ शुष्काक्षिपाकलक्षणम् ।

**यत्कूणितं दारुणरूक्षवर्त्म सन्दह्यते चाविलदर्शनं यत् ॥ सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि ॥ १३१ ॥**

कूणितं संकोचितं मुद्रितमिति यावत् । दारुणरूक्षवर्त्म दारुणं विकृतं रूक्षं च वर्त्म यस्य तत् । इदमक्ष्णोर्विशेषणम् । सन्दह्यते सदाहं भवति । आविलदर्शनम् आविलस्य अनच्छस्य दर्शनं येन तत् । तत्प्रतिबोधने उद्घाटय सुदारुणमतिशयेन विकृतम् ॥

नेत्रके पलक दारुण तथा कठिन और रूखे हो जायँ, आंख मिची रहे, दाह हो, आंखसे साफ न देख सके और खोलते समय अत्यन्त विकृत दीखे इस रोगको शुष्काक्षि पाक कहतेहैं ॥ १३१ ॥

### अथान्यतोवातलक्षणम् ।

**यस्यावटूकर्णशिरोहनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा ॥ कुर्याद्रुजोऽति भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति ॥ १३२ ॥**

अवटू घाट इति मैथिलादिलोकाः । अन्यतो वा पृष्ठादिदेशश्च आगतः अन्यतोवातः अन्यत्र स्थितोऽन्यत्र रुजं करोति इत्यन्यतोवातः । विदेहेनाप्युक्तम्—

**मन्यानामन्तरे वायुरुत्थितः पृष्ठतोऽपि वा ॥ करोति भेदं निस्तोदं शंखे वाक्ष्णोर्भ्रुवस्तथा ॥ तमाहुरन्यतोवातं रोगं दृष्टिविदो जनाः ॥ १३३ ॥**

घाटीमें, कानमें, मस्तकमें, ठोडीमें, मन्यानाडी और अन्य पीठके वास आदिमें स्थित वायु भौंओंमें और नेत्रोंमें घोरवेदनाको उत्पन्न करे उस रोगको अन्यतोवात कहतेहैं । एक स्थानमें स्थित वायु दूसरे स्थानमें वेदनाको उत्पन्न करै है इस कारण यह अन्यतोवात कहीजातीहै । विदेह भी कहताहै कि, नाटके मध्यमेंसे अथवा पीठके वांसमेंसे स्थित वायु कनपटी नेत्र और भौंमें भेदने तथा तोडने सरीखे

पीडाको उत्पन्न करेहै इस रोगको नेत्रविषयके जाननेवाले विद्वान् अन्यतोवात कहतेहैं ॥ १३२ ॥ १३३ ॥

### अथाम्लाध्युषितलक्षणम् ।

**श्यावं लोहितपर्यन्तं सर्वमक्षि प्रपच्यते ॥ सदाहशोथं सस्रावमम्लाध्युषितमम्लतः ॥ १३४ ॥**

**अम्लतः अम्लभोजनात् । तथाच सुश्रुतः अम्लेन भुक्तेनेत्यादि ॥**

खट्टे रसआदिके खानेसे नेत्र काले, लाल कोनेवाले, दाहयुक्त, सूजनसहित और स्रावयुक्त होतेहैं । यह रोग अम्लाध्युषित कहाजाताहै ॥ १३४ ॥

### अथ शिरोत्पातलक्षणम् ।

**अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः ॥ मुहुर्विरज्यन्ति च च याः समन्ताद्व्याधिः शिरोत्पात इति प्रदिष्टः ॥ १३५ ॥**

**अक्षिराज्यः अक्षिशिराः विरज्यन्ति विकृतवर्णा भवन्ति ॥**

वेदनारहित अथवा वेदनायुक्त नेत्रकी शिरा लाल हो जाय और वह अधिकाधिक वारंवार विकृत वर्णवाली होजाय इस रोगको शिरोत्पात कहतेहैं ॥ १३५ ॥

### अथ शिराहर्षलक्षणम् ।

**मोहाच्छिरोत्पात उपेक्षितस्तु जायेत रोगः स शिराप्रहर्षः ॥ ताम्राक्षिता स्रावयति प्रगाढं तथा न शक्नोत्यभिवीक्षितुञ्च ॥ १३६ ॥**

मूर्खतासे जो शिरोत्पातकी उपेक्षा कीजाय तो वही शिराहर्ष होजाताहै कि जिससे आंखें लाल होजातीहैं, अत्यंत स्राव होताहै, और आखोंसे देख नहीं सक्ता॥ १३६

### अथ नेत्रसामतालक्षणम् ।

**उदीर्णवेदनं नेत्रं रागद्रेकसमन्वितम् ॥ घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः ॥ १३७ ॥**

**उदीर्णवेदनम् उद्भटवेदनम् । घर्षः करकटिका एतल्लक्षणं लंघनादिविधानार्थमञ्जनादिनिषेधार्थं चोक्तम् । तथा च तन्त्रान्तरे-**

**स्वेदोदितानि चत्वारि लंघनं भोजनं रसः ॥ स्वादुतिक्तश्च लेपश्च बाष्पस्वेदनमेव च ॥ एतानि नेत्ररोगाणां सामान्याचरणानि हि ॥ १३८ ॥ अञ्जनं सर्पिषः पानं कषायं गुरुभोजनम् ॥ नेत्ररोगेषु सामेषु स्नानञ्च परिवर्जयेत् ॥ १३९ ॥**

नेत्रमें अपार वेदना होतीहो; लाली अधिक हो, खुजली आतीहो, भौंकनेसरीखी पीडा होतीहो, शूल चलताहो, और-आसू गिरतेहोंयँ तो नेत्रको साम अर्थात् आमसहित जानना । जबतक नेत्र आमसहित होंयँ तबतक लंघन आदि करनेके लिये तथा अंजन आजना आदिक निषेध करनेके लिये यह लक्षण कहेहै । अन्य ग्रंथमें भी कहाहैं कि 'लंघन, मधुर भोजन तथा कडवा रस, लेप और बाफका सेक यह नेत्ररोगके लिये सामान्य उपचारहैं परन्तु जबतकक नेत्र आमसहित होय तबतक अंजन, घृतपान, क्काथ, भारीभोजन और स्नान इनका त्याग करदेवे' ॥ १३७-१३९ ॥

### अथ नेत्रनिरामतालक्षणम् ।

**मन्दवेदनता कण्डूसंरम्भाश्रुप्रशान्तता ॥ प्रसन्नवर्णता चाक्ष्णोर्निरामेक्षणलक्षणम् ॥ १४० ॥**

**संरंभः शोथः ॥**

वेदनाकी मंदता, खुजलीका कम होना, सूजनका कम होना, आंसुओंका कम आना, और वर्णकी निर्मलता यह लक्षण होंयँ तो जानाना कि नेत्र निराम अर्थात् आमरहित है ॥ १४० ॥

### अथ नेत्ररोगचिकित्सा ।

**द्वे पादमध्ये पृथुसन्निवेशे शिरागते ते बहुधा हि नेत्रे ॥ ताः म्रोक्षणोत्सादनलेपनादीन्पादप्रयुक्तान्नयनं नयन्ति ॥ १४१ ॥**

**म्रोक्षणं सेचनमुत्सादनमुद्वर्तनम् ॥**

**मलोष्मसंघट्टनपीडनाद्यैस्ता दूषयन्ते**

नयनानि दुष्टाः ॥ भजेत्सदा दृष्टिहितानि तस्मादुपानदभ्यञ्जनधावनानि ॥ १४२ ॥

मलं धूल्यादि । मलादिभिर्दुष्टास्ताः शिरा नयनानि दूषयन्तीत्यन्वयः ॥

पॉवकी दो मोटी नसें मस्तकमें गई हैं और बहुतसी नसें नेत्रोंमें पहुँचीहैं। इस कारण पावोंमें सेचन, मर्दन और लेपन किया हुआ उन नसोंके द्वारा नेत्रोंमें पहुँचताहै। मलसे, गरमीसे, सघट्टनसे तथा दबाने आदिसे दूषित हुई नसें नेत्रोंको बिगाडदेतीहैं इस कारण जूतेका पहरना, पाँवकी मालिस, और पाँवोंको धोना यह सर्वदा सेवन करना चाहिये, जिससे नेत्रोंका उपकार हो॥१४१॥१४२

चक्षुष्याः शालयो मुद्गा यवा मांसन्तु जाङ्गलम् ॥ पक्षिमांसं विशेषेण वास्तूकं तण्डुलीयकम् ॥ १४३ ॥ पटोलकर्कोटककारवेल्लफलानि सर्पिःपरिपाचितानि॥ तथैव वार्ताकफलं नवीनमक्ष्णोर्हितः स्वादुरथापि तिक्तः ॥ १४४ ॥ कट्वम्लगुरुतीक्ष्णोष्णमाषनिष्पावमैथुनम् ॥ मद्यवल्लूरपिण्याकमत्स्यशाकविरूढजम् ॥ ॥ १४५ ॥ विदाहिन्यन्नपानानि न हितान्यक्षिरोगिणे ॥ सेक आश्च्योतनं पिण्डी विडालस्तर्पणं तथा ॥ पुटपाकोऽञ्जनं चैभिः कल्कैर्नेत्रमुपाचरेत् ॥ १४६ ॥

शालिचावल, मूग, जौ, जागल प्रदेशके पशुओंका मास, पक्षियोंका मास, विशेष, करके बथुआ, चौलाई, परवल, ककोडे, करेले और नवीन बैंगन इनको घीमें पकाकर खानेसे नेत्रोंमे हितकारकहैं। मधुर तथा कडवा रसभी नेत्रोंमें हितकारक है।

तीखे पदार्थ, खट्टे पदार्थ, भारी पदार्थ, तीक्ष्ण पदार्थ, गरम पदार्थ, उडद, लोबिया, मैथुन, मदिरा, सूखा हुआ मांस, [illegible], मछली, जिनमें अङ्कुर उत्पन्न होगये हों ऐसे धान्य, और दाहकारक अन्न पान यह सब नेत्ररोगियोंको हितकारक नहीं है।

सेक (पानी आदिकी बारीक धारें डालनी), आश्च्योतन (बूंदें आदिके रूपसे नेत्रोंमें डालना), पिंडी (लुगदी आदि बाँधना), विडाल (लेपादि करना), तर्पण (तृप्तिकरनेके लिये आँखमें दूध आदिको भरना), पुटपाक (पकाया हुआ रस नेत्रोंमे डालना) और अजन इन सब उपचारोंसे नेत्ररोगकी चिकित्सा करनी चाहिये ॥ १४३-१४६ ॥

## अथ सेकविधिः ।

सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः ॥ मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरंगुलः ॥ १४७ ॥ स चापि स्नेहनो वाते पित्ते रक्ते च रोपणः ॥ लेखनस्तु कफे कार्यस्तस्य मात्राभिधीयते ॥१४८॥ षड्भिर्वाचां शतैः स्नेहे चतुर्भिस्तैस्तु रोपणे ॥ तैस्त्रिभिर्लोचने कार्यः सेको नेत्रप्रसादने ॥ १४९ ॥ निमेषोन्मेषणं पुंसामंगुल्याच्छोटिकाथवा ॥ गुर्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः ॥१५०॥ छोटिका चुटकी इति लोके ॥

सेकस्तु दिवसे कार्यो रात्रौ चात्यन्तिके गदे ॥ एरण्डदलमूलत्वक्छृतमाजं पयो हितम् ॥ सुखोष्णं नेत्रयोः सिक्तं वाताभिष्यन्दनाशनम् ॥ १५१ ॥ पथ्याक्षामलखाखसवल्कलकल्केन सूक्ष्मवस्त्रेण ॥ कृत्वा पोटलिकां तामहिफेनोत्थद्रवेण संयुक्ताम् ॥ १५२ ॥ निदधीत लोचने स्यात्सर्वाभिष्यन्दसंक्षयः शीघ्रम् ॥ योगोऽयमृषिभिरुक्तो जगदुपकाराय कारुणिकैः ॥ १५३ ॥ भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते ॥ अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ १५४ ॥ स्नानं कृष्णतिलैश्चापि चक्षुष्यमनिलापहम् ॥ आमलैः सततं स्नानं परं दृष्टिबलावहम् ॥ १५५ ॥ त्रिफलायाः कषायस्तु धावनान्नेत्ररोगजित् ॥ कवलान्मुखरोगघ्नः पानतः कामलापहः ॥ १५६ ॥

रोगीके नेत्रोंको बंद कराकर उनपर चार अंगुल ऊँचेसे महीन महीन धारें डाले, यह सेक नेत्ररोगियोंके लिये हितकारक है। वातसम्बन्धी रोग होय तो घी आदि स्नेह पदार्थोंकी धारें डाले, यह स्नेहन सेक कहाजाताहै। पित्त या रुधिरकी पीडा होय तो हरड आदिके रसकी धारें डाले, यह रोपण सेक कहाजाताहै। कफकी पीडा होय तो मलको उखाडनेवाली सोंठ आदिके रसकी धारें डाले, यह लेखनसेक कहाजाताहै। अब इन सेकोंकी मात्रा कहतेहैं। स्नेहनसेक करना होय तो छैसो मात्रातक करना चाहिये। रोपण सेक करना होय तो चारसौ मात्रातक करना चाहिये। लेखन सेक करना होय तो तीनसौ मात्रातक करना चाहिये इस प्रकार करनेसे नेत्र स्वच्छ और निर्मल होजातेहैं। मनुष्य जितनी देरमें आँखको मींचकर खोलताहै उतना समय अथवा जितनी देरमें अंगुलीसे चुटकी बजाईजातीहै उतना समय अथवा एक गुरु अक्षर बोलनेमें जितना समय लगताहै उतने समयको एक मात्रा कहतेहैं। सेक दिनमें ही करना चाहिये किंतु महादुःखदायक रोग होय तो रात्रिमें भी करना चाहिये। अंडके पत्ते, अडकी जड और अंडकी छाल इनके कल्कके साथ पकाया हुआ बकरीका दूध मंदोष्ण उक्त समयमें नेत्रोंके भीतर डाले, यह सेक हितकारी है और वाताभिष्यन्दको दूर करेहै।

हरड, बहेडा, आमला, और पोस्तके डोडे इनका कल्क बनाकर उसमें अफीमका रस डालकर बारीक वस्त्रकी पोटली बनाकर नेत्रके ऊपर रखे तो सर्व प्रकारके अभिष्यन्द तत्काल नष्ट होजातेहैं। जगदुपकारार्थ दयालु मुनियोंने यह प्रयोग कहा है। भोजन करनेके पश्चात् दोनो गीले हाथोंकी हथेली घिसकर नेत्रके ऊपर लगानेसे हाथोंका जल तत्काल तिमिररोगको नाश करताहै।

काले तिलोंको पीस शिरसे मलकर स्नान करनेसे नेत्र उत्तम होजातेहैं और वायुकी पीडा शमन होजातीहै। नित्य आमलोंको मलकर स्नान करनेसे दृष्टिशक्ति बढतीहै।

त्रिफलेका क्वाथ बनाकर उससे नेत्रोंको धोनेमें नेत्ररोग दूर होजातेहैं। त्रिफलेके कल्कका कवल धारण करनेसे मुखरोग नष्ट होतेहैं और त्रिफलेका क्वाथ पीनेसे कामला नष्ट होजातीहै॥ १४७-१५६॥

## अथाश्चोतनविधिः।

**क्वाथक्षीरद्रवस्नेहबिन्दूनां यत्तु पातनम्॥ द्व्यंगुलोन्मीलिते नेत्रे प्रोक्तमाश्च्योतनं हि तत्॥ १५७॥ बिन्दवोऽष्टौ लेखनेषु रोपणे दश बिन्दवः॥ स्नेहने द्वादश प्रोक्तास्ते शीते कोष्णरूपिणः॥ १५८॥ उष्णे तु शीतरूपाः स्युः सर्वत्रैवैष निश्चयः॥ वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम्॥ १५९॥ कफे तिक्तोष्णरूक्षं स्यात्क्रमादाश्च्योतनं हितम्॥ आश्च्योतनानां सर्वेषां मात्रा स्याद्वाक्छतोन्मिता॥१६०॥ ततःपरं लोचनाभ्यां भेषजाय त्रयो मताः॥ आश्च्योतनं न कर्तव्यं निशायां केनचित्क्वचित्॥१६१॥ बिल्वादिपञ्चमूलेन बृहत्यैरण्डशिग्रुभिः॥ क्वाथ आश्च्योतने कोष्णो वाताभिष्यन्दनाशनः॥ त्रिफलाश्च्योतनं नेत्रे सर्वाभिष्यन्दनाशनम्॥ १६२॥**

रोगीके नेत्रोंको दो अंगुलिओंसे उघाडकर उनमें क्वाथके वा शहतके अथवा दूध घी आदिके बिन्दु डाले, इसको आश्चोतन कहतेहैं और यह नेत्रोंको हितकारी है। मलके उखाडनेकी क्रिया करनी होय तो आठ बिन्दु डालने चाहियें, रोपण क्रिया करनी होय तो दश बिन्दु डालने चाहिये, और स्नेहन क्रिया करनी होय तो बारह बिन्दु डालने चाहिये। शीत काल होय तो कुछेक गरम करके बूंदें डालनी चाहियें और उष्णकाल होय तो शीतल बिन्दु डालने चाहियें यह सर्वत्र निश्चय है।

वायुकी पीडा होय तो कडवे तथा स्नेहवाले बिन्दु हितकारी है। पित्तकी पीडा होय तो मधुर और शीतल बिन्दु हितकारी हैं और जो कफकी पीडा होय तो तीक्ष्ण, गरम तथा रूक्ष बिन्दु हितकारक है। सब आश्चोतनोंकी मात्रा जितनी देरमें सौ गुरु अक्षरोका उच्चारण होय उतनी देरतक समझना। किसी वैद्यको कभी रात्रिके समय

किसीप्रकारके नेत्रके दुखनेपर अश्चोतन कर्म नहीं करना चाहिये ।

बेलआदि पञ्चमूल, कटेरी, अंड और सैंजिना इनका क्वाथ बनाकर सुहाती सुहाती बूंदे नेत्रोंमें डालनेसे वाताभिष्यन्द नाश होताहै ।

त्रिफलेके क्वाथके बिन्दु डालनेसे सबप्रकारके अभिष्यन्द दूर होजातेहैं ॥ १५७–१६२ ॥

## अथ पिंडीविधिः ।

**टत्कभेषजकल्कस्य पिण्डी च कोलमात्रया ॥ वस्त्रखण्डेन संबद्धा नेत्रेऽभिष्यन्दनाशिनी ॥ १६३ ॥ स्निग्धोष्णा पिण्डिका वाते पित्ते सा शीतला मता ॥ रूक्षोष्णा श्लेष्मणि प्रोक्ता विधिरुक्तो बुधैरयम् ॥ १६४ ॥ एरण्डपत्रमूलत्वक्तु निर्मिता वातनाशिनी ॥ धात्रीविरचिता पित्ते शिग्रुपत्रकृता कफे ॥१६५॥ निम्बपत्रकृता पिण्डी पित्तश्लेष्महरी भवेत् ॥ शुण्ठीनिम्बदलैः पिण्डी सुखोष्णा स्वल्पसैन्धवा ॥ १६६ ॥ धार्या नेत्रेऽनिलकफे शोथकण्डूव्यथाहरी ॥ त्रिफलापिण्डिका नेत्रे वातपित्तकफापहा॥ ॥ १६७ ॥ पथ्याक्षामलखाखसवल्कलकल्कोऽहिफेनजलयुक्तः ॥ तेन विरचिता पिण्डी शमयति सकलानभिष्यन्दान् १६८**

योग्य औषधियोंका कल्क बनाकर उसकी कवलकी समान टिकिया बनाकर नेत्रपर रखकर वस्त्रकी पट्टीसे बाँधे तो अभिष्यन्दका नाश होताहै ।

वायुका अभिष्यन्द होय तो स्निग्ध तथा उष्ण औषधियोंकी टिकिया बाँधनी चाहिये । पित्तकी पीडा होय तो शीतल औषधियोंकी टिकिया बांधनी चाहिये और कफकी पीडा होय तो रूक्ष तथा उष्ण औषधियोंकी टिकिया बाँधनी चाहिये, ऐसा विधान वैद्योंने कहाहै । अंडके पत्ते, अंडकी जड और अंडकी छाल इनकी पिंडी वायुकी पीडाको शमन करेहै । आमलोंकी पिंडी पित्तकी पीडाको शमन करेहै । और सैंजिनेके पत्तोंकी टिकिया कफकी पीडाको शमन करेहै ।

नीमके पत्तोंकी टिकिया बाँधनेसे पित्त तथा कफका नाश होताहै ।

सोंठ तथा नीमके पत्ते इनको पीसकर उसमे कुछेक सैंधानिमक डालकर उसकी कुछ कुछ गरम पिंडी बनाकर बाँधे तो वायु तथा कफकी पीडा शमन होतीहै और सूजन, खुजली तथा अन्य व्यथा इनका भी नाश होताहै ।

त्रिफलेकी पिंडी बनाकर नेत्रपर बाँधनेसे वात, पित्त, तथा कफ इन तीनों दोषोंसे उत्पन्न हुई नेत्रकी पिडा, शमन होतीहै ।

हरड, बहेडा, आमला और पोस्तके डोडे इनका कल्क बनाकर उसमे अफीमका रस डालकर पिंडी बाँधनेसे सर्व प्रकारका अभिष्यन्द नष्ट होजाताहै ॥ १६३–१६८ ॥

## अथ बिडालकविधिः ।

**बिडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जिते॥ तस्य मात्रा परिज्ञेया मुखालेपविधानवत् ॥ १६९ ॥ अंगुलस्य चतुर्थांशो मुखलेपः कनिष्ठकः ॥ मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धांगुलो भवेत् ॥ १७० ॥ स्थितिकालोऽपि तस्योक्तो यावत्कल्को न शुष्यति ॥ शुष्कस्तु गुणहीनः स्यात्तथा दूषयति त्वचम् ॥ १७१ ॥ यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः ॥ जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः ॥१७२॥ तार्क्ष्यं रसाञ्जनम् ॥**

**रसाञ्जनेन वा लेपः- पथ्याबिल्वदलैरपि ॥ वचाहरिद्राविश्वैर्वा तथा नागरगैरिकः ॥ १७३ ॥**

पलकके बालोंको बचाकर नेत्रके बाहरके भागपर लेपकरना यह बिडालक कहाजाताहै । मुखपर लेप करनेकी जो मात्रा कही है वही मात्रा बिडालककी भी करनी चाहिये । मुखपर लेप करनेकी मात्रा इसप्रकार है अंगुलका चौथाई भाग ऊचा लेपकरना कनिष्ठमात्रा है

अगुलका तिहाई भाग ऊँचा लेपकरना मध्यम मात्रा है और आधे अगुल ऊँचा लेपकरना उत्तम मात्रा है, जब तक कल्क सूखे नही तबतक यह लेप करना चाहिये, सूखने पर लेप गुणहीन होजाताहै और त्वचाको भी खराब करताहै ।

मुलैठी, पीलागेरू, सैंधानिमक, दारुहलदी और रसौत इ सब समान भाग लेकर जलमे पीसकर इस कल्क ो नेत्रके बाहर लेपकरनेसे नेत्रके समस्तरोग नष्ट हो- ातेहैं ।

रसौत अथवा हरड तथा बेलके पत्ते अथवा वच, ल्दी तथा सोंठ इनका अथवा सोंठ और पीलागेरू नका लेपकरनेसे नेत्रके रोग नष्ट होजातेहैं १६९–१७३

## अथ तर्पणविधिः ।

वातातपरजोहीने वेश्मन्युत्तानशायिनः ॥ आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ ॥ १७४ ॥ समौ दृढावसन्धानौ कर्तव्यौ नेत्रकोशयोः ॥ पूरयेद् घृतमण्डेन विलीनेन सुखोदकैः ॥ १७५ ॥ सर्पिषा शतधौतेन क्षीरजेन घृतेन वा ॥ निममान्यक्षिपक्ष्माणि यावत्स्युस्तावदेव हि॥ १७६॥ पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः॥ भिषग्भिरेष कथितः पुराणैस्तर्पणो विधिः ॥ १७७ ॥ यद्रूक्षं परिशुष्कञ्च नेत्रं कुटिलमाविलम् ॥ शीर्णं पक्ष्मशिरोत्पातकृच्छ्रोन्मीलनसंयुतम् ॥ १७८ ॥ तिमिरार्जुनशुष्काद्यैरभिष्यन्दाधिमन्थकैः ॥ शुष्काक्षिपाकशोथाभ्यां युतं पवनपर्ययैः॥ ॥ १७९॥ तत्रेत्रं तर्पयेत्सम्यङ् नेत्ररोगविशारदः ॥ तर्पणं धारयेद्वर्त्मरोगे वाचां शतं बुधः ॥ १८० ॥ स्वस्थे कफे सन्धिरोगे वाचां पञ्चशतानि च ॥ षट्शतानि कफे कृष्णरोगे सप्तशतानि हि ॥ १८१ ॥ दृष्टिगे च शतान्यष्टावधिमन्थे सहस्रकम् ॥ सहस्रं वातरोगेषु धार्यमेवं हि तर्पणम् ॥ १८२ ॥ तर्पणेनागतस्नेहं स्रावयित्वाक्षि शोषयेत् ॥ स्विन्नेन यवपिष्टेन स्नेहवीर्येरितं ततः ॥ १८३ ॥ यथास्वं धूमपानेन कफमस्य विरेचयेत्॥ एकाहं वा त्र्यहं वापि पञ्चाहं वापि तर्पयेत् ॥ १८४ ॥ तर्पणे तृप्तिलिङ्गानि नेत्रस्यैतानि लक्षयेत् ॥ सुखसुप्तावबोधत्वं वैशद्यं दृष्टिपाटवम् ॥ निर्वृतिर्व्याधिशान्तिश्च क्रियालाघवमेव च ॥ १८५ ॥

क्रियालाघवं नेत्रस्य क्रियायां निमेषोन्मेषादौ लघुताम् ॥

गुर्वाविलमतिस्निग्धमश्रुकण्डूपदेहवत् ॥ घर्षतोदयुतं नेत्रमतितर्पितमादिशेत् ॥ ॥ १८६ ॥ आस्रावशोफरोगाढ्यमुपदेहसमाकुलम् ॥ रूक्षमस्रावि परुषं नेत्रं स्याद्धीनतर्पितम् ॥ १८७ ॥ अनयोर्दोषबाहुल्यात्प्रयत्नेन चिकित्सिते ॥ रूक्षस्निग्धोपचाराभ्यामनयोः स्यात्प्रतिक्रिया ॥ १८८ ॥

अनयोरतितर्पितहीनतर्पितयोः ॥

दुर्दिनान्युष्णशीतेषु चिंतायां सम्भ्रमेषु च ॥ अशान्तोपद्रवे वाक्षिण तर्पणं न प्रशस्यते ॥ १८९ ॥

सम्भ्रमोऽत्र भयम् ॥

वायु, धूप और धूलरहित घरमे रोगीको चित्त लिटा कर सनेहुए उडदके चूनका दोनो नेत्रोंके चारों ओर दृढ और गोल मंडल बनावे फिर रोगीके दोनों नेत्रोंको बंद करके पतला घी अथवा मंड अथवा गरम जल अथवा जलसे सौ बार धुला हुआ घी अथवा दूधमेंसे निकाला हुआ घी जबतक पलकके बाल न डूबें तबतक भरे, भर जानेके पश्चात् धीरे धीरे नेत्रोंको खोले यह तर्पण विधि प्राचीन वैद्योंने कही है । नेत्र रूखे होगये हों, सूख गये हों, कुटिल होगये हों, गदले होगये हों, पलकके बाल गिर गये हों, शिरोत्पात, आँखें कठिनतासे थोडी खुलती हों, तिमिर, अर्जुन, शुक्र, अभिष्यन्द, अधिमंथ, शुष्काक्षिपाक, सूजन और वातविपर्यय हुआ होय, तो नेत्र रोगोंको जाननेवाले वैद्य नेत्रोंको अच्छे प्रकारसे तर्पण

करे। पलकका रोग होय तो सौ गुरु अक्षरोंके उच्चारणके समयतक नेत्रपर तर्पण करे। स्वस्थतामें, कफमें तथा संधियोंके रोगमें पांचसौ गुरु अक्षरोंके उच्चारण करनेके समयतक तर्पणको रहने देवे। पित्तकी पीडा होय तो छै सौ गुरु अक्षरोंके उच्चारण करनेके समयतक तर्पण रहने देवे। काले भागमें रोग होय तो सातसौ गुरु अक्षरोंके उच्चारण करने पर्यंत तर्पण करे। दृष्टिका रोग होय तो आठ सौ गुरु अक्षरोंके उच्चारण करनेतक तर्पण रहै, अधिमंथ होय तो हजार गुरु अक्षरोंके उच्चारण करनेतक और वातसम्बन्धी रोग होय तो भी हजार गुरु अक्षरोंके उच्चारणतक तर्पण रहने देवे। तर्पण करनेके पश्चात् नेत्रोंमें भरी हुई चिकनाईको बाहर करके नेत्रोंको शुद्ध करे और सेके हुए जौके चूनसे आंखोंको साफ करे पश्चात् घीके योगसे वृद्धिको प्राप्त हुए कफको यथायोग्य धूमपान कराकर दूर करे। एकदिन, पाँचदिन अथवा सातदिनतक तर्पणकी क्रिया करे। तर्पण बराबर होगया होय तो निद्रा सुखसे आनेलगतीहै, सुखसे जागताहै, नेत्रोंमें स्वच्छता, नेत्रोंकी शक्तिका बढना, सुख होताहै, रोगकी शांति होतीहै, और नेत्रोंको खोलने बंद करनेमें हलकापन होताहै ये लक्षण होंय तो जानना कि, तर्पण अच्छे प्रकारसे होगया। जो तर्पणका अतियोग हो तो नेत्र भारी होतेहैं, गदले रहतेहैं, अत्यंत चिपकनेवाले वा गीले आंसु भर भर आतेहैं, खुजली, कीचड, आते-हैं और जैसे भीतरको घुस जायँ तथा सुई चुभोने सरीखी पीडा होतीहै, जो नेत्रोंका तर्पण अच्छे प्रकारसे न हो अर्थात् कम होय तो नेत्रोंमेंसे पानी गिरताहै, सूजन होतीहै, पीडा होतीहै, कीचड, अधिक आतीहै, रूक्षता होतीहै और कठिनता होती है, जो तर्पणका अतियोग अथवा हीनयोग हुआ होय तो विशेष गडबड होतीहै इस कारण इनकी चिकित्सा करनेमें अधिक विचार करना चाहिये। जो अतियोग हुआ होय तो रूक्ष उपचार करने चाहिये और जो हीनयोग होय तो स्निग्ध उपचार करने चाहिये। बादलोंसे आच्छादित दिनमें, अत्यन्त गरमीके समयमें, अत्यन्त शीतके समयमें, चिंता, श्रम और उपद्रवोंके शांत होनेसे पहिले नेत्रोंको तर्पण नहीं करना चाहिये ॥ १७४-१८९ ॥

## अथ पुटपाकविधिः ।

द्वे बिल्वे स्निग्धमांसस्य परं द्रव्यपलं मतम् ॥ द्रवस्य कुडवोन्मानं सर्वमेकत्र पेषयेत् ॥ १९० ॥ तदेकत्र समालोड्य पत्रैः सुपरिवेष्टितम् ॥ पुटपाकविधानेन तत्पक्का तद्रसं बुधः ॥ १९१ ॥ तर्पणोक्तेन विधिना यथावद्विनियोजयेत् ॥ दृष्टिमध्ये निषेक्तव्यो नित्यमुत्तानशायिनः ॥ ॥ १९२ ॥ तेजांस्यनिलमाकाशमातपं भास्करस्य च ॥ नेक्षेत तर्पिते नेत्रे यश्च वा पुटपाकवान् ॥ १९३ ॥

उत्तम चिकना मांस आठ तोले लेकर उसमें अन्य औषधि चार तोले और द्रवपदार्थ सोलह तोलेभर डालकर सबको एकत्र पीसे, पश्चात् इन सबका एक गोला बनाकर उसको पत्तोंसे अच्छे प्रकार बांधकर पुटपाककी रीतिसे अग्निमें पकावे, फिर उसमेंसे रस निचोडकर उस रसको तर्पणकी रीत्यनुसार सम्पूर्ण रीतिसे नेत्रमें डाले। रोगीको चित्त सुलाकर उसके नेत्रमें वह रस नित्य डाले। नेत्रोंका तर्पण करनेके पश्चात् अथवा पुटपाककी विधि करनेके पश्चात् रोगीको तेजस्वी पदार्थ, पवनका सचार, आकाश और सूर्यकी धूप न दिखावे ॥ १९०-१९३ ॥

## अथाञ्जनविधिः ।

अथ संपक्वदोषस्य प्राप्तमंजनमाचरेत् ॥ अञ्जनं क्रियते येन तद्द्रव्यं चाञ्जनं मतम् ॥ १९४ ॥ वर्टिकारसचूर्णानि त्रिविधान्यञ्जनानि हि ॥ कुर्याच्छलाकयाङ्गुल्या हीनानि स्युर्यथोत्तरम् ॥ १९५ ॥ स्नेहनं रोपणं चापि लेखनं तत्त्रिधा पृथक् ॥ मधुरं स्नेहसम्पन्नमञ्जनं स्नेहनं मतम् ॥ १९६ ॥

तत्त्रिविधं पृथगिति तद्वर्टिकारसचूर्णरूपं पृथक् प्रत्येकं त्रिधा स्नेहनं रोपणं लेखनं चेति ॥

कषायतिक्तरसयुक्सस्नेहं रोपणं स्मृतम् ॥ अञ्जनं क्षारतिक्ताम्लरसैर्लेखनमुच्यते ॥ १९७ ॥ हरेणुमात्रां कुर्वीत

वर्ती तीक्ष्णाञ्जने भिषक् ॥ प्रमाणं मध्यमे सार्द्धं द्विगुणं तु मृदौ भवेत् ॥ १९८ ॥ रसक्रिया तूत्तमा स्यात्त्रिविडङ्गमिता मता ॥ मध्यमा द्विविडङ्गा सा हीना त्वेकविडंगिका ॥ १९९ ॥ शलाकाः स्नेहने चूर्णे चतस्रः प्राहुरञ्जने ॥ रोपणे तासु तिस्रः स्युस्ते उभे लेखने स्मृते२०० मुखयोः कुंचिता श्लक्ष्णा शलाकाष्टांगुलोन्मिता ॥ अश्मजा धातुजा वा स्यात्कलायपरिमण्डला ॥ २०१ ॥

अग्रे कलायवत्परिवर्तुला ॥

सुवर्णरजतोद्भूता शलाका स्नेहने स्मृता ॥ ताम्रलोहाश्मसञ्जाता शलाका लेखने मता ॥ अंगुली तु मृदुत्वेन रोपणे कथिता बुधैः ॥ २०२ ॥

दोष पकनेके पश्चात् नेत्रोंमे योग्य अंजन आजना चाहिये। जो पदार्थ नेत्रोंमें आंजाजाताहै वह 'अजन, कहाजाताहै । गोली, रस और चूर्णरूप ऐसे अञ्जनके तीन भेद हैं। अञ्जनको सलाई अथवा अगुलीसे आजना चाहिये। गोलीरूप अजनसे रसरूप अंजन निर्वल है और रसरूप अजनसे चूर्णरूप अंजन निर्वल है । इस प्रत्येक अजनके स्नेहन, रोपण और लेखन इन नामोंसे तीन भेद हैं। क्षार, कडवे और खट्टे रसवाला जो अजन होय उसको लेखन कहतेहैं । कसैला, तथा कडवे रसवाला और स्नेहयुक्त जो अञ्जन होय उसको रोपण अञ्जन कहते-हैं। मधुर रसयुक्त और स्नेहयुक्त जो अञ्जन होइ वह स्नेहन अञ्जन कहाजाताहै । अञ्जन तीक्ष्ण होय तो उसकी मटरकी समान गोली करनी चाहिये । अञ्जन मध्यम अर्थात् तीक्ष्ण न होय और कोमल भी न होय तो उसकी डेढ १॥ मटरकी वरावर गोली बनानी चाहिये और अञ्जन कोमल होय तो उसकी दो मटरकी वरावर गोली बनानी चाहिये । आंखमें यदि रसांजन अर्थात् रसरूप अञ्जन डालना होय तो तीन वायविडगकी वरावर डालना यह उत्तम है। दो वायविडगकी वरावर डालना यह मध्यम है। और एक वायविडगकी वरावर डालना यह कनिष्ठ है। चूर्णरूप अञ्जन जो स्नेहन होय तो उसकी चारसलाई आंखमे लगानी चाहिये । रोपण होय तो उसकी तीन सलाई आंखमें डालनी चाहियें। और जो लेखन होय तो उसकी दो सलाई नेत्रोंमे लगानी चाहिये। आंजनेकी सलाई दोनों ओरके मुखोंसे सकुची हुई, चिकनी, आठ अंगुल लम्बी और उसके दोनो मुख मटरकी समान गोल और वह पत्थर अथवा धातुकी होनी चाहिये । स्नेहन अञ्जन ऑजना होय तो सोने अथवा चांदीकी सलाई होनी चाहिये । लेखन अञ्जन ऑजना होय तो तॉबेकी, लोहेकी, अथवा पत्थरकी सलाई होनी चाहिये और रोपण अञ्जन आँजना होय तो कोमल होनेके कारण उसके ऑजनेके लिये अगुलीही ठीक है ॥ १९४–२०२ ॥

## अथांजनस्य दृष्टिप्रसादनी शलाका ।

त्रिफलाभृङ्गशुण्ठीनां रसैः शुद्धश्च सर्पिषा॥ गोमूत्रमध्वजाक्षीरैः सिक्तो नागः प्रतापितः ॥ तच्छलाका हरत्येव सकलान्नेत्रजान्गदान् ॥ २०३ ॥

शुद्धसीसेको वारंवार तपा तपाकर हरड, बहेडा और आमलेके रसमें, सोठके रसमें, घीमें, भागरेके रसमें, गोमूत्रमें, सहतमें और बकरीके दूधमें वुझा वुझाकर नेत्रोंमें लगावे तो नेत्रसम्बन्धी सम्पूर्ण रोग नष्ट होजातेहैं । यह सलाई 'दृष्टिप्रसादनी' इस नामसे कहीजातीहै ॥ २०३ ॥

## अथांजनकरणविधिः ।

कृष्णभागादधः कुर्याद्यावन्नयनमञ्जनम्॥ हेमन्ते शिशिरे चापि मध्याह्नेऽञ्जनमिष्यते ॥ २०४ ॥ पूर्वाह्णे वापराह्णे वा ग्रीष्मे शरदि चेष्यते ॥ वर्षास्वनभ्रे नात्युष्णे वसन्ते तु सदैव हि ॥ २०५ ॥ प्रातः सायन्तु तत्कुर्यान्न च कुर्यात्सदैव हि ॥ श्रान्ते प्ररुदिते भीते पीतमद्ये नवज्वरे ॥ अजीर्णे वेगघाते च नाञ्जनं सम्प्रशस्यते ॥ २०६ ॥

काले भागके नीचे ऑखके कोयेतक अञ्जन ऑजे । हेमत ऋतुमे और शिशिर ऋतुमें मध्याह्नके समय अञ्जन

आँजना चाहिये। ग्रीष्म और शरद् ऋतुमें पूर्वाह्नके समय अथवा अपराह्नके समय अञ्जन आँजना चाहिये। वर्षा ऋतुमें बादलोंके न होनेपर और बहुत गरमी न होय उस समय अञ्जन आँजना चाहिये और वसन्त ऋतुमें सदैव अञ्जन करना चाहिये अथवा प्रातः और सन्ध्या दोनों समय अञ्जन आँजना उचित है किन्तु निरंतर न आँजे।

थकाहुआ, बहुत रोया हो, भयभीत, मद्यपान किये हो, नवीन ज्वरवाला, अजीर्णरोगी, और जिसके मल मूत्रादिके वेगका अवरोध होगया होय उनको अञ्जन लगाना नहीं चाहिये ॥ २०४-२०६ ॥

### अथ स्नेहनी वटिका।

**पथ्याक्षधात्रीबीजानि एकद्वित्रिगुणानि च ॥ पिष्ट्वाम्बुना वटीं कुर्यादञ्जनं द्विहरेणुकम् ॥ नेत्रस्रावं हरत्याशु वातरक्तरुजं तथा ॥ २०७ ॥**

हरड, हरडसे दुगुने बहेडे और बहेडेसे तिगुने आमले इन सबको लेकर पानीमें पीसकर गोलिया बनालेवे। इन गोलियोंमेंसे दो मटरकी बराबर नेत्रोंमे आजे तो नेत्रोंका स्राव और वायु तथा रुधिरकी पीडा शान्त होजातीहै ॥ २०७ ॥

### अथ रोपणी वटी।

**रसाञ्जनं हरिद्रे द्वे मालतीनिम्बपल्लवाः ॥ गोशकृद्रससंयुक्ता वटी नक्तान्ध्यनाशिनी॥ एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्द्धहरेणुका ॥ २०८॥**

रसौत, हल्दी, दारुहल्दी, मालतीके पत्ते और नीमके पत्ते इनको गायके गोबरके रसमें पीसकर गोली बनावे। इनमेंसे डेढ मटरकी समान नेत्रोंमे आँजे। इन गोलियोंको आँजनेसे रात्रिमे नहीं दीखना अर्थात् रतौंधा नष्ट होजाते है ॥ २०८ ॥

### अथ लेखनी चन्द्रोदया वटिका।

**शंखनाभिर्विभीतस्य मज्जा पथ्या मनःशिला ॥ पिप्पली मरिचं कुष्टं वचा चेति समांशकम् ॥ २०९॥ छागक्षीरेण संपिष्य वटीं कुर्याद्यवोन्मिताम्॥ हरेणुमात्रां संघृष्य जलेनाञ्जनमाचरेत् ॥ २१० ॥ तिमिरं मांसवृद्धिश्च काचं पटलमर्बुदम्॥ रात्र्यन्धं वार्षिकं पुष्पं वटी चन्द्रोदया जयेत् ॥ २११ ॥**

शखकी नाभि, बहेडेकी मींग, हरड, मैनशिल, पीपल, कालीमिरच, कूठ और वच इन सबको समान भाग लेकर बकरीके दूधमें पीसकर जौकी समान लंबी गोली बनावे। इन गोलियोंमेंसे एक मटरकी समान जलमें घिसकर नेत्रोंमे आँजे। यह चंद्रोदया नामक गोली तिमिर, माँसवृद्धि, काँच, पटल, पलकके भीतरकी गाठ, रतौंधा और एक वर्षके फूलेको भी नष्ट करतीहै ॥ २०९-२११ ॥

### अथ पुष्पहरावर्तिः।

**पलाशपुष्पस्वरसैर्बहुशः परिभावितम् ॥ करञ्जबीजं तद्वर्तिर्दृष्टेः पुष्पं विनाशयेत् ॥ २१२ ॥**

करजके बीजको अनेक बार ढाकके फूलेके रसमें भावना देकर पीसकरके बत्ती बनावे। इस बत्तीको आँखोमे आँजनेसे नेत्रोकी फूली नष्ट हो जातीहै ॥ २१२ ॥

### अथ स्नेहनी रसक्रिया।

**कतकस्य फलं घृष्ट्वा मधुना नेत्रमञ्जयेत्॥ ईषत्कर्पूरसहितं तत्स्यान्नेत्रप्रसादनम् २१३**

निर्मलीके फलको सहतमें घिसकर उसमें कुछेक भीमसेनी कपूर डालकर नेत्रोंमे आँजे तो नेत्र स्वच्छ निर्मल होजातेहैं ॥ २१३ ॥

### अथ रोपणी रसक्रिया।

**रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला॥ समुद्रफेनं लवणं गैरिकं मरिचं तथा ॥ ॥ २१४ ॥ एतत्समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि ॥ अञ्जनं क्लेदकण्डूघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ २१५ ॥ दुग्धेन कण्डूं क्षौद्रेण नेत्रस्रावञ्च सर्पिषा ॥ पुष्पं तैलेन तिमिरं काञ्जिकेन निशान्धताम् ॥ २१६ ॥ पुनर्नवा हरत्याशु भास्करस्तिमिरं यथा ॥ बब्बूलदलनिष्काथो लेहीभूतस्तदञ्जनात् ॥ नेत्रस्रावो व्रजेच्छोषं मधुयुक्तान्न संशयः ॥ २१७ ॥**

दोना ओठ चोट लगनेसे मानो चिरसे गये होयँ इसी कारणसे रुधिरकी समान वर्णवाले होजायँ, पीडा होय, अथवा चिरजायँ और खुजली होय तो जानना कि ओष्ठोंमें चोट लगी है ॥ १३ ॥

## अथौष्ठरोगचिकित्सा ।

गलदन्तमूलदशनच्छदेषु रोगाः कफास्रभूयिष्ठाः ॥ तस्मादेतेष्वसकृद्रुधिरं विस्रावयेदुष्णम् ॥ १४ ॥ चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च ॥ वातजेऽभ्यञ्जनं कुर्यान्नाडीस्वेदश्च बुद्धिमान् ॥ १५ ॥

चतुर्विधेन स्नेहेन तैलघृतवसामज्जारूपेण ॥

वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनञ्च । शीताः प्रदेहाः परिषेचनञ्च पित्तोपसृष्टेष्वधरेषु कुर्यात् ॥ १६॥ शिरोविरेचनं धूमः स्वेदः कवल एव च ॥ हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥ ॥ १७ ॥ मेदोजे शोधिते स्विन्ने स्वेदिते कवलो हितः ॥ प्रियंगुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥ १८ ॥

गलेमें, दांतोंकी जडमें और ओठोंमें जो रोग होते हैं उनमें कफ और रुधिरकी प्रधानता होतीहै, इस कारण इन रोगोंमें वारंवार गरम गरम दुष्ट रुधिर निकलवाना चाहिये ।

वायुसे हुए ओष्ठ रोग होय तो चार प्रकारका स्नेह ( घृत तेल वसा और मज्जा ) में मोम डालके मालिश करे अथवा नाडी स्वेद करे ।

पित्तसे हुए ओठ रोग होयँ तो नस छेदकर रुधिर निकाले, वमन करावे, विरेचन देवे, तिक्तक नामवाला [illegible] पिलावे, मांसका रस खिलावे, शीतल लेप करे और शीतल सेचन करे ।

कफसे हुए ओठोंके रोग होवें तो रुधिर निकलवानेके पीछे शिरोविरेचन ( मस्तकको दोषोंसे खाली करनेका उपाय ) देवे, धुआं दिलावे, स्वेदन करे और कुल्ले भी करावे ।

मेदसे हुए ओष्ठरोग होवें तो विरेचन आदिसे शोधन करे, [illegible] स्वेदन करावे, [illegible] करे, [illegible] करावे और प्रियंगु, हरड, बहेडा, आमले तथा लोध, इनको सहतमें मिलाकर ओठोंपर प्रतिसारणविधि करै ॥ १४–१८ ॥

## अथ प्रतिसारणविधिः ।

दन्तजिह्वामुखानां यच्चूर्णकल्कावलेहकैः॥ शनैर्घर्षणमंगुल्या तदुक्तं प्रतिसारणम् ॥ ॥ १९ ॥ ओष्ठरोगेष्वशेषेषु दृष्ट्वा दोषमुपाचरेत् ॥ तेषु व्रणत्वं जातेषु व्रणवत्समुपाचरेत् ॥ २० ॥

अंगुलीसे चूर्ण, कल्क अथवा अवलेह, लेकर दांतोंको जीभको, तथा मुखको धीरे धीरे घिसे इसको 'प्रतिसारण' कहतेहैं' ओष्ठके सम्पूर्ण प्रकारके रोगोंमे दोषका निश्चय करके उस दोषको नष्ट करे ऐसा प्रतिसारण करावे जो ओठोंके रोग व्रणरूप होजायँ तो उनकी व्रणकी समानही चिकित्सा करै ॥ १९ ॥ २० ॥

## अथ दन्तवेष्टजरोगाणां नामानि संख्या च ।

शीतादो गदितः पूर्वं दन्तपुप्पुटकस्तथा॥ दन्तवेष्टः सौषिरश्च महासौषिर एव च ॥ २१ ॥ ततः परिदरः प्रोक्तस्ततस्तूपकुशः स्मृतः ॥ वैदर्भश्च ततः प्रोक्तः खल्लीवर्द्धन एव च ॥ २२ ॥ अधिमांसकनामा च दन्तनाड्यश्च पञ्च च ॥ दन्तविद्रधिरप्यत्र दन्तवेष्टेषु षोडश ॥ २३ ॥

शीताद, दन्तपुप्पुट, दन्तवेष्ट, सौषिर, महासौषिर, परिदर, उपकुश, वैदर्भ, खल्लिवर्द्धन, अधिमांसक, पांच प्रकारकी दन्तनाडी और दन्तविद्रधि, इसप्रकार दांतोंकी जडमें सोलह रोग होतेहैं ॥ २१–२३ ॥

## अथ शीतादलक्षणम् ।

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात्प्रवर्तते ॥ दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ २४ ॥ दन्तमांसानि शीर्यन्ते पचंति च परस्परम् ॥ शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥ २५ ॥

दन्तवेष्टेभ्यः दन्तवेष्टनमांसेभ्यः । अकस्मादभिघातं विना । शीर्यन्ते पतन्ति । पचंति

च परस्परं पाकोष्मणा मांसानि शोणितं पचन्ति ॥

दाँतोंकी जडमेंसे विना अभिघात अकस्मात् ही रुधिर निकले, मसूढोका मास दुर्गन्धवाला, काला, गिलगिला, तथा कोमल होकर गिरे और पकनेकी गरमीसे रुधिर पकने लगे, उसको शीताद कहतेहैं, यह रोग कफके तथा रुधिरके प्रकोपसे होताहै ॥ २४ ॥ २५ ॥

### अथ दंतपुप्पुटकलक्षणम्।

दन्तयोस्त्रिषु वाप्यत्र श्वयथुर्जायते महान् ॥ दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ २६ ॥

दो दाँतोंमें अथवा तीन दाँतोंमें अधिक सूजन उत्पन्न होय उस रोगको दन्तपुप्पुटक कहतेहैं, यह रोग कफके और रुधिरके प्रकोपसे होताहै ॥ २६ ॥

### अथ दन्तवेष्टलक्षणम्।

स्रवन्ति पूयं रुधिरं चला दन्ता भवन्ति च ॥ दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥ २७ ॥

अत्र दन्तमूलानीति कर्तृपदमध्याहरणीयम् ॥

मसूढोंमेंसे रुधिर अथवा राध (पीप) निकले और दाँत हलजायँ, इस रोगको दन्तवेष्ट कहतेहैं। यह रोग रुधिरके बिगडनेसे होताहै ॥ २७ ॥

### अथ सौषिरलक्षणम्।

श्वयथुर्दन्तमूलेषु रुजावान्कफवातजः ॥ लालास्रावी च कण्डूरः स यः सौषिरो गदः ॥ २८ ॥

मसूढोंमें पीडासहित, लार गिरानेवाला और खुजलीसहित सूजन होय उस रोगको सौषिर कहतेहैं। यह रोग कफके तथा वायुके प्रकोपसे होताहै ॥ २८ ॥

### अथ महासौषिरलक्षणम्।

दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ॥ दन्तमांसानि पच्यन्ते मुखञ्च परिवाप्यते ॥ यस्मिन्स सर्वजो व्याधिर्महासौषिरसंज्ञकः ॥ २९ ॥

तालू चाप्यवदीर्यते चकाराद्दन्तवेष्टश्चाप्यवदीर्यते सप्तरात्रान्मारकश्चायम्। यत आह भोजः—

"महासौषिर इत्येष सप्तरात्रान्निहन्त्यसून्" ॥ ३० ॥ इति।

मसूढोंमे दांत हिलने लगें, तालू और मसूढे फटने लगें, मसूढे पकजायँ और मुख अत्यन्त पीडित होय इस रोगको महासौषिर कहतेहैं, यह रोग तीनो दोषोंके प्रकोपसे होताहै। यह रोग मनुष्यको सात दिनमें मारदेताहै क्योंकि, भोज कहताहै कि "यह महासौषिर रोग सात रात्रिमे प्राणोंका नाश करदेताहै ॥ २९ ॥ ३० ॥

### अथ परिदरलक्षणम्।

दन्तमांसानि शीर्यन्ते यस्मिन्ष्ठीवति चाप्यसृक् ॥ पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ ३१ ॥

दातोंका मांस बिखर जाय, और थूकमे रुधिर निकले इस रोगको परिदर कहतेहैं यह रोग पित्त, रुधिर और कफके प्रकोपसे होताहै ॥ ३१ ॥

### अथोपकुशलक्षणम्।

वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च ॥ आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनम् ॥ ३२ ॥ आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ॥ यस्मिन्नुपकुशः स स्यात्पित्तरक्तसमुद्भवः ॥ ३३ ॥

आघट्टिताः घृष्टाः ॥

मसूढोमे दाह होय और पकजायँ, दात हिलने लगें, मन्द वेदनायुक्त रुधिरका स्राव होय और रुधिरके स्राव होनेपर मुख सूज जाय तथा दुर्गन्ध आने लगे इस रोगको उपकुश कहतेहैं, यह रोग पित्त तथा रुधिरके प्रकोपसे होताहै ॥ ३२ ॥ ३३ ॥

### अथ वैदर्भलक्षणम्।

घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ॥ चलन्ति च रदा यस्मिन्स वैदर्भोऽभिघातजः ॥ ३४ ॥

संरम्भः शोथः। चलन्ति चेति चकाराद्वेदनादाहपाकाः ॥

मसूढोंके घिसनेसे अत्यन्त सूजन होय, दात हिलने लगे और वेदना होय तथा पाक और दाह होय इस रोगको वैदर्भ कहतेहैं, यह रोग काष्ठ आदिकी चोट लगनेसे होताहै ॥ ३४ ॥

### अथ खल्लीवर्द्धनलक्षणम् ।

मारुतेनाधिको दन्तो जायते तीव्रवेदनः॥ खल्लीवर्द्धनसंज्ञोऽसौ सञ्जाते रुक्प्रशाम्यति ॥ ३५ ॥

सञ्जाते दन्ते ॥

दातके ऊपर अधिक दात जम आवे और उत्पन्न होते समय विशेष पीडा होय, उत्पन्न होनेके पीछे पीडा शांत होजाय उस रोगको खल्लिवर्द्धन कहतेहैं । यह वायुके प्रकोपसे होताहै ॥ ३५ ॥

### अथाधिमांसलक्षणम् ।

हानव्ये पश्चिमे दन्ते महाशोथो महारुजः॥ लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥ ३६ ॥

हानव्ये हनुभवे पश्चिमे दन्ते अन्त्यजे ॥

नीचेकी पीछेकी डाढमें घोर पीडायुक्त स्रावसहित भारी सूजन उत्पन्न होय उस रोगको अधिमांस कहतेहैं यह कफके प्रकोपसे होताहै ॥ ३६ ॥

### अथ पंचविधदन्तनाडीलक्षणम् ।

दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ ३७ ॥

यथा नाडीव्रणे वातपित्तकफसन्निपातागन्तुनिमित्ताः पञ्च नाड्यः कथितास्तथा अत्रापीत्यर्थः ॥

जिस प्रकार नाडीव्रणमें वात, पित्त, कफ, सन्निपात और आगन्तु उत्पन्न हुई पाच प्रकारकी नाडी कही हैं, ऐसेही पाच प्रकारकी नाडी दातके मसूढोंमें कही हैं इसकारण इनके लक्षण नाडीव्रणाधिकारमें कहे अनुसार जानने ॥ ३७ ॥

### अथ दन्तविद्रधिलक्षणम् ।

दन्तमांसमलैः सास्रैर्बाह्यतः श्वयथुर्महान् ॥ सदाहरुक्स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥ ३८ ॥

दन्तम समलैर्दन्तवेष्टगतदोषैः सास्रैः सरक्तैर्हेतुभिः ॥

मसूढोंमे स्थित, वात, पित्त, कफ और रुधिर इन दोषोंके कारण वाहर दाह तथा वेदनायुक्त महासूजन उत्पन्न होती है और उसको छेदनेसे राध तथा रुधिर निकलताहै, इस रोगको दन्तविद्रधि कहते हैं ॥ ३८ ॥

### अथ दन्तवेष्टरोगचिकित्सा ।

शीतादे हृतरक्ते त तोये नागरसर्षपान् ॥ निष्काथ्य त्रिफलाश्चापि कुर्याद्गण्डूषधारणम् ॥ ३९ ॥ कासीसलोध्रकृष्णामनःशिलाप्रियंगुतेजोह्वाः ॥ एषां चूर्णं मधुयुक्छीतादे पूतिमांसहरम् ॥ ४० ॥

तेजोह्वा तेजवल्कल इति लोके ॥

तैलं घृतं वा वातघ्नं शीतादे सम्प्रशस्यते॥ दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम् ॥ ४१ ॥ सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम् ॥ शिरोविरेकश्च हितो नस्यं स्निग्धश्च भोजनम् ॥ ४२ ॥ विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत्॥ पतङ्गलोध्रमधुकलाक्षाचूर्णैर्मधुप्लुतः ॥ ४३ ॥

प्रतिसारयेदङ्गुल्या घर्षयेत् ॥ पतङ्गश्चोक इति लोके ॥

गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥ चलदन्तस्थिरकरं कार्यं बकुलचर्वणम् ॥ ४४ ॥

शीतादरोग हुआ होय तो रुधिर निकलवाकर पश्चात् जलमें सोंठ, सरसों, हरड, बहेडा और आमले इनका काथ बनाकर उस क्वाथके कुल्ले धारण करे ।

हीरा कसीस, लोध, पीपल, मैनशिल, फूलप्रियगू, और तेजवल इनका चूर्ण बनाकर सहतमें मिलाकर उपयोग करे तो शीतादसे सडा हुआ मांस दूर होजाताहै ।

वायुको हरनेवाले तेलका और घीका उपयोग करनेसे शीताद रोग नष्ट होताहै ।

दन्तपुप्पुटरोग उत्पन्न होय तो तत्कालही उसमेंसे रुधिर निकलवावे ॥

पांचो निमकके साथ जवाखारको सहतमें मिलाकर प्रतिसारण करे, मस्तकको खाली करनेवाला नास देवे और स्निग्ध भोजन करावे यह परम हितकारक है ॥

दन्तवेष्ट हुआ होय तो उसमेंसे रुधिर निकाल कर उस व्रणके ऊपर अगुलीसे लोध, पतग, मुलैठी, और लाख इनके चूर्णको सहतमें मिलाकर खूब घिसे।

वटादि पंचक्षीरी वृक्षोंका क्वाथ बनाकर उसमे सहत, घी तथा मिश्री डालकर उससे कुल्ले करे और मौलसरीकी छालको चर्वण करे तो हिलते हुए दांत स्थिर होजातेहै ॥ ३९-४४ ॥

**अथ मुस्तादिवटिका।**

**भद्रमुस्ताभयाव्योषविडंगारिष्टपल्लवैः ॥ गोमूत्रपिष्टैर्गुटिकां छायाशुष्कां प्रकल्पयेत् ॥ ४५ ॥ तां निधाय मुखे सुप्याच्चलदन्तातुरो नरः॥ नातः परतरं किञ्चिच्चलदन्तस्य भेषजम् ॥ ४६ ॥**

नागरमोथा, हरड, सोंठ, मिरच, पीपल, वायविडग और नीमके पत्ते इनको गोमूत्रमें पीसकर गोली बनाकर छायामें सुखावे। इन गोलियोंको मुखमें रखकर सो जावे तो हिलते हुए दांत स्थिर होजाते हैं। हिलते हुए दांतोंवाले मनुष्यके लिये इस औषधिसे अधिक अन्य औषधि फलदायक नहीं है। यह गोली मुस्तादिवटिका कही जातीहै ॥ ४५ ॥ ४६ ॥

**अथ सहचराद्यतैलम्।**

**तुलाघृतं नीलसहाचरन्तु द्रोणाम्भसा संश्रपयेद्यथावत् ॥ ततश्चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रमाणैः ॥ ४७ ॥ कल्कैरनन्ताखदिरैरिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम्॥ तत्तैलमाज्यश्च घृतं मुखेन स्थैर्यं द्विजानां विदधाति सद्यः ॥ ४८ ॥**

**नीलसहाचरः (नीलपुष्पकटसरैया)। अनन्ता दुरालभा तदलाभे यवासो ग्राह्यः। इरिमेदो दुर्गन्धखदिरः ॥**

नीले फूलका पियावासा ४०० चारसौ तोले लेकर १०२४ एकहजार चौबीस तोले जलमें पकावे, जब पकते पकते चौथाई भाग जल बाकी रहजाय तब उसमे धमासा, खैर, दुर्गंधित खैर, जामुनके पत्ते, आमके पत्ते, मुलैठी और कमल यह प्रत्येक पदार्थ दो दो तोले लेकर कल्क बना उसमें डालकर उसमे तेल अथवा घीको धीरे धीरे पकावे, जो धमासा न मिले तो जवासा ले लेवे, इस तेलको अथवा घीको मुखमे रखनेसे इससे तत्काल दांत स्थिर होजातेहैं। यह तेल अथवा घी सहचराद्य कहा जाताहै ॥ ४७ ॥ ४८ ॥

**सौषिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः ॥ सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥ ४९ ॥ क्रियां परिदरे कुर्याच्छीतादोक्तां विचक्षणः॥ संशोध्योभयतः कार्याः शिराश्चोपकुशे तथा ॥ ५० ॥**

सौषिर उत्पन्न हुआ होय तो उसमेंसे रुधिर निकलवाकर पश्चात् लोध, नागरमोथा और रसौत इनके चूर्णको सहतमे मिलाकर लेपकरे और बड आदि क्षीरी वृक्षोंके क्वाथका कुल्लाकरे। परिदर हुआ होय तो विचक्षण वैद्य शीतादकी समान चिकित्सा करे ॥ ४९ ॥ ५० ॥

**कोष्ठोदुम्बरिकापत्रैर्व्रणं विस्रावयेद्भिषक् ॥ लवणैः क्षौद्रयुक्तैश्च सव्योषैः प्रतिसारयेत् ॥ ५१ ॥**

उपकुश हुआ होय तो प्रथम संशोधन करके पश्चात् दोनो तरफ मुख करे, व्रणोंका कठूमरके पत्तोंसे राध और रुधिर निकलवाकर पांचो निमक, सोंठ, काली मिर्च, तथा पीपल इनको सहतमे मिलाकर प्रतिसारण करे ॥ ५१ ॥

**शस्त्रेणोद्धृत्य वैदर्भे दन्तमूलानि शोधयेत् ॥ ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥ ५२ ॥**

वैदर्भ हुआ होय तो उसको शस्त्रसे चीरकर मसूढोंको शुद्धकरे, फिर क्षार लगावे और सम्पूर्ण शीतल क्रिया करे ॥ ५२ ॥

**उद्धृत्याधिकदन्तं तु ततोऽग्निमवचारयेत्॥ कृमिदन्तकवच्चात्र विधिः कार्यो विजानता ॥ ५३ ॥**

अधिवर्द्धन हुआ होय तो अधिक दातको उखाडकर फिर अग्निसे दाग देवे और कृमिदत नामक रोगके लिये जो चिकित्सा कही है वह सब करनी चाहिये ॥ ५३ ॥

छित्त्वाधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत्॥ वचातेजोवतीपाठास्वर्जिकायावशूकजैः ५४ तेजोवती तेजोवल्कलः स्वर्णजीवन्ती च॥ क्षौद्रद्वितीयाः पिप्पल्यः कवले चात्र कीर्तिताः ॥ ५५ ॥ पटोलनिम्बत्रिफला-कषायश्चात्र धावने ॥ नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् ॥ ५६ ॥

अधिमासक- हुआ होय तो उसको चीरकर वच, तेजबल, पाढ, सज्जी और जवाखार इनके चूर्णको सहतमें मिलाकर इसका उपयोग करे । पीपलके चूर्णको सहतमें मिलाकर इसका उपयोग करे । पीपलके चूर्णको सहतमें मिलाकर उसका कवल धारण करे और धोनेके लिये कडवे परवल, नीम और त्रिफलेका क्वाथ प्रयोग करे॥५४-५६

यद्दन्तमध्ये जायेत नाडीदन्तं तदुद्धरेत् ॥ ॥ ५७ ॥ क्षिप्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत् ॥ उद्धृत्य च दहे-च्चापि क्षारेण ज्वलनेन वा ॥ ५८ ॥ छिन-स्युपेक्षिते दन्ते हनुमस्थिगतिर्ध्रुवम् ॥ समूले दशनं तस्मादुद्धरेद्भग्नमस्थि च ॥ ॥ ५९ ॥ उद्धृते तूत्तरे दन्ते शोणितं प्रस्र-वेदति ॥ रक्तातियोगात्पूर्वोक्ता घोरा रोगा भवन्ति हि ॥ ६० ॥ काणः सञ्जा-यते जन्तुरर्दितं तस्य जायते ॥ चलम-प्युत्तरं दन्तमतो नैवोद्धरेद्भिषक् ॥ धावनं जातिमदनस्वादुकण्टकखादिरैः ॥ ६१ ॥ कषायैरिति शेषः ॥

सब प्रकारकी दन्तनाडियोंमें नाडीव्रणकी समान चिकित्सा करनी चाहिये ।

जो [illegible] नाडी होय तो दातके मसूढेको [illegible] किन्तु [illegible] दातको न उखाडे [illegible] दांतके लिये [illegible] है । दातको उखा-डकर उसके ऊपर क्षार बुरकावे अथवा अग्निसे दाग देवे इस दातके उपेक्षा करनेसे अवश्य ठोडीकी हड्डीमें राध निकलने लगतीहै जिससे वह हड्डी नष्ट होजातीहै, इस-कारण दातको जड सहित उखाड डाले और टूटी हुई हड्डीको भी निकाल डाले । जो ऊपरकी पंक्तिका दांत उखाडे तो रुधिरका अत्यन्त स्राव होताहै । रुधिरके अति-योगसे पूर्वोक्त भयकर रोग उत्पन्न होते हैं, काणापन और अर्दितरोग होताहै अत एव जो ऊपरका दात हिलता भी होय तो भी वैद्य उसको उखाडे नहीं ॥ ५७-६१ ॥

## अथ जात्यादितैलम् ।

कषायैर्जातिमदनकण्टकीस्वादुकण्टकैः ॥ ॥ ६२ ॥ मञ्जिष्ठालोध्रखदिरयष्ट्याह्वै-श्चापि यत्कृतम् ॥ तैलं यत्साधितं तत्तु हन्याद्दन्तगतां गतिम् ॥ ६३ ॥

जात्यादिचतुष्टयस्य कषायेण मञ्जिष्ठा-दिचतुष्टयस्य च कषायेण तैलमिदं पचेत् । जाती चम्बेली इति लोके । तस्याः पत्रं ग्राह्यम् । मदनो धत्तूरस्तस्यापि पत्रमत्र ग्राह्यम् । कण्टकी ( बडीकटैया ) तस्याः मूलं ग्राह्यम् । स्वादुकण्टको गोक्षुरस्तस्य पञ्चाङ्गं ग्राह्यम् ॥

विद्रध्युक्तं विधिं युक्तं विदध्याद्दन्तविद्र-धौ ॥ शस्त्रकर्म नरस्तत्र कुशलो नैव कारयेत् ॥ ६४ ॥

चमेलीके पत्ते, धतूरेके पत्ते, कटेरीकी जड और गोखु-रुका पञ्चांग इनके क्वाथमें तथा खैर, मजीठ, लोध और मुलैठी इनके क्वाथमें पकाया हुआ तेल ' जात्यादि तैल ' कहाजाताहै, यह तेल दातके नासूरको दूर करदेताहै॥ दंतविद्रधिरोगमें विद्रधिरोगोक्त चिकित्सा करे, किन्तु शस्त्र क्रिया न करे ॥ ६२-६४ ॥

## अथ दंतरोगाणां नामानि संख्या च ।

दालनः कथितः पूर्वं कृमिदन्तक एव च॥ प्रोक्तो भञ्जनको दन्तहर्षो वै दन्तशर्करा ॥ ६५ ॥ कपालिकात्र कथिता श्यावद-

न्तक एव च ॥ करालसंज्ञ इत्यष्टौ दन्तरोगाः प्रकीर्तिताः ॥ ६६ ॥

दालन, कृमिदंतक, भजनक, दंतहर्ष, दंतशर्करा, कपालिका, श्यावदंतक, और कराल इस प्रकार दांतोमे आठ रोग होतेहैं ॥ ६५ ॥ ६६ ॥

## अथ दालनलक्षणम्।

दीर्यमाणेष्विव रुजा यत्र दन्तेषु जायते॥ दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥ ६७ ॥

दांत विदीर्णसे होते हों अर्थात् चिरेसे जातेहों ऐसी पीडा हो, इसको दालन कहतेहैं यह रोग वायुके प्रकोपसे होताहै ॥ ६७ ॥

## अथ कृमिदंतलक्षणम्।

कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः ॥ अनिमित्तरुजो वातात्स ज्ञयो कृमिदन्तकः ॥ ६८ ॥

संरम्भः दन्तमूलशोथयुक्तः। तत्रैव स्रावो बोद्धव्यः। अनिमित्तरुजः अवघट्टनादिनिमित्तं विनैव महारुजावान् ॥

दांतोंमें काले छिद्र होजॉय, खुजली हो, मसूढोंमे सूजन हो, स्राव हो, बहुत पीडा और विनाही कारण वेदना होय इस रोगको कृतिदंत कहतेहैं यह रोग वायुके प्रकोपसे होताहै ॥ ६८ ॥

## अथ भंजनकलक्षणम्।

वक्रं वक्रं भवेद्यत्र दन्तभङ्गश्च जायते॥ कफवातकृतो व्याधिः स भञ्जनकसंज्ञकः॥६९

जिसमे मुख टेढा होजाय और दांत टूटकर गिरने लगें, उसको भजनक कहतेहैं. यह रोग कफ और वायुके प्रकोपसे होताहै ॥ ६९ ॥

## अथ दंतहर्षलक्षणम्।

शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः ॥ तत्र स्युर्वातपित्ताभ्यां दन्तहर्षः स कीर्तितः ॥ ७० ॥

दांत शीत, रूक्ष, प्रबल वायु और खट्टे पदार्थोंके स्पर्शको नही सहसके इस रोगको दंतहर्ष कहतेहै यह रोग वायु तथा पित्तके प्रकोपसे होताहै ॥ ७० ॥

## अथ दंतशर्करालक्षणम्।

मलो दन्तगतो यस्तु कफश्चानिलशोषितः ॥ शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥ ७१ ॥

शर्करा सिकता ॥

दांतोमे रहनेवाला मैल वायुसे सूख जाय और कफ सूखा या कफ रेतेकी समान खरखरा होजाय इस रोगको दंतशर्करा कहतेहैं ॥ ७१ ॥

## अथ कपालिकालक्षणम्।

कपालेष्विव दीर्यत्सु दन्तेषु समलेषु च ॥ कपालिकेति विज्ञेया दन्तच्छिद्दन्त शर्करा ॥ ७२ ॥

कपालानि मृन्मयघटादिखण्डानि तेष्विव समलेषु दन्तेषु मलसहितदन्तावयवेषु दीर्यत्सु सत्सु या दन्तशर्करा सा कपालिकेति विज्ञेया सा कपालिका दन्तच्छिद्दन्तनाशिनी ॥

मैलसहित दांतोके अवयव मट्टीके खपरेकी समान फटने लगें और उपरोक्त दंतशर्करा भी होय तो इस रोगको कपालिका कहतेहैं यह कपालिकारोग दातोको तोडकर नाश करदेताहै ॥ ७२ ॥

## अथ श्यावदंतलक्षणम्।

योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः ॥ श्यावतां नीलतां वापि गदः स श्यावदन्तकः ॥ ७३ ॥

दग्धः दग्ध इव ॥

रुधिरसहित पित्तसे जले हुएकी समान जो दॉत सर्वथा काले अथवा नीले होजॉय तो इस रोगको श्यावदंतक कहतेहैं ॥ ७३ ॥

## अथ करालक्षणम्।

शनैः शनैः प्रकुरुते यत्र दन्ताश्रितोऽनिलः ॥ करालान्विकटान्दन्तान्स करालो न सिध्यति ॥ ७४ ॥

करालान् भयानकान् अयं सुश्रुतेनोक्तः संग्रहकारेण च ॥

दातोंमे प्राप्त हुई वायु धीरे धीरे दातोको भयानक

और विकटकर देवै तो इस रोगको कराल कहतेहैं ॥ ७४ ॥

## अथ दंतरोगचिकित्सा ।

### तत्र लाक्षाद्यतैलम् ।

तैलं लाक्षारसं क्षीरं पृथक्प्रस्थमितं पचेत् ॥ द्रव्यैः पलमितैरेतैः क्वाथैश्चापि चतुर्गुणैः ॥ ७५ ॥ लोध्रकट्फलमञ्जिष्ठापद्मकेसरपद्मकैः ॥ चन्दनोत्पलयष्ट्याह्वैस्तत्तैलं वदने धृतम् ॥ ७६ ॥ दालनं दन्तचालं च दन्तमोक्षं कपालिकाम् ॥ शीतादं पूतिवक्त्रश्च विरुचिं विरसास्यताम् ॥ ७७ ॥ हन्यादाशु गदानेतान्कुर्याद्दन्तानपि स्थिरान् ॥ लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ॥ ७८ ॥

लाखका रस ६४ तोले, दूध ६४ तोले और लोध, कायफल, मजीठ, कमलकी केसर, पद्माख, चदन, लाल कमल और मुलैठी इनका चौगुना क्वाथ इनमें येही लोध आदि औषधि प्रत्येकका चार चार तोले कल्क डालकर इसग ६४ तोले तेलको पकावे यह 'लाक्षाद्यतैल, सिद्ध होताहै । इस तेलको मुखमे रखनेसे दालन, दांतोका हिलना, दातोका गिरना, कपालिका, शीताद, पूतिवक्त्र, अरुचि और मुखकी विरसता यह रोग तत्काल नष्ट होजाते हैं और दानभी स्थिर होजाते है। यह लाक्षाद्यतैल दांतोके रोगोंपर बहुत उत्तम गिनाजाताहै ॥ ७५–७८ ॥

जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम् ॥ तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥ ७९ ॥ भद्रदार्व्यादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ॥ कृमिदन्तापहं कोष्णं हिंगु दन्तान्तरे स्थितम् ॥ ८० ॥

स्थिरपनेको प्राप्त हुए कृमिदन्तनामक रोगको स्वेदन [illegible] रुधिर निकलवावे । वातनाशक अवपीडोंसे, स्नेहके [illegible] धारण करनेसे, भद्रदारु आदि गणके तथा पुनर्नवेके [illegible] और [illegible] भोजनोंसे दूर करे ।

[illegible] गरम करके दातके बीचमे अर्थात् [illegible] दातोंसे कृमिदन्तक दूर होजाताहै ॥७९॥८०॥

बृहतीभूमिकदम्बं पञ्चांगुलकण्टकारिकाक्वाथः ॥ गण्डूषस्तैलयुतः कृमिदन्तवेदनाशमनः ॥ ८१ ॥

कटाई, भूमिकदम्ब, सफेदएरंड और कटेरी, इनका क्वाथ बनाकर उसमे तेल मिलाकर उसके कुल्हे करनेसे कृमिदंतकी पीडा शांत होजातीहै ॥ ८१ ॥

नीलीवायसजंघाकटुतुम्बीमूलमेकैकम् ॥ सञ्चूर्ण्य दशनविधृतं दशनक्रिमिनाशनं प्राहुः ॥ ८२ ॥

नीली, काकजघा अथवा कडवी तोंबी इन दोनेमिसे किसी एककी जडका चूर्ण बनाकर दातोंमे रखनेसे कृमिदन्तक रोग नष्ट होताहै ॥ ८२ ॥

स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य च ॥ निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥ ८३ ॥

त्रैवृतस्य सर्पिषः त्रिवृतापकस्य सर्पिषः कवल इत्यर्थः ॥

स्नैहिकोऽत्र हितो धूमो नस्यं स्नैहिकमेव च ॥ ८४ ॥ पेया रसा यवाग्वश्च क्षीरसन्तानिकाधृतम् ॥ शिरोवस्तिर्हितश्चापि क्रमो यश्चानिलापहः ॥ ८५ ॥

अत्र दन्तहर्षे ॥

अच्छिद्यन्दन्तमूलानि शर्करामुद्धरेद्भिषक् ॥ लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥ ८६ ॥ दन्तहर्षक्रियां चात्र कुर्यान्निरवशेषतः ॥ कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया मता ॥ ८७ ॥

एषा क्रिया दन्तहर्षक्रिया ॥

फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ॥ तथातिकठिनं भोज्यं दन्तरोगी न भक्षयेत् ॥ ८८ ॥

घृत तैलादि स्नेहोंका सुहाता सुहाता कवल निसोतके कल्कसे पकाये हुए घीका कवल और वातनाशक पदार्थोका क्वाथ दंतहर्ष रोगको दूर करे है ।

दंतहर्ष रोगपर स्नैहिक धूमपान, स्नैहिक नस्य, पेया, रसयुक्त यवागू, दूधकी मलाई, घी. शिरोवस्ति और वातनाशक क्रिया सब हितकारक ।

दंतशर्करा हुआ होय तो वैद्य दांतोंकी जडको नहीं छेदे किंतु दंतशर्कराको शस्त्रसे चीरकर निकाल डाले और फिर सहतमें लाखके चूर्णको मिलाकर प्रतिसारण करे ।

दंतहर्षके लिये जो चिकित्सा कहीं हैं वे सब दंतशर्करापर भी करनी चाहियें । कपालिका नामक दंतरोग यद्यपि अत्यंत कष्टसाध्य है तथापि उसपर दंतहर्षकी समान चिकित्सा करनी चाहिये ।

दंतरोगवाले मनुष्योंको खट्टे पदार्थ, शीतल जल, रूखा अन्न, दतौन और कठिन भक्ष्य नहीं सेवन करना चाहिये ॥ ८३-८८ ॥

## अथ जिह्वारोगाणां निदानं नामानि संख्या च ।

**वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः ॥ उपजिह्विका च गदा जिह्वायां पञ्च कीर्तिताः ॥ ८९ ॥**

वातज, पित्तज, कफज, अलास और उपजिह्विका इस प्रकार जीभके रोग पांच हैं ॥ ८९ ॥

## अथ वातजजिह्वारोगलक्षणम् ।

**जिह्वानिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा ॥ ९० ॥**

**स्फुटिता मनाग्विदीर्णा । प्रसुप्ता रसानामनभिज्ञतया सुप्तेव । शाकच्छदनप्रकाशा शाको मरुभूमिजद्रुमस्तद्दलकण्टकाचिता। अयं लोके जली इति ख्यातः ॥**

जिह्वा कुछेक फटगई होय, खट्टे मीठे रसोंके ज्ञानको नहीं जान सके, और मरुभूमिमें उत्पन्न होनेवाले सागौन वृक्षके पत्तेकी समान कांटोंसे व्याप्त होय तो उसको वातसम्बन्धी जिह्वारोग जानना ॥ ९० ॥

## अथ पित्तजजिह्वारोगलक्षणम् ।

**पित्तात्सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च ॥ ९१ ॥**

दाहसहित, लम्बे और लाल कांटोंसे जीभ व्याप्त होगई होय तो उसको पित्तसे उत्पन्न हुआ जिह्वारोग जानना ९१

## अथ कफजजिह्वारोगलक्षणम् ।

**कफेन गुर्वी बहुला चिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ॥ ९२ ॥**

**बहुला स्थूला। मांसोच्छ्रयैः मांसजकण्टकैः॥**

कफसे जीभ भारी होजाय, मोटी हो, और वह सेमलके कांटोंकी समान कांटोंसे व्याप्त होय तो उसको कफसे उत्पन्न जिह्वारोग जानना ॥ ९२ ॥

## अथालासलक्षणम् ।

**जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्तिः ॥ जिह्वां स तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम् ॥ ९३ ॥**

**प्रगाढः प्रकर्षेण गाढो दारुणः कफरक्तमूर्तिः कफरक्ताभ्यां मूर्तिर्यस्य सः कफरक्तज इत्यर्थः । जिह्वास्तम्भेन वायुरप्यत्र बोद्धव्यः । भृशं पाकेन पित्तश्च अतस्त्रिदोषजोऽयम् असाध्यत्वञ्चास्य ॥**

जीभके नीचे कफ और रुधिरके प्रकोपसे जो अत्यंत दारुण सूजन होय उसको अलास कहतेहैं । यह रोग बढकर जीभको जकड देताहै और इसमे जीभकी जड अत्यत पकजातीहै ।

जिह्वाके स्तम्भन होनेके कारण इस रोगमे वायुका प्रकोप भी होताहै और जिह्वाकी जडके अत्यत पकनेसे पित्तका भी प्रकोप होताहै ऐसा सिद्ध होताहै । इस प्रकार यह रोग तीनो दोष और रुधिरके प्रकोपसे होनेके कारण असाध्य है ऐसा जानाजाताहै ॥ ९३ ॥

## अथोपजिह्विकालक्षणम् ।

**जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तयोनिः॥ प्रसेककण्डूपरिदाहयुक्तः प्रकथ्यतेऽसावुपजिह्विकेति ॥ ९४ ॥**

**जिह्वाग्ररूपः जिह्वाग्राकृतिः ॥**

कफ और रुधिर इन दोनोंके प्रकोपसे सूजन जीभको ऊंची कर देतीहै, जीभ अनीकी समान होतीहै और

लारके गिरनेसे, खुजली तथा दाह युक्त होतीहै इस सूज-नको उपजिह्विका कहतेहैं ॥ ९४ ॥

## अथ जिह्वारोगचिकित्सा ।

जिह्वागतविकारणां शस्तं शोणितमोक्षणम् ॥ गुडूचीपिप्पलीनिम्बकवलः कटुभिः सुखः ॥ ९५ ॥ ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक्चिकित्सितम् ॥ कण्टकेष्वनिलोत्थेषु तत्कार्यं भिषजा खलु ॥ ९६ ॥ पित्तजे परिघृष्टे तु निःसृते दुष्टशोणिते ॥ प्रतिसारणगण्डूषनस्यश्च मधुरे हितम् ॥९७॥ कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये॥ पिप्पल्यादिर्मधुयुतः कार्यस्तु प्रतिसारणे ॥ ९८ ॥ उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत् ॥ शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥ ९९ ॥ व्योषक्षाराभयावह्निचूर्णमेतत्प्रघर्षणम् ॥ उपजिह्वाप्रशान्त्यर्थमेभिस्तैलञ्च पाचयेत् ॥ १०० ॥

जिह्वागत रोगोंमें प्रथम रुधिर निकलावे, और गिलोय, नीम और पीपल इनका तीखे पदार्थोंके साथ कवल धारण करे यह हितकारक है ।

वातज ओष्ठरोगमें प्रथम जो चिकित्सा कही है वही चिकित्सा वातसे उत्पन्न जीभके कांटोंपर करनी चाहिये ।

जो पित्तजन्य जिह्वारोग होय तो उसको घिसकर दूषित रुधिरको निकालकर पश्चात् मधुर प्रतिसारण, मधुर कवल, और मधुर नस्य यह सब प्रयोग करे यह हितकारी है ।

जो कफसे जिह्वाके ऊपर कांटे हुए होयँ तो उन कांटोंको घसकर रुधिर निकल्वाकर फिर पिप्पल्यादिगणकी औषधियोंमें सहतमें उसका प्रतिसारण करे ।

उपजिह्वा होय तो उसको कतरकर क्षारसे प्रतिसारण करे और शिरोविरेचन गण्डूष तथा धूम्रपान इनसे उपचार करे ।

सोंठ, मिरच, पीपल, जवाखार, हरड़, और चीता इन चूर्णको घिसनेसे अथवा इस चूर्णके कल्कमें तेलको पकाकर कुल्ले करनेसे उपजिह्वा नाश होजातीहै ॥९५-१००॥

## अथ तालुरोगाणां नामानि संख्या च ।

गलशुण्डी तुण्डिकेर्यध्रूषः कच्छप एव च । तात्वर्बुदश्च कथितो मांससंघात एव च ॥ १०१ ॥ तालुपुप्पुटनामा च तालुशोषस्तथैव च ॥ तालुपाकश्च कथितास्तालुरोगा अमी नव ॥ १०२ ॥

गलशुण्डी, तुण्डिकेरी, अध्रुष, कच्छप, तात्वर्बुद, मांससंघात, तालुपुप्पुट, तालुशोष और तालुपाक इसप्रकार तालुवेमें नौ रोग हैं ॥ १०१ ॥ १०२ ॥

## अथ गलशुण्डीलक्षणम् ।

श्लेष्मासृग्भ्यां तालमूलात्प्रवृद्धो दीर्घः शोथो ध्मातवस्तिप्रकाशः ॥ तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना ॥ १०३ ॥

ध्मातवस्तिप्रकाशः वातपूरितचर्मपुटतुल्यः ॥

कफ और रुधिर दोनोंके प्रकोपसे तालुवेकी जड़में बढी हुई, लम्बी, वायुसे भरी हुई मशककी समान और तृषा, खाँसी तथा श्वासको उत्पन्न करनेवाली जो सूजन होतीहै उसको वैद्य गलशुण्डी कहतेहैं ॥ १०३ ॥

## अथ तुण्डिकेरीलक्षणम् ।

शोथः स्थूलस्तोददाहप्रपाकी श्लेष्मासृग्भ्यां कीर्तिता तुण्डिकेरी ॥ १०४ ॥ तुण्डिकेरी वनकार्पासीफलं तत्तुल्या ॥

तालुवेमें कफ और रुधिरके प्रकोपसे स्थूल, तोदने सरीखी पीडा और दाहसहित और पकनेवाली जो सूजन होतीहै उसको वैद्य तुण्डिकेरी कहतेहैं ॥ १०४ ॥

## अथाध्रूषलक्षणम् ।

शोथः स्तब्धो लोहितः शोणितोत्थो ज्ञेयोऽध्रूषः सज्वरस्तीव्ररुक्च ॥ १०५ ॥

रुधिरके प्रकोपसे तालुवेमें स्तब्ध (जड़), लाल, ज्वरसहित, और तीव्र पीडायुक्त जो सूजन होतीहै उसको वैद्य अध्रुष कहतेहैं ॥ १०५ ॥

### अथ कच्छपलक्षणम्।

कूर्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रोगो ज्ञेयः कच्छपः श्लेष्मणः स्यात् ॥ १०६ ॥
कूर्मोत्सन्नः मध्ये प्रोच्चः प्रान्ते नतः ॥

कफके प्रकोपसे तालुवेमें कछुवेकी समान बीचमें ऊंची और चारों ओर नीची और थोडी पीडावाली जो सूजन तत्काल उत्पन्न होतीहै उसको वैद्य कच्छप कहते हैं ॥ १०६ ॥

### अथ ताल्वर्बुदलक्षणम्।

पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्बुदं पित्तलिङ्गम् ॥ १०७ ॥
पद्माकारं पद्मकर्णिकावत्केसरैरिव पार्श्वतो दीर्घैर्मांसांकुरैर्वेष्टितम् ॥

तालुवेके बीचमें रुधिरके प्रकोपसे कमलकी केसरकी समान लम्बे मासके अंकुरोंसे वेष्टित और सम्पूर्ण पित्तके लक्षणोंयुक्त जो सूजन होतीहै उसको वैद्य ताल्वर्बुद कहते हैं ॥ १०७ ॥

### अथ मांससंघातलक्षणम्।

दुष्टं मांसं श्लेष्मणा नीरुजश्च ताल्वन्तस्थं मांससंघातमाहुः ॥ १०८ ॥

कफके प्रकोपसे तालुवेके भीतर पीडारहित जो दुष्टमास एकत्रित होजाताहै उसको 'मांससघात' कहते हैं ॥ १०८ ॥

### अथ तालुपुप्पुटलक्षणम्

नीरुक्स्थायी कोलमात्रः कफात्मा मेदोयुक्तः पुप्पुटस्तालुदेशे ॥ १०९ ॥

कफके प्रकोपके कारण तालुवेमे पीडारहित स्थिर और मेदवाली वेरीके फलकी समान ग्रंथि उत्पन्न होतीहै उसको तालुपुप्पुट कहतेहैं ॥ १०९ ॥

### अथ तालुशोषलक्षम्।

शोषोऽत्यर्थं दीर्यते वापि तालु श्वासो वातात्तालुशोषोऽयमुक्तः ॥ ११० ॥

वायुके प्रकोपसे तालुयेमे अत्यन्त शोप अथवा तालुवा फटने लगे और श्वास भी होय इस रोगको तालुशोष कहतेहैं ॥ ११० ॥

### अथ तालुपाकलक्षणम्।

पित्तं कुर्यात्पाकमत्यर्थघोरं तालुन्येवं तालुपाकं वदन्ति ॥ १११ ॥

पित्तके प्रकोपसे तालु अत्यन्त भयकर प्रकारसे पकजाय इस रोगको तालुपाक कहतेहैं ॥ १११ ॥

### अथ तालुरोगचिकित्सा।

कुष्ठोषणवचासिन्धुकणापाठाप्लवैः सह ॥ सक्षौद्रैर्भिषजा कार्यं गलशुण्डीप्रघर्षणम् ११२
प्लवः केवटी मोथा गुडतजीति लोके ॥

अंगुष्ठांगुलिसन्दंशेनाकृष्य गलशुण्डिकाम् ॥ छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थितम् ॥ ११३ ॥
मण्डलाग्रेण शस्त्रविशेषेण ॥

अत्यादानात्स्रवेद्रक्तं ततः सम्म्रियते नरः ॥ हीनच्छेदाद्भवेच्छोथो लालास्रावो भ्रमस्तथा ॥ ११४ ॥ तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः ॥ गलशुण्डीं तु सञ्छिद्य कुर्यात्प्राप्तमिमं क्रमम् ॥ ११५ ॥ पिप्पल्यतिविषाकुष्ठवचामरिचनागरैः ॥ क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ११६॥ वचामतिविषापाठारास्नाकटुकरोहिणीः ॥ निष्काथ्य पिचुमर्दश्च कवलं तत्र कारयेत्॥ ॥ ११७ ॥ तुण्डिकेर्यध्रूषे कूर्मे सङ्घाते तालुपुप्पुटे ॥ एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि ॥ ११८ ॥ तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ॥ स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ ११९ ॥

कूठ, कालीमिरच, वच, सैंधानिमक, पीपल और पाढ तथा केवटीमोथा इनके चूर्णको सहतमे मिलाकर घिसनेसे गलशुण्डी नष्ट होजातीहै।

जो गलशुण्डी जीभपर होय तो अंगूठे और अगुलीरूपी संडासीसे उसको खींचकर मंडलाग्र नामक तलवारकी समान शस्त्रसे काट देवे। जो गलशुण्डीका अति छेदन हो जाय तो रुधिरके अत्यन्त स्राव होनेसे मनुष्य मरजाताहै और कम छेदन होय तो सूजन, लारका गिरना, तथा भ्रम

होताहै इसकारण जिसने छेदनेकी बहुतसी क्रिया देखी होंय ऐसा प्रवीण वैद्य बहुत सभालकर गलशुण्डीको काटकर पीछे पीपल, अतीस, कूठ, कालीमिरच, वच और सोंठ, इनके चूर्णको सहतमें मिलाकर उसमें सैंधानिमक डालकर उससे प्रतिसारण करे। तथा वच, अतीस, पाढ, रासना, कुटकी और नीम इनको औटाकर इसका कवल धारण करे।

तुडिकेरी, अध्रूष, कच्छप, मांससघात और तालुपुप्पुट इनपर भी यह चिकित्सा करे किंतु इनपर शस्त्रक्रिया कुछ बदल करके करे।

तालुपाक होय तो पित्तको नष्ट करनेवाली चिकित्सा करे।

तालुशोष होय तो स्नेहन, स्वेदन और वातनाशक अन्यान्य क्रिया भी करे ॥ ११२–११९ ॥

## अथ गलरोगाणां नामानि संख्या च ।

**रोहिणी पञ्चधा प्रोक्ता कण्टशालूक एव च ॥ अधिजिह्वश्च वलयो बलासश्चैकवृन्दकः ॥ १२० ॥ ततो वृन्दः शतघ्नी च शिलायुः कण्ठविद्रधिः ॥ गलौघश्च स्वरघ्नश्च मांसतानस्तथैव च ॥ १२१ ॥ विदारी कण्ठदेशे तु रोगा अष्टादश स्मृताः ॥ १२२ ॥**

पाच प्रकारकी रोहिणी, कंठशालूक, अधिजिह्व, वलय, बलास, एकवृन्दक, वृन्द, शतघ्नी, शिलायु, कंठविद्रधि, गलौघ, स्वरघ्न, मांसतान और विदारी इसप्रकार गलेके रोग अठारह १८ हैं ॥ १२०–१२२ ॥

## अथ रोहिण्याः सनिदानप्राप्तिः ।

**गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसञ्च तथैव शोणितम् ॥ गलोपसंरोधकरैस्तथांकुरैर्निहन्त्यसून्व्याधिरयं च रोहिणी ॥ १२३ ॥**

**गले अनिलः वृद्धः तथा पित्तकफौ मूर्च्छितौ दुष्टौ मांसं शोणितं च प्रदूष्य तथा गलोपसंरोधकरैरसून्निहन्ति । अयं व्याधिः रोहिणीसंज्ञो ज्ञेयः । सर्वा रोहिण्यस्त्रिदोपजा उत्कर्षात्तु वातादिव्यपदेशः ॥**

गलेमें वृद्धिको प्राप्त हुआ वायु अथवा वृद्धिको प्राप्त हुआ पित्त, अथवा वृद्धिको प्राप्त हुआ कफ अथवा वृद्धिको प्राप्त हुए तीनों दोष अथवा वृद्धिको प्राप्त हुआ रुधिर मास तथा रुधिरको दूषित करके गलेको अवरोध करनेवाले अकुरोंसे प्राणोंका नाशकरेहै। इस रोगको रोहिणी कहतेहैं ॥ १२३ ॥

## अथ वातजरोहिणीलक्षणम् ।

**जिह्वासमन्तादृशवेदनास्तु मांसांकुराः कण्ठनिरोधनाः स्युः ॥ सा रोहिणी वातकृता प्रदिष्टा वातात्मकोपद्रवगाढजुष्टा ॥ १२४ ॥**

**जिह्वासमन्ताज्जिह्वायाः सर्वतः वातात्मकोपद्रवगाढजुष्टा कंपविनामस्तम्भादिभिरतिशयेन युक्ता ॥**

जीभके चारो ओर अत्यन्त वेदनावाले और गलेको रोकनेवाले मांसके अकुर होतेहैं और उनके साथ वातसम्बन्धी स्तब्धता आदि उपद्रव भी होतेहैं। यह वातसे उत्पन्न रोहिणी कहीजातीहै ॥ १२४ ॥

## अथ पित्तजरोहिणीलक्षणम् ।

**क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजाता ॥ १२५ ॥**

गलेमें मांसके अकुर तत्काल उत्पन्न होजायँ, उनमें तत्काल दाह हो, तत्काल पकजाँय और तीव्र ज्वर होजाय इसको पित्तज रोहिणी कहतेहैं ॥ १२५ ॥

## अथ कफजरोहिणीलक्षणम् ।

**स्रोतोनिरोधिन्यपि मन्दपाका गुर्वी स्थिरा सा कफसम्भवा तु ॥ १२६ ॥**

**स्रोतोऽत्र कण्ठस्रोतः ॥**

गलेकी शिराओंको रोककर गलेमें मांसके अंकुर उत्पन्न होतेहैं और वह मद मंद पकतेहैं. भारी होतेहैं, स्थिर होतेहैं, इसको कफजा रोहिणी कहतेहैं ॥ १२६ ॥

## अथ त्रिदोषजरोहिणीलक्षणम् ।

**गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गा त्रिभवा भवेत्सा ॥ १२७ ॥**

गलेमे उपरोक्त तीनो दोषोंके लक्षणोवाले, गम्भीर पकनेवाले और कठिनतासे आराम होनेवाले ऐसे मासके अकुर उत्पन्न होंय यह त्रिदोषसे उत्पन्न रोहिणी कही जाती है ॥ १२७ ॥

## अथ रक्तजरोहिणीलक्षणम्।

**स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु ॥ १२८ ॥**

फुडियोंसे व्याप्त और पित्तके लक्षणोवाली जो रोहिणी होतीहै उसको वैद्य रुधिरजन्य रोहिणी कहतेहैं यह रोहिणी साध्य है ॥ १२८ ॥

## अथ रोहिणीमरणावधिः।

**सद्यस्त्रिदोषजा हन्ति त्र्यहात्कफसमुद्भवा ॥ पञ्चाहात्पित्तसम्भूता सप्ताहात्पवनोत्थिता ॥ १२९ ॥**

तीनो दोषोसे उत्पन्न रोहिणी तत्काल मारदेती है, कफसे उत्पन्न रोहिणी तीन दिनमें मार देतीहै, पित्तजन्य रोहिणी पांच दिनमे मार देतीहै और वातजन्य रोहिणी सात दिनमे मारदेती है ॥ १२९ ॥

## अथ कंठशालूकलक्षणम्।

**कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः ॥ खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवंति ॥ १३० ॥**

**कण्टकशूकभूतः कण्टकवत् शूकवच्च वेदनाजनकः ॥**

गलेमे काटेकी समान तथा धानकी अनीकी समान वेदना उत्पन्न करनेवाले, खरखरे, कठिन, बेरकी गुठली की समान और शस्त्रकाट्य ऐसी जो ग्रंथि होय उनको कंठशालूक कहतेहैं, यह ग्रंथि कफके प्रकोपसे होतीहै। यह शस्त्रके चीरनसे साध्य है ॥ १३० ॥

## अथाधिजिह्वकलक्षणम्।

**जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वोपरिष्टादसृजैव मिश्रात् ॥ ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम् ॥ १३१ ॥**

**असृजा मिश्रादेवेत्यन्वयः ॥**

जीभके ऊपर जीभकी अणीकी समान जो सूजन होतीहै उसको अधिजिह्वक कहतेहैं, यह सूजन जो पकजाय तो इसकी चिकित्सा नहीं करनी चाहिये यह रोग रुधिर मिश्रित कफके प्रकोपसे होताहै ॥ १३१ ॥

## अथ वलयलक्षणम्।

**बलास एवायतमुन्नतञ्च शोथं करोत्यन्नगतिं निवार्य ॥ तं सर्वथैवाप्रतिवार्यमेव विवर्जनीयं वलयं वदन्ति ॥ १३२ ॥**

प्रकोपको प्राप्त हुआ कफ अन्नकी गतिको रोककर गलेमे लम्बी तथा ऊंची सूजनको उत्पन्न करे इसको वलय कहतेहैं। यह रोग किसी प्रकार भी दूर नहीं होता इस लिये इसकी चिकित्सा नही करनी चाहिये ॥ १३२ ॥

## अथ बलासलक्षणम्।

**गले तु शोथं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम्॥ मर्मच्छिदं दुस्तरमेनमाहुर्बलाससंज्ञं भिषजो विकारम्॥१३३॥**

**मर्मच्छिदं हृदयमर्मणि छेदेनेव वेदनाजनकम् ॥**

वृद्धिको प्राप्त हुए कफ तथा वायु यह गलेमें श्वास पीडासहित और हृदयके मर्मस्थलमें छेदन करनेवाली ऐसी व्यथाको उत्पन्न करनेवाली जो सूजन होतीहै इसको बलास कहतेहैं, वैद्यलोग कहतेहैं कि यह रोग दुस्तर है ॥ १३३ ॥

## अथैकवृन्दलक्षणम्।

**वृत्तोन्नतोऽन्तः श्वयथुः सदाहः सकण्डुरोऽपाक्यमृदुर्गुरुश्च ॥ नाम्नैकवृन्दः परिकीर्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥ १३४ ॥**

**अन्तः गलमध्ये अपाकी ईषत्पाकी। अमृदुः ईषन्मृदुः ॥**

कफ और रुधिरके प्रकोपसे गलेमे गोल, नवी हुई, दाह और खुजली सहित कुछेक पकनेवाली, कुछ कोमल और भारी सूजन उत्पन्न होतीहै इस रोगको वैद्य एकवृन्द कहतेहैं ॥ १३४ ॥

## अथ वृंदलक्षणम् ।

समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति ॥ तं चापि पित्तक्षतजप्रकोपाद्विद्यात्सतोदं पवनात्मकं तु ॥ १३५ ॥

पित्त और रुधिरके प्रकोपसे अत्यत ऊची, गोल, अत्यंत दाहवाली और तीव्र ज्वरवाली जो सूजन होतीहै वैद्य इसको वृंद कहतेहैं । इसमे यदि शूल होय तो वातसम्बन्धी जानना ॥ १३५ ॥

## अथ शतघ्नीलक्षणम् ।

वर्तिर्घना कण्ठनिरोधनी तु चितातिमात्रं पिशितप्ररोहैः ॥ अनेकरुक्प्राणहरी त्रिदोषाज्ज्ञेया शतघ्नीसदृशी शतघ्नी॥१३६॥

घना कठिना। अनेकरुक् वातपित्तकफजतोददाहकण्ड्वादियुक्ता शतघ्नीसदृशी लौहकण्टकसञ्छन्ना शतघ्नी महती शिला तत्तुल्या यतः प्राणहरी ॥

वात, पित्त तथा कफसे उत्पन्न होनेवाली व्यथा, दाह और खुजली आदि विकारोंवाली, कठिन, मासके अङ्कुरोंसे अत्यंत व्याप्त और कठको रोकनेवाली जो वत्ती उत्पन्न होतीहै उसको शतघ्नी कहतेहैं । यह वत्ती त्रिदोषके प्रकोपसे उत्पन्न होनेके कारण शतघ्नी ( लोहेके कांटोंसे ढकीहुई बडी भारी शिला ) की समान होतीहै इसकारण इसको 'शतघ्नी' कहतेहैं ॥ १३६ ॥

## अथ गलायुलक्षणम् ।

ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्परुक्स्यात्कफरक्तमूर्तिः ॥ संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गलायुसंज्ञः ॥ १३७ ॥

कफ और रुधिरके प्रकोपसे गलेमें आमलेकी गुठलीकी समान, स्थिर, अल्प वेदनावाली और भोजन किया अन्न मानों अटकासा मालूम होय ऐसी ग्रंथि उत्पन्न होय इसको वैद्य गलायु कहतेहैं । यह रोग शस्त्र क्रियासे दूर होताहै ॥ १३७ ॥

## अथ कंठविद्रधिलक्षणम् ।

सर्वं गलं व्याप्य समुत्थितो यः शोफो रुजः सन्ति च यत्र सर्वाः ॥ स सर्वदोषैर्गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजश्च ॥ १३८ ॥

सम्पूर्ण दोषोंके प्रकुपित होनेसे सर्व प्रकारकी वेदनावाली और सम्पूर्ण गलेमें व्याप्त होकर जो सूजन उत्पन्न होतीहै उसको कंठविद्रधि कहतेहैं, यह कंठविद्रधि त्रिदोषजन्य विद्रधिकी समान है ॥ १३८ ॥

## अथ गलौघलक्षणम् ।

शोथो महान्यस्तु गलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता ॥ कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्तितोऽसौ ॥ १३९ ॥

वायुगतेर्निहन्ता उदानवायुगतिरोधकः ॥

कफ और रुधिरके प्रकोपसे गलेमे अन्न तथा जलको रोकनेवाली, उदान वायुकी गतिको हरनेवाली और तीव्र ज्वरवाली जो बडी सूजन उत्पन्न होतीहै उसको गलौघ कहतेहैं ॥ १३९ ॥

## अथ स्वरघ्नलक्षणम् ।

यस्ताम्यमानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः ॥ कफोपदुष्टेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात्स्वरघ्नः ॥ १४० ॥

ताम्यमानः तमः पश्यन् शुष्कविमुक्तकण्ठः शुष्को विमुक्तोऽस्वाधीनः कण्ठो यस्य सः । अस्वाधीनता भक्तं गिलितमशक्यत्वादनिलायनेषु वायुवर्त्मसु । श्वसनाद्वातात् ॥

वायुके मार्ग कफसे दुष्ट होकर अंधकार दीखे, वारवार हॉंफनी आवे, गला सूखजाय तथा अन्नादि निगलनेको असमर्थ होय और स्वर बिगड जाय इस रोगको वैद्य स्वरघ्न कहतेहैं, यह रोग वायुके प्रकोपसे होताहै ॥ १४० ॥

### अथ मांसतानलक्षणम्।

प्रतानवान्यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण ॥ स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्वकृतो विकारः ॥ १४१

प्रतानवान् विस्तारवान्। सुकष्टः अतिशयितं कष्टं यत्र सः ॥

गलेमें फैलनेवाली, लटकती और महाकष्ट देनेवाली जो सूजन क्रमक्रमसे गलेको रोक देती है, इस रोगको मांसतान कहते हैं। यह रोग त्रिदोषजन्य होनेके कारण प्राण नाशक है ॥ १४१ ॥

### अथ विदारीलक्षणम्।

सदाहतोदं श्वयथुं सुताम्रमन्तर्गले पूतिविशीर्णमांसम् ॥ पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते ॥ १४२ ॥

स पुरुषो येन पार्श्वेण विशेषाद्बाहुल्येन शेते तस्मिन्पार्श्वे सा विदारी भवतीत्यर्थः ॥

पित्तके प्रकोपसे गलेमे दाह, तीव्र पीडा, अत्यन्त लाल और दुर्गन्धित तथा मांसको फाडनेवाली जो सूजन उत्पन्न होती है उसको विदारी कहते हैं। मनुष्य जिस करवटसे अधिक सोताहै उसी पार्श्वमे यह रोग उत्पन्न होताहै ॥ १४२ ॥

### अथ गलरोगचिकित्सा।

रोहिणीनान्तु साध्यानां हितं शोणितमोचनम् ॥ वमनं धूमपानञ्च गण्डूषो नस्यकर्म च ॥ १४३ ॥ वातजान्तु हृते रक्ते लवणैः प्रतिसारयेत्॥ सुखोष्णान्स्नेहगण्डूषान्धारयेच्चाप्यभीक्ष्णशः ॥ १४४ ॥ विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियंगुभिः ॥ घर्षयेत्कवलो द्राक्षापरूषैः कथितो हितः ॥ १४५ ॥ आगारधूमकटुकैः कफजां प्रतिसारयेत् ॥ १४६ ॥

आगारधूमः कोल इति लोके। कटुकानि शुण्ठीपिप्पलीमरिचानि ॥

श्वेताविडंगदन्तीषु तैलं सिद्धं ससैन्धवम् ॥ नस्यकर्माणि दातव्यं कवलश्च कफोच्छ्रये ॥ १४७ ॥

श्वेता अपराजिता ॥

पित्तवत्साधयेद्वैद्यो रोहिणीं पित्तसम्भवाम् ॥ विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥ १४८ ॥ एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥ उपजिह्वकवच्चापि साधयेदधिजिह्वकम् ॥ १४९ ॥ एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत् ॥ एकवृन्दमिव प्रायो वृन्दश्च समुपाचरेत् ॥ ॥ १५० ॥ गलायुश्चापि यो व्याधिस्तश्च शस्त्रेण साधयेत् ॥ अमर्मस्थं सुसम्पक्वं छेदयेद्गलविद्रधिम् ॥ १५१ ॥

जो रोहिणी साध्य है उसमे रुधिर निकलवाना उत्तम है। वमन, धूमपान, कुल्ला और नस्यक्रिया, यह रोपण रोहिणीके ऊपर करे।

वायुसे उत्पन्न रोहिणी होय तो रुधिर निकलवाकर पश्चात् सैंधानिमक आदि लवणोंसे प्रतिसारण करे और सुहाते सुहाते ऐसे उष्ण स्नेहोंके कुल्लोंको वारंवार धारण करे।

पित्तसे उत्पन्न रोहिणी होय तो उसमेंसे रुधिर निकलवाकर खांड,सहत तथा फूलप्रियंगू इनसे प्रतिसारण करे और दाख तथा फालशेका कवल धारण करे।

कफसे उत्पन्न रोहिणी होय तो घरके धुआंसेकी धूल, सोंठ, मिरच और पीपल इनके चूर्णसे प्रतिसारण करे। सुफेद अपराजिता, वायविडंग और जमालगोटा इनके कल्कसे पकाये हुए तैलमे सैंधानमक डालकर इसका नास देवे और सफेद कोयल, वायविडग तथा जमालगोटा इनका कवल भी धारण करे।

वैद्य पित्तजन्य रोहिणीको पित्तनाशक उपायोंसे शांत करे। कंठशालूक होय तो वैद्य उसमेंसे रुधिर निकलवाकर पश्चात् तुंडिकेरीकी जो चिकित्सा कही है वह

करे और जौका भोजन दिन रातमें एक वार थोडासा स्निग्ध भोजन करे।

अधिजिह्वक होय तो जो चिकित्सा उपजिह्वककी कही है वह सब करे। एकवृन्द होय तो उसमेंसे रुधिर निकलवाकर पश्चात् शोधन विधि करे।

वृन्द होय तो एकवृन्दकी समान अत्युत्तम चिकित्सा करे।

गिलायु होय तो उसको शस्त्रसे काटकर दूर करे।

कण्ठविद्रधि मर्ममें न होय और अच्छे प्रकारसे पक गई होय तो उसका छेदन करे ॥ १४३–१५१ ॥

**अथ गलरोगाणां सामान्यचिकित्सा ।**

**कण्ठरोगेष्वसृङ्मोक्षैस्तीक्ष्णैर्नस्यादिकर्मभिः ॥ चिकित्सकश्चिकित्सान्तु कुशलोऽत्र समाचरेत् ॥ १५२ ॥ क्वाथं दद्याच्च दार्वीत्वङ्निम्बतार्क्ष्यकलिंगकम् ॥ हरीतकीकषायो वा हितो माक्षिकसंयुतः ॥ ॥ १५३ ॥ कटुकातिविषादारुपाठामुस्तकलिंगकाः॥ गोमूत्रक्वथिताः पीताः कण्ठरोगविनाशनाः ॥ १५४ ॥ मृद्वीका कटुका व्योषं दार्वीत्वक् त्रिफला घनम् ॥ पाठा रसाञ्जनं दूर्वा तेजोह्वेति सुचूर्णितम् ॥ १५५ ॥ क्षौद्रयुक्तं विधातव्यं गलरोगे महौषधम् ॥ योगाश्चैते त्रयः प्रोक्ता वातपित्तकफापहाः ॥ १५६ ॥ यवाग्रजं तेजवतीञ्च पाठां रसाञ्जनं दारुनिशां सकृष्णाम् ॥ क्षौद्रेण कुर्याद्गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥ १५७ ॥**

प्रवीण वैद्य गलेके रोगोंका रुधिर निकलवाकर और तीक्ष्ण नस्य आदि देनेसे चिकित्सा करे।

दारुहल्दी, तज, नीम, रसौत और इन्द्रजौ इनका काथ देनेसे अथवा सहत डालकर हरडका काथ पीनेसे गलेके रोग नष्ट हो जाते हैं। यह वातज गलरोगोंकी चिकित्सा कही है।

कुटकी, अतीस, देवदारु, पाठ, नागरमोथा और इन्द्रजौ इनका गोमूत्रमें पकाकर पिवे तो गलेके समस्त रोग नष्ट हो जाते हैं। यह पित्तजन्य गलरोगोंकी चिकित्सा कही है।

दाख, कुटकी, सोंठ, मिरच, पीपल, दारुहलदी, तज, हरड, बहेडा, आमला, नागरमोथा, पाढ, रसौत, दुरनहार, और तेजबल इनका बारीक चूर्ण करके सहतमें मिलाकर उपयोग करे तो कफजन्य समस्त गलरोग नष्ट हो जाते हैं।

जवाखार, तेजबल, पाढ, रसौत, दारुहलदी, और पीपल इनकी सहतमे गोली बनाकर मुखमें रखनेसे सर्वप्रकारके गलरोग नष्ट होजाते हैं ॥ १५२–१५७ ॥

**अथ समस्तमुखरोगसंख्या ।**

**पृथग्दोषैस्त्रयो रोगाः समस्तमुखजाः स्मृताः ॥ १५८ ॥**

वातज, पित्तज और कफज ऐसे सम्पूर्ण मुखमें तीन प्रकारके रोग होते हैं ॥ १५८ ॥

**अथ वातजमुखरोगलक्षणम् ।**

**स्फोटैः सतोदैर्वदनं समन्ताद्यत्राचितं सर्वसरः स वातात् ॥ १५९ ॥**

व्यथायुक्त छालोंसे चारों ओर मुख भरा होय तो उसको वातजन्य सर्वसर रोग जानना ॥ १५९ ॥

**अथ पैत्तिकमुखरोगलक्षणम् ।**

**रक्तैः सदाहैः पिडकैः सपीतैर्यत्राचितं चापि स पित्तकोपात् ॥ १६० ॥**

दाहयुक्त और पीले रंगके छोटे छोटे छालोंसे सम्पूर्ण मुख व्याप्त होय तो उसको पित्तजन्य सर्वसर मुखरोग कहते हैं ॥ १६० ॥

**अथ कफजमुखरोगलक्षणम् ।**

**अवेदनैः कण्डुयुतैः सवर्णैर्यत्राचितं चापि स वै कफेन ॥ १६१ ॥**

**यत उक्तं सुश्रुतेन–अल्पवेदनैरिति ॥**

मन्दवेदनायुक्त, खुजलीयुक्त और मुखके वर्णवाले छालोंसे सम्पूर्ण मुख भरजाय तो उसको कफजनित सर्वसर मुखरोग कहते हैं ॥ १६१ ॥

**अथासाध्या मुखरोगाः ।**

**ओष्ठप्रकोपे वर्ज्यास्तु मांसरक्तत्रिदोषजाः ॥ दन्तवेष्टेषु वर्ज्यो तु त्रिलिंगगतिसौषिरौ ॥ १६२ ॥**

**त्रिलिंगगतिः त्रिदोषजा नाडी ॥**

दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः ॥ जिह्वारोगेष्वलासस्तु तालुजेष्वर्बुदं तथा ॥ १६३ ॥ स्वरघ्नो वलयो वृन्दो बलासः स हि दारुणः ॥ गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥ १६४॥ असाध्याः कीर्तिता ह्येते रोगा दश नवोत्तराः ॥ तेषु वापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥ १६५ ॥

ओष्ठके रोगोंमे मांससे उत्पन्न हुए, रुधिरसे उत्पन्न हुए और त्रिदोषज रोग असाध्य है।

मसूढोंके रोगोंमे त्रिदोषसे उत्पन्न नाडी और सौषिर यह दो रोग असाध्य हैं। दंतरोगोमे श्यावदंतक, दालन और भंजनक यह तीन रोग असाध्य हैं।

जीभके रोगोंमे अलास असाध्य है। तालुयेके रोगोमे तालवर्बुद असाध्य है॥

गलेके रोगोंमें स्वरघ्न, वलय, वृन्द, वलास, विदारी, गलौघ, मांसतान, शतघ्नी और रोहिणी, यह नौ रोग असाध्य हैं। ऊपरके १० मिलायके ये उन्नीस रोग जो असाध्य माने हैं इनपर भी वैद्य चिकित्सा करे क्योंकि कदाचित् आरोग्य होजाय॥ १६२–१६५॥

## अथ सम्पूर्णमुखरोगचिकित्सा।

वातात्सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत् ॥ तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ॥ १६६ ॥ पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ॥ सर्वः पित्तहरः कार्यो विधिर्मधुरशीतलः ॥ १६७ ॥ प्रतिसारणगण्डूषधूमसंशोधनानि च ॥ कफात्मके सर्वसरे क्रमं कुर्यात्कफापहम् ॥ १६८ ॥ मुखपाके शिरावेधः शिरसश्च विरेचनम्॥ मधु मूत्रघृतक्षीरैः शीतैश्च कवलग्रहः ॥ ॥ १६९ ॥ जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकैः ॥ क्काथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ १७० ॥ कार्यश्च बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ कृष्णजीरककुष्ठेन्द्रयवचर्वणतस्त्र्यहात् ॥ ॥ १७१ ॥ मुखपाकव्रणक्लेददौर्गन्ध्यमुपशाम्यति ॥ पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवैः ॥ १७२ ॥ पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥ पञ्चवल्कलजः क्काथस्त्रिफलासम्भवोऽथ वा ॥ १७३ ॥ मुखपाके प्रयोक्तव्यः सक्षौद्रो मुखधावने ॥ स्वरसः कथितो दार्व्या घनीभूतो रसक्रिया ॥ सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा ॥ १७४ ॥ सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः ॥ यष्ट्याह्वराजद्रुमचन्दनैश्च क्काथं पिबेत्पाकहरं मुखस्य ॥ १७५ ॥

राजद्रुमः घनवहेरा इति लोके ॥

तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ॥ क्षौद्राढ्यो दग्धवल्कस्य गण्डूषो मुखपाकनुत् ॥ १७६ ॥ आस्वादिता सकृदपि मुखगन्धं सकलमपनयति ॥ त्वग्बीजपूरफलजा पवनमपाच्यं वारयति ॥ १७७ ॥ हरिद्रा निम्बपत्राणि मधुकं नीलमुत्पलम् ॥ तैलमेभिर्विपक्तव्यं मुखपाकहरं परम् ॥ १७८ ॥ यष्टीमधु पलमेकं त्रिंशन्नीलोत्पलस्य तैलस्य ॥ प्रस्थं तद्द्विगुणपयोविधिना पक्कं तु नस्येन ॥ १७९ ॥ निशि वदनस्य स्रावं क्षपयति गात्रस्य दोषसंघातम् ॥ कचघर्षत्वमवश्यं क्रमशोऽभ्यङ्गेन जन्तूनाम् ॥ १८० ॥

इति मुखरोगाधिकारः।

खारी चूर्णोंसे प्रतिसारण करे और वातनाशक पदार्थोंसे पकाये हुए तेलका कवल तथा नस्य देवे तो वातजन्य सर्वसर नष्ट होजाताहै।

शरीरको विरेचन आदि सशोधन कर पित्तनाशक सम्पूर्ण मधुर तथा शीतल विधि करे तो पित्तजन्य सर्वसर दूर होजाताहै। पित्तजन्य सर्वसरमे प्रतिसारण, कवल, धूमपान और सशोधन यह सब पित्तनाशक करे।

कफको हरनेवाली विधि करे और कफनाशक प्रतिसारण भी करे तो कफजन्य सर्वसर नष्ट होजाताहै।

नस छेदकर रुधिर निकाले शिरोविरेचन करे और सहत, मूत्र, घी, दूध तथा शीतल अन्य पदार्थोंके भी कवल धारण करे तो मुखपाक दूर होजाताहै ।

जावित्री, गिलोय, दाख, जवासा, हरड, बहेडा, आमले, इन सबका क्काथ बनावे उस क्काथको शीतल करके उसमे सहत डालकर पिये तो मुखपाक दूर होजाताहै ।

नित्य अनेकवार जावित्री चाबे तो मुखपाक दूर होजाताहै ।

कालाजीरा, कूठ, और इन्द्रजौ इनको चर्वण करे तो मुखपाक, मुखव्रण, मुखका क्लेद और मुखकी दुर्गन्धि भी शमन होजाती है ।

कडवे परवलके, नीमके, जामुनके, आमके, और मालतीके नवीन पत्ते इन पचपल्लवोंका क्काथ मुख धोनेके लिये बहुत उत्तम है ।

मुखपाक होय तो पचवल्कलका अथवा हरड, बहेडा और आमलेके क्काथमें सहत डालकर उससे मुखको शुद्ध करे ।

दारुहलदीके गाढे स्वरसमें सहत डालकर उसका उपयोग करनेसे मुखरोग, रुधिरविकार और नाडीव्रण यह सब नष्ट होजातेहैं ।

सतवन, खस, कडवे, परवल, हरड, कुटकी, मुलैठी, अमलतास और लाल चदन इनका क्काथ बनाकर पीनेसे मुखपाक दूर होजाताहै ॥

तिल, नीले कमल, घी, खांड, दूध और सहत इनके कुल्ले करनेसे मुखपाक दूर हो जाताहै, जलनेसे उत्पन्न मुखपाकका यह उत्तम उपाय है ॥

बिजौरेके फलकी छालको एक बार खानेसे भी मुख की सम्पूर्ण दुर्गन्धि दूर होजातीहै और अपानवायु भी शात होतीहै ।

हलदी, नीमके पत्ते, मुलैठी और नीले कमल इनसे पकाये हुए तेलके कुल्ले आदि करनेसे भी मुखपाक अवश्य नष्ट होजाताहै ।

मुलैठी ४ चार तोले और नीले कमल २१ इकीस तोले इनका कल्क डालकर १२८ एक सौ अठाईस तोले दूधमें तेलको पकावे । इस तेलका नास लेनेसे रात्रिमें उत्पन्न हुआ मुखका स्राव और शरीरके रोगोंके समूह नष्ट होतेहैं । इस तेलकी मालिश करनेसे बालोंकी कमजोरी, गिरना, टूटना और जुंवे आदि सब दूर होते है ॥ १६६–१८० ॥

इति मुखरोगाधिकारः संपूर्ण ।

# अथ विषाधिकारः ।

**स्थावरं जंगमश्चैव द्विविधं विषमुच्यते ॥ दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम् ॥ १ ॥**

स्थावर और जगम इस रीतिसे विष दो प्रकारका है । स्थावर विषके दश आश्रय हैं और जगम विषके सोलह आश्रय ( स्थान ) हैं ॥ १ ॥

## अथ स्थावरविषस्य दश स्थानानि ।

**मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सारमेव च ॥ निर्यासो धातवः कन्दः स्थावरस्याश्रया दश ॥ २ ॥**

**तद्यथा–मूलविषं करवीरादि । पत्रविषं विषपत्रिकादि । फलविषं कर्कोटकादि । पुष्पविषं वेत्रादि । त्वक्सारनिर्यासविषाणि करम्भादीनि । क्षीरविषं स्नुह्यादि । धातुविषं हरितालादि । कन्दविषं वत्सनाभशक्तुकादि ॥**

मूलें, पत्ते, फलै, फूलें, छाल, दूधै, सार, गोंदं, धातु और कंदं इस प्रकार स्थावर विषके दश स्थान हैं ॥

मूलविष कनेर आदिकी जडमे रहताहै । पत्रविष विषपत्रिकादिमे रहताहै । फलविष कर्कोटकादि फलोंमें रहताहै । फूलविष वेत आदिके फूलोंमें रहताहै । छाल सार और गोंद विष चौंटली आदिकी छालमें रहताहै । दूधविष थूहर आदिके दूधमे, धातुविष हरिताल सोमल आदि धातुओंमे और कदविष वत्सनाभ शक्त आदिके कदमें रहताहै ॥ २ ॥

## अथ जंगमविषस्य षोडश स्थानानि ।

**दृष्टिनिःश्वासदंष्ट्राश्च नखमूत्रमलानि च ॥ शुक्रं लालास्पर्शमुखसंदंशं शवमर्दितम् ॥ गुदास्थिपित्तशूकानि दश षट् जंगमाश्रयाः ॥ ३ ॥**

**तद्यथा । दृष्टिनिःश्वासविषाः दिव्याः सर्पाः । दंष्ट्राविषाः भौमसर्पाः । दंष्ट्रानखविषा व्याघ्रादयः । मूत्रपुरीषविषाः गृहगोधिकादयः । शुक्रविषा मूषिकादयः । लाला-**

विषाः उच्चिङ्गटादयः । लूता लालास्पर्शमूत्रपुरीषार्तवशुक्रमुखसंदंशविषाः । मुखसंदंश दंष्ट्रार्पादतगुदपुरीषविषाः चित्रशीर्षादयः । अस्थिविषाः सर्पादयः । पित्तविषाः शकुलमत्स्यादयः । शूकविषाः भ्रमरादयः । शवविषा गतासवः कीटसर्पदेहाः ।

दृष्टि, निश्वास, डाढें, नख, मूत्र, विष्ठा, वीर्य, लार, मुख, स्पर्श, डसना, अधोवायु, गुदा, अस्थि, पित्त और शूक ( मुखकी अनी ) इस प्रकार जगम विषके यह सोलह आश्रय हैं ।

दिव्य सर्पोंकी दृष्टि और निश्वासमें विष रहताहै । पृथ्वीके भयंकर सर्पोंकी दाढमें विष रहताहै । वाघ, सिंह आदि जीवोंकी दाढ तथा नखूनोंमें विष रहताहै । छपकली आदि जीवोंके मूत्र और विष्ठामे विष रहताहै । चूहे आदिके शुक्रमे विष रहताहै । मकडी आदिकी लारमें विष रहताहै । चित्रशीर्ष आदिकी लारमें, स्पर्शमे, मूत्रमे, विष्ठामे, वीर्यमें, मुखमे, दशमे, अधोवायुमे तथा गुदामे विष रहताहै । सर्प आदिकी अस्थियोंमें विष रहताहै । शकुल आदि मछलिओंके पित्तमे विष रहताहै । और भैंरि आदिके मुखके अग्रभागमें विष रहता है ॥ ३ ॥

## अथ मूलादिविषाणां प्रत्येकशो लक्षणम् ।

### तत्र मूलविषकार्य्यम् ।

**उद्वेष्टनं मूलविषैर्मोहः प्रलपनं तथा ॥ ४ ॥**

मूलविषको भक्षण करनेसे शरीर ऐंठै, बेहोसी और प्रलाप होताहै ॥ ४ ॥

### अथ पत्रविषकार्यम् ।

**जृम्भणं वेपनं श्वासो नृणां पत्रविषैर्भवेत् ॥ ५ ॥**

पत्रविषको भक्षण करनेसे जम्भाई आतीहै, कम्प और श्वास होताहै ॥ ५ ॥

### अथ फलविषकार्यम् ।

**मुष्कशोथः फलविषैर्दाहो द्वेषश्च भोजने ॥ ६ ॥**

फलविषको भक्षण करनेसे अंडकोषोमे सूजन, दाह और भोजनपर अरुचि होतीहै ॥ ६ ॥

### अथ पुष्पविषकार्यम् ।

**भवेत्पुष्पविषैश्छर्दिराध्मानं मूर्च्छनं तथा ॥ ७ ॥**

फूलके विष खानेसे वमन, अफारा और मूर्च्छा होतीहै ॥ ७ ॥

### अथ त्वक्सारनिर्यासविषकार्यम् ।

**त्वक्सारनिर्यासविषैरुपभुक्तैर्भवन्ति हि ॥ आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंश्रयाः ८**

छाल, सार और गोदके विषको भक्षण करनेसे मुखमें दुर्गंध, मस्तकमें पीडा, शरीरमें रूक्षता और कफका स्राव होताहै ॥ ८ ॥

### अथ क्षीरविषकार्यम् ।

**फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता ॥ ९ ॥**

क्षीरविषको खानेसे मुखमे झाग आतेहैं, दस्त होतेहैं और जीभ जड होजातीहै ॥ ९ ॥

### अथ धातुविषकार्यम् ।

**हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ॥ प्रायेण कालघातीनि विषाण्येतानिनिर्दिशेत् ॥ १० ॥**

**एतानि मूलविषाणि नव कालघातीनि कालान्तरमारकाणि ॥**

धातु विषको खानेसे हृदयमे पीडा, मूर्च्छा और तालुवेमें दाह होताहै । उपरोक्त मूल आदि नौ विषोको खानेसे विशेष करके कालातरमें मृत्यु होतीहै ॥ १० ॥

## अथोपर्युक्तनवविषविशेषलक्षणम् ।

### तत्र कंदविषविशेषकार्यम् ।

**कन्दजान्युग्रवीर्याणि यान्युक्तानि त्रयोदश ॥ सर्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणैः ॥ ११ ॥**

कदसे उत्पन्न तेरह प्रकारका विष जो कि, सुश्रुत आदि ग्रंथोंमे कहा है वह उग्रशक्ति सम्पन्न है अर्थात् तत्काल प्राणोंको नष्ट करदेताहै ॥ ११ ॥

### अथ विषपरीक्षा ।

**स्थावरं जंगमं वापि कृत्रिमं चापि यद्वि-**

पम ॥ सद्यो निहन्ति तत्सर्वं गुणैश्च दशभियुतम् ॥ १२ ॥

प्रवीण वैद्य सम्पूर्ण विषोंकी परीक्षा नीचे लिखे दशगुणोंसे करे । स्थावरविष, जगमविष और कृत्रिम विष जो दशगुणोंसे युक्त होय तो तत्काल मनुष्यको मारदेते हैं ॥ १२ ॥

### अथ विषस्य दशगुणाः ।

रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च ॥ विकाशि विशदञ्चैव लघ्वपाकि च ते दश ॥ १३ ॥

रूक्ष, उष्ण, तीक्ष्ण, सूक्ष्म, आशु, व्यवायी, विकाशी, विशद, लघु और अपाकी ये दश गुण विषमे रहते हैं ॥ १३ ॥

### अथोक्तदशगुणानां कार्यम् ।

तद्रौक्ष्यात्कोपयेद्वायुमौष्ण्यात्पित्तं सशोणितम् ॥ तैक्ष्ण्यान्मतिं मोहयति मर्मबन्धाञ्छिनत्ति हि ॥ १४ ॥ शरीरावयवान्सौक्ष्म्यात्प्रविशेद्विकरोति च ॥ आशुत्वादाशु तत्प्रोक्तं व्यवायात्प्रकृतिं हरेत् ॥ १५ ॥ विकाशित्वात्क्षपयति दोषान्धातून्मलानपि ॥ अतिरिच्यते वैशद्याद्दुश्चिकित्स्यं च लाघवात् ॥ १६ ॥ दुर्जरं चाविपाकित्वात्तस्मात्क्लेशयते चिरम् ॥ १७ ॥

तदा विष रूक्ष होनेके कारण वायुको कुपित करैहै । उष्ण होनेके कारण पित्त तथा रुधिरको प्रकुपित करैहै । तीक्ष्ण होनेके कारण बुद्धिको मोहयुक्त और मर्माके बंधनोंको तोडैहै । सूक्ष्म होनेके कारण शरीरके अवयवोंमें प्रविष्ट होजाताहै । आशु होनेके कारण शरीरमे तत्काल [illegible] फैलकर विकारोंको करैहै । व्यवायी होनेके कारण प्रकृतिको बदलदेताहै । विकाशी होनेके कारण दोषोंको, धातुओंको तथा मलोंको क्षय करदेताहै । विशद होनेसे कारण [illegible] दस्तोंको लाताहै । लघु होनेके कारण दुश्चिकित्स्य होजाताहै और अपाकी होनेके कारण नहीं [illegible] पचताहै, इन गुणोंके होनेसे [illegible] क्लेश देताहै ॥ १४–१७ ॥

### अथ विषलिप्तशस्त्रहतलक्षणम् ।

सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् ॥ कृष्णीभूतं क्लिन्नमत्यर्थपूतिक्षतान्मांसं शीर्यते यस्य वापि ॥ १८ ॥ तृष्णातापौ दाहमूर्च्छे च यस्य दिग्धं विद्धं तं मनुष्यं व्यवस्येत् ॥ लिंगान्येतान्येव कुर्यादमित्रैर्दत्तः क्ष्वेडो वा व्रणे यस्य चापि ॥ १९ ॥

पच्यते चाप्यभीक्ष्णं पुनः पुनः पाकमेति । तापः बहिः स्थितः । दाहोऽभ्यन्तरे कुर्यादित्यत्र क्षतं कर्तृपदं बोद्धव्यम् ।

घाव तत्काल पकजाय, घावमेंसे रुधिर बहाकरे, वारंवार पके, घावमेंसे काला क्लेदयुक्त तथा अत्यंत दुर्गंधित मास गिरे, तृषा लगे, बाहर संताप हो, भीतर दाह हो और मूर्छाभी होय तो जानना कि, इस मनुष्यके विषसे बुझे हुए शस्त्रका प्रहार हुआ है ॥ १८ ॥ १९ ॥

### अथ विषदातृलक्षणम् ।

इंगितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ॥ जानीयाद्विषदातारमेभिर्लिंगैश्च बुद्धिमान् ॥ २० ॥ न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ॥ अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत् ॥ २१ ॥ अंगुलीः स्फोटयेदुर्वीं विलिखेत्प्रहसेदपि । वेपथुश्चास्य भवति त्रस्तश्चैकैकमीक्षते ॥ २२ ॥ विवर्णवक्त्रो ध्मानश्च नखैः किञ्चिच्छिनत्ति च ॥ आलभेतासकृद्दीनः करेण च शिरोरुहान् ॥ २३ ॥ निर्यियासुरपद्वारैर्वीक्षते च पुनःपुनः ॥ वर्तते विपरीतं च विषदाता विचेतनः ॥ २४ ॥

इंगितमभिप्रायसूचकम् आकारम् । मुखवैकृतं मुखवैवर्ण्यादि । एभिर्लिंगैर्वक्ष्यमाणैः । न ददात्युत्तरं पृष्टः स्वीयसत्कर्मजनितभयामोहात् । संकीर्णमस्फुटम् । भयजनितपर्वव्यथापनोदाय अंगुलीः स्फोटयेत् । प्रहसेदहेतावपि । ध्मानः दग्धसमानवर्णः । आलभेत्स्पृशेत् । विपरीतं यथा स्यादेवं वर्तते ॥

गुग्गुलुस्तथा ॥ ५३ ॥ लाक्षा नखश्च रालश्च धातकीकुसुमं तथा ॥ ग्रन्थिपर्णश्च मञ्जिष्ठा तगरं सिक्थकं तथा ॥ ५४ ॥ एतानि शाणमानानि कल्कीकृत्य शनैः पचेत् ॥ अनेनाभ्यक्तगात्रस्तु वृद्धोऽशीतिसमोऽपि सः ॥ ५५ ॥ युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः ॥ वन्ध्यापि लभते गर्भं वृद्धोऽपि तरुणायते ॥ अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥ ५६ ॥ चन्दनादि महातैलं रक्तपित्तं क्षयं ज्वरम् ॥ दाहं प्रस्वेददौर्गन्ध्यं कुष्ठं कण्डूं विनाशयेत् ॥ ५७ ॥

पतंगं वकम् इति लोके । कालीयकं कलम्बकटु इति लोके। लता कस्तूरिका मुष्कदाना इति लोके। कंकोलफलस्य अलाभे जातीपुष्पं ग्राह्यं तदलाभे लवंगं ग्राह्यम् । दारुसिता [दारुचीनी]। शैलेयं छरेति लोके श्रीवासः गुग्गुलुः । ग्रन्थिपर्णी [गठिवन] अशीतिसमः अशीतिवार्षिकः ॥

सफेद चन्दन, लाल चन्दन, पतग, दारुहलदी, अगर, काली अगर, देवदारु, धूपसरल, कमल, पारिस पीपलका पञ्चांग, कपूर, कस्तूरी, वेदमुस्क, शिलारस, नवीन केसर, जायफल, लौंग, बडी इलायची, छोटी इलायची, जावित्री, कंकोल (ककोल न मिले तो जावित्री और जावित्री भी न मिले तो लौंग लेनी चाहिये) दालचीनी, तेजपात, नागकेशर, खस, सुगधवाला, वालछड, तज, वगलोचन, भूरि छरीला, नागरमोथा, रेणुकाके बीज, फूलप्रियगु, लोवान, गूगल, लाख, नख, मजीठ, तगर, मोम, राल, धायके फूल, और गठिवन यह प्रत्येक पदार्थ २४ चौबीस २४ चौबीस रत्ती लेकर कल्क वनाकर तेलमें डालकर धीरे धीरे पकावे, इस तेलकी शरीरमें मालिस किया जाय तो ८० वर्षका बुड्ढा पुरुष भी युवाकी समान वीर्यवान् और स्त्रियोंको अत्यन्त प्रिय होताहै। इस तेलका मालिस करनेसे वन्ध्या स्त्रियोंके भी गर्भ रहताहै । अपुत्रिणीके पुत्रकी प्राप्ति होतीहै और सौ वर्षकी आयु होती है। यह चन्दनादि महातैल–रक्तपित्त, क्षय, ज्वर, दाह, पसीना, दुर्गंध, कोढ और खुजलीको दूर करदेताहै ॥४९–५७॥

अथ मधुपक्वहरीतकी ।

दशमूलकणावह्निः कपित्थश्च विभीतकम् ॥ कट्फलं मरिचं विश्वमूलं पिप्पलिसैन्धवम् ॥ ५८ ॥ रक्तरोहीतकं दन्ती द्राक्षाजाजिनिशाद्वयम् ॥ धात्रीजन्तुघ्नशिखरिशृंगीदारुपुनर्नवाः ॥५९॥ धान्याकं देवकुसुमं राजवृक्षस्त्रिकण्टकम् ॥ वृद्धदारु कुबेराक्षी मूलं वीरणिकाभवम् ॥ ६० ॥ एतेषां पलयुग्मन्तु भेषजानां पृथक्पृथक् ॥ आढकश्चापि पथ्यायास्तोये पश्चाढके पचेत् ॥ ६१ ॥ स्विन्ना पथ्या भवेद्यावत्पश्चान्मधु विनिक्षिपेत् ॥ गुरूपदेशाद्विधिवत्त्रिदिनश्च ततः परम् ॥ ६२ ॥ पुनः क्षिपेत्पञ्चदिनं तथा च दशवासरम् ॥ संसिद्धा चाभया पश्चाद् घृतभाण्डे निधापयेत् ॥ ६३ ॥ विमले सुदृढे क्षौद्रपरिपूर्णे प्रयत्नतः ॥ पश्चात्पूर्वोक्तभाण्डे तु क्षिपेद्बुद्धिपरायणः ॥ एषा हरीतकी चैव धन्वंतरिकृता शुभा ॥ ६४ ॥ भक्षयेद्यो नरो नित्यं रोगा नश्यन्ति सर्वशः ॥ श्वासं कासंक्षयं पाण्डुं हिक्कां छर्दिमदभ्रमान् ॥ ६५ ॥ मुखरोगं तथा तृष्णामरुचिं वह्निमन्दताम् ॥ यकृत्प्लीहोदराणाञ्च वातरक्तं सुदारुणम् ॥ ६६ ॥ शिरोऽक्षिकर्णजां पीडां तथा बद्धगुदोदरम् ॥ ग्रहणीं दुर्विकाराश्च शोषं दोषत्रयोद्भवम् ॥ मधुपक्वेति विख्याता हन्ति रोगाननेकशः ॥ ६७ ॥

दशमूल, पीपल, चीता, कैथ, बहेडा, कायफल, मिरच, सोंठ, पीपलामूल, सैंधानिमक, लालरोहिडा, जमालगोटा, दाख, जीरा, हलदी, दारुहलदी, आमले, वायविडग, चिरचिटा, काकडासिंगी, देवदारु, पुनर्नवा, धनियाँ, लौंग अमलतास, गोखुरू, विधारा, सागरगोटा, और खस यह प्रत्येक पदार्थ आठ आठ तोले और उत्तम हरड दोसौ छप्पन तोले लेवे, सबको पाच आढक जलमें पकावे, जब पकते पकते नरम होजाय तब उसमेंसे हरडोंको निकालकर उनकी गुठली निकालकर अलग रख देवे और काटे

को छानकर उसमें वह हरड डालकर पकावे जब पकते २ गाढा होजाय तब शीतल होनेपर गुरुवचनानुसार सहत मिलावे, फिर तीन दिन पश्चात् पांच दिन पश्चात् और फिर दश दिन पश्चात् सहत डाले। इस प्रकारकी सिद्ध हुई हरडोंको निर्मल, दृढ और सहतसे भरे घीके चिकने वासनमें यत्नपूर्वक रक्खे फिर उस वासनमेंसे निकालकर बुद्धिमान् वैद्य दूसरे वासनमें भरके रख देवे तो यह मधुपक्व हरीतकी सिद्ध होतीहै। जो मनुष्य इस धन्वन्तरिकी कहीहुई हरडका नित्य सेवन करताहै उसके सम्पूर्ण रोग नष्ट होजातेहैं। श्वास, खाँसी, क्षय, पाडु, हिचकी, वमन, मद, भ्रम, मुखरोग, तृषा, अरुचि, मदाग्नि, प्लीहा, यकृत्, उदरके रोग, महादारुण वातरक्त, मस्तककी पीडा, नेत्रकी पीडा, कानकी पीडा, वद्धगुद, दुष्ट विकारोंवाली ग्रहणी, त्रिदोषजनित सूजन और अन्यान्यभी बहुतसे रोग इस हरडके सेवन करनेसे नष्ट होजातेहैं ॥ ५८–६७ ॥

### अथ वानरीवटिका ।

**बीजानि कपिकच्छ्वाः कुडवमितानि स्वेदयेच्छनकैः ॥ प्रस्थे गोभवदुग्धे तावद्यावद्भवेद्गाढम् ॥ ६८ ॥ त्वग्रहितानि च कृत्वा सूक्ष्मं सम्पेषयेत्तानि ॥ पिष्टिकया लघुवटिकाः कृत्वा गव्ये पचेदाज्ये ॥ ६९ ॥ द्विगुणितशर्करापाता वटिकाः सम्पक्वया लेप्याः ॥ वटिका माक्षिकमध्ये मज्जनयोग्ये विरलाः स्थाप्याः ॥ ७० ॥ पञ्चटंकमितास्तास्तु प्रातः सायञ्च भक्षयेत् ॥ अनेन शीघ्रद्रावी यो यश्च स्यात्पतितध्वजः ॥ ७१ ॥ सोऽपि प्राप्नोति सुरते सामर्थ्यमति वाजिवत् ॥ नानेन सदृशं किञ्चिद्द्रव्यं वाजीकरं परम् ॥ ७२ ॥ वानरी वटिका ॥**

सोलह तोले कौंछके बीजोंको चौंसठ तोले गायके दूधमें पकावे जब पकते २ दूध गाढा होजाय तब उतार लेवे, फिर इन बीजोंको छीलकर बारीक मैदेकी छोटी २ वडी बनाकर गायके घीमें पकावे, फिर उनसे दुगुनी खाडकी चासनीमें उन वडियोंको छोड देवे, फिर उनको तलकर उसमें निकालकर जितने सहतमें वह डूबजायँ उतने सहतमें भरकर रखदेवे। इनमेंसे पांच टक प्रातःकाल और सन्ध्याके समय भक्षण करे तो जिसका वीर्य तत्काल स्खलित होजाताहै और जिसका लिंग खडा नहीं होता वह पुरुष भी मैथुनके समय घोडेकी समान सामर्थ्यको प्राप्त होताहै, इस वानरीवटिकाकी समान अन्य कोई भी वाजीकरण पदार्थ नहींहै ॥ ६८–७२ ॥

### अथाकारकरभादिवटी ।

**आकारकरभः शुण्ठी लवंगं कुंकुमं कणा ॥ जातीफलं जातिपुष्पं चन्दनं कार्षिकं पृथक् ॥ ७३ ॥ चूर्णयेदहिफेनन्तु तत्र दद्यात्पलोन्मितम् ॥ सर्वमेकीकृतं माषमात्रं क्षौद्रेण भक्षयेत् ॥ ७४ ॥ शुक्रस्तम्भकरं पुंसामिदमानन्दकारकम् ॥ नारीणां प्रीतिजननं सेवेत निशि कामुकः ॥ ७५ ॥**

इति वाजीकरणाधिकारः ।

अकरकरा, सोंठ, लौंग, केसर, पीपल, जायफल, जावित्री और सफेद चन्दन यह प्रत्येक एक एक तोला लेकर उसका चूर्ण करके उसमें चार तोले अफीम मिलावे, फिर इसकी पाच २ रत्तीकी गोलियां बनावे। नित्य एक गोली सहतके साथ खाय तो पुरुषका वीर्य स्तम्भ होताहै, मैथुनमें अत्यन्त आनन्द होताहै और स्त्रियें विशेष प्रसन्न होतीहैं। कामी पुरुषोंको यह गोलियें खानी चाहियें ॥ ७३–७५ ॥

इति वाजीकरणाधिकारः सपूर्णः ।

---

## अथ रसायनाधिकारः ।

### तत्र रसायनलक्षणम् ।

**यज्ज्वरव्याधिविध्वंसि वयःस्तम्भकरं तथा ॥ चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् ॥ ७६ ॥**

जो औषधि ज्वर और व्याधिको नष्ट करनेवाली, अवस्थाको स्थापन करनेवाली, नेत्रोंको हितकारी, पुष्टिकारक और मैथुनकशक्तिको वढानेवाली हो उस औषधिको रसायन कहतेहैं ॥ ७६ ॥

### अथ रसायनफलविधिश्च ।

**दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ॥ देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात् ॥ ७७ ॥ नाविशुद्धशरीरस्य**

युक्तो रासायनो विधिः ॥ न भाति वाससि म्लिष्टे रंगयोग इवाहितः ॥ ७८ ॥

रसायनको सेवन करनेसे दीर्घायु होतेहै उनको स्मरण शक्ति अत्यंत तीव्र होजातीहै । तथा मेधा, आरोग्यता, तरुणता, देह और इन्द्रियोका बल और सुदर कांति बढातीहै । विरेचनादिसे शरीरको विना शुद्ध किने रसायनका उपयोग करना योग्य नहीं है । जैसे कि अच्छे प्रकारसे चढायाहुआ रगभी मैले वस्त्रको शोभित नहीं करता ॥ ॥ ७७ ॥ ७८ ॥

## अथ रसायनप्रयोगाः ।

शीतोदकं पयः क्षौद्रं घृतमेकैकशो हितम् ॥ त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥ ७९ ॥ मण्डूकपर्ण्याः स्वरसः प्रभाते प्रयोज्य यष्टीमधुकस्य चूर्णम् ॥ रसो गुडूच्यास्तु समूलपुष्पः कल्कः प्रयोज्यः खलु शंखपुष्प्याः ॥ ॥ ८० ॥ आयुष्प्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ॥ मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शंखपुष्पी ॥ ८१ ॥

मण्डूकपर्णी ब्राह्मी । तदलाभे मञ्जिष्ठा ग्राह्या । तस्या अपि रसायनत्वात् ॥

माक्षिकेण तुगाक्षीरी पिप्पल्या लवणेन च ॥ त्रिफला सितया वापि युक्ता सिद्धं रसायनम् ॥ ८२ ॥ सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ॥ वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥ ८३ ॥ पुनर्नवस्यार्द्धपलं नवस्य पिष्टं पिबेद्यः पयसार्द्धमासम् ॥ मासद्वयं तत्रिगुणं समं वा जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥ ॥८४॥ ये मासमेकं स्वरसं पिबन्ति दिने दिने भृंगरजःसमुत्थम् ॥ क्षीराशिनस्ते बलवीर्ययुक्ताः समाः शतं जीवनमाप्नुवन्ति ॥ ८५ ॥ शतावरी मुण्डितिका गुडूची सहस्तिकर्णा सहतालमूली ॥ एतानि कृत्वा समभागयुक्तान्याज्येन किं वा मधुनावलिह्यात् ॥ ८६ ॥ जरारुजामृत्युवियुक्तदेहो भवेन्नरो वीर्यबलादियुक्तः ॥ विभाति देवप्रतिमः स नित्यं प्रभामयो भूरिविवृद्धबुद्धिः ॥ ८७ ॥ पीत्वाश्वगन्धां पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा ॥ वीर्यस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथाम्बुवृष्टिः ॥ ८८ ॥

एक भाग शीतल जल, एक भाग दूध, एक भाग सहत और दो भाग घी इनको भोजनसे पहिले सेवन करनेसे अथवा तीन भाग शीतल जल, तीन भाग दूध, तीन भाग सहत और तीन भाग घी इनको भोजनसे पहिले सेवन करनेसे अवस्था स्थापन होतीहै ।

प्रातःकाल ब्रह्मीका रस, गिलोयका स्वरस और शंखाहुलीकी जड तथा पत्तोंका कल्क और मुलैठीका चूर्ण सेवन करनेसे यह उत्तम रसायनके गुणोंको करे है इसमे कहे हुए ब्रह्मी आदि चार पदार्थ तो आयुको बढानेवाले, रोगोंका नाश करनेवाले, बुद्धिको उत्पन्न करनेवाले और बलको, अग्निको, वर्णको तथा स्वरकी वृद्धि करनेवाले होनेसे रसायन है । इनमें भी शखाहुली विशेष करके बुद्धिको देनेवाली है, जो ब्राह्मी न मिले तो उसके अभावमे मजीठ लेना चाहिये, क्योकि मजीठभी रसायन है ॥

सहत पीपल और सैंधानमकके साथ वंशलोचनको सेवन करना रसायनहै और खांडके साथ त्रिफलेको सेवन करना सिद्ध रसायनहै ।

रसायनके गुणोंकी इच्छा करनेवाले पुरुषोको वर्षाऋतुमें सैंधेनिमकके साथ, शरदृतुमे खांडके साथ, हेमन्तऋतुमे सोंठके साथ, शिशिरऋतुमें पीपलके साथ, वसन्तऋतुमें सहतके साथ और ग्रीष्मऋतुमे गुडके साथ हरडको सेवन करना चाहिये इसप्रकार हरडको सेवन करनेसे रसायनके गुणोंको करेहै । जो मनुष्य एक पक्षतक, अथवा तीन महीनेतक, नौ महीनेतक अथवा एक वर्षतक तात्कालिक उखाडे हुए पुनर्नवेको पीसकर उसके दो तोले कल्कको दूधके साथ पीवे वह वृद्ध मनुष्यभी जवान होजाताहै ।

जो मनुष्य एक महीने तक नित्य भागरेके रसको पिये और दूधके साथ भोजन करे तो अत्यन्त बल और वीर्ययुक्त होताहै और १०० सौ वर्षतक जीताहै ।

सतावर, गोरखमुंडी, गिलोय, हस्तिकर्ण, पलास, और काली मुसली इन सबको समान भाग लेकर एकत्र करके सहतमें अथवा घीमें मिलाकर चाटे तो मनुष्य जरा रोग और अकालमृत्यु रहित अतुल वीर्य बल सम्पन्न देवताकी समान, तेजस्वी और अत्यन्त तीव्र बुद्धिसम्पन्न होकर सदैव शोभाको प्राप्त होताहै ।

एक पक्षतक घीके साथ, तेलके साथ, अथवा सुहाते २ गरम जलके साथ असगन्धको पिये तो जिस प्रकार जलकी वृष्टि धान्योंको पुष्ट करती है उसी प्रकार असगन्ध वीर्य तथा शरीरके बलको वृद्धि करताहै ॥ ७९–८८ ॥

## अथ लोहगुग्गुलुः ।

**अयःपलं गुग्गुलुमत्र योज्यं पलत्रयं व्योषपलानि पञ्च ॥ पक्वानि चाष्टौ त्रिफलारजश्च कर्षं लिहन्यात्यमरत्वमेव ॥ ८९ ॥**

लोहेका चूर्ण ४ चार तोले, गूगल १२ बारह तोले, त्रिकुटा २० बीस तोलेभर और त्रिफलेका चूर्ण ३२ बत्तीस तोले इन सबको एकत्र करके इसमेंसे नित्य एक तोला चाटे तो ज्वरादि रोग दूर होकर अमरता प्राप्त होतीहै ॥ ८९ ॥

## अथ रसायनविशेषफलम् ।

**न केवलं दीर्घमिहायुरश्नुते रसायनं यो विविधं निषेवते ॥ गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षयम् ॥९०॥**

इति रसायनाधिकारः ।

जो मनुष्य अनेक प्रकारके रसायनको सेवन करताहै वह केवल दीर्घायुको नहीं भोगता किन्तु देवर्षियोंकी शुभ गतिको प्राप्त होताहै और अविनाशी ब्रह्मरूप पद मोक्षको भी प्राप्त होताहै ॥ ९० ॥

इति रसायनाधिकारः सम्पूर्णः ।

**यावद्व्योमनि बिम्बमम्बरमणेरिन्दोश्च विद्योतते यावत्सप्तपयोधयः सगिरयस्तिष्ठन्ति पृष्ठे भुवः ॥ यावच्चावनिमण्डलं फणिपतेरास्ते फणामण्डले तावत्सद्भिषजः पठन्तु परितो भावप्रकाशं शुभम् ॥९१॥ ग्रन्थस्यास्याध्यापकानाञ्जनानां मध्येनणामादरं कुर्वतां च ॥ श्रीसोमेशादित्यविप्रप्रसादादायुर्दीर्घं सौख्यमास्तां सदैव ॥ ९२ ॥**

इति भावप्रकाशस्योत्तरखण्डेऽष्टमं प्रकरण समाप्तम् ।

जबतक सूर्य और चन्द्रमा आकाशमें स्थित हैं, जबतक पृथ्वीपर सातों समुद्र तथा धरणिपर धराधर प्रतिष्ठित हैं और जबतक भूमण्डल फणीन्द्रके फणपर विद्यमान है तबतक देशदेशान्तरोंके बडेबडे विचक्षण वैद्य मेरे इस भावप्रकाश शुभदायक ग्रन्थको पढें ॥ ९१ ॥

इस भावप्रकाश ग्रन्थके पढने पढानेवाले और आदर सत्कार करनेवाले पुरुष विश्वनाथ महादेव सूर्य देवता और ब्राह्मणोंके प्रसादसे सर्वदा दीर्घायु होकर अचल सुखको प्राप्त हों ॥ ९२ ॥

इति श्रीभावमिश्रकृतभावप्रकाशनामग्रन्थे, उत्तरखण्डे मुरादाबादनगरनिवास्यायुर्वेदोद्धारककविकुलकलानिधिमाथुरवैश्यवंशोद्भवशालिग्रामवैश्यविरचितवैद्यसंजीविनीनाम भाषाटीका सम्पूर्णा ।

**समाप्तमिदमुत्तरखण्डम् ।**




पुस्तक मिलनेका ठिकाना—खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम् प्रेस—बम्बई.

# क्रय्यपुस्तकें ( वैद्यक-ग्रन्थाः )।



| नाम, | की० रु०आ० |
|---|---|
| अष्टाङ्गहृदय-( वाग्भट ) मूल मोटा अक्षर वाग्भटविरचित. ... ... | २-८ |
| अष्टांगहृदय-( वाग्भट ) वाग्भटविरचित तथा पं० रविदत्तकृत भाषाटीकासहित और प० ज्वालाप्रसादजी मिश्र सशोधित। जिसमें-सूत्रस्थान, शारीरस्थान, निदानस्थान, चिकित्सास्थान, कल्पस्थान, उत्तरस्थान, इत्यादिमे संपूर्ण रोगोंकी उत्पत्ति, निदान, लक्षण और काथ, चूर्ण, रस, घी, तैल आदिसे अच्छी प्रकार चिकित्सा वर्णित है. ... ... ... | ८-० |
| अमृतसागर-हिन्दीभाषामें-बिना गुरु छोटे नगरोंमें दवाखाना करसक्ते हैं। इसमें सर्व रोगोंका वर्णन और यत्न लिखेगयेहैं। ग्लेज कागज. . . ... ... | २-४ |
| " तथा रफ कागज ... ... | २-० |
| अर्कप्रकाश-( रावणकृत ) भाषाटीकासमेत। इसमें-नानाप्रकारके यन्त्रोंसे औषधियोंका अर्क खींचना और गुणवर्णन भलीप्रकार कियागयाहै. ग्लेज कागज. ... ... | १-० |
| " तथा रफ कागज ... ... | ०-१४ |
| अनुपानदर्पण-भाषाटीकासमेत। इसमें-रस धातु बनानेकी क्रिया और अनुपान देना तथा रोगोंपर औषधोंमें क्या २ अनुपान देना यह सब वर्णित है. ... ... | ०-१२ |
| अनुभूतयोगावली-चिकित्साग्रन्थ। इसमे अनुभव कीहुई हरेक रोगकी उत्तम उत्तम औषधियां वर्णित हैं ... ... | ०-७ |
| अजीर्णतिमिरभास्कर-भाषामे-चौबे बख्तावर रामप्रसादकृत. ... .. | ०-६ |
| अजीर्णमञ्जरी-भाषाटीकासहित। इसमे किन २ चीजोंका अजीर्ण किन २ चीजोंके सेवनसे दूर होताहै इत्यादि विषय भलीप्रकार लिखेहैं ... ... ... | ०-४ |
| आयुर्वेदसुषेणसहिता-भाषाटीकासहित। इसमे-सामान्य औषधीवर्ग, धान्यवर्ग, पयवर्ग इत्यादिकोंका गुण-दोष वर्णित है. | ०-१४ |
| आयुर्वेदचिन्तामणि-भाषाटीकासहित। पं० बलदेवप्रसादमिश्र सगृहीत. ... | १-१२ |
| आरोग्यशिक्षा-पं० मुरलीधरशर्मा राजवैद्य-सकलित ( भाषामें ) ... ... | ०-५ |
| आदिशास्त्र-भाषाटीकासमेत। इस ग्रन्थमे कन्या और पुरुषका लक्षण कौन २ प्रकारसे विवाह करना और रोगोंकी दवा आदिका वर्णन भलीप्रकार है... ... | ०-१० |
| इलाजुल गुरबा-नूतन मथुराका छपाहै ... | १-४ |
| औषधोक्रिया-मराठी भाषाटीकासमेत। "आर्यभिषक्पुस्तकावली" मेसे यह स्वतन्त्र निकालागया है। आर्यवैद्यककी पद्धतिसे औषधोंको किसरीतिसे तैयार करना तथा कौनसे रोगपर किस दवाका उपयोग करना इत्यादि इस पुस्तकद्वारा सहजमें मालुम होसक्ताहै। मराठीभाषा जाननेवालोंको परमोपयोगी है. ... ... | ०-४ |
| अंजननिदान-भाषाटीकासमेत। इसमे-सुगमतासे रोगोका निदान लिखाहै. ... | ०-७ |
| कल्पपञ्चकप्रयोग-भाषाटीकासमेत। इस ग्रन्थमे चोपचीनीकल्प, रुद्रवन्तीकल्प, रागदमनीयकल्प, शिवलिंगीकल्प, तथा पलाशकल्पात्मक भी हैं. ... ... | ०-३ |
| करिकल्पलता-छन्दोबद्ध-हिन्दीभाषामें। केशवसिहजी तअल्लुकेदार रचित। इसमें-हाथियोंके शुभाशुभ लक्षण व उनके रोगनाशार्थ अनेक औषधविधान चित्रोंसमेत वर्णितहै. ... .. ... | १-० |